च तथा स्यात्, तस्य कथाप्रवेशनाप्रवेशनयोस्तद्वाधात्मत्वात्। कथायामेव हि निग्रहः। नापि द्वितीयः, तथाहि—स्यादप्येवं, यदि कथकप्रवर्तनीयवाग्व्यवहारं प्रति हेतुता तत्सत्त्वानभ्युपगमे निवर्तेत, नत्वेवं सम्भवति, तथासति तत्सत्त्वानभ्युपगन्तॄणां वाग्व्यवहारस्वरूपमेव न निष्पद्येत, हेत्वनुपपत्तेः। उक्तश्चायमर्थो यन्माध्यमिकादिवाग्व्यवहाराणां स्वरूपापलापो न शक्यते इति। अथ मन्यसे कथकवाग्व्यहारं प्रति हेतुत्वात् प्रमाणादीनां सत्त्वं, सत्त्वाद्याभ्युपगमः, यत्सत्तदभ्युपगम्यते इति स्थितेरिति, मैवम्। कयापि नियमस्थित्या प्रवृत्तायां

प्रवृत्तिरिति न सत्यत्वेन प्रमाणाद्यभ्युपगमः कथौपयिक इत्याशयः। निग्रहः = प्रतिवादिन्यभावाय दोषाभिधानम्। एवं प्रथमानुमानं निरस्य 'प्रमाणादयः कथकाभ्यां सत्त्वेनाभ्युपगन्तुमर्हाः कथाहेतुत्वादि'ति द्वितीयानुमानं निराचष्टे नापीति। एवम् = प्रमाणादिषु कथकाभ्यां सत्त्वेनाभ्युपगमार्हत्वम्। हेतुता तत्सत्त्वानभ्युपगमे निवर्तेतेति। सत्त्वेन प्रमाणाद्यनभ्युपगमे प्रमाणादेः कथाहेतुता निवर्तेतेत्यन्वयः। तथा च साध्यं विनाऽपि हेतोरुपपत्तेरनुकूलतर्कविरहादप्रयोजकत्वमिति भावः। एवं = प्रकृतसाध्यं विना प्रकृतहेत्वभावः। कथाहेतुत्वे कथकाभ्यां सत्यत्वेनाभ्युपगमनीयत्वव्याप्यत्वोपगमे बाधकमाह तथा सतीति तत्सत्त्वानभ्युपगन्तॄणां = सत्त्वेन प्रमाणाद्यनभ्युपगन्तॄणां। हेत्वनुपपत्तेरिति। कारणाभावादित्यर्थः। सत्यत्वेन प्रमाणाद्यनभ्युपगमे प्रमाणादावुक्तव्यापकस्याप्यभावपर्यवसानेन कथाहेतुत्वस्याप्यसम्भवात् सत्यत्वेनानभ्युपगतेनाहेतुभूतेन प्रमाणादिना कथानिष्पत्त्यनुपपत्तेरिति भावः। कथक वाग्व्यवहारं प्रतीति स्वरूपोत्कीर्तनमात्रं न तु हेतुघटकं, वैयर्थ्यात्, हेतुत्वेनैव सत्त्वसाधनसम्भवात्। न च यथानिरूपितहेतुतावत् तत्तद्व्यवहितप्राक्क्षणे सदिति व्याप्तिविशेषलाभाय सत्, सत्त्वं च वृत्तिमत्त्वम्, हेतुत्वस्य नियमानन्यथासिद्धिघटितत्वाच्च न हेतुसाध्ययोरविशेष इति वाच्यम्; विवादपर्यवसानापत्तेः। सत्त्वादेरननुगतत्वेन व्यक्तिविशेषयोः कार्यकारणभावं स्वीकुर्वता चार्वाकेणापि व्यक्तिविशेषाव्यवहितप्राक्क्षणवृत्तित्वस्य व्यक्तिविशेषेऽभ्युपगमात्, नितरां स्वद्वैतवादिना, चार्वाकादिमते पुनर्हेतुसाध्ययोरविशेषोऽपि, व्याप्तिग्रहोपायं निराकुर्वता तेन नैयत्यघटितहेतुत्वस्यानभ्युपगमात्। अस्तु वा कथञ्चित्, तथापि पारमार्थिकत्वमेव हेतुत्वेन हेतुना प्रमाणादौ सिषाधयिषितमद्वैतवादिनं प्रति। अपारमार्थिकशुक्तिरूप्यादौ हेतुत्वस्यादृष्टत्वात्प्रवृत्त्यादिकं च प्रति तज्ज्ञानस्यैव हेतुत्वादिति भावः। ब्रह्म तु न दृष्टान्तः, पारमार्थिके तत्र हेतुतानुपगमात्। सत्त्वाद्येति। एतेन सत्यात्मकयोग्यतावच्छेदकं न पक्षतावच्छेदकम् प्रमाणत्वादेः स्वीकारेऽपि तादृशयोग्यत्वस्य परेणानङ्गीकारात् अपि तु सत्त्वमेव, तथा च तत्साधनं विनोक्तयोग्यतासाधनमनुपपन्नमित्यपि निरस्तम्। अभ्युपगमः = सत्यत्वप्रकारकाभ्युपगमार्हत्वं। अभ्युपगम्यते = तादृशाभ्युपगमार्हम्। इतिस्थितेः इति वाक्यप्रदर्शितव्याप्तेः। यद्यपि पूर्वपक्षोत्तरपक्षौ सविस्तरमुपरिष्टाद्वर्णनीयौ, तथापीदानीमपारमार्थिके हेतुत्वसाधनं विनापि कथाऽऽरम्भोऽद्वैतिना शक्योपपाद इत्यनुशयेन प्राह कयापीति। नियमस्थित्या = नियमानां कथौपयिकानां समयबन्धेन। कथायां प्रसाध्य इत्यन्वयः। प्रवृत्तायामित्यन्तं प्रकृतकथायां कथकाभ्यां प्रमाणादिकं सत्त्वेनाभ्युपगम्य प्रवर्तितत्वाभावसूचनार्थम्, अन्यथा प्रकृतकथाया अपि सत्त्वप्रकारकप्रमाणाद्यभ्युपगमेन प्रवृत्तौ तत्र तादृशाभ्युपगमसाधन वैयर्थ्यात्। तथा च कथासामान्यस्य प्रमाणादिविशेष्यकसत्यत्वप्रकारकाभ्युपगमजन्यत्वं व्यभिचारान्न सम्भवति, तादृशाभ्युपगमार्हत्वं

कथायां कथकवाग्व्यवहारं प्रति हेतुत्वात् प्रमाणादीनां सत्त्वं, सत्त्वाद्या-
भ्युपगमो भवता प्रसाध्यः। कथातः पूर्वं तत्त्वावधारणं वा परपराजयं
वाऽभिलषद्भ्यां कथकाभ्यां यावता विना तदभिलषितं न पर्यवस्यति
तावदनुरोद्धव्यम्, तच्च व्यवहारनियमसमयबन्धादेव द्वाभ्यामपि ताभ्यां
सम्भाव्यते इति व्यवहारनियमसमयमेव बध्नीतः। स च, "प्रमाणेन
तर्केण च व्यवहर्तव्यं वादिना, प्रतिवादिनाऽपि कथाङ्गतत्त्वज्ञानविपर्यय-
लिङ्गप्रतिज्ञाहान्याद्यन्यतमनिग्रहस्थानं तस्य दर्शनीयम्, तदुद्व्युत्पादने
प्रथमस्य भङ्गो व्यवहर्तव्यः, अन्यथा तु द्वितीयस्यैव, तादृशेतरौ च जेतृतया
व्यवहर्तव्यौ, प्रामाणिकः पक्षस्तात्त्विकतया व्यवहर्तव्य" इत्यादिरूपः।

---

प्रसाध्य प्रकृतकथारम्भे, प्रकृतकथारम्भ च तादृशाभ्युपगमार्हत्वप्रसाधनेऽन्योन्याश्रयापत्तेः, पूर्वपूर्व-
कथायां प्रसाधिततादृशाभ्युपगमार्हत्वेनोत्तरोत्तरकथारम्भोपपादने चानवस्थानापत्तेरिति। तादृशाभ्युप-
गमाव्यवहितोत्तरजायमानकथां प्रति तादृशाभ्युपगमस्य हेतुत्वे तु चार्वाकादिना तार्किकादेःकथायां न
काप्यनुपपत्तिः। समयबन्धस्य तु कथासामान्यं प्रत्येव हेतुत्वम्, अव्यभिचारात्, न तु सत्त्वेन प्रमाणा-
द्यनभ्युपगमपूर्वककथायामेवेत्याशयेन सफलं समयबन्धमाह कथात इति। कथकाभ्यामनुरोद्धव्यमि-
त्यन्वयः। अनुरोद्धव्यम् = उपेयम्। तच्च = अभिलषितञ्च। व्यवहारनियमेति। कथाविषयकनियमानां
समयस्य करणादित्यर्थः। अथवा 'इत्थमेव व्यवहर्तव्यमि'त्यादिव्यवहारविषयकनियमो यस्तद्विष-
यकसमयबन्धादित्यर्थः। तत्त्वनिर्णयविजयान्यतरप्रयोजनव्याप्तं कथासामान्यं, तादृशप्रयोजनं च
समयबन्धेन व्याप्तमिति समयबन्धनिवृत्त्या प्रयोजननिवृत्तौ कथाऽपि निवर्तेत, व्यापकाभावस्य व्याप्या-
भावव्याप्यत्वादिति सिद्धा कथासामान्यं प्रति समयबन्धस्य हेतुतेति भावः। स च = समयबन्धश्च,
इत्यादिरूप इति परेणान्वयः। तर्केणेति आत्माश्रयादिरूपस्तर्क एकः, तदन्यश्च व्याप्तिग्राहको
विषयपरिशोधकश्चेति द्विविधः, 'धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादि'त्याद्यः, पर्वतो
यदि निर्वह्निः स्यात् निर्धूमः स्यादिति द्वितीयः परामर्शग्राह्याभावापादकः, गौरवलाघवानौचित्यादिरू-
पश्चापरो मूलकृत्सम्मतश्चतुर्थपरिच्छेदे व्युत्पादितस्तेन सर्वेणेत्यर्थः। एवं विचारस्य प्रथमां कक्ष्यामभि-
धाय द्वितीयां तामाह प्रतिवादिनापीति। अपिश्चार्थे। प्रतिज्ञेति पर्यनुयोज्योपेक्षणमित्येतत्यादिः।
प्रतिज्ञाहान्यादयो द्वाविंशतिर्निग्रहस्थानानि, तेष्वप्युक्तिविरहमात्रेण प्रत्येतव्यान्यनुक्तग्राह्यतया प्रसि-
द्धानि त्रीणि, अज्ञानाननुभाषणाप्रतिभाः। प्रतिवाद्युक्तिसमये एव प्रत्येतुं शक्यानि चोद्यमानग्राह्यतया
प्रसिद्धानि निरर्थकापार्थकार्थान्तराप्राप्तकालानि चत्वारि, परिशिष्टानि प्रतिज्ञाहान्यादीनि पञ्चदशोत्त-
राग्राह्यसंज्ञकानि। आद्यैरपि निरनुयोज्यानुयोगोऽन्तर्भावः। पर्यनुयोज्योपेक्षणं विहाय चैतदन्यतमं
प्रतिवादिना दर्शनीयम्। पर्यनुयोज्योपेक्षणं तु मध्यस्थेनैव दर्श्यते, न खलु वादी 'त्वया मदीयं पर्य-
नुयोज्योपेक्षणं नोद्भाव्य'मिति प्रतिवादिनमभिधाय स्वस्य स्वाभावं स्वयमेव प्रकटीकर्तुमुत्सहते, तथा
प्रतिवादी 'मया स्वदोषं पर्यनुयोज्योपेक्षणं 'नोद्भावि'ति स्वीयदोषस्वमपह्नुतिविरहितो दर्शयितु-
मर्हति। तत्र चायं तार्किकसमयः निग्रहस्थानेषु सति सम्भवे हेत्वाभासातिरिक्ता एव प्रथममुद्भाव्याः,
तदभावे तदुत्तरं वा हेत्वाभासा उद्भाव्या इति। कथाङ्गतत्त्वज्ञानविपर्ययलिङ्गं तु तदीयं स्थानं मूले
उपन्यस्तम्। कथाङ्गं यत्तत्त्वज्ञानं प्रमाणादिस्वरूपविषयकं निग्रहस्थानादिविषयकं च हेयोपादेयविष

अतएव 'व्यवहारनियमसमयबन्धेऽपि हेतुर्वक्तव्यः, तथा च सोऽपि हेतुः कथायां प्रवृत्तायामभिधातुं युक्तः' इति प्रमाणसत्त्वाभ्युपगमहेत्वभिधानवत् प्रत्यवस्थानमनवकाशम्, द्वाभ्यामपि वादिभ्यां विचारप्रवृत्त्याऽभिलप्यमाणतत्त्वव्यवस्थाजयमूलत्वेन व्यव-

यकत्वेन द्विविधं तद्विपर्ययस्य = तदभावस्य लिङ्गत्वं ज्ञापकत्वमिति तदर्थः। दृष्टे हि प्रतिज्ञाहान्यादौ 'अयं' कथानुगुणतत्त्वज्ञानशून्यः प्रतिज्ञाहान्यादिमत्त्वादिति शक्यमनुमातुम्। अतएव निग्रहस्थानशब्दस्यापि न्यग्भावज्ञापकत्वमर्थः। यद्यपि तत्त्वज्ञानाभावस्यैवाज्ञानविपरीतज्ञानरूपस्य निग्रहस्थानत्वं "विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानमिति" सूत्र उक्तम्, तथाप्यज्ञानविपरीतज्ञानयोः परनिष्ठयोरनुमायोद्भावने तत्र 'कुत' इति परकीयजिज्ञासाया आवश्यकत्वेन तल्लिङ्गानां प्रथममुद्भावनौचित्यात् निग्रहस्थानत्वं युक्तम्, तथाच सूत्रे विप्रतिपत्त्यप्रतिपत्तिशब्दौ तल्लिङ्गपरौ। तस्य = वादिनः, अस्य निग्रहस्थानमिति पूर्वेणान्वयः। तद्व्युत्पादने = प्रतिवादिना स्वोद्भावितनिग्रहस्थानस्य लक्षणयोजनेन समर्थने। भङ्गः = निवृत्ताहङ्कारता। अत्र हेतौ हेत्वाभासविशेषलक्षणयोगेनानुमितितत्करणान्यतरप्रतिबन्धकयथार्थज्ञानविषयतावच्छेदकरूपवत्त्वात्मकस्यासाधकत्वस्याप्यनुमानं दूषकतौपयिकं तार्किकसम्मतमिति ध्येयम्। अन्यथा तु = उद्भावितनिग्रहस्थानासमर्थने तु। द्वितीयस्य = उद्भावयितुः। तस्योद्भावितदोषासमर्थने निरनुयोज्यानुयोगेन निग्रहादिति भावः। तात्त्विकतया = अबाधिततया। तादृशेतरौ = शक्यसमर्थननिग्रहविरही, स्वोद्भावितनिग्रहस्थानसमर्थको वा। तेनैकस्यां कथायां द्वयोर्जेतृत्वासम्भवेऽपि न क्षतिः। इत्यादिरूप इत्यादिपदेन त्वयाऽयं पक्षः साधनीयः, अनेनायं पक्षो दूषणीयः, स्वस्याज्ञानादिनिरासाय द्वाभ्यां परस्परोक्तमनुवदनीयम्, प्रतिज्ञादयोऽवयवा एतावन्तः प्रयोक्तव्याः, प्रथमं साधकेन वाच्यम्, पश्चाद्दूषकेण, प्रतिज्ञाहान्यादौ सति कथाविरामः, हेतोर्दृष्टान्तस्य चोभयसम्मतत्वं प्रतिबोधनीयमात्रसम्मतत्वं चेत्यादि ग्राह्यम्। इदमत्र ध्येयम्—यद्यपि निग्रहस्थानान्तर्गतहेत्वाभासोद्भावनस्य विपरीतकोटिसाधकहेतौ मध्यस्थादीनां सद्धेतुत्वग्रहविघटकतया व्यवस्थापनीयकोटेः समीचीनत्वनिश्चयफलकतया तत्त्वनिर्णयौपयिकत्वमुद्भावयितुर्विजयप्रयोजकत्वं च सम्भवति, प्रतिज्ञाहान्याद्युद्भावनस्य तु कथाङ्गतत्त्वज्ञानशून्यत्वानुमापकत्वेऽपि न विपरीतकोटिसाधकत्वेनोपन्यस्तप्रमाणे प्रामाण्यग्रहविघटनद्वारा व्यवस्थापनीयकोटेः समीचीनत्वनिश्चयफलकतया तत्त्वनिर्णयाद्यौपयिकत्वम् विपरीतकोटिसाधकत्वाभिमते प्रामाण्यसत्त्वेऽपि कथकदोषात् प्रतिज्ञाहान्याद्युपपत्तेः। तथापि तदुद्भावनेन कथानुगुणतत्त्वज्ञानविरहानुमितौ प्रतिवादिनः कथानधिकारनिश्चयेन तदुद्भावयितृविजयप्रयोजकत्वं निराबाधमेव, तत्त्वनिर्णयौपयिकत्वं तु नापसिद्धान्तहेत्वाभासातिरिक्तनिग्रहस्थानोद्भावनस्येति। अतएवेति वक्ष्यमाणाद्धेतोरित्यर्थः। अनवकाशमित्यग्रिमेणान्वयः। समयबन्धेऽपि = समयबन्धस्य कथाहेतुत्वेऽपीत्यर्थः। युक्त इति प्रत्यवस्थानमित्यन्वयः। प्रमाणसत्त्वाभ्युपगमहेत्वभिधानवदिति व्यतिरेकी दृष्टान्तः। सत्त्वेन प्रमाणाद्यभ्युपगमस्य कथाङ्गत्वे हेत्वभिधानानुयोगः सावकाशः, हेतोः कथाविशेषे एवाभिधेयत्वात् तस्य च तादृशाभ्युपगमं विनैव वाच्यत्वात् व्यभिचारेण तादृशाभ्युपगमस्य कथाहेतुत्वासिद्धेरित्युक्तत्वात्। अयम्भावः—कथासामान्यं प्रति समयबन्धस्यापि हेतुता कस्याञ्चित् कथायामेव साधनीया, साधनं विनैव तस्य तद्धेतुत्वे तादृशाभ्युपगमस्यापि तद्धेतुत्वापातात्। तथाच तस्याः कथायाः समयबन्धं विनैवोपगन्तव्यत्वात् अन्यथान्योन्याश्रयाद्यापत्तेरिति व्यभिचाराच्च समयबन्धस्यापि कथासामान्यहेतुतेति। विचारप्रवृत्त्याऽभिलप्यमाणौ = विचारसाध्यतयेष्टौ तत्त्वनिर्णयविजयौ तदौपयिकत्वेन व्यवहार-

चिता; तादृशव्यवहारनियममात्रेणैव कथाप्रवृत्त्युपपत्तेः। प्रमाणादिसत्त्वाभ्युपगमेऽपि तथाविधव्यवहारनियमव्यतिरेके तत्त्वनिर्णयस्य जयस्य चाऽभिलषितस्य कथकयोरपर्यवसानात्। नापि तृतीयः, लोकव्यवहारो हि प्रमाणव्यवहारो वा स्यात् पामरादिसाधारणव्यवहारो वा, नाद्यः, विचारप्रवृत्तिमन्तरेण तस्य दुर्निरूपत्वात्, तदर्थमेव च पूर्वं नियमस्य गवेषणात्। नापि द्वितीयः, शरीरात्मत्वादीनामपि तथासति भवता स्वीकर्तव्यतापातात्।

दुष्टत्वस्योक्तत्वात्, न वा संवादः समयबन्धे सम्भवी, किन्तु विचारे एव, तस्यैव प्रमित्युत्पादकत्वेन प्रवृत्तिसंवादित्वादिति; तन्न; मूलदोषप्रयुक्तदोषस्य मूलदोषनिराकरणेनैव निराकरणीयत्वात् तत्त्वनिर्णयविजयान्यतरफलकथानिष्पत्तेरेव समयबन्धसंवादत्वाच्च तस्येत्यनेन समयबन्धस्यैव परामर्शौचित्यात्। न हि प्रमाणानुपन्यासस्य समयबन्धहेतुत्वे भ्रममात्रेण समयबन्धस्य दुष्टता, येन विचारस्य दुष्टता शङ्कितुरभिप्रेता स्यात्, तस्मात्समयबन्धस्याकारणत्वापत्तिरेव पूर्ववादिसम्मता सैव चोत्तरवादिना निरास्येति। नन्वत्रच्छलेन समयबन्धस्य विचाराङ्गतायां प्रमाणं प्रकृतकथायामेव त्वयोपन्यासि, तथाच सत्त्वेन प्रमाणाद्यभ्युपगमस्य विचाराङ्गतायामपि प्रमाणोपन्यासो न ममाप्यनुपपन्न इत्यनुशयमूलामाशङ्कां निराचष्टे नच प्रमाणादीनामिति। प्रमाणादीनां सत्तापि = प्रमाणादयोऽपि सत्त्वेन। इत्थमेव = अन्वयव्यतिरेकाभ्यामेव। प्रमाणादिसत्त्वाभ्युपगमेऽपि = प्रमाणादिविशेष्यकसत्त्वप्रकारकाभ्युपगमेऽपि। व्यतिरेक इति। तदतिरिक्तसकलकारणसमवधाने तदभावप्रयुक्तो यदि कार्याभावस्तदैव तस्य कारणत्वम्, नच तादृशाभ्युपगमातिरिक्तसमयबन्धादिरूपसकलकारणसमवधाने तादृशाभ्युपगमाभावप्रयुक्तः कार्याभावः चार्वाकादेर्विचारदर्शनात् अस्ति तु समयबन्धातिरिक्तसकलकारणसमवधाने समयबन्धाभावप्रयुक्तः कार्याभावस्तस्मात्समयबन्धस्यैव विचारकारणत्वमिति भावः। प्रमाणादयः कथकाभ्यां सत्त्वेनाभ्युपेया लोकसिद्धत्वादिति तृतीयहेतुं दूषयति नापीति। लोकशब्द उक्तहेतौ लोकव्यवहारपर इत्याशयेनाह लोकव्यवहार इति। प्रमाणव्यवहारः = प्रमाणमूलकोऽव्यवहारः। तस्य = प्रमाणमूलकव्यवहारस्य, व्यवहारे प्रमाणमूलकत्वस्येति यावत्। तदर्थमेव = विचारप्रवृत्त्यर्थमेव। पूर्वं = विचारात्पूर्वं। नियमस्य = विचारहेतोः। गवेषणादिति। तथाच सति विचारे व्यवहारे प्रमाणमूलकत्वसिद्धिस्तत्सिद्धौ च प्रमाणमूलकव्यवहारसिद्धत्वेन हेतुना सत्त्वेन प्रमाणाद्यभ्युपगमसिद्धिस्ततश्च विचारसिद्धिरिति चक्रकमितिभावः। एवं च तादृशाभ्युपगमं विनैव विचारोऽभ्युपेय इत्युक्तं भवति। तथासति = पामरादिव्यवहारसिद्धत्वस्यापि सत्त्वेनाभ्युपगमव्याप्यत्वे सति। भवता = तादृशव्याप्यत्वमभ्युपगच्छता। प्रमाणमूलकव्यवहारसिद्धत्वमेव तादृशाभ्युपगमनीयत्वव्याप्यमित्याशयेनाशङ्कते पश्चादिति। देहे आत्मत्वविरहप्रहानन्तरमित्यर्थः। नाभ्युपेयते इत्यन्वयः। तत् = शरीरात्मत्वादिकं। विचारेति। देहस्यात्मत्वे तस्य प्रतिदिनमन्यत्वेन प्राचीनदिनानुभूतस्मरणानुपपत्तिः, सद्योजातबालस्येष्टानिष्टसाधनताबोधाधीनेष्टानिष्टेक्षणजन्यहर्षशोकानुपपत्तिः, स्तन्यपानादिप्रवृत्त्यनुपपत्तिः, कृतहान्याद्यापत्तिः, रूपादिवदात्मविशेषगुणत्वे चैतन्यस्य यावद्देहभावित्वापत्तिः, स्वप्नादिदशायां जाग्रद्देहभेदप्रतीतावपि स्वात्माभेदप्रतीत्यनुपपत्तिश्चेत्यादिविचारेत्यर्थः। बाध्यतया = प्रमिताभावप्रतियोगितया। विचारेति। प्रमाणादीनां सत्यत्वे दृश्यत्वाद्यनुपपत्तिः, वक्ष्यमाणात्माश्रयादिप्रसङ्गानुपपत्तिश्चेत्यादिविचारेत्यर्थः। नेति सत्त्वेनेत्यादिः। अन्यथा = सत्यत्वेऽपि दृश्यत्वाद्युपपादने। प्रमाणादयः कथकाभ्यां सत्त्वेनाभ्युपेया अतिप्रसङ्गीभूताभावप्रतियोगिसत्त्वप्रकारकाभ्युपगमविशेष्यत्वादिति चतुर्थहेतुमवहेलयति नापीति। तस्य =

पश्चात्तद्विचारबाध्यतया नाभ्युपेयते इति चेत्; तर्हि प्रमाणादयोऽपि यदि विचारबाध्या भविष्यन्ति तदा नाभ्युपेया एव, अन्यथा तूपगन्तव्या इति लोकव्यवहारसिद्धतया सत्त्वमभ्युपगम्यते इति तावन्न भवति। नापि चतुर्थः, यादृशो भवता प्रमाणादीन्यभ्युपगम्य व्यवहारनियमः कथायामालम्ब्यते, तस्यैव प्रमाणादिसत्त्वासत्त्वानुसरणोदासीनैरस्माभिरप्यवलम्बनात्, तस्य यदि मां प्रति फलातिप्रसञ्जकत्वं तदा त्वां प्रत्यपि समानः प्रसङ्गः। स्यादेतत्, नियतवाग्व्यवहारक्रियासमयबन्धेन कथां प्रवर्तयतापि व्यवहारसत्ताऽभ्युपगन्तव्या, नहि सत्तामनभ्युपगम्य व्यवहारक्रियाऽभिधातुं शक्या, क्रिया हि निष्पादना, असतः सद्रूपताप्रापणमिति यावत्, प्रमाणैर्व्यवहर्तव्यमिति नियमबन्धनं प्रमाणकारणभावस्य नियमान्तर्भावात् नियतपूर्वसत्त्वं कारणत्वं प्रमाणानामनादाय न पर्यवस्यति। दूषणानां चास्तित्वेन भङ्गावधारणनियमबन्धने, साधनाङ्गव्याप्त्यादीनां सत्त्वेन तद्विपक्षस्य तत्त्वरूपताव्यवहारनियमनादौ च, कण्ठोक्तमेव तस्य तस्य सत्त्वमङ्गीकृतमिति रिक्त-

समयबन्धस्य। त्वां प्रत्यपीति। त्वयापि समयबन्धस्वीकारात्। तथाच सत्त्वप्रकारकप्रमाणादिविशेष्यकाभ्युपगमे तत्त्वनिर्णयादिफलातिप्रसञ्जकीभूताभावप्रतियोगित्वस्यैवाभावान्स्वरूपासिद्धिः, फलातिप्रसङ्गभङ्गश्च समयबन्धेनैवेति निरुक्ताभ्युपगमो व्यर्थ इति भावः। नियतेति। नियता = व्याप्या वाग्व्यवहारस्य क्रिया = उत्पादना येन तादृशेन समयबन्धेन, वाग्व्यवहारकारणेनेति यावत्) कथां प्रवर्तयता = कथाप्रवृत्तिं स्वीकुर्वता। व्यवहारसत्ता = वाग्व्यवहारस्य कार्यस्य सत्ता = कालसम्बन्धः अभिधातुं = समर्थयितुं। निष्पादना = उत्पादना असतः = प्रागभावप्रतियोगिनः सद्रूपताप्राप्तिः = कालसम्बन्धस्तदनुकूलो व्यापारः, यादृशकाले यत्प्रागभावनिवृत्तिस्तादृशकालसम्बन्धस्तस्योत्पत्तिस्तदनुकूलव्यापार उत्पादना अत्र प्रागभावनिवृत्तेर्द्वितीयादिक्षणेऽपि सत्त्वात् तदुत्पत्तेर्निवेश्यत्वे उत्पत्तिलक्षणे उत्पत्तिप्रवेशापत्त्या स्वसमानकालीना ये पदार्थास्तत्प्रतियोगिकध्वंसानाधारसमयसम्बन्धरूपाद्यक्षणसम्बन्ध एव स्योत्पत्तिर्विवक्षणीया, द्वितीयादिक्षणानां तादृशध्वंसाधारत्वाद्व्यावृत्तिः। समयपदेन कालिकसम्बन्धलाभाच्च प्रागभावक्षणानां व्यावृत्तिः, वर्तमानयोरेव कालिकसम्बन्धात्, आद्यक्षणवृत्तिध्वंसप्रतियोगिनस्तु न स्वसमानकालीना इति। अयम्भावः—त्वयाऽनात्मनि देशत्वकालत्वव्यापकीभूताभावप्रतियोगित्वं ह्यसत्त्वमुच्यते, तच्च न समयबन्धादिजन्यत्वेनाभिमते वाग्व्यवहारे घटते कालसम्बन्धं विना तदुत्पत्तेरसम्भवात् तदभावस्य कालत्वाव्यापकत्वादिति। इदमुपलक्षणम्, कालासम्बन्धिनः कारणत्वस्याप्यसम्भवात् समयबन्धस्य कारणत्वे निरुक्तासत्त्वाभावापत्तिस्तत्रापि द्रष्टव्या। एवं प्रमाणादिकारणतामादायापि तादृशापत्तिमाह प्रमाणैरिति। तर्कैरित्यपि द्रष्टव्यम्। नियमबन्धनं न पर्यवस्यतीत्यन्वयः। भावादिति अन्यथा करणतृतीयानुपपत्तेरिति भावः। सत्त्वं = सत्त्वघटितम्। यद्यपि नियतपूर्वसत्त्वं कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपमेव तच्च न कालसम्बन्धघटितं तथापि तदपि कालसम्बन्धं विना नोपपद्यते इति भावः। अस्तित्वेनेति प्रयोज्यत्वं तृतीयार्थोऽवधारणेऽन्वेति। अस्तित्वं च कालसम्बन्ध इत्याशयः। साधनाङ्गेति। अनुमितिजनकज्ञानविषयीभूतेत्यर्थः। आदिना पक्षधर्मतापरिग्रहः। अथवा साधनाङ्गत्वस्य परम्परयाऽनुमित्यौपयिकसद्धेतुताप्रयोजकत्वमित्यर्थः तथाचादिपदेनाबाधितत्वासत्प्रतिपक्षितत्वयोरपि ग्रहणात्र बहुवचनासङ्गतिः। सत्त्वेनेति। व्यवहारान्वयि प्रयुक्तत्वं तृतीयार्थः। तद्विपक्षस्य = अनु-

मिदमुच्यते-'प्रमाणादीनां सत्तामनभ्युपगम्य कथारम्भः शक्यते' इति । मैवम् । एभिरपि बाधकैः कथायामारब्धायामेवाभिमतस्य प्रसाधनीयत्वे पूर्वोक्तबाधाया अनिस्तारात् । नच व्यवहारनियमस्य स्वेच्छास्वीकृतस्यैव प्रमाणादिसत्तास्वीकारपर्यवसायितया नायं दोषः स्यात् । यतः सत्ताज्ञानस्य तत्राङ्गत्वं न तु सत्तायाः, तत्र किं सत्त्वावगममात्रात् सत्ताऽभ्युपगम्येति मन्यसे, अबाधिताद्वा तदवगमाद्वा ।

---

मितिविषयस्य । तत्त्वरूपता = प्रमितत्वम् । तस्य तस्य = दूषणव्याप्त्यादेः । प्रमाणादीनां सत्ताम् = देशत्वकालत्वव्यापकीभूताभावप्रतियोगित्वाभाववत्त्वेन प्रमाणादीनीत्यर्थः । अभिमतस्य = सत्त्वेन प्रमाणाद्यभ्युपगमे कथाङ्गत्वस्य । बाधाया इति । यस्यां कथायां तादृशाभ्युपगमे कथाङ्गत्वसाधनं तत्रैव व्यभिचारात् न तस्य कथाङ्गत्वं, प्रतिवादिभिस्तादृशाभ्युपगमस्य कथाप्राक्काले विरहात् । ननु न मया कथायां तादृशाभ्युपगमस्य कथाङ्गत्वं साध्यते, अपितु समयबन्धस्य हेतुतां स्वीकुर्वता त्वयोक्तरीत्या तादृशाभ्युपगमोऽपि कथाङ्गतया स्वीकृत इत्येवोच्यते इत्याशङ्कां निराचष्टे नचेति । स्यादित्यनेनान्वयः । तत्र = कथायाम् । सत्ताज्ञानं बाधकालीनं ममास्त्येव, अनाहार्यनिश्चयात्मकस्वीकारस्तु न मम, स च न कथाङ्गमिति भावः । नतु सत्ताया इति । सत्ताभ्युपगमस्य वेति शेषः, तेन सत्त्वाभ्युपगमस्य कथाङ्गता पूर्ववादिनोक्तेति सैव निषेद्धुमुचितेति निरस्तम्, सत्ताया अपि कथाकारणत्वोपपादकतया कथाङ्गत्वेन पूर्ववादिसम्मतत्वात् । सत्ताज्ञानस्येत्युक्त्याऽधिष्ठानगतसत्त्वस्य प्रपञ्चे भानं सूचितम्, अतएव च तत्र कालसम्बन्धोऽपि, अन्यथा देशत्वकालत्वव्यापकीभूताभावप्रतियोगित्ववति ज्ञानविषयत्वस्यैवासम्भवेन सत्ताप्रकारकज्ञानविषयत्वस्य दूरोत्सारितत्वात्, नह्यलीकोऽपि कश्चित्पदार्थ इत्युक्तम् । प्रमाणवत्त्वादायातः प्रवाहः केन वार्यते' इति न्यायेन चोक्ताभावप्रतियोगित्यपि प्रपञ्चे कालसम्बन्धोऽवश्योपेयः, नहि घटादौ तेन विना 'घटं सन्तं पश्यामीति' प्रतीतिरुपपद्यते, तथा निरुक्ताभावप्रतियोगित्वं विना द्वैतावच्छेदकदेशकालावच्छेदेन द्वैताभावं समर्पयन्ती "नेह नानास्ती" त्यादिश्रुतिः सङ्गच्छते । उपशाम्यतु वा भावाभावयोर्न्यूनाधिकसत्ताकल्पनादिना विरोधः । अथैवं माध्यमिकमतात्सदधिष्ठानातिरिक्तांशे को विशेष इति चेत्, प्रक्रियाभेदमवधूय न कश्चित् । चतुर्थपरिच्छेदे मूले "परेण विकल्पः सर्वथा वस्त्वनुल्लेखी केवलमलीकमुल्लिखन्नसत्ख्यात्यात्मा स्वीक्रियते" इत्युक्तिस्तु माध्यमिकमते खपुष्पादिविषयकविकल्पाभिप्रायेणैव, तन्मते तत्र कालसम्बन्धिनोऽपि भानात् । निरुक्ताभावप्रतियोगित्वं तन्मतेऽलीकसाधारणमपि घटादौ सांवृतसत्त्वसमानाधिकरणमेव । उपगन्तव्यश्च 'घटः सन्नि'त्यादि प्रतीतिविषयं जनकत्वापरपर्यायार्थक्रियाकारित्वरूपं सत्त्वं योगाचारादिना पारमार्थिके स्वीकृतमपि सांवृतमिति स्वीकुर्वता माध्यमिकेन तत्र कालसम्बन्धोऽपि, अन्यथा जन्यजनकभावासङ्गतेः, तथा च गगनकुसुमायमानत्वं प्रपञ्चस्य नोभयमतेऽपि, उक्तं ह्यद्वयवज्रसङ्ग्रहे बौद्धैः-"प्रतीत्य सम्भवादेव गन्धर्वपुरवत्स्फुटं । न स्वभावस्थितं विश्वं नाकाशाम्भोजसन्निभमिति" ॥ प्रतीत्य सम्भवात् = प्रतीत्य समुत्पादात् । अतएव व्यावहारिकस्याबाध्यत्वस्य शून्यत्वभावनानिवर्त्यस्य माध्यमिकमते स्वीकारश्चन्द्रिकायामुक्तः । तत्रैव चागमबाधोद्धारप्रकरणे 'योगाचारमते ज्ञानभिन्नस्यालीकत्वं नतु मिथ्यात्वं, शून्यवादे तु ज्ञानज्ञेयप्रपञ्चस्य मिथ्यात्वमिति' कण्ठरवेणोक्तम् । एवं च प्रातीतिकं व्यावहारिकं वा सत्त्वमादाय समयबन्धादे हेतुत्वोपपत्तिरिति भावः । ननु 'सत्ताज्ञानस्ये'त्यत्र 'बाध्यसत्त्वस्ये'त्येव कुतो नोक्तं, कारणत्वघटकं हि सत्त्वं नतु तज्ज्ञानम्, आवश्यकत्वान्निर्वचनीयस्योभयस्याप्यभ्युपगमे तत्र बाध्यसत्त्वमिति चेत्सत्यम्, अतएव "व्यावहारिकी प्रमाणादिस-

**न तावदाद्यः, मरुमरीचिकादौ जलरूपतासद्भावाभ्युपगमप्रसङ्गात् ।**

---

त्तामादाये"त्युपसंहरिष्यति । अत्र "सत्ताज्ञानस्ये"त्युक्तिस्तु सत्ताज्ञानं विना प्रातीतिकत्वादेरनिर्वाहात्तस्योपजीव्यत्वाभिप्रायेण, युज्यतेतमां चैतद्दृष्टिसृष्टिवादे, अतएव "सत्तावगमान्तरस्यैव शरणत्वादि" त्युपरितनपङ्क्तिरपि सङ्गच्छतेतराम् । किञ्च, वस्तुतः स्वरूपासिद्धादिनापि हेतुना कदाचिद्विजयफलकत्थोपपत्तेः सत्ताप्रतीतेरेव कारणत्वं वाच्यम्, व्यवहारिकस्यैव कारणत्वेन प्रातीतिकस्य कार्यकारणत्वात्, अन्यथा प्रातीतिकरजतेनापि कटकादिनिर्माणप्रसङ्गात्, अतएव "प्रातीतिकं न कुत्रापि कारणं किन्तु तज्ज्ञानं चिद्रूपमिति" चन्द्रिकायामुक्तम् । व्यक्तीकरणीयं चेदं परत इति । अवगमविषयत्वं विषयत्वं वा सत्यत्वव्याप्यं नवेतिविप्रतिपत्तिं निराचष्टे मरुमरीचिकादाविति । जलेति । पिपासोपशमनसमर्थेत्यादिः । तेन तत्र प्रातीतिकजलसद्भावेऽपि न क्षतिः । व्यावहारिके इव प्रातीतिकेऽपि जलत्वप्रकारकप्रतीतिसद्भावादेव प्रातीतिकेऽपि जलत्वम्, अतएव "अध्यस्तं तोयं परमार्थतोयमिवेति" भामती सङ्गच्छते अन्यथा तोयत्वातिरिक्तरूपेण साजात्यासम्भवादिवासङ्गतेः, प्रत्यक्षप्रतीतिकृतसादृश्यस्य विषयसादृश्याविनाभूतत्वात्, अतएव 'पूर्वदृष्टावभास" इतिभाष्यस्य पूर्वदर्शनविषयतावच्छेदकधर्मप्रकारकावभास इत्यर्थः । अन्यथाऽन्यथाख्यात्यापत्तेः । किञ्च प्रतिवादिना तार्किकेण प्रातीतिकजलसत्त्वमेव नोपेयते इति व्यावहारिकजलसत्त्वमेवापादयितुमुचितम् । नचैवं व्यावहारिकस्य जलस्य क्वापि सत्त्वात् तार्किकस्येष्टापत्तिः; अतिप्रसङ्गभङ्गाय यद्विशेष्यकावगमविषयत्वं यत्र, तत्रैव तत्सत्त्वमित्यस्यावश्योपेयत्वात् मरुमरीचिकादावपि प्रसङ्गसम्भवादिष्टापत्त्यनवकाशात् । अवगमशब्देन प्रमाविवक्षणे तु द्वितीयकल्पेऽन्तर्भाव इति ध्येयम् । यद्यपि त्रिकालाबाध्यत्वरूपसत्त्वस्यैव विवादास्पदत्वात् तदेवापादनार्हम्, तच्च न पिपासोपशमकजलेऽपि, तथापि परेण तत्र त्रिकालाबाध्यत्वस्यैवोपगमेन मरुमरीचिकादावेवापत्तिर्दत्तेति । यत्तु केनचित् मरुमरीचिकादावपि जलमनिर्वाच्यमुत्पद्यते इतीष्टापत्तिमाशङ्क्यानिर्वाच्योत्पत्ति निरस्ता, तन्मन्दम्, तदुत्पत्तेः प्रामाणिकत्वात्, नहि "न तत्र रथा न रथयोगा न पन्थानो भवन्ति, अथ सृजत"इति स्वरसत एव स्वाप्नपदार्थोत्पत्तिं, "सत्यं चानृतं चाभवदिति" सत्यशब्देन व्यावहारिकोत्पत्तिमभिधायानृतशब्देन प्रातिभासिकोत्पत्तिं चाभिदधाना श्रुतिरन्यथोपपद्यते, न वा रजतं पश्यामीतिधीर्मनागपि व्यावहारिकरजतधियोऽपरोक्षत्वे भिदामनासादयन्ती प्रातिभासिकोत्पत्तिं विना निर्वोढुमीष्टे विषयशूराणी हि ज्ञानानीति न्यायात् । विषयोत्पत्तिं विनाऽपरोक्षज्ञानोत्पत्त्यैव सा धीर्निर्वोढ्यतामिति चेद्घटादिष्वप्येवमेवास्त्विति व्यक्तव्यास्तेऽपि, घटं पश्यामीत्यादिप्रतीतेरपरोक्षज्ञानोत्पत्त्यैव निर्वाहात् । इष्टापत्तिरेवेति चेन्मूनमान्तरमेवापरोक्षावभासे नयने निमील्यैवास्थातुं समीहसे । कपालस्याप्यान्तरत्वान् तदवच्छिन्नचिद्रूपाधिष्ठानप्रतीत्यर्थमपि नयनव्यापारानपेक्षणात् । आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप' इति न्यायेन न नयनोन्मीलनाभावे स्वप्ने इव घटादिप्रत्यक्षापत्तियुक्तेति चेन्नन्वनुभवोपपत्तये निमित्तमेव कल्पयितुमुचितम्, अन्यथाऽदृष्टादेरपि त्यागापातात्, तदभावे सम्भाव्यमानापत्तेस्त्वदुक्तन्यायेनैव वारणसम्भवात्, स्यादेवावैचित्र्यमदृष्टाभावरूपकारणात् यदि नास्ति तदा वयं किं कुर्मः, नहि निमित्तमस्तीत्यारोप इति हि शक्यते वक्तुम् । तस्मात्सेव्यतां शून्यत्वकारागारमुपपाद्यतां वाऽनुभवसिद्धं परीक्षकैस्तृतीया तु नास्ति सरणिः । वस्तुतस्तु येन केनचित्कारणेन न कार्यं शक्यापादनं किन्तु सामग्र्यैवेत्येवोक्तन्यायाशय इति व्यक्तं व्याप्तिग्रहजागदीश्याम्, तथाच कारणान्तरसत्त्वे नयनादिसन्निकर्षाभावस्यैव सामग्रीविघटकतेति तत्सन्निकर्षस्यापेक्षणीयत्वे याद्यं स्वीकार्यमेवेति नोक्तन्यायेन

शक्यं प्रत्यवस्थातुमपि। रजताद्युत्पत्तौ गौरवमिति चेद्गौरवानुरोधानुभवानुरोधयोः कतरः श्रेयानिति विचारे आस्तां भवत एव मध्यस्थता।

किञ्च "प्रकर्षनिकर्षवत्ता कारणभेदानुविधायिनी सर्वत्रोपलब्धेति" न्यायेन कुसुमाञ्जल्युक्तेन यदुत्कर्षापकर्षौ यदुत्कर्षापकर्षानुविधायिनौ तस्य तत्कार्यत्वात् इन्धनोत्कर्षेण हुताशनोत्कर्षदर्शनान्निमित्तोत्कर्षस्यापि कार्योत्कर्षकत्वादुपादानोत्कर्षस्यैव कार्योत्कर्षहेतुत्वमित्यस्य नियन्तुमशक्यत्वात् शङ्खपीतिमोत्कर्षापकर्षयोश्च पित्तोत्कर्षापकर्षानुविधायित्वात् शङ्खपीतिम्नः पित्तजन्यत्वे वाच्ये तुल्यन्यायात्सिद्धान्यत्रापि प्रातिभासिकोत्पत्तिः। नच तत्र शङ्खपीतिमज्ञानोत्कर्षो नतु विषयोत्कर्ष इति वाच्यम्; साकारवादप्रसङ्गेन बहिर्विषयापलापापत्त्या ज्ञाने विषयोत्कर्षं विनोत्कर्षस्य वक्तुमशक्यत्वात्। नच जपाकुसुमसान्निध्ये स्फटिके लौहित्यान्यथाख्यातिस्वीकारवच्चक्षुर्द्वारा शङ्खसंलग्नपित्तगतपीतिम्नः सन्निहितस्यारोपाभ्युपगमोऽस्तु किं तदुत्पत्तिस्वीकारेणेति वाच्यम्; दृष्टान्तस्यैवासिद्धेः, सर्वस्यापि शङ्खसंयुक्तेन्द्रियजनस्य पीतत्वेन शङ्खप्रतीत्यापत्तेश्च। उत्पत्तिस्वीकारे तु यस्याविद्यावृत्तिसहितं यदुत्पन्नं तस्यैव प्रतीतिगोचरस्तदिति नियमात् ज्ञानार्थयोर्युगपदध्यासमूलकान्नातिप्रसङ्गः। नच देवदत्तपित्तपीतिम्नोऽन्यं प्रत्यतीन्द्रियत्वनियमं परिकल्प्यातिप्रसङ्गो निरास्य इति वाच्यम् पुरुषमात्रं प्रत्यतीन्द्रियत्वकल्पनाया लघुत्वात्, अतीन्द्रियत्वप्रयोजकस्य समानत्वाच्च नहि देवदत्तधर्माधर्मादिकं तदन्यं प्रत्येवातीन्द्रियम्, ईश्वरयोग्यतिरिक्तत्वनिवेशस्त्वावयोः समानः। प्रातीतिकविषयोत्पत्तिस्वीकारे तस्य सत्त्वेन निर्वाच्यत्वं तु नापादनीयम्, पारमार्थिकसत्त्वेनैवानिर्वाच्यत्वोपगमात्। एतेन-अस्तु रजताभासादिकं किञ्चिद्, तथापि तन्नोत्पद्यते, अपरोक्षप्रतीतिबलात्तस्य शशशृङ्गादिवैलक्षण्यमात्रस्योपगमात्, पुरोवर्त्यधिष्ठानतावच्छेदकेन्द्रियसन्निकर्षसंस्कारदोषादिघटितसामग्रीबलाच्च तज्ज्ञानमित्यपि निरस्तम्। दोषोत्कर्षापकर्षानुविधाय्युत्कर्षापकर्षशालिनस्तस्योत्पत्त्यावश्यकत्वात्। किंच तत्पुरोवर्तिन्यविद्यमानं वा विद्यमानं वा, विद्यमानत्वेऽपि सादि वा, अनादि वा, अनादित्वेऽपि सावयवं वा निरवयवं वा निरवयवत्वेऽपि गुणादिकं वा द्रव्यं वा, नाद्यः, अविद्यमानत्वाविशेषादन्यत्रापि भानापत्तेः, अन्यथाख्यातेरेव युक्तत्वापत्तेश्च। अथ रजतं पश्यामीत्यादिप्रतीत्या रजते लौकिकविषयतावगाहनात् ज्ञानात्मकसन्निकर्षस्यालौकिकविषयतानियामकस्यानङ्गीकार इति चेत्, तर्हि लौकिकविषयताशालिरजतप्रत्यक्षं प्रतीन्द्रियसन्निकर्षत्वेन कारणतायाः क्लृप्तत्वात् नाविद्यमानभानस्य दोषबलादप्युपपादनसम्भवः। दोषकार्यताया रजतज्ञानत्वावच्छिन्नत्वकल्पनापेक्षया रजतत्वावच्छिन्नत्वकल्पनायां लाघवाच्च, नचाविद्यावृत्तेरपि दोषकार्यत्वं त्वया वाच्यमिति वाच्यम्, अविद्यावृत्तिं विनापि साक्षिभास्यत्वेन निर्वाहसम्भवात्। नच साक्षिणो नित्यत्वात् नाशानुपपत्तौ रजतविषयकसंस्कारानुपपत्तिः, रजततादात्म्यापन्नेदमाकारवृत्तिनाशे तदवच्छिन्नसाक्षिनाशादेवोपपत्तेः। नापि विद्यमानत्वे सति सादि, उत्पत्तिवादापत्तेः। नापि विद्यमानानादिसावयवम् सावयवत्वे घटादिवदुत्पत्तिध्रौव्यादनादित्वानुपपत्तेः। अथ विद्यमानानादिनिरवयवम्, तदा सावयवत्वेनानुभवापलापापत्तिः, एतेन गुणत्वद्रव्यत्वपक्षौ निरस्तौ। अनादित्वनिरवयवत्वद्रव्यत्वाद्यनेकधर्मकल्पनापेक्षया धर्म्युत्पत्तिकल्पनायां लाघवाच्च, धर्माणां व्यावहारिकाणामेव प्रातिभासिके भानोपगमात्। ज्ञानसमकालसत्त्वकल्पनयैवोपपत्तौ ज्ञानात्पूर्वं सत्त्वकल्पनाया अप्रामाणिकत्वाच्च। अथ सर्वैर्धर्मैरनिर्वाच्यमेव तदिति चेत्तथाप्यनुभवोपपत्तये उत्पत्तिकल्पनाया औचित्यात्, सर्वथैवानिर्वाच्यत्वे मौनालम्बनापाताच्च, अनिर्वाच्यताया अप्रतिसमाधेयव्याधिमात्रस्य चिकित्सात्वाच्च। एतेन रजतादेर्बुद्धिसत्त्वपक्षोऽपि व्युदस्तः, बाह्यप्रपञ्चापलापत्तेः। दृष्टिसृष्टिवादेऽपि ज्ञातसत्ताकबाह्यप्रपञ्चोपगमान्न तेन प्रत्यवस्थानमपि। रजतं पश्यामीतिधीस्तु क्षणत्रयपर्यन्तं भ्रमानुवृत्तौ प्रमैव, द्वितीयक्षणे सन्निकर्षबलात्तृतीयक्षणे रजते चाक्षुषविषयतोपपत्तेः। आद्यक्षणे च साक्षि-

तदित्थं, यदि नाम वादिप्रतिवादिमध्यस्थमात्रस्य दूषणादिसत्तावगमः कथाकालमात्रे तैरबाध्यमानः कथाङ्गत्वेनाभ्युपेयते तदा किमायातं सर्वप्रकाराबाधिततत्सत्त्वावगमायत्ततत्सत्त्वाभ्युपगमकथाङ्गतानङ्गीकारस्य । कतिपयप्रतिपत्तृकतिपयकालतथात्वावगमादेव प्रायेण लौकिको व्यवहारः प्रतीयते, तादृशश्चायं सत्त्वावगमः कथाङ्गम् । एतत्तदुच्यते "व्यावहारिकीं प्रमाणादिसत्तामादाय विचारारम्भ" इति । तस्मात् 'यादृग्व्यवहारनियमः कृतस्तन्मर्यादाऽनेन नोल्लङ्घिता' इति यद्वादिवाक्व्यवहारे मध्यस्थावगमः. स विजयते, यस्य तु वचसि नैवं तस्यावगमस्तस्य पराजयः, यत्र वाद्युक्तनिग्रहसत्त्वावगमः स निगृहीतः. तदितरस्तु न तथेत्यादिनियम एव कथारम्भाय ग्राह्यः । 'अनेन नियमेन वक्तव्य' मित्यस्याप्ययमर्थः—'अनेन नियमेनोक्तमनेने' ति मध्यस्थावगमस्य विषयीभवितव्यमिति । न च वाच्यमन्ततस्तदवगमस्यापि सत्ताभ्युपेयेति; तस्यापि सत्ताचिन्तायां तत्सत्तावगमान्तरस्यैव शरणत्वात् । न चैवमनवस्था. तदनुसरणावश्यम्भावानङ्गीकारात्, "एवं त्रिचतुरज्ञानजन्मनो नाधिका मति" रिति न्यायात् । इति प्रमाणाद्यभ्युपगमस्य कथाङ्गत्वखण्डनम् ॥

दूषणादिविशेष्यकसत्ताप्रकारकावगमः । तैरबाध्यमानः = वादिप्रभृतिगतविपरीतप्रमाविषयताशून्यः, व्यवहारानौपयिकविषयकत्वप्रहाणाहकन्दित इति यावत् । तेन वेदान्त्यादेः प्रतिवादिनः कालानवच्छिन्नस्य बाधकज्ञानविषयत्वाभावस्य दूषणादिसत्त्वे प्रहासम्भवेऽपि न क्षतिः । कथाकालमात्रे इति व्यवहारकालस्योपलक्षणम् । सर्वप्रकारेणाबाधितः = कालानवच्छिन्नेन बाधकज्ञानाभावेनोपलक्षितत्वेन विशिष्टः यो दूषणादिसत्त्वावगमस्तदधीनो यो दूषणादिसत्त्वस्याभ्युपगमोऽनाहार्यनिश्चयः तस्य कथाङ्गताऽनङ्गीकारस्य मदिष्टस्य किमायातम्, परमार्थसत्त्वाभ्युपगमो न कथौपयिक इति मम मतं नच्छिन्नमिति भावः । तथात्वेति । सत्त्वेत्यर्थः । तादृशः = व्यवहारकालाबाध्यः । एतत्तदुच्यते = तदिदमुच्यते । व्यावहारिकीं = व्यावहारकालाबाध्याम् । आदाय = अभ्युपगम्य । एवं वस्तुसत्त्वस्यानपेक्षणीयत्वव्यवस्थितौ समयबन्धोऽपि तत्तत्सत्त्वावगमघटितो न तु वस्तुसत्त्वघटित इत्यनुशयमुपसंहारव्याजेनोद्घाटयति तस्मादिति । तस्यावगमः = मध्यस्थावगमः । तथा = निगृहीतः । यादृग्व्यवहारनियमः कृतस्तन्मर्यादाऽनेन नोल्लङ्घितेत्यत्र नियमस्य वास्तवत्वे पुनरप्यनिष्टप्रसङ्ग इत्याशङ्क्याह अनेनेति । अर्थः = तात्पर्यार्थः । प्रतीतिर्वा प्रातीतिकं व्यावहारिकं वा सत्त्वं वाऽपेक्षणीयमित्यत्र नादरः । वस्तुतस्तु प्रातीतिकं व्यावहारिकं वा सत्त्वं सत्त्वेन प्रतीतिमात्रमेवेत्यत्रैव निर्भरः, याचितमण्डनन्यायेनैव प्रातीतिकादेः सत्त्वेन प्रतीतेः । तदवगमस्य = अनेन नियमेनोक्तमनेनेत्याकारावगमस्य । सत्ता पारमार्थिकी । अभ्युपेयेति । अवगमस्यासत्यत्वे तस्य जयपराजयव्यवस्थानौपयिकत्वप्रसङ्गादिति भावः । अवगमविषयकावगमान्तरेणैव निर्वाहसम्भवेऽवगमस्य सत्ताभ्युपगमो गौरवपराहतः, अवगमविषयकावगमस्य तत्सत्तावादिनाप्यनुमतत्वात् अन्यथा तत्सत्त्वानिर्वाहादित्याशयेनाह तस्यापीति । तदनुसरणेति अवगमान्तरधारापेक्षणेत्यर्थः अत्रावगमो वृत्तिरूपो न तु चिद्रूपः, अन्यथाऽनवस्थाशङ्काऽनुदयापातात्, न च चिद्रूपावगममादायैव समाधानं कुतो न कृतमिति शङ्क्यम्, तथासति शून्यतायाः उत्सर्गेण निरूपणस्य चिकीर्षितस्यानुपपत्तेः । न च तादृशनिरूपणनैष्फल्यम्, शून्यतानिरूपणं विना तदपवादरूपायाः स्वसाक्षितया चैतन्यसिद्धेरनिर्वाहादित्यवधेयम् । इदञ्चापरमवधेयम्—खण्डनादिभिन्नग्रन्थानैकसत्त्ववादे चैतन्यस्य ज्ञानत्वेन तद्घटकत्वं तस्य नित्यत्वेन पदार्थानां सर्वेषां सार्वदिकत्वप्रसङ्गभङ्गाय वृत्त्युपहितचैतन्यस्यैव ज्ञानत्वे वाच्ये वृत्तेरपि वृत्त्यन्तराधीनसत्ता-

## अथ शून्यतोत्सर्गः ।

नचान्तिमासत्त्वे पूर्वप्रवाहासत्त्वापत्तिः तथाचावगममादायापि व्यवहरतो न निस्तारः इति वाच्यम् । अस्त्वेवं हि, तथापि त्रिचतुरज्ञानकक्षागवेषणमात्रविश्रान्तेन

कक्षापत्तौ सम्भवत्यनवस्थाशङ्का, त्रिचतुरज्ञानाधिकज्ञानास्वीकारोऽपि समानः । अन्तिमासत्त्वे पूर्वप्रवाहासत्त्वापत्तिरप्यग्रे एष्टव्यत्वेन वक्ष्यमाणा समाना. असत्त्वं चेदं सांवृतसत्त्वपर्यवसायीति नानौचित्यम्, वृत्तेः स्वयमेव स्वसत्तार्थं चैतन्योपाधित्वं स्वात्माश्रयं नातिक्रामतीति सांवृतसत्त्वमेवोपोद्बलयति । एवमिति । प्रादर्शने तावत्तवैकं स्वतः प्रामाण्यमश्नुते इत्युत्तरार्द्धम्, ज्ञानानां स्वतः प्रामाण्यमित्युत्सर्गः, नहि दोषादिसम्भावनां विना प्रामाण्ये सन्देहो दृष्टचरः, प्रायशश्च प्रमाणान्येव ज्ञानानि, अतएव मूले चतुर्थपरिच्छेदे उत्सर्गोत्थनङ्केन प्रामाण्यस्य स्वतस्त्वं निरूपयिष्यते यत्र तु दूरत्वादिदोषादप्रामाण्यशङ्कासमुन्मेषः, तत्र समीपगमनादिना तथैवार्थप्रतीतौ न प्रामाण्यज्ञानधारापेक्षा, द्वितीयेनैव ज्ञानेन प्रथमज्ञानविशेष्यकाप्रामाण्यकोटिताकसन्देहस्य विधूननात्, तत्रापि दोषसम्भावनायां तु शरणीकरणीयं ज्ञानान्तरम्. एवं यस्य प्रामाण्यमुत्तरज्ञानेन समर्थितम्, तस्य नापोदितं स्वाभाविकं प्रामाण्यम्, अपोदितं तु दोषादिज्ञानेन निश्चिताप्रामाण्यकस्य तत् । तदिदमुक्तमेवमित्यादिना भट्टपादैः । त्रिचतुरज्ञानोत्पत्तौ सत्यामधिकज्ञानोत्पत्तिर्नापेक्ष्यते इत्यर्थः । त्रिचतुरेति अनुभवसिद्धज्ञानसङ्ख्योपलक्षणमात्रं नतु नियमः । प्रकृतेऽपि त्रिचतुरज्ञानेन निर्वाहे नानवस्थेति भावः ॥ इति खण्डनशारदायां प्रमाणाद्यभ्युपगमस्य कथाङ्गत्वखण्डनम् ॥

ननूत्सृष्टं प्रामाण्यं वस्तुसदिति ज्ञानपरम्परां विनैवावतिष्ठतेति युज्यते, भवन्मते त्ववगमानां वस्तुसत्त्वानभ्युपगमात् स्वविषयकावगममात्रजीवातुकानां तेषामसत्त्वमेव स्यादवगमपरम्परां विना, नच सैष्टव्या, सुषुप्त्यादिविलोपापातादित्याशङ्क्य निराचष्टे नचेति । असत्त्वे इति । ज्ञानाविषयत्वेनेति हेतुः । व्यवहरतः = व्यवहारमुपपादयतः । निस्तारः = स्वपक्षसिद्धिः । अस्त्वेवं हि = एवमेवास्त्वित्यर्थः । "शून्यतासिद्धिं सर्वमुत्सर्गेण निरूप्यते । ब्रह्मतत्त्वेऽपवादाय तर्कैः कर्कशतां गतैः" ॥ सांवृतसत्त्ववादे हि क्षणिकज्ञाननिर्वाच्याया भ्रान्तेरेव संवृतिरूपत्वात् तन्नियतस्य सत्त्वस्य तदभावेऽभावध्रौव्यादिष्टापत्त्यतिरिक्ताया गतेरभावात्, नच शून्यत्वमप्रामाणिकम्, ज्ञेयं विषयो वा देशकालत्वव्यापकीभूताभावप्रतियोगिताश्रयः सत्त्वादिनाऽनिर्वाच्यत्वात् मरीच्युदकवदित्यनुमानस्य मानत्वात् । ज्ञेयत्वावच्छेदेन च साध्यमनुमित्सितम्, नचात्मनि बाधः, त्रिकालाबाध्यत्वस्याप्यवज्ञदुर्ग्रहत्वेन सत्त्वादिना तस्याप्यनिर्वाच्यत्वात्, को हि लक्षणप्रमाणाभ्यामात्मानात्मनोरनिर्वाच्यत्वे विशेषः, येनैकस्य सत्त्वमपरस्य चासत्त्वं स्यात्, अन्यथा कस्यचिद्रमाणस्य लक्षणप्रमाणनिर्वचनखण्डनस्थीनमतप्रज्ञापत्त्यापत्तेः । एतेन निरधिष्ठानकबाधायोग इत्यपि निरस्तम्, आत्मनि लक्षणप्रमाणयोर्दुर्वचत्वे निरधिष्ठानकबाधस्य प्रमाणपथप्राप्तत्वात् । नचासर्वज्ञेन ग्रहीतुमशक्यत्वं नानिर्वाच्यत्वप्रयोजकम्, सकलबाधकप्रमाविरहरूपयोग्यतायाः शब्दमणौ तथैव निरुक्तत्वात् । विषयस्यानिर्वाच्यत्वे च निर्विषयकज्ञानाभावात् ज्ञानस्य विषयसमानयोगक्षेमत्वाच्च तत्रापि बाधः, नचैवं खपुष्पसमत्वं तथाच "न सन्नासन्न सदसदिति" ग्रन्थविरोधः, प्रतीतिविशेषविषयत्वेन कालसम्बन्धित्वस्यापि साधनात्, निरुक्तसाध्ये एव तस्य विशेषणीयत्वाद्वा । नचैवं सदसत्त्वं, त्रिकालाबाध्यत्वाप्रवेशात् । नच कालसम्बन्धित्वेनासद्विलक्षणत्वे नाशप्रतियोगित्वेन च सद्विलक्षणत्वे लब्धे "नचानुभयतत्त्वक" मित्युक्तिविरोधः, कालसम्बन्धित्वादिनापि तात्त्विकत्वेन निर्वचनानर्हत्वात्, नच दृष्टान्तासिद्धिः, अन्यथाख्यात्यादेरप्रामाणिकताया अन्यत्र निवेदितत्वेन सांवृतसत एव मरीच्युदकस्य

विचारेण ततः परमननुसरणरमणीयेनैव च समयं बद्ध्वा कथायां मिथः सम्प्रतिपत्त्या प्रवर्तनात्, अन्यथा प्रमाणादिसत्त्वाभ्युपगमेऽपि ज्ञानानवस्थाया दुष्परिहरत्वात्। नच नाऽयं मत्पक्षे स्वरूपसता ज्ञानेन व्यवहारस्य चरितार्थयितुं शक्यत्वात् तज्ज्ञानपरम्परानुसरणमुचितम्, नत्वेवं त्वत्पक्षे स्वरूपसता ज्ञानेन व्यवहारस्य चरितार्थता, ज्ञाने स्वरूपसत्त्वाङ्गीकारप्रसङ्गादिति; स्वरूपसत्त्वमादायापि परिहरतोऽनवस्थाप्रसङ्गस्य स्वप्रकाशप्रस्तावे वक्तव्यत्वात्।

यथा च त्वत्पक्षे स्वरूपसत्त्वाविशेषेऽपि विज्ञानस्वरूपसत्तैव परं व्यवहारोपपादिका, न घटादिसत्ता, एवमेवासत्त्वाविशेषेऽपि ज्ञानमेवासद्व्यवहारोपपादकं नान्यत्। असच्चोपपादकञ्चेति व्याहतमिति चेन्न; सदुपपादकमिति कुतो न व्याहतम्, नहि सदुपपादक-

---

प्रतीत्यनुरोधादुपगन्तव्यत्वेन तत्र निरुक्तप्रतियोगित्वस्यावश्यकत्वात् अन्यथा तस्य पिपासोपशमकत्वापत्तेः। असदेव जलमभादित्यनुभवबलाच्च निरुक्तासत्त्वं तत्रोपगन्तव्यम्। किञ्च शून्यताया पुरुषार्थत्वादपि स्वीकार आवश्यकः, तथाहि तदभावे स्वसत्त्वमनुमन्यमानानां प्राणिनां सुखादीच्छया कर्मणि प्रवृत्त्यावश्यकत्वात् जन्मादिसन्तानापत्तौ मोक्षानुपपत्तेः, शून्यत्वनिश्चये तु न सुखादीच्छेति प्रवृत्त्यभावे मोक्षसम्भवः, तदुक्तं सौगतैः—"सर्वेषामपि तीर्थ्यानामहङ्कारनिवर्तनात्। मुक्तिरिष्टात्मसत्त्वे च नाहङ्कारो निवर्तते। अद्वितीयशिवद्वारमतो नैरात्म्यदर्शनमिति"॥ "तथाचावगममादायापि व्यवहरतो न निस्तार" इति यदुक्तं तत्राह तथापीति। वस्तुतः पूर्वप्रवाहासत्त्वेऽपीत्यर्थः। त्रिचतुरज्ञानानां कक्षा = परम्परा तस्या गवेषणमात्रेण = अभ्युपगमनीयत्वेन साधनमात्रेण विश्रान्तेन = उचितसमासिकेन विचारेण 'व्यवहारोऽवगममात्रेण निर्वाह्यो नवे'त्यतद्विषयकेण, अर्धान्तरं बद्ध्वेत्यत्र बन्धनान्वयि तृतीयार्थः। ततः परमननुसरणरमणीयेन = त्रिचतुरज्ञानाधिकज्ञानानामभ्युपगमनीयत्वेन साधनं विनैव अनवस्थानापादकत्वरूपरमणीयतावता समयं बद्ध्वा प्रवर्तनादित्यन्वयः, कथायां प्रवर्तनात् = प्रवृत्त्यौचित्यात्, मिथःसम्प्रतिपत्त्या = ऐकमत्येन तत्वनिर्णयादीच्छुतयेति यावत्। त्रिचतुरज्ञानैरेव व्यवहारनिर्वाह इति विचारपूर्वकमनुमन्य समयबन्धपुरस्सरं कथारम्भणीयेति भावः। यदि चासतोऽसाधकत्वमभिमन्य ज्ञानानवस्था भवताऽऽपाद्यते तदा मयाऽपि त्वन्मतं साऽऽपादयितुं शक्येति त्रिचतुरज्ञानाधिकज्ञानाभ्युपगमसाधनफलो विचारोऽनवस्थापादक एव स्यादित्याह अन्यथेति। त्रिचतुरज्ञानाधिकज्ञानाभ्युपगमसाधने इत्यर्थः। अनवस्थाया इति। प्रमाणादिज्ञानेन तत्सत्त्वं ज्ञानज्ञानेन च ज्ञानसत्त्वमित्यनवस्थाया इत्यर्थः। नच वाच्यमिति। प्रसङ्गादित्यन्तेन सम्बन्धः। मत्पक्षे = स्वरूपसत्त्वोपगन्तृपक्षे। स्वरूपसता = अज्ञातेन चरितार्थयितुं = उपपादयितुं। चरितार्थता = सम्भवः। वक्तव्यत्वादिति। तद्विषयकप्रमाणं विनैव तत्सत्त्वोपगमेऽतिप्रसङ्गादिति भावः।

अथासत्त्ववादे बाधकं निराचिकीर्षुणाऽसतः साधकत्वं सतश्चासाधकत्वमुपपादनीयम् तत्र तावदवगमस्यावगमान्तरप्रवाहानभ्युपगमादसत्त्वेऽपि साधकतामुपपादयति यथेत्यादिना। स्वरूपेति। ज्ञानज्ञेययोरित्यादिः, परं = केवलं, व्यवहारस्याभिलापादिरूपस्य जनिका, घटविषयकव्यवहारं प्रति घटविषयकज्ञानस्य जनकत्वात् घटे विषयितासम्बन्धावच्छिन्नं जनकतावच्छेदकत्वमेव, ननु जनकत्वम्, विशिष्टे कारणताग्राहकमानेनाऽऽसत्त्येव बाधके विशेषणे कारणताग्रहात् व्यवहारस्य स्वर्तीतादिघटविषयकस्यापि सत्त्वेनातीतादिघटस्य तत्र जनकत्वबाधादित्याशयेनैवकारः। नान्यदिति। ज्ञानं यदि परमार्थसत् स्यात् व्यवहारजनकं न स्यादिति तदापादनं ज्ञानं यद्यसत् स्यात् व्यवहारजनकं न स्यादित्यापादनेन

मसत्त्वेति क्वचिदाशयः सिद्धम् । ननु तदसत्त्वाविशेषात्कार्यस्यान्यदापि जन्मप्रसङ्गः, न, कार्यस्याद्यसत्ताक्षणे इवान्यदापि सामग्र्यसत्त्वाविशेषात् तथापि किमन्यदा कार्यजन्म ।

तुल्यम्, तव मतेऽसतोऽपि जन्मतः सत्त्वापत्तिः का, अन्यस्यादृष्टत्वादिति भावः। व्याहतम् = अनुपपन्नम्, कारणताया नियतप्राक्सत्त्वघटितत्वात् सत्त्वस्य पारमार्थिकत्वात् सत्त्वं विना नावस्थानसम्भवः, यद्यपि व्यवहारकालाबाध्यत्वापेक्षया त्रिकालाबाध्यत्वरूपपरमार्थसत्त्वस्य कारणताघटकत्वे गौरवम्, त्रैकाल्यघटितत्वेन दुर्ग्रहत्वञ्च, निष्प्रयोजनत्वञ्च, तथापि देशत्वकालत्वव्यापकीभूताभावप्रतियोगित्वरूपासत्त्वं इति व्यवहारकालाबाध्यत्वस्याप्यसम्भव एवेत्यभिमानः प्रतिबन्द्या परिहरति सदिति। कुत इति। कारणतायां प्राग्वृत्तिमात्रवृत्तौ परमार्थसत्त्वघटितत्वस्याप्रामाणिकत्वेन परमार्थसति कारणत्वानुपपत्तेरित्याशयः। क्वचित् कथायाम् ।तदिति । कारणेत्यर्थः। अन्यदा = कारणध्वंसादिसमये । घटानुत्पत्तिक्षणो यदि घटसामग्र्यव्यवहितोत्तरक्षणः स्याद्घटोत्पत्तिमान् स्यात् घटोत्पत्तिक्षणवदित्यापादनम् । निरुक्ताभावप्रतियोगित्ववतो यदि कदापि सत्त्वं तर्हि सर्वदेति न घटानुत्पत्तिक्षणे घटसामग्र्यव्यवहितोत्तरत्वस्य घटसामग्र्यधिकरणत्वघटितस्याप्रसिद्धिः, तदव्यवहितोत्तरत्वस्य तदधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणावृत्तित्वे सति तदधिकरणक्षणध्वंसाधिकरणक्षणवृत्तित्वरूपत्वात् । शक्यं ह्यापादयितुं यदि दण्डादि निरुक्ताभावप्रतियोगि स्यात्, अकारणकं स्यात् यदि दण्डादिकमकारणकं स्यात् सार्वदिकं स्यात् खपुष्पन्तु पक्षसमम्, प्रागभावस्त्वप्रामाणिक इति न तत्र व्यभिचारः। अत्रेदं चिन्त्यम्-देशत्वकालत्वव्यापकीभूताभावप्रतियोगित्वमात्रं नासत्त्वम् अपि तु कालसम्बन्धघटितम् "न सन्नासन्न सदसन्न चानुभयतत्त्वकम्, विमलं तर्कराद्धान्तमर्गांचिषु यथोक्तमिति" माध्यमिकमतप्रतिपादककारिकाव्याख्यानावसरे प्रामाणिकैरसत्त्वाभावे कालसम्बन्धस्यैव हेतुताया अभिहितत्वात् तस्य माध्यमिकासम्मतत्वे हेतुत्वासङ्गतेः । न च कालसम्बन्धोऽनुभवमनतिक्रम्यैवाभ्युपगन्तव्य इति न सार्वदिकत्वमिति सामग्र्यधिकरणक्षणोऽपि न सर्वः, नवा घटानुत्पत्तिक्षणः सामग्र्यव्यवहितोत्तरक्षण इति नापादनसम्भवः, उक्तप्रतियोगित्वस्य सार्वदिकत्वेन धर्मिणः सार्वदिकत्वापादने तु नित्यसमजात्यापत्तेः, "धर्मस्य तदतद्रूपविकल्पानुपपत्तितः । धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेदि" त्युक्तेरिति । इदमुपलक्षणम्-विज्ञानं वा दण्डादिकं वा यदि निरुक्तप्रतियोगितावत्स्यात् कालासम्बन्धि स्यात्, यदि कालासम्बन्धि स्यादजनकं स्यात्,तथा चासतो विज्ञानस्य व्यवहारोपपादकत्वमित्ययुक्तमिति । आद्येति । घटद्वितीयक्षणो यदि घटसामग्र्यव्यवहितोत्तरक्षणः स्यात् घटोत्पत्तिमान् स्यादित्यापत्तिभियाऽऽद्यक्षणे घटसामग्र्यभावो वाच्यः स च प्रागभावाभावप्रयुक्तो वा घटरूपप्रतिबन्धकसत्त्वप्रयुक्तो वेत्यन्यदेतत् । तथा चाद्यक्षणे इव द्वितीयादिक्षणेऽपि घटसामग्र्यभावोऽन्यथानुपपन्नो घटोत्पत्तिमाक्षिपेत् अन्यथाऽऽद्योऽपि क्षणो घटोत्पत्तिमान् स्यादिति भावः । नियामकं = व्याप्यम् । तथाऽदर्शनादिति । यद्यपि सामग्र्या अतीन्द्रियत्वात् तदव्यवहितोत्तरक्षणे कार्योत्पत्तिरिति न प्रत्यक्षगम्यम् क्षणोत्पत्त्योरप्यतीन्द्रियत्वाच्च, तथापि घटसामग्र्यभावस्य घटप्रयोजकत्वेऽतिप्रसङ्गात् घटोत्पत्त्यव्यवहितप्राक्क्षणे घटसामग्रीसत्त्वं कल्प्यते, एवं च द्वितीयादिक्षणस्य घटसामग्र्यव्यवहितोत्तरत्वाभावान्न घटोत्पत्तिमत्त्वापत्तिः घटसामग्र्या एव स्वाव्यवहितोत्तरक्षणावच्छिन्नघटोत्पत्तिव्याप्यत्वं न तु घटसामग्र्यभावस्येति भावः। तदसत्त्वं = सामग्र्यसत्त्वं कालान्तरस्थमपि = सार्वदिकमपि कार्याव्यवहितपूर्वक्षणवृत्ति सदेव स्वाव्यवहितोत्तरक्षणवृत्तिकार्योत्पत्तिव्याप्यम् । तथादर्शनादेव = फलबलेन तथा कल्पनादेव । एवं चानुत्पत्तिक्षणोत्पत्त्यापत्तिर्न युज्यते ।

अथ न मम तदानीन्तनं सामग्र्यसत्त्वं तदानीन्तनस्य कार्यजन्मनो नियामकम्, किन्तु ततः प्राक्सामग्रीसत्त्वं तथा दर्शनात्। तर्हि ममापि कालान्तरस्थमपि तदसत्त्वं तदातनकार्यजन्मनो नियामकम्, तथादर्शनादेव।

मम तु तदव्यवहितोत्तरत्वं तदा कार्यजन्मनो नियामकमिति चेन्न, समसमयत्वादागन्तुकत्वाच्चाविशेषेण नियम्यनियामकव्यवस्थानुपपत्तेः।

तदव्यवहितेति। सामग्र्यव्यवहितेत्यर्थः। तदा = सामग्र्यव्यवहितोत्तरक्षणे। नियामकं = व्याप्यम्। यदि पूर्वक्षणावच्छिन्नसामग्र्याः कार्योत्पत्तिनियामकत्वं मयोच्येत तदा तथैव त्वयापि पूर्वक्षणावच्छिन्नस्य सामग्र्यसत्त्वस्य तन्नियामकत्वं परिकल्प्यातिप्रसङ्गो निवार्येत, मया सामग्र्यव्यवहितोत्तरक्षणत्वस्य कार्योत्पत्तिव्याप्यत्वोपगमे तु नवातिप्रसङ्गस्त्वदवस्थः, असत्सामग्र्यव्यवहितोत्तरक्षणत्वस्य सर्वत्र विद्यमानत्वात्, सत्सामग्र्यास्तु क्षणिकत्वान्नातिप्रसङ्ग इति भावः। अत्र यद्यपि त्वयोक्तरीत्या कल्पनेऽपि मया पूर्वक्षणावच्छिन्नस्य सामग्र्यसत्त्वस्य कार्योत्पादप्रयोजकत्वोपगमे बाधकाभावः, मम कल्पनस्य त्वत्कल्पनानुरोधित्वात्, असत्सामग्र्या अपि पूर्वक्षणावच्छिन्नाया एव फलबलात्कार्योत्पादप्रयोजकत्वोपगमसम्भवाच्च, किञ्च सामग्र्याः क्षणिकत्वोपगमे परिशुद्धिप्रकाशोक्तरीत्याऽपसिद्धान्तापातात्, अर्थक्रियोपधायकत्वस्य क्षणिकत्वे तन्न्यायेनान्यत्रापि क्षणिकत्वापत्तेः, सामग्र्यन्तःपातिघटादेरपि कार्याव्यवहितप्राक्क्षणावच्छिन्नत्वेनार्थक्रियोपधायकत्वात् अत एवान्तिमशब्दस्यापि क्षणिकत्वानभ्युपगमो बौद्धाधिकारटिप्पण्यामुक्तः, स्थिरत्वे तु सामग्र्याः पूर्वक्षणावच्छिन्नाया एव कार्योत्पादप्रयोजकत्वोपगमस्यातिप्रसङ्गवारणायावश्यकत्वात्, न मन्मताद्विशेषः, दुर्वचत्वाच्च सामग्र्या असत्त्वमेवोपगन्तुं युक्तम्, तथाहि-प्रागभावेतरकादाचित्कयावत्कारणप्रागभावानाधारः कार्यप्रागभावाधारः क्षणः सामग्रीति न युक्तम्, एकक्षणवर्तिनी सामग्रीतिव्यवहारापलापापातात्, प्रागभावत्वादेर्दुर्वचतायाश्चतुर्थपरिच्छेदशारदायां सविस्तरमुपपादितत्वाच्च, नाप्येकाधिकरणे एकक्षणावच्छिन्नवृत्तिताकः कारणतावच्छेदकावच्छिन्नस्तोमः सामग्री, स्वर्गादिसामग्र्यामव्याप्तेः, स्वर्गकामो यजेतेति श्रुत्या यागस्यापि स्वर्गकारणत्वबोधनात् तस्य च ध्वंसत्वेन स्वर्गाव्यवहितप्राक्क्षणेऽवृत्तेः। न च व्यापारद्वारा तस्यापि तदा वृत्तिः, कुलाले मृते तस्य स्वजन्यघटत्वसम्बन्धेन भूतलवृत्तिमत्त्वेनाप्रतीतेः। स्वस्वव्यापारान्यतरनिष्ठनियतपूर्ववर्तितावच्छेदकावच्छिन्नस्तोमोक्तावपि, अन्यथासिद्ध्यभावकूटस्यापि निवेश्यत्वेन दुर्ज्ञेयत्वम्, किञ्च यथाश्रुते एकत्वस्याव्यावर्तकत्वेन तत्कारणाधिकरणक्षणवृत्तित्वविशिष्टापरकारणत्वादिरीत्या निवेशे विशेष्यविशेषणभावे विनिगमनाविरहेणैककार्यस्याप्यनेकसामग्रीकत्वापत्तिस्तत्तादिघटितत्वेनाननुगमश्चेत्यादि वक्तुं शक्यते तथापि समाधिसौकर्यादाह **समेति**। सामग्र्यव्यवहितोत्तरक्षणत्वोत्पत्त्योरेककालीनत्वादित्यर्थः। यद्यप्येककालीनयोरपि रसरूपयोर्व्याप्यव्यापकभावो दृष्टस्तथापि 'इदमस्मान्नियतप्राक्सदिदमस्मान्नियतोत्तरसदिति" प्रतीतिसाक्षिक एव नियम्यनियामकभावः कार्यकारणभावपदाभिषिक्तः प्रकृतविचारगोचरस्तथा कश्चिद्वाच्य इत्याशयः। व्याप्यव्यापकभावसाधारणं दूषणमाह **आगन्तुकत्वाच्चेति**। अव्यवस्थितत्वादित्यर्थः। सामग्र्यव्यवहितोत्तरत्वं कार्याधिक्षणे एव नान्यत्रेत्यत्र व्यवस्थापकान्तराभावेनव्यवस्था, अन्यथात्वव्यवस्था अप्रामाणिकत्वमिति यावत्। अविशेषेण = असमसमयत्वव्यवस्थितत्वाभ्यां नियम्यनियामकभावप्रयोजकरूपाभ्यां शून्यत्वेन। नियम्यनियामकव्यवस्था = नियम्यनियामकभावप्रमा।

अन्यदीयायाः = पूर्वक्षणावच्छिन्नायाः। तदा = स्वाव्यवहितोत्तरक्षणे। **मम इति**। पूर्वक्षणावच्छिन्न-

तस्मादन्यदास्थाया एव सामग्र्यास्तदा कार्यजन्मनियमोऽभ्युपेयः, तथा दर्शनादित्येव वाच्यम्, तथा च समः समाधिः। तथापि कार्यजन्मकालस्य को विशेषः? कार्यजन्मैव। अन्यथा यद्विशेषान्तरं तदपि विशेषान्तरवतः कालस्येत्यपर्यवसानमेव पर्यवस्येत्। तथापि तत्कालस्यानुगतं किं रूपमिति चेन्न, रूपान्तरवतोऽपि किं तदित्यस्यापि पर्यनुयोगस्यापत्तेः।

सामग्र्यसत्त्वस्य कार्योत्पादप्रयोजकताया ममापि सम्भवादिति भावः। *तथापि* = उक्तसमाधिसमन्वेऽपि। को विशेष इति। विशेषस्तावदानुभविको कार्योत्पत्त्यनुत्पत्तिकालयो नोपलभ्यः, नचासत्त्ववादे स सम्भवति, असत उत्पत्तेरेवासम्भवात्, असत्सामग्र्यव्यवहितोत्तरत्वस्य तु सामग्र्यामसत्त्वव्याहत्या विशेषत्वानुपपत्तेरिति भावः। अनिर्वाच्यत्वबलादसत्त्वेनावश्याभ्युगमनीयघटादेरुत्पत्तिरप्यानुभविकी न त्यज्यते इत्याशयेन परिहरति **कार्यजन्मैवेति**। एतेन कालसम्बन्धोपगमोऽसत्त्ववादे स्फुटमुक्तः, आद्यक्षणसम्बन्धस्यैव जन्मपदार्थत्वात्। *अन्यथा* = तद्विशिष्टकाले तदतिरिक्तस्यैव विशेषस्य स्वीकारे। *विशेषान्तरं* = सामग्र्यव्यवहितोत्तरत्वम्। सामग्र्यव्यवहितोत्तरत्वेन विशिष्टे काले तदतिरिक्तविशेषापेक्षायामनवस्थानादित्यर्थः। *तथापि* = कार्योत्पत्तेर्विशेषत्वसम्भवेऽपि। *तत्कालस्य* = उत्पत्तिकालस्य। अयम्भावः, कीदृशः कार्योत्पत्तिकाल इति प्रश्ने कार्योत्पत्तिमानित्युत्तरं को घट इति प्रश्ने घट एव घट इत्युत्तरमनुकरोति, तस्मात्कालगतं कार्योत्पत्त्यधिकरणतावच्छेदकं रूपं वाच्यम्, तच्च मन्मते सामग्र्यव्यवहितोत्तरत्वं सम्भवति, न तु त्वन्मते, असत्त्वे सामग्रीत्वानुपपत्ते। अथ गोत्वाधिकरणतावच्छेदकं यथा गोत्वमेव नतु सास्नादिमत्त्वमननुगतत्वात्, नचात्माश्रयः, गोत्वोपहितस्यैवाधिकरणत्वात्, तथा कार्योत्पत्तिरेव कार्योत्पत्त्यधिकरणतावच्छेदिकोपाधितयास्तु; न; गोत्ववत्कार्योत्पत्तेरननुगमात्; स्वसमानकालीनपदार्थप्रतियोगिकध्वंसानाधारसमयसम्बन्धरूपाया उत्पत्तेरननुगतस्वत्वादिघटितत्वात् सामग्र्यव्यवहितोत्तरत्वं त्वनुगतमित्यभिमानः। यद्यपि "नह्यसन्घटादिर्न घटादि" रितिवक्ष्यमाणरीत्याऽसत्यपि सामग्रीत्वसम्भव इति सामग्र्यव्यवहितोत्तरत्वस्य मन्मतेऽपि *तावच्छेदकतानुपपत्तिः*। यद्यपि च सामग्र्यव्यवहितोत्तरत्वमपि नानुगतम्, पुरोदीरितरीत्याऽननुगतत्वत्तादिघटितत्वात्, न वा रूपान्तरमपि शक्यमनुगन्तुं, न वा वृत्तिमतोऽननुगमे तदवच्छेदकाननुगमस्यादोषत्वे कार्योत्पत्तेरवच्छेदकत्वासम्भवोऽपि, तथाप्युपस्थितत्वादुदितदिशैव समाधत्ते **रूपान्तरवतोऽपीति**। *तद्* = अनुगतं रूपम्। सामग्र्यव्यवहितोत्तरत्वाधिकरणतावच्छेदकस्यापि जन्मकाले रूपान्तरस्य वक्तव्यत्वापत्तावनवस्था स्यात्, ततश्च कार्यजन्मन एव वरमुपाधितया स्वाधिकरणतावच्छेदकत्वमिति भावः। यत्तु केचिदनवस्थामपि क्वचित् प्रामाणिकीं मन्यमानास्तस्या अदूषणतामाहुस्तदयुक्तम्, क्वचित्परिहर्तुमशक्यत्वेन तस्या अदूषणत्वेऽतिप्रसङ्गात्, शक्यते हि येन केनचिद्वादिना स्वेनासम्भवत्परिहारस्यादूषणत्वोपगमः को वाऽप्रतीयमानानि विशेषकाणि रूपाण्यधिकरणतावच्छेदकानि चानन्तानि श्रद्दधीत, अतएव 'किञ्चिद्धि वस्तु स्वतो व्यावृत्तमिति" न्यायमालम्ब्य घटत्वादौ व्यावर्तकं धर्मान्तरं नानुमन्यन्ते प्राभाकराः। तार्किकैरेव वाऽनवस्थाया जातिबाधकता, अन्त्यविशेषाणां च स्वतोव्यावृत्तता किमित्युपेयते, वक्ष्यते चाधिकम्, तस्मात्—"अनवस्थादयो दोषाः सत्तां निघ्नन्ति वस्तुनः। अद्वैतिनां ते सुहृदः प्रपञ्चे तत्प्रसञ्जकाः" इति मूलकृद्गाथैव युक्ता।

अस्ति तावत्कारणत्वं तच्च सति न सम्भवतीति परिशेषादसत्येवोपगन्तव्यमित्याशयेनाह **किञ्चेति**। सत्ताविशिष्टं यदि कारणं *ततः* = *तर्हि* *असत्* = सत्तानाश्रयस्तत् = कारणमिति सिद्धम्, सत्ताविशिष्टस्या-

## अथासतःकारणत्वोपपत्तिः ।

किञ्च— अन्तर्भावितसत्त्वं चेत्कारणं तदसत्ततः ।
नान्तर्भावितसत्त्वं चेत्कारणं तदसत्ततः ॥ ४ ॥

सत्त्वात् सत्तानाश्रयत्वादिति यावत्, अन्यथा सत्ताविशिष्टं यदि सत्ताश्रयः, तदा सत्तायां सत्ताश्रयत्वापत्तावात्माश्रयः । प्रकृतविधेयान्वयिन एव विशेषणत्वात्, तादृशे एव विदुषां विशेषणताव्यवहारात्, तथाहि—"नहि व्यापारवन्तं व्यापार आश्रयते आत्माश्रयत्वादिति" कुसुमाञ्जलावुदयनाचार्याः, 'यद्व्यावर्तकं विशेष्यान्वयिनाऽन्वीयते तद्विशेषणमिति" प्रत्यक्षखण्डे मणिकाराः किरणावलिप्रकाशादौ वर्धमानोपाध्यायाश्च । विशिष्टे कारणताग्राहकमानेन विशेषणेऽपि कारणताग्रहमाश्रित्य लिङ्गपरामर्शस्य कारणत्वे लिङ्गस्यापि कारणत्वमित्युदयनाचार्यमतोपपादकतया परामर्शमणावुक्तम् । "प्रयत्नवदात्मसंयोगस्य चेष्टाद्वारा घटहेतुतया तद्विशेषणतया प्रयत्नस्यैवात्मनोऽपि हेतुत्वादिति" तर्कताण्डवे माध्वाः । अतएव गन्धसमवायिसंयोगस्य गन्धप्रत्यक्षहेतुत्वे हि यदि गन्धसमवायस्य विशेषणता, तदा स हेतुरेवेति प्रत्यक्षमणिः । अतएव च, घटादन्य इत्यादिवाक्याद्घटप्रतियोगिताकान्यत्वादिप्रकारेण निरवच्छिन्नविशेष्यताकबोधः, अतएव च घट इत्यादावपि निरवच्छिन्नैव विशेष्यता, अन्यथाऽयत्वघटत्वविशिष्टादावन्यत्वघटत्वादेर्वृत्तौ क्वापि तदवच्छिन्नविशेष्यताकतत्प्रकारताकबोधः प्रमात्वमालिङ्गेत । अतएव स्मृत्यजनकज्ञानान्यनिश्चयत्वेन स्मृतिजनकत्वं स्वस्य स्वावच्छेदकत्वापत्त्या गदाधरैरनुमितिग्रन्थे निरस्तम्, अन्यथा स्मृत्यजनकान्यत्वस्य स्मृतिजनकत्वरूपत्वेऽपि तादृशनिश्चयविशेषणत्वेन विशेष्यान्वयिनानन्वयित्वे स्वस्य स्वावच्छेदकत्वप्रसङ्गानवकाशादिति कृतं विस्तरेण । एतेन विषयविशिष्टभ्रमस्य मिथ्यात्वे विषयस्यापि मिथ्यात्वमिति चन्द्रिकाकृदुक्तौ "असति बाधके विशिष्टधर्मिकप्रतीतेर्विशेषणेऽपि प्रकारावगाहित्वमिति" व्याख्यानं निरस्तम्, सति बाधके विशेषणतां विहायोपलक्षणत्वादेरेवोपगन्तव्यत्वात्, अतएव दण्डिनं भोजयेत्यत्र भोजने दण्डस्यानन्वयात्र विशेषणत्वमित्यद्वैतरत्नादावुक्तम् । एतेन-स्वकालनियतव्यावृत्तिधीजनकत्वं वा प्रत्यायव्यावृत्त्यधिकरणतावच्छेदकत्वे सति व्यवच्छेदकत्वं वा विशेषणत्वमिति-निरस्तम् उक्तस्थले दण्ड उपलक्षणे श्रोत्रोपाधौ चातिव्याप्तेः, जनकतावच्छेदकं विना दुर्ग्रहत्वं च । तस्मात्सत्ताविशिष्टस्य कारणत्वे सत्ताश्रयो न कारणमिति युक्तम्, व्याघाताद्भये तु स्वीकार्यमुपाधित्वादिकमेव सत्तायाः इति भावः । परे तु—सत्ताविशिष्टस्य कारणत्वे सत्ताया अपि कारणत्वेन तत्र च सत्ताया वक्ष्यमाणरीत्याऽभावेनासदपि कारणमागतमेवेति-व्याकुर्वते । 'अन्तर्भावितसत्त्वं न कारणं चेत् = सत्ता न कारणमपि तु तदुपलक्षितमेवेति यावत् तदापि कारणत्वमसतः सिद्धम्, घटो ध्वस्त इति धीविषयस्यापि घटस्य सत्तोपलक्षितत्वात्त्वन्मते चासत्त्वात्कारणत्वापत्तेः । वस्तुतस्तु सत्तोपलक्षितस्य कारणत्वे उपलक्ष्यतावच्छेदकस्य कस्यचिदपेक्षणीयत्वादनुगतस्य च तस्यासम्भवात्तदसाधारणरूपमेव तद्वाच्यमिति तदवच्छिन्नस्यैव कारणत्वं युक्तं तच्च मन्मतेऽपि सम्भवति, सत्तानवच्छिन्नकारणतोपगमात् । नच-सत्ताया उपाधित्वं तदवच्छिन्नस्य च कारणत्वम् कारणता सत्ताव्याप्येति यावत्, व्याप्तिश्च दैशिकी कालिकी चेति-वाच्यम् व्यापकीभूता सत्ता यदि द्रव्यादित्रयसाधारणा तदा सामान्यादेः स्वविषयकप्रत्यक्षादौ कारणत्वाभावापत्तिः, अथ भावत्वं सत्ता, तदाऽभावस्याकारणत्वापत्तिः, अथास्तीतिधीविषयत्वयोग्यत्वं सा, तदा सा मन्मतेऽपि सम्भवत्येव अनिर्वाच्यस्वरूपसत्त्वस्य मयोपगमात्, त्रिकालाबाध्यत्वरूपा सत्ता न कारण-

तथाहि—अन्तर्भूतसत्त्वं यदि कारणत्वं तदा स्वविशिष्टे स्ववृत्तिरंशतः स्वाश्रयत्वमापादयति । विशिष्टस्यार्थान्तरत्वेऽपि च स्वस्मिन्स्ववृत्तिव्यतिरेकवत्स्वविशिष्टे स्ववृत्तिव्यतिरेकनियमदर्शनात् न सैव सत्ता तस्मिन्नित्यभ्युपगमे । विशिष्टवृत्त्यभ्युपगमे तामनिवेश्य कारणत्वमभ्युपगन्तुः सर्वथैवासत्कारणं पर्यवस्यति, अपरापरसत्तानिवेशने चापर्यवसानमेव । न च सत्ताभेदानन्त्यमस्त्येवेत्यपि पादप्रसारिका निस्ताराय; सत्ताभेदे हि सद्बुद्धि-

ताकुक्षुनुप्रवेशिनीत्येवास्माभिरुच्यमानत्वात्, तस्याश्च त्वयाऽपि कारणताघटकत्वस्य वक्तुमशक्यत्वात्, अन्यथा दण्डादौ तस्या दुर्ग्रहत्वेन कारणतां प्रतीत्य कारणसङ्ग्रहार्थप्रवृत्त्यभावापत्तेः, प्रतीतिकालसत्त्वापेक्षया गौरवाच्च, कारणत्वानुभवेन तस्या अनुल्लेखाच्च, अतएव दण्डः सन्निति प्रत्यक्षे तस्या न भानम्, तामजानानानामपि तादृशप्रत्ययोदयादिति भावः । अन्ये तु-सत्तोपहितस्य कारणत्वेऽपि सद्रूपादन्यदेव कारणं स्वीकृतम् नहि सत्तोपहितदण्डादि सद्रूपम्, प्रत्येकं सत्त्वभावनाकल्पने गौरवादेकस्य ब्रह्मण एव सद्रूपत्वोपगमौचित्यात्, नैकजातीयसम्बन्धेन सत्तायास्तत्र तत्र वृत्तिसम्भवेऽपि विलक्षणसम्बन्धेनैकाकारप्रतीत्यनुपपत्तेः, नेह नानेत्यादिश्रुतिविरोधाच्च दण्डादेः सद्रूपत्वकल्पनानवकाशादिति व्याचक्षते ।

अन्तर्भूतसत्त्वं = विशेषणतया अवच्छेदकीभूतं सत्त्वं यस्य तादृशम्, सत्ताविशिष्टनिष्ठमिति यावत्, अंशत इति । विशेषणरूपमंशमादायेत्यर्थः । स्वविषयकप्रत्यक्षं प्रति सत्तायाःकारणतोपपत्तये तत्र तदुपगमे तु सर्वांशे एव स्वाश्रयत्वमिति भावः । ननु घटभूतलसंयोगा इत्यत्र विशिष्टाव्यवहारात् विषयकृतवैलक्षण्यं विना प्रतीतिवैलक्षण्यस्य साकारवादापत्त्याऽसम्भवेन च विशिष्टविषयकप्रतीतितो विशेषणादिविषयकप्रतीतेविषयवैलक्षण्यस्यावश्यं वक्तव्यत्वाद्विशेषणादिव्यतिरिक्तमेव विशिष्टम्, तथा च सत्तायाः स्वविशिष्टे वृत्तावपि स्वस्मिन्वृत्त्यप्रसक्तया नात्माश्रय इत्यत आह विशिष्टस्येति । घटवद्भूतलं न भूतलमिति केवलभेदावगाहिधीस्तु भेदाभेदोपगमेन वारणीयेति भावः । व्यतिरेकवत् = व्यतिरेकनियमवत् । यथा स्वनिष्ठं तादात्म्यसम्बन्धावच्छिन्नं स्वनिष्ठाधिकरणतानिरूपितनिरूपकताऽभावव्याप्यत्वं तथा स्वविशिष्टनिष्ठाधिकरणतानिरूपितनिरूपकताऽभावव्याप्यत्वमपीत्यर्थः । स्वविशिष्टवृत्तीत्युचितः पाठः, स्वविशिष्टे स्ववृत्तीतिपाठे तु स्ववृत्तीत्यस्य स्वनिष्ठवृत्तितानिरूपिताधिकरणतेत्यर्थः । स्वविशिष्टे इत्यस्य च नियमेऽन्वयः, वृत्तावन्वयस्याप्रसिद्ध्याऽसम्भवात्, स्वविशिष्टे स्वनिरूपितवृत्तित्वनिषेधस्य च सन्दर्भविरुद्धत्वात् । विशिष्टवृत्तीति । इदमुपलक्षणम् स्वविषयकप्रत्यक्षादिकं प्रति सत्तायाः कारणत्वोपपत्तये तत्र तदुपगमेऽप्यनवस्था द्रष्टव्या । सद्बुद्धीति । सदाकारबुद्धिव्यवहारयोरनुगमः एकविषयकत्वं तस्य समर्थनं चैकविषयोपगमेन, तदुल्लङ्घनं तु नानाविषयोपगमेन । प्रथमेति । सदाकारानुगतप्रतीत्यादिबलादेव हि प्रथमसत्ताजातिसिद्धिः, तादृशप्रतीत्यादेरननुगतविषयेनोपपादनसम्भवे तु न प्रथमसत्ताया अपि सिद्धिरिति भावः । वृद्धिं = सत्ताऽनन्त्यं, मूलं = प्रथमा सत्ता, नत्वेति । स्वरूपसत्तोपगमो जातिवादिनो हितावहो नेत्यर्थः । सत्तानिष्ठासु सत्ताविशिष्टनिष्ठासु वा सत्तासु स्वरूपसत्त्वात्मकत्वोपगमे, विशिष्टघटकीभूतसत्ताया स्वरूपसत्त्वात्मकत्वोपगमे वा स्वरूपेणैव निर्वाहात् सत्ताजात्यानर्थक्यप्रसङ्गः, नवाऽसतः कारणत्वमित्यप्ययुक्तमिति भावः । तत्र हेतुमाह भिन्नानिति । बुद्ध्यादीत्यादिनाऽभिलापादिरूपो व्यवहारो ग्राह्यः तदाधानपदे = तज्जनकतापदे ऽभिप्रेता तज्जनकत्वेन स्वीकुर्वतेति यावत् । जातिमात्रायेति । अननुगतैः स्वरूपसत्त्वैस्तावदनुगतधर्मैरेवाशक्योपपादा, कथञ्चित्तदुपपादने वा गवाद्याकारानुगतधीव्यवहारयोरपि स्वरूपेणैवाननुगते-

व्यवहारानुगमसमर्थनलङ्घिनः प्रथमापि सत्ता न स्यादिति वृद्धिमिच्छतो मूलमपि ते नष्टमिति हा ! कष्टतरम्। न च स्वरूपसत्त्वोपगमाय स्वस्ति। भिन्नानप्यनुगतबुद्ध्याधानपन्देऽभिषिञ्चता त्वया हि जातिमात्राय जलाञ्जलिर्वितीर्येत। मा भूदनुगतिः स्वरूपसत्त्वस्येति च वदन् तद्गर्भिणीं कारणतां कथमनुगमयितासीति।

किञ्च स्वरूपसत्त्वं घटाद्यात्मनो नाधिकम्, असतोऽपि स्वरूपं स्वरूपमेव, नह्यसन् घटादिर्न घटादिः, तथा सति घटादिर्नेत्यपि न स्यात्, असतोऽघटादित्वात्।

नोपपादनसम्भवाद्गोत्वादिकमपि त्यक्तव्यमेव, क्लृप्तस्वरूपेणोपपत्तावक्लृप्तकल्पनायां गौरवादिति भावः। ननु सत्तां द्रव्यादित्रयसाधारणीं स्वीकुर्वता साऽनुगतप्रतीत्यादिबलान्न साध्यते अन्यथा जात्यादावपि सदाकारप्रतीतिसत्त्वात्तत्रापि तदुपगमापातात् किन्तु *जन्यसत्त्वावच्छिन्नं प्रति द्रव्यत्वेन हेतुतया कार्यता*वच्छेदकघटकतया तत्सिद्धिः, तथा च तत्प्रतिबन्धा न जातिमात्रखण्डनसम्भवः, किन्तु कारणतायाः सत्ताजातिशून्येऽपि सत्त्वान्तर्घटकत्वमननुगतस्वरूपसत्त्वस्यैव युक्तम्, तावतापि कारणतायाः सन्मात्रवृत्तित्वनिर्वाहादित्याशङ्क्य जात्यादावपि सद्व्यवहारसत्त्वे सप्तपदार्थसाधारणस्य तादृशव्यवहारनियामकस्य सत्त्वस्यानुपगमे गवादावपि व्यभिचारित्वादनुगतव्यवहारस्यानुगतधर्मसाधकत्वासम्भवसत्त्वे एव दूषणान्तरमाह माभूदिति। तद्गर्भिणीं = स्वरूपसत्त्वघटिताम्, अननुगतत्वरूपनिन्दासूचनाय तद्गर्भामिति नोक्तम् तेन "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर" इति वचनविरोधो न। कथमिति। नच *कारणतानुगमे का क्षतिरिति वाच्यम्, प्रवृत्तिसामान्यनिष्ठकार्यतानिरूपिता* या कारणताज्ञाननिष्ठकारणता तस्यां व्यभिचाररूपस्य प्रवृत्त्यननुगमस्यापत्तेः दण्डकारणताग्रहं विनाऽपि तन्तुषु प्रवृत्तेः, तन्तुकपालादौ कारणत्वांशेऽनुगतव्यवहारस्य घटकारणेषु च घटकारणमित्यनुगतव्यवहारस्यापलापत्तेश्च, तत्तद्व्यक्तिषु कारणपदस्यानन्त्यव्यभिचाराभ्यां शक्तिग्रहानुपपत्तेश्च। कार्यं सकारणकं कादाचित्कत्वादिति सामान्यतः कारणसाधकानुमानविलोपप्रसङ्ग इत्यपि कश्चित्। केचित्तु- *अस्तु कारणताऽननुगता सत्त्वं न कारणतावच्छेदकमित्यस्मदीयाभिलपितस्य तावतापि निर्वाहात्, कारणता*वच्छेदकस्य कार्यतावच्छेदकस्य च भेदाद्धि तद्भेदः, नचाननुगतकारणतायां सत्त्वस्यावच्छेदकत्वम्, अतिप्रसक्तत्वात्, किन्तु सत्त्वासत्त्वोदासीनदण्डत्वादेरेव, यद्वक्ष्यति "हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथेति" वदन्ति।

इदन्त्ववधेयम्, *अन्यथासिद्ध्यभावकूटस्य* दुर्ज्ञेयत्वेनानन्यथासिद्धनियतपूर्वसत्त्वस्य कारणतानात्मकत्वेन स्वरूपसम्बन्धविशेष एव कारणत्वमिति परामर्शग्रन्थे गदाधरोक्ताया वा, कार्यभेदादवच्छेदकभेदाच्च भिन्नमूर्तिकस्य कारणत्वत्वेनाखण्डोपाधिनाऽनुगतस्य कारणपदशक्यतावच्छेदकस्य कारणत्वस्य पदार्थान्तरत्वमेवेति शिरोमण्युक्ताया वा, *कारणतावच्छेदकरूपमेव कारणत्वमिति तार्किका*न्तरोक्ताया वा रीतेरनुसरणे कारणत्वस्य सत्त्वघटितत्वशङ्काऽनुदयात् पुरोदीरितरीत्या स्वरूपसत्त्वव्याप्यत्वमेव कारणतायां वाच्यम्, स्वरूपसत्त्वस्य च न मन्मतेऽप्यसम्भव इति व्यर्थो विवादः, नियतपूर्वसत्त्वघटितमपि यदि कारणत्वं तदापि पूर्वसत्त्वं पूर्ववृत्तित्वमेवेति नानुपपत्तिरिति। एतदेवाभिसन्धायाह किञ्चेति। नाधिकमिति। नचैवं तादात्म्येन घटस्य कारणताव्यापकत्वे पटादौ सा न स्यादिति वाच्यम्; कारणतानानात्वपक्षेणैवास्य ग्रन्थस्य प्रवृत्तेः। अयम्भावः, अस्तीतिप्रमाविषयत्वस्य सत्त्वरूपत्वे घटः सन्नित्यादिस्वरूपसत्त्वावगाहिप्रतीतेरचाक्षुषत्वप्रसङ्गात् तद्योग्यत्वस्य तथात्वे च

योग्यतावच्छेदकस्य निरूपणीयत्वापातात्, अर्थक्रियाकारित्वस्य तथात्वे च कारणतात्याप्यत्वस्यैव कारणतायां पर्यवसानात्, मिथ्यात्वविरोधिनश्च सत्त्वस्य स्वरूपसत्त्वायगाहिघटः सन्नित्यादिप्रतीत्यानुलेख्यत्वात्तदनात्मकत्वात्, वर्तमानत्वमेव स्वरूपसत्त्वं वाच्यम्, तच्च वर्तते इति प्रतीतिसाक्षिककालविशेषानुयोगिकसम्बन्धप्रतियोगित्वमेव प्रतियोगित्वस्य च स्वरूपातिरिक्तस्य दुर्वचत्वात् स्वरूपसत्त्वस्य घटात्मकत्वमेव पर्यवस्यति। अथैवं घटः सन्निति सामानाधिकरण्यानुपपत्तिः सत्त्वाधारत्वस्य तत्र घटे भानात्, *तादात्म्येन धर्मिणः प्रकारत्वे धर्मस्याप्याश्रयतया प्रकारत्वात्। अभेदे चाधाराधेय*भावस्यादर्शनात्, घटाभावे घटो नास्तीत्यादावपि घटाभावस्यैकत्वविशिष्टस्यैवाधारत्वादिति चेत्प्रकृतेऽपि तथैव कल्पनसम्भवात् कारणत्वादेः स्वरूपसम्बन्धविशेषत्वेपि रूपभेदेनैव कथञ्चिदाधाराधेयभावस्योपपाद्यत्वादिति। असतः = सांवृतसतः।

तथासति = सांवृतस्य घटादित्वाभ्युपगमे इत्यर्थः। न स्यादिति। निषेधप्रतियोगित्वस्य पारमार्थिकेऽसम्भवात् तस्याभावचतुष्टयाप्रतियोगित्वरूपापरिच्छेदत्वात्। अघटादित्वात् = भवता घटादित्वेनानङ्गीकारात्। किञ्च घटादिध्वंससमये घटादिर्नास्तीति प्रतीतिर्जायते, स च घटादिः कालविशेषावच्छिन्नस्य *सर्वदेशनिष्ठात्यन्ताभावप्रतियोगित्वस्याश्रयत्वादसन्*, उक्तप्रतीतिरपि तादृशप्रतियोगित्वरूपासत्त्वमेव घटेऽवगाहते। अतएव तदा घटोऽसन्नित्यपि सामानाधिकरण्यधीरुदेति, एवं च निरुक्तासत्त्ववतो घटादित्वानङ्गीकारे उक्तप्रतीतिद्वयं न स्यात्। न च मन्मते कालविशेषे घटस्य सत्त्वात् सम्भवस्तादृशप्रतीतेः भवन्मते तु कालानवच्छिन्नस्य तादृशप्रतियोगित्वस्यासत्त्वरूपत्वात् तादृशप्रतियोगित्ववतो न घटादित्वमिति वाच्यम्; *अन्यकालीनसत्त्वानुपयोगितया अभिधास्यमानत्वात्*। एवञ्च कालविशेषावच्छिन्नतादृशप्रतियोगित्वपक्षे यथा घटादित्वम्, तथा कालानवच्छिन्नतादृशप्रतियोगित्वपक्षेऽपीत्यर्थः। अत्र कल्पे मूलेऽसच्छब्दस्य कालविशेषावच्छिन्नतादृशप्रतियोगित्वमर्थः। घटादिर्नेति च घटादिर्ध्वंस इत्यादेरप्युपलक्षणम्। ध्वंसप्रतियोगित्वस्यात्यन्ताभावप्रतियोगित्वोपगमाच्चानुपपत्तिः। एतेन चैतदप्युक्तम्—ध्वंसप्रागभावप्रतियोगित्वादेरनाधारत्वकारणत्वादि कालविशेषावच्छिन्न*सर्वदेशवृत्त्यत्यन्ताभावप्रतियोगित्ववतो घटादित्वं वाच्यम्, अन्यथा घटादौ ध्वंसादिप्रतियोगित्वाद्यनु*भवापलापापत्तिः, नहि ध्वंसप्रागभावप्रतियोगिता अन्यदेशनिष्ठघटादिनिष्ठा, तयोस्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वात्। तथा चासतो घटादित्वं सिद्धम्। किञ्च समवायेन भूतले घटो नास्तीति प्रतीतिविषयस्य देशविशेषसम्बन्धविशेषावच्छिन्नस्य सर्वकालवृत्त्यत्यन्ताभावप्रतियोगित्वस्याश्रयीभूतस्यापि *घटादित्वं यथानुभवबलात्तथा देशविशेषाद्यनवच्छिन्नतादृशप्रतियोगित्वरूपासत्त्ववतोऽपि* घटादित्वं किन्न स्यादनुभवसाम्यात्। सम्बन्धान्तरेण भूतले समवायेन वा देशान्तरे घटादिसत्त्वस्यानुपयोगितया वक्ष्यमाणत्वात्। किञ्च देशकालान्तरस्थघटादेः प्रतियोगिप्रतीतावुपयोगः, त्वन्मते तु स नेत्येव त्वया वाच्यम्; तच्च न, प्रतीतेर्मयाप्यनपलापात्। एतेन प्रतियोगिप्रसक्त्यर्थं तदुपयोग इत्यपि निरस्तम्; आरोपात्मकप्रसक्तेरभावधीहेतुत्वस्यानुभवविरोधेनाप्रामाणिकत्वाच्च, अभावशब्दबाधे स्फुटं व्यभिचाराच्च। किञ्च "*सर्वं हि वस्तु सदसदात्मना द्विविधम्, तद्यथा, यत्र सद्रूपेण वर्तते घटादि तत्तदा तत्र प्रत्य*क्षादिभिरस्तीति प्रतीयते यत्र त्वसद्रूपेण वर्तते सद्रूपेण बोधकानां प्रत्यक्षादीनामभावेन तत्प्रमीयते" इति शास्त्रदीपिकोक्तेऽभावस्य विरोधिभावान्तररूपत्वमते घटादिर्नास्तिसन्नित्यतोऽसदभिन्नभेदाभिन्नघटादिप्रतीतौ घटादेरसद्रूपस्य सिद्धिः; नीलो घट इत्यादौ विभक्तीनामभेदार्थकत्वस्य वक्तव्यत्वेन नञ्समभिव्याहारास्थलेऽपि तासां तथात्वात्, अतएव घटो न पट इत्यत्र पटाभिन्नघटसिद्धिरित्यद्वैतवादिनो वदन्ति। एवञ्चात्र कल्पे *मूले घटादिर्नेत्येतत् घटादिरसन्नित्यत्परम्* असत्त्वं च कालाद्यनवच्छिन्नेनात्यन्ताभावप्रतियोगित्वेन घटितम्।

**अथ सदपि सत्तामनन्तर्भाव्य कारणम्, तदानीमसदपि तत्तथास्तु, सत्त्वासत्त्वयोः कारणकोट्यप्रवेशाविशेषात् । अथ न सत्ता कारणकोटिनिविष्टा, किन्तु कारणत्वं सत्त्वं. नियतपूर्वसत्तां हि कारणतां मन्ये इति मन्यसे; तर्हि मत्पक्षेऽपि सैव कारणतास्तु । तर्हि कारणस्य सत्तामभ्युपगतवानसीति घट्टकुट्यां प्रभातमिति चेन्न; भावानवबोधात् । सत्तामसतीमभ्युपगच्छतापि सत्ता मयाऽभ्युपगतैव, अन्यथा कासावसतीति, त्वमपि किं सत्तां तत्सत्तामन्तर्भाव्य कारणत्वमिच्छसि, नत्वेवम् पूर्ववत्कापि सत्तात्यागो वा, अनवस्थायां वा पर्यवसानं स्यात् ।**

---

यत्तु—असन् घटादिर्न घटादिरित्यभिधानेनोद्देश्यतयाऽसद्घटसिद्धिः अनुद्देश्यकविधेयासम्भवात्, असति घटादित्वस्य घटादौ वाऽसत्त्वस्य निषेधेऽप्युद्देश्यत्वनिषेध्यत्वाभ्यां तत्सिद्धिरिति व्याख्यानम्; तदयुक्तम्, घटत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावो देशत्वकालत्वव्यापकत्वाभावानित्यादिरीत्यापि फलतो घटादावसत्त्वनिषेधोपपत्तेः, असत्त्वस्याखण्डस्याभावादिति दिक् । घटानधिकरणे घटप्रतीत्यनन्तरं 'असन्नेवाभाद्घट' इति बाधोदयादप्यसद्घटसिद्धिरित्यपि द्रष्टव्यम्, अनुभवस्य व्याख्यातुमनौचित्याच्च नान्यथा नयनमिति ॥

"तामनिवेश्ये"त्यादिग्रन्थेनासत एव कारणत्वमुक्तम्, इदानीं त्वसतोऽपि कारणत्वसम्भवेन 'सत एव कारणत्वमि' त्यत्र साधकाभाव इत्यभिधातुमाह **अथेति** । स्वरूपसदपि दण्डादिकं सत्तामनवच्छेदकीकृत्य दण्डत्वादिनैव कारणं भवति । तथा = असत्तामनवच्छेदकीकृत्य दण्डत्वादिनैव तदस्तु = कारणमस्तु, कारणकोट्यप्रवेशाविशेषात् = कारणतानवच्छेदकत्वाविशेषात् । सत्त्वासत्त्वयोःकारणतानवच्छेदकत्वसाम्येऽपि सत एव कारणत्वं मन्तव्यमित्याशयेनाशङ्कते **अथ नेति** । सत्त्वेन दण्डादेः कारणत्वोपगमे कारणतावच्छेदकीभूतसत्ताया उपलक्षणत्वादिविषयकविकल्पावकाशात् कथितदिशाऽनवस्थादिकं स्यात्, अनन्यथासिद्धत्वे सति कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यव्यापकतावच्छेदकीभूता यद्वृत्तित्वविशिष्टा सत्ता तन्निष्ठा सा कारणतेत्युच्यमाने तु स्वस्य स्वानवच्छेदकत्वेन न सत्ता कारणतावच्छेदिका, तस्याश्च सामानाधिकरण्यादिसम्बन्धेन जात्यादावपि वृत्तेर्न तस्य कारणत्वानुपपत्तिः, एवञ्च सदेव कारणमिति स्थितम् । यद्यपि निरुक्तसत्त्वस्य कारणतात्मकत्वेऽपि घटत्वादाविव स्वविशिष्टादिवृत्तिविकल्पः सावकाशः, तथाप्येवमसतः कारणतामुपपादयतस्तन्निरासोऽप्रस्तुतचिन्तैव स्यात्, तादृशविकल्पस्य कारणतानिरासे एव पर्यवसानात्, अतएव निरुक्तकारणताभ्युपेत्यैवाह **तर्हीति**। **घट्टेति**। शुल्कदानभिया सन्तमसानुसारिणि समये विहाय राजवर्त्म परिभ्राम्यतोऽपथेन प्रभाते राजवर्त्मगतशुल्कशालावाप्तिर्यथा, तथा सतः कारणतामपलपितुमीहमानस्यान्ते भवतोऽपि तस्या एवावाप्तिरित्यर्थः । **अन्यथेति** । विधेयताया उद्देश्यतानिरूपितत्वनियमात्सांवृतसत्त्वसमनियतासत्त्वनिष्ठविधेयताकोद्देश्यताश्रयतया सत्तोपगम आवश्यक इत्यर्थः । यद्यपि माध्यमिकमतेऽसत्त्वस्याप्युपनीतस्यापि सम्भवत्युद्देश्यता, वेदान्तिमतेऽपि परमतसिद्धस्याप्रामाणिकस्यापि निषेधप्रतियोगित्ववदुद्देश्यतोपपत्तिस्तथापि सांवृतसत्तास्वीकारे न किमपि बाधकमिति भावः । ननु मदभिमता सत्ता सती कारणतारूपा, तादृशीञ्च तामुद्दिश्यासत्त्वविधाने व्याघात इत्याशङ्क्याह **त्वमपीति** । **सत्तात्याग इति** । सत्ताविशिष्टसत्तायाः कारणतास्वरूपत्वे विशेषणीभूतसत्तायां सत्तान्तरधारायाः क्वचित्समाप्तौ मूलपर्यन्तमसत्त्वापत्तिः, अन्यथा त्वनवस्था, स्वस्मिन्स्ववृत्तावात्माश्रयः, स्वरूपसत्त्वोपगमे इष्टापत्तिः

असत्त्वाविशेषात्कारणनियमः कथं स्यादिति चेन्न, सत्त्वाविशेषेऽपि तुल्यत्वात्, सत्त्वेऽस्त्यन्वयव्यतिरेकानुविधानं तस्य तज्जातीयस्य वा, त्वत्पक्षे त्वसत्त्वाविशेषाद्व्यतिरेकः, परं सोऽप्यनियतः, यदा कारणाभावस्तदा कार्याभावानभ्युपगमात्, नित्यासतः कारणस्यासत्त्वे एव कदाचित्कार्योत्पादात् अन्वयस्तु न कश्चिदपीति चेन्न; तुल्यत्वात्, अन्वयो नास्तीत्यभ्युपगच्छताप्यन्वयोपगमात् अन्वयस्यापि सत्तान्तर्भावने कथितदोषापत्तेः।

---

सांवृतस्य निस्वरूपताङ्गीकारादिति सत्त्वरूपां सत्तामुद्दिश्यासत्त्वविधाने बाधकाभावः, असत्त्वस्य कालसम्बन्धघटितत्वस्य बहुशो निवेदितत्वादिति भावः। वा पर्यवसानं = पर्यवसानं वा।

कारणस्य सर्वदाऽसत्त्वाविशेषात्कार्यस्यान्यदापि जन्मप्रसङ्गः पूर्वं परिहृतः, इदानीं तु कारणस्य तत्त्वस्य च सर्वत्रासत्त्वाविशेषात्कार्यस्य सर्वत्रोत्पत्तिप्रसङ्गं परिहर्तुमसत्त्वस्यालीकत्वरूपताभिमानिमुखेनाशङ्कते असत्त्वेति। कारणत्वं यद्यसद्वृत्ति स्यान्निरूपकविशेषनियन्त्रितं न स्यादलीकत्ववदिति प्रसङ्गः, तथा च घटेऽप्युत्पत्तिसन्तुष्पुषद्यात्। इदमुपलक्षणम्, कपालं यदि घटप्रतियोगिकत्रैकालिकात्यन्ताभाववत् स्यात् घटसमवायि न स्यात् तन्तुवदिति प्रसङ्गोऽपि द्रष्टव्यः। तुल्यत्वादिति। कारणत्वं यदि सद्वृत्ति स्यान्निरूपकविशेषनियन्त्रितं न स्यादात्मत्वादिवत् सप्रतियोगिकमात्रस्य पक्षसमत्वान्न व्यभिचार इति भावः। कपालपक्षकातिप्रसङ्गस्तु प्रागभावात्यन्ताभावयोर्विरोधस्याप्रामाणिकत्वादुभयोरप्येकत्र प्रत्यक्षेण मिथ्यात्वसाधकप्रमाणेन चोपहरणादनुपपन्नः, स्वरूपसत्त्वस्य प्रामाणिकत्वादिति बोध्यम्। कारणस्य सत्त्वे तत्र प्रत्यक्षसिद्धान्वयव्यतिरेकबलान्निरूपकविशेषनियन्त्रितत्वं प्राप्तं न निषेद्धुं शक्यमित्याशङ्कते सत्त्वे इति व्यक्तिविशेषयोः कार्यकारणभावग्रहाय तस्येति, सामान्यधर्मावच्छिन्नकार्यकारणभावग्रहाय तज्जातीयस्येति। व्यतिरेकः = उपादानकारणाभावसमानाधिकरणः कार्याभावः। अनियतः = उपादानकारणाभावनिष्ठव्याप्त्यनिरूपकः। अनियतत्वे हेतुमाह यदेति। नित्यासतः = त्रैकालिकात्यन्ताभावप्रतियोगिनः। असत्त्वे इति। कार्याव्यवहितप्राक्क्षणे इत्यादिः। कदाचित् = सामग्रीसमवधानदशायाम्। कार्योत्पादादिति। यद्यपि कारणवत्कार्यस्याप्यसत्त्वाद्व्यतिरेकः स्फुटः, कार्यस्य स्वरूपसत्त्वं च कारणस्यापि तत्तुल्यम्, तथापि कार्यासत्त्वं विस्मृत्येयं शङ्का। नेति। सर्वदेशकालगतात्यन्ताभावप्रतियोगिनः सत्त्वव्याघातादित्यभिमानः। तुल्यत्वादिति। कारणवत्कार्यस्याप्यसत्त्वाविशेषाद्व्यतिरेकासम्भव इत्यर्थः। नचैवं तयोर्व्यतिरेकस्य सार्वदिकत्वादप्रत्यक्षतापत्तिः, तुल्यत्वात् तवमते कार्यकारणयोरुभयोरपि परमार्थत्वेन सार्वदिकत्वापत्त्या सर्वदैव प्रत्यक्षापत्तिर्व्यतिरेकानुपपत्तिश्च, परमार्थस्यात्यन्ताभावाप्रतियोगित्वात्। स्वरूपसत्त्वमेव परमार्थत्वमभिमतं न तु त्रिकालाबाध्यत्वमविनाशित्वनियतं भवन्मतसिद्धमिति चेत्स्वरूपसत्त्वस्य ममापि तुल्यत्वादन्वयव्यतिरेकयोःप्रत्यक्षस्य च तुल्यत्वात्, अत एवासत्त्वाविशेषात्सर्वकार्यकारित्वप्रसङ्गोऽपि निरस्तः, दृष्टानुसारेणैव कारणत्वकल्पनात्, अन्यथा पटादेः कपालादिगत्वापत्तिस्तवापि तुल्या, सत्त्वतौल्यात्। कथितदिशा च तवापि कारणस्यासत एव पर्यवसानादुक्तशङ्कासमाधिस्तवापि तुल्यत्वात्। यन्मुखेनैव चान्वयः सिद्ध इत्याहान्वय इति। अप्रसिद्धप्रतियोगिकाभावस्य त्वयाऽनङ्गीकारादिति भावः। अन्वय इति नियतव्यतिरेकस्याप्युपलक्षणम्। ननु मन्मते प्रसिद्धः सदन्वयो मया तव मते निषिध्यते इति नाप्रसिद्धप्रतियोगिकत्वम्, भवता त्वन्वयेऽसत्त्वमुपेयते इत्यत आहान्वयस्येति सत्तान्तर्भावने = सत्ताविशिष्टनिषेधे। कथितेति। अन्तर्भावितसत्त्वं चेदितिकारिकोक्तेत्यर्थः।

एतेन—"आशामोदकतृप्ता ये, ये चोपार्जितमोदकाः ।
रसवीर्यविपाकादि तुल्यं तेषां प्रसज्यते ॥"

इत्यस्यापि बाधकत्वमाशामोदकायते । सत्तान्तर्भावानन्तर्भावाभ्यां प्रत्यादेशात्, आशामोदकादिनाऽपि च रसवीर्यविपाकादिजननात् । तदसत्कथं कार्यं स्यादिति चेन्न; सत्तामन्तर्भाव्य कार्यत्वोपगमे कारणवत्कार्येऽप्युक्तदोषस्य, अनन्तर्भावे वाऽविशेषस्य पूर्ववावृत्तेः; तस्मात्—

पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ ।
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ॥५॥

एतेन = वक्ष्यमाणेन । उपार्जितमोदकाः = जीर्णीकृतमोदकाः । रसः = स्वादः; विपाको = बलम् । प्रसज्यते इति । असतः कारणत्वोपगमे इत्यादिः । यदि कारणत्वमसन्मात्रवृत्ति स्यात् आशामोदकवृत्ति स्यात्, अन्यथा, रसादिकारणत्वं यदि मोदकपदव्यवहार्यमात्रवृत्ति स्यादाशामोदकवृत्ति स्यात्, मोदकपदव्यवहार्यत्ववदिति भावः । बाधकत्वमिति । असतः कारणत्वोपगमे इत्यादिः । आशामोदकायते इति । अप्रामाणिकमित्यर्थः । प्रामाणिकत्वञ्चात्र मनोवृत्तिविशेषविषयत्वम्, आशामोदके साक्षिभास्ये तदभावात् कष्टार्थसादृश्योपपत्तिः । अकिञ्चित्करत्वेन सादृश्यं तु सन्दर्भविरुद्धम्, आशामोदकस्य साधकताया ग्रन्थकृताऽङ्गीकारात् । सत्तेति । कारणत्वं सत्ताविशिष्टे सत्तोपलक्षिते सत्तारहिते वा वर्तते इति विकल्प्य सतः कारणत्वस्य प्रत्यादेशात् तथाचोक्ततर्कस्य विपर्यये पर्यवसानादाभासत्वम् । इष्टापत्त्यापि तमाभासयति आशेति । मानसशक्तिविशेषशालिनो जनस्य भावनाविशेषसहकृतेनेत्यादिः । व्यावहारिकमोदकादेरपि मन्दाग्नित्वाभावादिरूपसहकारिविशेषसापेक्षत्वं तुल्यमिति भावः । स्वाप्निकमोदकादिना स्वप्ने रसादिजननात् तस्य जाग्रदवस्थायामननुवृत्तिस्तु व्यावहारिकमोदकाद्यवीनरसादेः स्वप्नेऽननुवृत्त्या तुल्या, अन्यथा स्वप्ने दौर्बल्याद्यननुभवापत्तेः, स्वाप्नानुभवस्थितावस्थानुभवेऽपि भ्रमत्वं तुल्यम् स्वाप्नार्थस्य दृश्यमानस्य शुभादिधीजनकत्वं च दृष्टमित्यादिकमपि द्रष्टव्यम् । अत्रेदमवधेयम्-यद्यपि मोदकाशादेरेव सत्यस्य रसादिहेतुत्वं वक्तुं शक्यम्, तथापि विषयतया जनकतावच्छेदकत्वरूपं प्रयोजकत्वं मोदकादौ निराबाधम् । मतद्वयं चात्र वेदान्तिनाम्, अद्वैतसिद्धिकारचरणा हि ज्ञानस्य कारणत्वे तत्र विषयस्यापि विशेषणत्वेन कारणत्वमाहुः, अभावबाधक उपलक्षणत्वकल्पनापेक्षया विषयस्य विशेषणताया अभ्यर्हितत्वेन कल्पयितुमुचितत्वात्, अतएव परामर्शचिन्तामणौ श्रीमदुदयनाचार्यमतोपपादनावसरे 'अनुमितिं प्रति लिङ्गपरामर्शस्य हेतुत्वे लिङ्गमपि हेतुः, विशिष्टकारणताग्राहकमानेन बाधकं विना विशेषणस्यापि कारणताग्रहात्, न च लिङ्गं परामर्शपरिचायकत्वेनान्यथासिद्धम्, परिचेये विशेषणान्तराभावेन लिङ्गमेव विशेषणम्, तथाचानन्यथासिद्धत्वात्तदपि हेतुः, अन्यथा परिचायकतया संयोगेनान्यथासिद्धमिन्द्रियमपि प्रत्यक्षकारणं न स्यादि' त्युक्तम्, यद्यपि ज्ञानत्वस्यानुगतत्वेन तत्तज्ज्ञानव्यावर्तकत्वासम्भवेऽपि तत्तद्व्यक्तित्वस्य तत्तद्विषयकत्वरूपस्य व्यावर्तकत्वसम्भवात्तद्व्यावृत्तस्यैव ज्ञानस्य हेतुतासम्भवः, तथापि तत्तद्व्यक्तित्वस्यासाधारणधर्मरूपत्वेन तत्तद्विषयकत्वव्यावर्तकतत्तद्विषयरूपत्वस्यापि सम्भव इति सिद्धं विषयस्य कारणत्वम् । रज्जुसर्पादिविषयकत्वेनापि ज्ञानस्य कारणत्वे च तेन रूपेण तस्य मिथ्यात्वात् सिद्धं मिथ्याभूतस्य कारणत्वम्, एतदन्यमते कालसम्बन्धित्वरूपं तुच्छवैलक्षण्यमेव कारणताव्यापकं, कारणतावच्छेदकं तु कपालत्वादिकमेवेति

आस्तां प्रतिबन्दिग्रहाग्रहः, कथं पुनरसतः कारणत्वमवसेयम्, प्राक्सत्त्वनियमस्य विशेषस्यानभ्युपगमात्, असत्त्वस्य चाविशेषादिति चेन्न; "इदमस्मान्नियतप्राक्स-

नालीकस्य कारणत्वमसङ्गः, नवा तन्तूनां घटकारणत्वप्रसङ्गः। लघुचन्द्रिकाकारप्रभृतयस्तु प्रातीतिकस्य कारणत्वे व्यावहारिकरजतत्वरूपकारणतावच्छेदकवतस्तुच्छविलक्षणस्य च शुक्तिरजतस्यापि कटकादिकारणत्वापत्त्या व्यवहारकालाबाध्यत्वविशिष्टस्यैव रजतस्य कारणताया वाच्यतया, लघुत्वात् व्यवहारकालाबाध्यत्वमेव कारणताव्यापकम्, एवं सति प्रातीतिकविषयकत्वेन ज्ञानस्यापि प्रातीतिकत्वात् तेन रूपेण न तस्य कारणत्वसम्भवः, अपि तु रजतत्वादिप्रकारताकत्वेनैव, रजतत्वस्य प्रातीतिकस्याभावात् तादृशरूपावच्छिन्ने कारणताव्यापकस्योक्तरूपस्य सत्त्वात्, यद्यपि ज्ञानस्य प्रातीतिकत्वे एव विषयस्य प्रातीतिकत्वं ज्ञानस्य व्यावहारिकत्वे एव च विषयस्य व्यावहारिकत्वम्, ज्ञानानुसारित्वाद्विषयस्य, तथा च रजतत्वप्रकारताकस्य रजतमिति ज्ञानस्यापि प्रातीतिकत्वमिति कथं व्यावहारिकस्यैव कारणत्वम्, तथापि वृत्तिरूपज्ञानस्यैव प्रातीतिकत्वं न तु रजतत्वप्रकारताकस्य चिद्रूपज्ञानस्येति तस्यैव व्यावहारिकस्य कारणत्वमित्याहुः।तद् = सद्भिन्नस्य कारणत्वसम्भवेऽपीत्यर्थः। कथमिति। "अध्वस्तक्षणयोगस्य क्षणयोगो जनिर्मतः" इत्युक्तेरुत्पत्तेः समयसम्बन्धघटितत्वात्सर्वदेशकालवृत्त्यत्यन्ताभावप्रतियोगिनश्च समयसम्बन्धासम्भवात्कथं कार्यत्वमिति भावः । अनिर्वाच्यत्वान्यथानुपपत्त्या त्वयापि कार्ये तादृशप्रतियोगित्वं, प्रत्यक्षबलाच्च समयसम्बन्धोऽपि स्वीकार्य इत्यनुशयेनाह सत्तामिति । अन्तर्भाव्य = विशेषणीकृत्य । उक्तदोषस्य = आत्माश्रयानवस्थादेः ।अनन्तर्भावे = सत्तोपलक्षिते कार्यत्वोपगमे । अविशेषस्य = आवयोरसत्कार्यतावादितायां अविशेषस्य । उपाधिपक्षोऽपि कथितदिशैव निरास्यः ।तस्मात् = कारणताव्यापकस्य स्वरूपसत्त्वस्य व्यवहारकालाबाध्यत्वस्य वोभयमतेऽप्यविशिष्टत्वात् । पूर्वसम्बन्धनियमे हेतुत्वे = अनन्यथासिद्धत्वे सति कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यव्यापकत्वरूपे कारणत्वे आवयोस्तुल्ये सति हेतुतत्त्वबहिर्भूतयोः = कारणत्वाघटकयोः सत्त्वासत्त्वयोः कथा वृथा, यद्यपि देशत्वकालत्वव्यापकीभूताभावप्रतियोगिनि कार्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकावच्छिन्नत्वरूपं कार्यव्यापकत्वं नोपपद्यते, न च भेदघटितं व्यापकत्वं निर्वाच्यम्, तदत्यन्ताभाववति तद्भेदस्यापि ध्रौव्यात्, तथापि प्रतियोगिविरोध्यत्यन्ताभावस्य प्रतियोगिसमसत्ताकात्यन्ताभावस्य वाऽप्रतियोगित्वं व्यापकत्वे निवेश्यम्,आदृतश्चाव्याप्यवृत्तेर्व्याप्यकत्वोपपत्तये तार्किकैरपि प्रतियोगिविरोधित्वस्य निवेशः । मिथ्यात्वप्रयोजकाभावस्य तु प्रतियोगिसमानाधिकरणत्वेन तदविरोधित्वात् प्रतियोग्यधिकसत्ताकत्वाद्वा न व्यापकत्वहानिकरत्वम् । पारमार्थिकत्वावच्छिन्नप्रतियोगिताकाभावस्य मिथ्यात्वघटकत्वे तु कपालत्वादेरनवच्छेदकत्वात्तदवच्छिन्ने व्यापकता यथाश्रुतेऽपि सम्भवतीति बोध्यम् ।

बहिर्भूतत्वं वृथात्वे हेतुः, कारणस्य सत्तायाः पारमार्थिक्या अनपेक्षणीयत्वात् मिथ्याभूतायाश्चापेक्षणीयाया ममापि सम्भवादिति भावः ।

आस्तामिति । प्रतिबन्दिस्वीकारे आग्रहस्त्यजामि यथः । प्राक्सत्त्वनियमस्य = अनन्यथासिद्धत्वसमानाधिकरणं कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यव्यापकतावच्छेदकं यद्वृत्तित्वविशिष्टसत्त्वं तत्त्वस्य सत्त्वं च पारमार्थिकम् ।अनभ्युपगमादिति 'पूर्वसम्बन्धनियमे' इत्यनेन पारमार्थिकसत्त्वघटितकारणतायास्त्वयाऽनभिधानादन्यथाऽपसिद्धान्तात् । अविशेषात् = सर्वदा सर्वासत्त्वविशेषात् कस्य कं प्रति कारणत्वमित्यत्र नियामकाभावात्, मन्मते च यदव्यवहितप्राक्क्षणावच्छेदेनानन्यथासिद्धस्य यस्य

दिति" बुद्ध्या विशेषात्। भ्रान्तैवम्बुद्धिगोचरेऽतिप्रसङ्ग इति चेन्न; यादृश्या हि धिया त्रिचतुरकक्षाबाधानवबोधाविश्रान्तया वस्तुसत्त्वनिश्चयस्ते, तादृश्यैव विषयीकृतस्य ममापि कारणतानिश्चयः, केवलं ततःपरास्वपि कक्षासु बाधात्पूर्वभ्रान्तिसम्भवेन न तावता सत्त्वावधारणं वयं मन्यामहे इति विशेषः।

---

नियमेन सत्त्वं सं प्रत्येव तस्य कारणत्वमिति शक्यं नियन्तुम्। न च ममापि स्वरूपसत्त्वमादाय नियमसम्भव इति वाच्यम्; अपारमार्थिकस्य स्वरूपसत्त्वस्याप्रामाणिकत्वात्, अन्यथा तुच्छेऽपि स्वरूपसत्ताङ्गीकारप्रसङ्गादित्यभिमानः। यद्यपि कथितदिशा स्वरूपसम्बन्धादिरूपमेव कारणत्वं वाच्यम्, तच्चोक्ताभिमानस्य निराकृतत्वात् मन्मतेऽपि सम्भवतीति वक्तुं शक्यते तथाप्यभ्युपेत्यवादेनाह इदमस्मादिति। नियतेति। अनन्यथासिद्धेत्यादिः। तथा च तादृशबुद्धिमुख्यविशेष्यत्वं कारणत्वम्। यद्यपि परमार्थसत्त्वं क्वापि कारणे नास्ति ब्रह्मणोऽकारणत्वात् ब्रह्मगतसत्त्वं च कारणे दण्डादौ न प्रत्यक्षीभवितुमलम्, त्रैकाल्यघटितत्वात् योगजधर्मातिरिक्तालौकिकसन्निकर्षानभ्युपगमात् कारणताप्रत्यक्षात्पूर्वं नियमेन त्रैकाल्योपनये मानाभावाच्च, तथापि सत्त्वमखण्डमेव तादृशधीविषयः, घटःसन्नित्यादावपि तथैव, तच्चाद्वैतमते ब्रह्मरूपमेव पर्यवस्यतीत्यन्यदेतत्, यदाहुः "सा जातिः सा महासत्ता तामाहुस्त्वतलादय" इति, सति चैवं सत्तादात्म्यवति कारणत्वसिद्धावपि त्रिकालाबाध्यत्वरूपपारमार्थिकत्ववति न तत्सेद्धुमलमिति निर्गवः। न चैवमपि तादृशबुद्धिघटितत्वात्तद्ग्रहे कारणताव्यवहारानुपपत्तिः, सर्वत्र व्यवहारात्प्राक्तद्ग्रहणस्य शपथैकनिर्णेयत्वात्, तादृशधीमुख्यविशेष्यतायोग्यतानिवेशे चावश्योपेक्षणीययोग्यतावच्छेदकस्यैव कारणतौपयिकत्वमुचितमिति वाच्यम्; व्यवहारकालाबाध्यत्वस्यैव योग्यतावच्छेदकत्वात्तस्यैव कारणतौपयिकत्वे तात्पर्यात्। तात्पर्यमिदमजानानः शङ्कते भ्रान्तेति। भ्रान्त्यात्मिका या तादृशी बुद्धिस्तद्विषये घटाकारणे रासभादावित्यर्थः। विचारस्य त्रिचतुरकक्षासु व्यवहारकाले इति यावत् बाधानवबोधः = अकारणत्वाग्रहः, तेन विश्रान्तया = अगृहीताप्रामाण्यया धिया। रासभे घटकारणताधीस्तु व्यवहारकालीनबाधग्रहेण गृहीताप्रामाण्येति भावः। यद्यपि व्यवहारकालो यदि प्रतीतिकालस्तदातिप्रसङ्गस्तदवस्थः, प्रवृत्तिकालस्तु प्रवृत्त्यभावस्थलेऽव्याप्तिसम्पादकः, ब्रह्मचरमधीतः प्राक्कालस्तु परस्य तादृशधियोऽप्रसिद्ध्याऽप्रसिद्धः, तथापि प्रामाणिकानां यत्र यन्निरूपितकारणताव्यवहारस्तस्य तं प्रति कारणत्वं मन्तव्यम्, स्वीक्रियते च तार्किकैरपीत्थमेव, अन्यथाऽन्यथासिद्ध्यभावकूटस्य दुर्ज्ञेयत्वात्, तादृशकारणताकाल एव च व्यवहारकालः, एतत्सूचनायैव मूले यादृश्येति पदमुपात्तमिति न कश्चिद्दोषः। बाधात् = स्वप्रकारकधीविशेष्यताव्यापकात्यन्ताभावप्रतियोगित्वप्रकारकप्रमातः, तादृशप्रमाविषयत्वमेव बाध्यत्वम्, तादृशप्रमा च मिथ्यात्वेन स्वयं बाध्याऽपि बाधिका स्वाप्नबाधग्रहेण जाग्रद्बाध्येन बाध्यस्य स्वप्नपदार्थस्य तात्त्विकत्वादर्शनाच्च न तात्त्विकत्वापत्तिः। नन्वेवं व्यवहारकालाबाध्यविषयकत्वरूपं व्यावहारिकप्रामाण्यं कारणताबुद्धौ तवाभिमतम्, तथाच बाध्यत्वस्य प्रमात्वघटितत्वादात्माश्रय इति चेन्न; प्रमात्वस्य व्यवहारविशेषसाक्षिकजातिरूपत्वात्, भ्रमत्वमपि तथैव, साङ्कर्यं च न जातिबाधकम्। ज्ञातसत्ताकविषयणी या धीः, या च चिन्मात्रविषयणी धीस्तदन्यज्ञानत्वं व्यावहारिकप्रमात्वमित्यपि पारिभाषिकं प्रमात्वं निर्वक्तुं शक्यते, विकल्पस्तु न ज्ञानमिति बोध्यम्। पूर्वभ्रान्तिसम्भवेन = पूर्वग्रहस्य भ्रान्तित्वसम्भवेन। सत्त्वावधारणम् = परमार्थसत्त्वावधारणम्। युक्तमिति शेषः।

त्रिचतुरविचारकक्षास्वबाध्यमानस्याग्रेऽपि कथं बाध इत्याशङ्क्याह परदर्शनेति। परो बौद्धादिः।

परदर्शनसिद्धान्तस्य भूरिकक्षाबाधाविनोऽपि ततः परकक्षाबाध्यमानत्वेनातथाभावोपगमात् । अन्यथैकदर्शनपरिशेषः स्यात् । एतेन असत्त्वाविशेषेऽपि कथं कस्यचित्पक्षस्य त्रिचतुरकक्षाबाधाविरहमास्ताम्—इत्यपि निरस्तम् । अनेवम्बुद्धिविषयतादशायां को विशेष इति चेत्; यदा कदाचित्तादृशबुद्धिविषयतैव अन्यथा कथय कथमन्यदातनतादृशबुद्धिविषयतयाऽन्यदा सत्त्वं स्यात् । तदा सत्त्वमन्यदास्थेन गृह्यते इति चेत्; अन्यकालिकमेव तर्हि तत् तदातनकारणत्वोपयोगीति समानम् ।

नन्वेतत् संवृतिसत्त्वमिति गीयते [illegible] सा न विशेषिका, सती सा नेष्टेत्यभिस- [illegible] विज्ञानं तावद्व्यवहारोपपादकतया द्वाभ्यामप्यनुमतं, तस्यापि जिज्ञासाया त्रिचतुरकक्षाविश्रान्तबाधेदृशस्य यदि सत्त्वोपपत्ता भविष्यति, तदा सता तेनेदमुपपादितं भविष्यति, अथासत्ता तस्य पर्यवसास्यति तदाऽसतैव तेनेदमुपपाद्यते इति स्वीकर्तव्यम्, भ्रमविषयेणेव भ्रमे विशिष्टताव्यवहारः ।

---

दर्शनम् = आध्यात्मिकशास्त्रम् सिद्धान्तस्य = सन्मात्रे क्षणिकत्वादेः । बाधिनः = अप्रामाण्यग्रहानास्कन्दितस्य । क्षतिस्त्वेव तन्मतबाधे बौद्धाधिकारादिनिबन्धप्रणयनप्रयासविफलतापत्तेः । बाध्यमानत्वेन = अप्रामाण्यप्रकारकभ्रमास्कन्दितत्वेन । अतथाभावोपगमात् = अतात्त्विकत्वोपगमात्, नैयायिकादिनेति शेषः । अन्यथा = विचारीयभूरिकक्षास्वबाधमात्रेण तात्त्विकत्वोपगमे । स्यादिति । सर्वदर्शनसिद्धान्तानां कासुचित्कक्षासु बाधाग्रहात्तात्त्विकत्वप्रतीतौ कस्यापि तत्र विवादासम्भवात्सर्वैः स्वीकार्यत्वेन सर्वसम्मतमेकमेव दर्शनं स्यादिति भावः । एतेनेति । घटादौ क्षणिकत्वग्रहस्य शुक्तौ रजतत्वग्रहस्य चासत्यत्वाविशेषेऽपि नैयायिकादिनाऽऽद्ये त्रिचतुरकक्षासु बाधविरहस्य, द्वितीयस्मिंश्च तासु बाधस्य स्वीकारेण मन्मतेऽपि दर्शनान्तरीयसिद्धान्तानामसत्यत्वाविशेषेऽपि कस्यचित्सिद्धान्तस्य तासु बाधस्य, कस्यचिच्च तद्विरहस्य सम्भवेनेत्यर्थः । अनेवम्बुद्धिविषयतादशायां = इदमस्मान्नियतप्राक्सदितिबुद्धिमुख्यविशेष्यतायाः कारणतारूपाया विरहदशायां कारणेऽकारणात्को विशेषः, तादृशबुद्ध्यभावदशायां कारणत्वं न स्यादिति भावः । निरुक्तविशेष्यतायोग्यताविवक्षणीयेत्याशयेनाह यदेति । अत्र तात्पर्यमुक्तमेव । अन्यथा = योग्यतानिवेशानादरे । अन्यदातनतादृशबुद्धिविषयतया = उत्तरकालिकसत्त्वप्रकारकबुद्धिविषयतया अन्यदा = पूर्वकालिकं । स्यादिति । सुषुप्तौ सत्त्वज्ञानाभावेन तत्र मते पदार्थमात्रासत्त्वप्रसङ्गादिति भावः । तदा सत्त्वं = कस्याश्चित्सत्त्वबुद्धेर्विरहकालिकं सत्त्वम् । अन्यदास्थेन = अन्यकालिकेन सत्त्वबुद्धिविशेषेण । गृह्यते = विषयीक्रियते । इदमुपलक्षणम्, तदातनपुरुषान्तरीयबुद्ध्या गृह्यते इत्यपि द्रष्टव्यम् । तव मते तु कालान्तरेऽसत्त्वादेव कथं तत्र कारणत्वधीविषयतेति भावः । इदानीमसत्त्ववत्यपि यथा मन्मते कारणत्वधीस्तथाकालान्तरेऽपि तादृशे तादृशधीरित्याह अन्येति । तत् = कारणत्वधीविषयत्वम् । तदातनेति । तादृशज्ञानाभावकालिकेत्यर्थः । तदेतत् = व्यावहारिकप्रमात्वव्द्विषयत्वम् व्यवहारकालाबाध्यत्वमिति यावत् । संवृतिः = अविद्या भ्रमरूपा तत्सिद्धं सत्त्वम् । गीयते इति । बौद्धैरिति शेषः । यद्यपि तन्मते मरीच्युदकस्य व्यवहारकाले बाध्यस्यापि संवृतिसत्त्वम्, तेनैव दृष्टान्तेन घटादौ तत्साधनात् अलीकत्वं तु खपुष्पादेरेव, तथापि तन्मतसाधारण्याय कालसम्बन्धित्वं संवृतिसत्त्वं बोध्यम् । वस्तुतस्तु तदेतदित्यस्य तदेतदपीत्यर्थः । सा = संवृतिः । न विशेषिका = न व्यवहारौपयिकी । नेष्टेति । तस्या सत्त्वे माध्यमिकस्य सर्वशून्यत्वभङ्गः

अविचार्यैव तावत्तस्य सदसत्त्वं विचार आरब्धव्यः, अन्यथा प्रथममेव मति-

---

अद्वैतिनस्थाद्वैतभङ्ग, यदाह—"माया सती चेद्द्वयतत्त्वसिद्धिरथासती हन्त कुतः प्रपञ्चः । मायैव चेदर्थसहा च तत्किं माया च वन्ध्या च भवन्त्योपामिति" । जिज्ञासायां = सत्त्वासत्त्वजिज्ञासायां । विचतुरेति । विचतुरज्ञालबलेनैव निवृत्तताद्दशजिज्ञासस्येत्यर्थः । विज्ञानसत्ताया अपि संवृतिसत्त्ववादे विज्ञानान्तराधीनत्वादनवस्थितविज्ञानप्रवाहोपशमे च सुषुप्त्याद्यभावापत्त्या विज्ञाने सत्त्वासत्त्वजिज्ञासा कतिपयविज्ञानैरेव स्वपूर्वपूर्वविज्ञानविषयकैर्निवर्तनीयेति भावः । नन्वेवमन्तिमविज्ञानासत्त्वे मूलपर्यन्तमसत्त्वापत्तिरत आहार्येति । इदन्तु बोध्यम्, एवं व्याख्याने विज्ञानसत्तोपपत्तेः सम्भावनाया एवासम्भवात् 'यदि सत्तोपरता भविष्यतीति' ग्रन्थासङ्गतिः, तस्माद्विज्ञानं सद् जनकत्वादित्यादि परेण वाच्यन्, विज्ञानं न सद् बाध्ययोग्यत्वादित्यादि च खाण्डनिकेनेत्येवं विचतुरविचारकक्षासु यदि सत्त्वसिद्धिस्तदा सत्त्वं मत्वैव विचार आरब्धव्यः, अन्यथा विज्ञानसत्त्वासत्त्वविचारे एव समययापनेऽभीष्टविचारो न स्यात् । विश्रान्तजिज्ञासस्य = निवर्तनोचितसत्त्वासत्त्वजिज्ञासस्येत्येव व्याख्येयम् । तेन = विज्ञानेन । इदम् = व्यवहारादि । स्वीकर्तव्यमिति । विज्ञानसत्त्वासत्त्वविचारस्य प्रारिप्सितकथानौपयिकत्वेन तत्रौदासीन्यस्यैवोचितत्वादिति भावः । भ्रमविषयेण = असत्संसर्गेण । प्राचीनतार्किकैः शुक्तिरजतसंसर्गस्यासत्त्वोपगमादिदमुक्तम्, युक्तं चैतत्, संसर्गस्य सत्त्वे भ्रमत्वानुपपत्तेः, विशेष्यताद्यधिकरणप्रकारकत्वस्यापि विषयसम्बन्धसापेक्षत्वात्, अन्यथेदन्त्वविषयतारजतविषयतयोर्निरूप्यनिरूपकभावासङ्गतेः, यदाहुस्तर्कप्रकरणे गदाधराः "नहि ययोः सम्बन्धो न भासते तद्विषयतयोर्निरूप्यनिरूपकभावो दृष्टचर" इति, सम्बन्धस्य सत्त्वनियमेनासत्त्वनियमात् तद्रूपत्वं त्वप्रामाणिकम्, एवञ्च संसर्गासत्त्वस्वीकारे कृतत्वादन्यांशेऽप्यसत एव भानं युक्तम्, अन्यदेशस्थरजतभानकल्पनस्य क्लिष्टत्वात्, अपरोक्षत्वान्यथानुपपत्त्याऽनिर्वाच्यविषयकत्वं वा कल्पनीयमिति सद्भिन्नविषयकत्वमेव भ्रमस्येति भावः । विशिष्टताव्यवहारः = पुरोवर्तिनि रजततादात्म्यविषयकं ज्ञानं घटादिज्ञानाद्भिन्नमिति व्यावृत्तिव्यवहारः । तथाच व्यावृत्तिमहजनकमहविषयत्वरूपं व्यावृत्तिप्रयोजकत्वमसति तवापि सम्मतम्, किन्तु तवालीकेऽपि संसर्गे यदि तत् तदा मम सांवृतेऽपि तत्किं पाणिपिहितम्, नहि सदुपरागस्यासति सम्भवः । ननु विज्ञानशब्देनात्र संवृतिरेव ग्राह्या, तस्या एव व्यवहारोपपादकत्वाश्रयणात्, नचैवं द्वाभ्यामित्यसङ्गतम् अद्वैतिसम्प्रदायसिद्धभावरूपानाद्यनिर्वाच्याविद्यायाः परेणानुपगमेऽपि भ्रमरूपसंवृतेरुपगमात्, तादृशाविद्याया अपि भ्रमद्वारैव व्यवहारोपपादकत्वाच्च, किन्तु भ्रमस्य विसंवादिव्यवहारजनकतायाः परमतसिद्धत्वेऽपि संवादिव्यवहारस्य प्रमाधीनत्वोपगमात्कथं तादृशव्यवहारस्य संवृत्या द्वाभ्यामुपगमः सङ्गच्छते इति चेत्सत्यम्, अत एव संवृतिशब्दमपहाय विज्ञानशब्दः प्रयुक्तः, संवादी विसंवादी वा सर्वोऽपि व्यवहारो विज्ञानत्वावच्छिन्नकारणताक इत्यस्य निर्विवादत्वात्, तच्च विज्ञानं भ्रमो वा प्रमा वेत्यन्यदेतत्. संवृतिसत्त्ववादे पुनर्व्यवहारजनकज्ञानमात्रस्य भ्रमात्मकत्वात् संवृतेरेवासत्या व्यवहारजनकत्वं पर्यवस्यति विज्ञानमात्रासत्त्वसिद्धाविति भावः । असच्छब्देन मूले परमार्थसद्भिन्नं सर्वत्र विवक्षितम्, न त्वलीकमिति न विस्मरणीयम् । सदसद्भिन्नत्वरूपा तृतीया कोटिस्तु साधयिष्यते इति न सत्त्वासत्त्वान्यतरनिबन्धनो दोष इति । तस्य = विज्ञानस्य । सदसत्त्वमविचार्यैव = अनरं सिद्धमिव कृत्वेति यावत्, खण्डनयुक्तिभिर्ब्रह्मातिरिक्तस्य सांवृततायाः सेत्स्यमानत्वात्, असतःसाधकतोपपादनस्यैवेदानीं विवक्षितत्वात् । विचारः = प्रमाणादेरसत्त्ववादिना सह कथा । अन्यथा = कथां प्रति विज्ञानसदसत्त्वान्यतरसिद्धेर्हेतुत्वे ।

कर्दमे कथारम्भणमशक्यमापद्येत, स्वीकृतं च भवतापि भविष्यदादिविषये विज्ञाने विशिष्टव्यवहारनिदानत्वमसतो विषयस्य, कारणशक्तेश्च विशेषकमसदेव कार्यम्। न च कालान्तरसम्बन्धिनी सत्ता तस्यैकत्र, अन्यत्र नान्यदापीति वैधर्म्यमेतयोरपीति वक्तव्यम्; विशिष्टव्यवहारप्रवृत्तिसमये द्वयोरप्यसत्त्वाविशेषात्। प्रयोजनानुपयुक्ते काले तस्य स्वरूपतोऽवस्थानं पाटच्चरलुण्ठिते वेश्मनि यामिकजागरणवृत्तान्तमनुहरति।

तथापि कालान्तरस्थितया घटादिकं स्वरूपतो विशेषणतश्च व्यवच्छिन्नं तद्विज्ञानेन स्वभावबलात् स्वविशेषणत्वेनोपादीयते, न त्वेवमत्यन्तासद्भवितुमर्हति, तस्य स्वरूपतो विशेषणतश्च व्यवच्छिन्नतयाऽनङ्गीकारात् कुत्र स्वभावतो विज्ञानं सम्बन्धि निरूप्येत।

---

मतिकर्दमे = कथां विना विज्ञाने सत्त्वादिसाधने मतेः कुण्ठितत्वे। अन्योन्याश्रयादिति भावः। यदि विज्ञानं सन्न स्यादसाधकं स्यादित्यत्र व्यभिचारं वदन्नेवासतः साधकतामुपपादयति स्वीकृतमिति। आदिनाऽतीतं ग्राह्यम्। विज्ञाने विशिष्टव्यवहारनिदानत्वं = विज्ञानविषयकमितरव्यावृत्तिव्यवहारं प्रति प्रयोजकत्वं तादृशव्यावृत्तिग्रहजनकग्रहविषयत्वमिति यावत्, अज्ञातस्याव्यावर्तकत्वात्। असतः = व्यवहारकालेऽसतोऽतीतादेः। कारणशक्तेः = अतिरिक्तपदार्थस्य कारणत्वस्य वा। विशेषकं = व्यावर्तकं असदेव = प्रागभावप्रतियोग्येव। यद्यप्येवमसद्विषयकज्ञानस्य सत एव व्यावृत्तिधीजनकत्वमायाति विषयस्य तु जनकतावच्छेदकत्वमेव विषयितासम्बन्धावच्छिन्नं तथापि ज्ञानस्याप्यसद्विशेषितरूपेणा-सत्त्वमेव वाच्यम्, तथाचासत एव जनकत्वम्। किञ्च प्रतियोगिता ज्ञानीयविषयता वा यथाऽसति तथा जनकताऽपि स्यात्, जनकता यदि सत्येव दृष्टा तथा विषयत्वादिकमपि तथैवेति तुल्यम्, घटो ध्वस्तः, घट उत्पत्स्यते इत्यादिप्रतीतिबलादसत्येव यदि प्रतियोगित्वादिकं तथा प्रमाणबलात्सिद्धमिथ्यात्वेपि कारणता प्रतीतिबलादेवेति तुल्यम्. ध्वस्तस्यापि केनचिद्रूपेण यदि सत्त्वं तदा प्रपञ्चस्याप्यधिष्ठा-नात्मना सत्त्वमिति तुल्यम् माध्यमिकेनापि प्रतीतेरनपलापात्प्रतीयमानरूपेण सत्त्वं तन्मतेऽपि तुल्यम्, एतेन विषयत्वस्य सम्बन्धिस्वरूपात्मकतया सम्बन्धिस्वरूपयोरभावे ज्ञानमप्यसतोऽसम्भवीति निरस्तम्; ध्वस्तादेरनवारि ज्ञानाभावप्रसङ्गात्, ध्वंसकालावच्छिन्नाश्रयत्वस्य विषयतायामुपपत्त्यर्थं केनचिद्रूपेण सत्त्वोपगमे तु ममापि स समानः। तस्य = अतीतादेः। एकत्र = मन्मते। अन्यत्र = तव मते। त्रैकालिका-त्यन्ताभावप्रतियोगित्वस्य ज्ञानादौ त्वयोपगमादिति भावः। एतयोरिति। अतीतादिरूपासतस्त्वन्मत-सिद्धासतश्चेत्यर्थः। विशिष्टेति। व्यावृत्तिव्यवहारोत्पत्त्यव्यवहितप्राक्समये इत्यर्थः। तस्य = अतीतादेः। पाटच्चरलुण्ठिते = चौरापहृतधने। यामिकः = रक्षकः पुरुषः। प्रयोजनानुपयुक्ते इत्यादि प्रयोजनानुपयुक्तरूपेणावस्थानस्याप्युपलक्षणम्।

"नह्यसन् घटादि र्न घटादिरिति" विस्मृत्य शङ्कते तथापीति। प्रयोजनसमयेऽतीतादेरसत्त्वेऽपी-त्यर्थः। तद्विज्ञानेन = घटादिविज्ञानेन। स्वभावबलात् = विषयतारूपस्वरूपसम्बन्धविशेषेण। स्वभावत-इत्यस्याप्ययमेवार्थः। कुत्र सम्बन्धि निरूप्येतेत्यन्वयः। विषयतया कस्य सम्बन्धि ज्ञायेत, असति विषयता न सम्भवति निस्स्वरूपत्वादित्यर्थः। उक्तं स्मारयति उक्तमिति। नियतशब्दो व्यावृत्तपरः। असत्त्वात् = कालसम्बन्धित्वे सति देशत्वकालत्वव्यापकीभूताभावप्रतियोगित्वात्। सत्यन्तं नियतस्व-रूपस्येत्यादिना लब्धम्। अन्यथा = घटादेः खपुष्पायमाणत्वे। अतिप्रसङ्गात् = प्रत्यक्षाद्यपलापप्रस-ङ्गात्। "तथासति घटादिर्नेत्यपि न स्यादि"तिपङ्क्त्युक्तार्थोऽत्र स्मरणीयः। 'प्रयोजनानुपयुक्ते' इत्यादिग्रन्थस्था-

न । उक्तमत्रासतोऽपि हि तदेव स्वरूपम्, तस्य नियतस्वरूपस्यैव नियतविशेषणस्यैवासत्त्वात्, अन्यथाऽतिप्रसङ्गात्. भ्रान्तिविषयेण दत्तोत्तरत्वाच्चेत्यलमतिप्रपञ्चेन ॥ इति खण्डनेऽसतः कारणतोपपत्तिः शून्यवादश्च ॥

## अथ शून्यवादापवादः स्वप्रकाशवादः ।

अपरे पुनश्चेतसोऽपि शून्यताङ्गीकारे मनःप्रत्ययमनासादयन्तः 'सर्वमिदमसदेव

---

त्रापि सञ्चारणीयः, तथाहि-समानकालीनयोरेव सम्बन्धित्वस्य संयोगस्थले दृष्टत्वात्कालान्तरसतोऽपि ज्ञानसमानकालीनत्वाभावान्न विषयतया ज्ञानसम्बन्धित्वसम्भवः, समाधानं च समानमित्युक्तम् । भ्रान्तीति । मिथ्याभूतस्यापि भ्रान्तिविषयस्य स्वाप्नकामिन्यादेः सुखादिजनकतया व्यावर्तकतायाः विषयतायाश्च दर्शनात्, स्वाप्नज्ञानं मिथ्येत्यनुभवबलात्तज्ज्ञानस्यापि मिथ्यात्वाच्चेति भावः । मिथ्यात्मनि न हेतुत्वमिति केचिदजूघुषन् । सिद्धये तादृशे तस्य कृतिस्तेषां पराकृतौ ॥ इति खण्डनशारदायामसतः कारणत्वं, शून्यवादश्च ॥

चितौ शून्यतामपवदितुमाहापरे इति । नन्वपरशब्दार्थो योगाचारो वा, वेदान्ती वा प्राभाकरो वाऽन्यो वा कश्चित्स्वप्रकाशवादी, नाद्यः तेन विज्ञानेऽर्थक्रियाकारित्वरूपसत्त्वस्यैवोपगमात् तस्य च माध्यमिकेनाप्यनिराकरणात्तयोरविवादात् । न द्वितीयः, तेन स्वविषयत्वरूपस्य वक्ष्यमाणस्वप्रकाशत्वस्यानङ्गीकारात् । न तृतीयः, तेन विज्ञानस्य स्वविषयत्वोपगमेऽपि तद्व्यतिरिक्तस्याप्यशून्यत्वोपगमात्, चेतसोऽपीत्यादि ग्रन्थेन च तस्य शून्यताध्वननात् । अतएव न चतुर्थोऽपीति चेन्न; आद्यद्वितीययोर्ग्रहणेऽदोषात्, तथाहि—विज्ञानस्यार्थक्रियाकारित्वे शून्यविज्ञानवादिनोरविवादेऽपि विज्ञानवादिनाऽर्थक्रियाकारिणि पारमार्थिकत्वोपगमात् शून्यवादिना च सांवृतत्वस्योपगमात् तन्निराकरणेनैव विज्ञानवादिनश्चारितार्थ्यात् । तदुक्तं गुरुचन्द्रिकायामाचार्यैः "अर्थक्रियाकारिण एवाबाध्यस्वरूपत्वनियमस्य माध्यमिकान्यबौद्धैरङ्गीकारादिति" । वेदान्तिसम्मतस्वप्रकाशत्वस्यापि यथोपरितनग्रन्थेन लाभस्तथा व्याख्यास्यते इति । पुनस्त्वर्थे । चेतसो = विज्ञानपदजन्यधीविशेष्यस्य । शून्यता = निरुक्तासत्त्वम् । मनःप्रत्ययम् = विश्वासम् । अनासादयन्त इति । अयम्भावः—शून्यता सिद्धा नवा, द्वितीये नोपगन्तव्या अप्रामाणिकत्वात्, आद्ये परतो वा स्वतो वा, तत्र परस्याविद्यारूपत्वे पूर्वोक्तदोषः, अविद्याभिन्नत्वेऽपि तस्य पराधीनसिद्धिकत्वे मूलपर्यन्तमसिद्ध्योक्तदोषः, असिद्धस्य साधकत्वे शून्यतेव विश्वमपि तेनैव प्रमीयेत तस्मात्स्वतः सिद्धोऽनुभवस्त्वयाऽपि शून्यतासाधकत्वेनावश्योपेयः, उपेयते च, अतएव स्वविषयत्वं विज्ञानस्य शून्यवादिमते दृश्यत्वहेतूपपत्तौ चन्द्रिकादावुक्तम्, किन्तु "मायोपमं च विज्ञानमुक्तमादित्यबन्धुनेति" माध्यमिककारिकोक्तदिशा विज्ञानस्यापि सांवृतत्वं त्वयानुमन्यते, तच्चायुक्तम्, सांवृतत्वे विज्ञानस्यापि कदाचिद्बाधावश्यम्भावेन निस्साक्षिकस्य च बाधस्यासम्भवेनानुभवस्य पारमार्थिकस्यैवोपेयत्वात्, अत एव विज्ञानधारोपगमेऽपि न निस्तारः, सांवृतत्वे तस्या अपि कदाचिद्बाधध्रौव्यात्, अन्यथा प्रपञ्चस्यापि बाधो न स्यात् । नचैवं लक्षणाद्यनिर्वाच्यत्वस्य सत्त्वेऽप्यनुभवस्याबाधे प्रपञ्चबाधस्तत्रापि न स्यात्, अनिर्वाच्यत्वहेतोर्व्यभिचारित्वादिति वाच्यम्; असङ्गानुभवे हेतोरेवासम्बन्धाद्व्यभिचारानवकाशात् । अतएव तत्र धर्मोपग्रहप्रवर्तिष्णुवाग्व्यवहाराविषयत्वं वक्ष्यति । नच विज्ञानधाराया बाध्यत्वेऽपि कदाप्यसमाप्तेर्न कश्चिद्दोष इति वाच्यम्; तथात्वे समाप्तेरपि साधनीयत्वात् । एतेन बाधस्य बाध्याधिकसत्ताकवस्तुविषयकत्वरूपसाधिकत्वमपि समर्थितम्, लोके तथा दर्शनात् । नच शून्यवादे

विश्वमि'त्यभिधातुं सहसैवानुत्सहमानां मन्यन्ते—विज्ञानं तावत्स्वप्रकाशं, स्वत एव सिद्धस्वरूपम्. न खलु विज्ञाने सति जिज्ञासोरपि कस्यचिद् 'जानामि न वेति' संशयो

शुक्तयादे रजतादेश्च समसत्ताकत्वाद्बाधे सावधिकत्वस्याप्यत्वमप्रामाणिकमिति वाच्यम्; अनुभवानुरोधेन तयोर्विषमसत्ताकत्वस्यावश्योपेयत्वात्, यदाहुः "प्रतियोगिनि दृष्टे च जाग्रद्बोधे मृषा भवेत् । स्वप्नादिदृष्टिरस्माकं तत्र भेदोऽपि किङ्कृत" इति ॥ एवमसङ्गानुभवस्य सिद्धौ तस्य निर्विषयकत्वमपि मन्तव्यमेव, अन्यथा तस्य सर्वदा सविषयकत्वे विषयाणामपि शून्यता दुर्लभा स्यात् । एतेन सर्वशून्यत्वस्य पुरुषार्थत्वप्रयुक्तः स्वीकारः परास्तः, अहङ्कारस्यानात्मत्वेन तन्निवृत्तेरिष्टत्वेऽपि पुरुषसत्यतां विना तेभाव्यमानत्वस्यासम्भवात् सत्यस्यात्मन उपगन्तव्यम्, अन्यथाऽऽत्मनिवृत्तिमिच्छतो मौढ्यं स्यात्, निराधारतया अहङ्कारनिवृत्तेरसम्भवाच्च । नच स्वसत्त्वे सुखादीच्छया प्रवृत्तिर्न त्वन्यथा गेति कथं मोक्ष इति वाच्यम् । आत्मव्यतिरिक्तसुखादौ शून्यत्वग्रहस्यैव तत्र परमकाष्ठापन्नवैराग्योत्पादकत्वेन तत्रेच्छानुत्पत्त्या प्रवृत्त्यनुपपत्तेरिति । विश्वं = जगत् ।

स्वप्रकाशत्वं निर्वक्ति स्वत एवेति । एकस्मिन् विषयविषयिभावोपगन्तृमते लाघवात्स्वविषयत्वस्यैव स्वप्रकाशतारूपतौचित्यात् व्युत्क्रमेणैव कार्यो योजनं युक्तम्, स्वतः सिद्धस्वरूपमेवेति, वेदान्तिमते तु स्वत एव= स्वभावत एव, स्वातिरिक्तमनपेक्ष्य च सिद्धस्वरूपं = संशयाद्यविषयस्वरूपमित्यर्थः, तेन ग्रन्थकृन्मते निश्चयविषयस्वरूपसिद्धस्वरूपस्य चित्यसम्भवेऽपि न क्षतिः एवञ्च स्वप्रकाशत्वं संशयाद्यविषयस्वभावत्वमित्येकम्. यद्यप्येतद् वृत्तिज्ञानादावपि तार्किकादीनामपि साधारणम्, तदुक्तं प्रामाण्यवादमणौ "नह्यज्ञानन् जानामीति प्रत्येति न वा घटज्ञाने परं जानामीति," तथापि वक्तव्यदिशा स्वप्रकाशसाक्षिनिर्वाह्यमेवैतदिति न वेदान्तिनो हानिकरम् । द्वितीयं तु वृत्त्यादिव्यावृत्तं स्वातिरिक्तसंविदपेक्षव्यवहारविषयान्यत्वकूटवत्त्वम् सिद्धशब्दस्य सिद्धिप्रयुक्तव्यवहारविषयतार्थकत्वात् । स्वातिरिक्तवृत्तिसापेक्षत्वमादायासम्भवव्युदासाय संविदिति । अतिरिक्तशब्देन चात्यन्तभेदो विवक्षणीयः, तेनासत्त्वापादकाज्ञानाभावोपहितचितो व्यवहारमात्रेऽपेक्षणीयत्वेऽपि नासम्भवः, तस्याः शुद्धचिद्भिन्नाभिन्नत्वात् । ब्रह्मणि विषयतानुगमपक्षे तु स्वातिरिक्तापेक्षव्यवहारविषयो यस्तदन्यत्वम् वस्तुतस्त्वस्य कल्पे विषयत्वात्यन्ताभावोपलक्षितस्वरूपत्वमेव स्वप्रकाशत्वम्, अलीकेऽतिव्याप्तिवारणाय स्वरूपत्वं पूर्वत्रापि द्रष्टव्यम्, अतएव मूले स्वरूपपदं सफलम् आनन्दत्वाद्यवच्छिन्नविषयतानां ज्ञानाज्ञानान्यतरोपाधिकालीनत्वाद्नुपहिते उक्तलक्षणसत्त्वात् । भेदकूटस्यासर्वज्ञदुर्ग्रहत्वे तु जडत्वात्यन्ताभावोपलक्षितस्वरूपत्वलाभार्थमेव स्वत एवेत्यादिकम्, जडत्वञ्च 'घटो जड' इत्याद्यनुगतप्रतीतिव्यवहारसिद्धो जातिविशेषो वोपाधिर्वेत्यन्यत्. न तु स्वप्रकाशत्वघटितम् । तेनेत्यादिना स्वप्रकाशत्वे संशयाद्यविषयत्वलिङ्गकमनुमानं मानं वक्ष्यति, तादृशलिङ्गस्य स्वरूपासिद्धिपरिहाराय तावदाह न खल्विति । विज्ञाने = घटादिज्ञाने ।

अत्र कालिकव्याप्तिविवक्षया कृष्णीयघटज्ञानं यदि कृष्णीयस्वप्रमाणाप्रत्यक्षसत्ताकत्वाभाववत्स्यात् कृष्णीयसंशयादिविषयतान्यतमवत् स्यादिति परतो 'अन्यथे' त्यादिना विवक्षणीयमापादनम् ईश्वरीयज्ञानमादाय स्वप्रमाणाप्रत्यक्षसत्ताकत्वस्य घटज्ञाने सत्त्वात् विपर्यये इष्टापत्तिवारणाय पुरुषविशेषो निवेशितः । तत्रोपेक्षणीयेषु व्यभिचारवारणाय जिज्ञासोरिति । तथाच जिज्ञासुत्वं व्याप्यदलप्रविष्टमिति न व्यभिचारः, तेषु जिज्ञासुत्वासत्त्वे संशयादिविषयताया अप्यापत्तेः, तदसत्त्वे च विशेषणाभावप्रयुक्तस्य विशिष्टाभावस्यापि सत्त्वात् । अनुमानीयव्याप्यदले जिज्ञासुत्वनिवेशस्तु निष्प्रयो-

जनः। अथवा पक्षे जिज्ञास्यत्वस्य विशेषणता वक्ष्यते तल्लाभायैवात्र जिज्ञासोरिति पदम्। युक्तं चैतत्, पक्षतावच्छेदकविशिष्टपक्षमनभिधाय हेतौ पक्षधर्मत्वाभिधानस्यानुचितत्वात्। तर्कव्याप्यदले तु जिज्ञासितत्वनिवेशोऽन्यथेत्यादिना करणीयः। अत्र हि संशयादिविषयत्वसामान्याभावात् जिज्ञास्यत्वविशिष्टस्य स्वप्रमाव्याप्यसत्ताकत्वाभावस्याभाव इति विपर्ययपर्यवसानं विशेष्याभावमादाय, जिज्ञास्यांशस्य तत्र सत्वात्, विपर्ययानुमाने जिज्ञास्यत्वस्य पक्षे विशेषणाच्च, कृष्णजिज्ञास्यं कृष्णीयघटज्ञानं कृष्णजिज्ञास्यत्वविशिष्टस्य कृष्णीयस्वप्रमाव्याप्यसत्ताकत्वाभावस्याभाववत्, कृष्णीयसंशयाद्यविषयत्वात्, अजिज्ञासितघटादिवत्। इच्छादेश्च ज्ञानसमानयोगक्षेमतेति न व्यभिचारः। अत्र च स्वप्रमाव्याप्यसत्ताकत्वस्थाने स्वसत्ताव्यापकप्रमाविषयत्वनिवेशोऽपि शक्यः। स्वरूपसत्ताया अनतिरिक्तत्वात् स्वप्रमाव्याप्यत्वं वा स्वव्यापकप्रमाविषयत्वं वा निवेश्यम्। एवं च पक्षधर्मताबलात् स्वप्रमाव्याप्यसत्ताकत्वसिद्धिः। तत्र योगाचारमते ज्ञानस्यैकक्षणमात्रवृत्तित्वेन स्वोत्तरोत्पत्तिकस्वातिरिक्तप्रमाऽऽदाने तन्निरूपितकालिकव्याप्तेर्घटज्ञानादिसत्तायामसम्भवात् स्वात्मकप्रमैव स्वपदेन प्राप्नोति स्वविषयत्वरूपस्वप्रकाशत्वसिद्धिः, वेदान्तिना तु विषयविषयीभावस्यैकत्रानङ्गीकारात् स्वाविषयत्वस्य पक्षे विशेषणीयत्वात् पक्षीभूतज्ञानस्य स्वप्रमात्वेन धर्तुमशक्यत्वात् पक्षीभूतज्ञानातिरिक्तैव प्रमा ग्राह्या, सा च लाघवादेका नित्या च सिद्ध्यति, सकर्तृकत्वानुमाने ईश्वरवत्। सैव च साक्षिशब्दाभिधेया।

यद्यपि साक्षिण एवं सिद्धिर्न तु तत्स्वप्रकाशत्वस्य, तथापि साक्षिणोऽन्यभास्यत्वोपगमे "विषयलिरूप्यं हि ज्ञानं तेन ज्ञानवित्तिवेद्यो विषय" इतिन्यायेन साक्षिविषयीभूतघटज्ञानविषयकत्वस्यापि साक्षिविषयकज्ञानान्तरे आवश्यकत्वात् घटज्ञानविषयकप्रमायां द्वित्वापत्तौ लाघवबलात्सिद्धमेकत्वं बाध्येत, अन्तिमासिद्धौ घटज्ञानपर्यन्तं वक्ष्यमाणरीत्या संशयविषयतापत्तौ संशयाद्यविषयत्वस्य हेतोः पक्षधर्मतानुपपत्तिश्च, अनवस्थापत्तिश्चेत्यादितर्कप्रतिसन्धानसहकृतं पुनरनुसन्धीयमानमक्तानुमानमेव प्रमायामविषयत्वान्यानपेक्षभासकत्वादिरूपस्वप्रकाशत्वसाधनायालम्, अत एव "देवदत्तो जीवनमरणान्यतरप्रतियोगी प्राणित्वादितिमानस्यैव पुनरनुसन्धीयमानस्य लाघवसहकृतस्य जीवित्वसाधकत्वम्, सहकारिवैचित्र्येणैकस्यापि विचित्रफलजनकत्वादित्यादिक"मर्थापत्तिमणावुक्तम्। व्यापकतावच्छेदकरूपेणैव साध्यानुमितिरित्यस्याप्रामाणिकत्वात्, एवं च साक्षी यदि स्वसत्ताव्यापकप्रमाविषयो न स्यात् संशयादिविषयः स्यादिति न शक्यमापादयितुम् विपर्ययपर्यवसानस्य धर्मिग्राहकमानबाधेनासम्भवात्।

ननु ज्ञानस्य जिज्ञास्यत्वे न तत्र स्वप्रमाव्याप्यसत्ताकत्वम्, तत्सत्वे वा न जिज्ञास्यत्वम् ज्ञाते जिज्ञासाऽनवकाशात्; न च सामान्यतो ज्ञाते विशिष्य जिज्ञासा स्यादिति वाच्यम्; एवं हि विशिष्य जिज्ञास्ये तत्र विशिष्य संशयादिविषयतापि स्यादिति दुर्लभं विपर्ययपर्यवसानम्, मैवम्; प्रमितेऽपि पुनर्दृढप्रमित्सादर्शनात् समीहितसाधनताज्ञानाधीनाया जिज्ञासायाम्लृप्तत्रापि कथंचित् कदाचित्सम्भवात्। अतएव—पूर्वं संशयस्ततो दुःखं, ततो द्वेषः, ततस्तद्ध्वंसेच्छा, ततो निर्णिनीषेतिक्रमेण संशयाद्यधीना जिज्ञासा संशयाद्यविषये कथं स्यादिति, सिद्धत्वज्ञानाभावोऽपि जिज्ञासाकारणमिति तदभावे सा कथं स्यादिति च निरस्तम्। निश्चितत्वं वा जिज्ञास्यत्वस्थाने उपेक्ष्यतावच्छेदकधर्मशून्यत्वम्। किञ्च तेन रूपेण ज्ञाते तेन रूपेण जिज्ञासा नास्तीत्युत्सर्गे बीजं तावच्चिन्त्यताम्, धनसिद्धावपि तदसिद्धत्वज्ञाने धनेच्छोपलम्भेनेच्छाविषयत्वस्यासिद्धत्वव्याप्यत्वाभावात् सिद्धेऽपि घटत्वेन घटज्ञाने तेन रूपेण तदिच्छा कुतो न स्यात्। असिद्धत्वज्ञानस्याभावादिति चेत्तदपि कुतो न स्यात्। घटादिविलक्षणो ज्ञानस्य स्वभावविशेष एवायमिति चेन्ननु स्वभावविशेष एवायं स्वप्रकाशतां विना न निर्वहतीति वाचोभङ्ग्यन्तरेण त्वया सा स्वीकृता, एकत्र विषयविषयिभावः परं त्वया नोपेयते, स च वेदान्तिनापि नानुमन्यते

तथाहि, घटादिज्ञाने जिज्ञास्यत्वादिविरहप्रयोजकं यदि न स्वविषयत्वं, तथा ज्ञानस्यैव स्वभावविशेषत्वादितस्य तथात्वं वाच्यम्, किन्तु ज्ञानयदिच्छामुपादायापि सति जिज्ञास्यत्वसंशयादिविषयत्वादर्शनादिच्छामस्तुत्वम्‌यादिप्रयोजकताऽपि तत्र वाच्येति महद्‌गौरवम्, तस्माल्लाघवमिच्छता नित्यमाक्षिविषयत्वस्यैकस्यैव तत्प्रयोजकता वक्तुमुचितेति जितं वेदान्तिना । तस्माजिज्ञास्यत्वस्य ज्ञाने विरहोऽपि स्वप्रकाशत्वसाधक इति ध्येयम् ।

ननु तार्किकं प्रति संशयाद्यापादनं ज्ञानाद्यक्षणे न सम्भवति, ज्ञानयौगपद्यानङ्गीकारात्, पूर्वं संशयादिसामग्रीविरहाच्च । नापि द्वितीयक्षणे, योगाचारमते तदा ज्ञानाभावेऽपि तार्किकमते तदा ज्ञानसत्त्वात् 'विज्ञाने सती' तिमूलासङ्गतिविरहेऽपि द्वितीयक्षणस्यानुव्यवसायाधिकरणत्वे संशयाद्यनुपपत्तेः, तदनधिकरणत्वेऽपि प्रथमक्षणे साधारणासाधारणधर्मवद्धर्मिज्ञानादिरूपसंशयकारणस्य, प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानरूपस्याभावधीकारणस्य चासत्त्वात् । अतएव न तृतीयक्षणेऽपि, 'विज्ञाने सती' तिमूलस्य विज्ञानानन्तर्यार्थकतामुपगम्य तद्विरोधपरिहारेऽपि पूर्वं संशयादिकारणानुपपत्तेः, नहि द्वितीयक्षणे धर्म्यादिज्ञानमनुमित्यादिरूपम्, तस्य ज्ञानकरणकत्वेनाद्यक्षणे ज्ञानयौगपद्यापत्तेः, तस्य 'मयि घटज्ञानम्' 'घटज्ञानवानहमि' त्याद्यनुव्यवसायरूपत्वे तेनैव प्रतिबन्धात् 'घटं जानामि नवे' त्यादिसंशयानुपपत्तेरितिचेन्न; यत्र द्वितीयक्षणस्थज्ञानस्य कदाचित् सामग्रीवशाद्धर्मिज्ञानाद्यात्मकता तत्र तृतीयक्षणे आपत्तिसम्भवात्, अस्तु वा चतुर्थादिक्षणे आपत्तिः, तदानुव्यवसायस्य प्रतिबन्धकस्याभावात्, जानामि नवेत्यादिमूलं तु 'अज्ञासिषं नवे' त्यादिपरम्, अतएव "न च कश्चिदमुमद्राक्षीन्नो वा भवानिति पृष्टोऽनन्तरक्षणे सन्दिग्धे विपर्यस्यति संविद्भावं वा प्रमिणोति, किन्तु निश्चिनोत्येव 'अमुमहमद्राक्षमिति" तत्त्वप्रदीपिकादौ भूतप्रयोगः कृतः । द्वितीयक्षणेऽनुव्यवसायविरहदशायां प्रथमक्षणस्थज्ञानस्य धर्म्यादिज्ञानात्मकतायां तु यथाश्रुतमेव सम्यक् । पक्षता च तादृशज्ञानस्यैव । नच व्यवसायजनकमनोयोगजन्यमनोयोगजन्यस्य संशयादेर्द्वितीयक्षणस्थत्वासम्भवः, पूर्वं क्रिया ततो विभाग इत्यादिप्रक्रिययाऽनेकक्षणविलम्बादिति वाच्यम्, व्यवसायजनकमनोयोगजनकक्रियाऽव्यवहितोत्तरक्षणोत्पत्तिकक्रियया विभागादिक्रमेण व्यवसायाव्यवहितोत्तरक्षणे संशयादिसम्भवात्, एकस्य कर्मणः कर्मान्तरप्रतिबध्यताया अप्रामाणिकत्वात् । अन्यथा नैयायिकमते द्वितीयक्षणेऽनुव्यवसायो न कदापि स्यात् । किञ्चाद्यानुव्यवसायसत्त्वेऽप्यापत्तेः सम्भवः, तथाहि-आद्योऽनुव्यवसायो न 'घटमहं जानामी' त्याकारकः, तत्र ज्ञानस्य विशेषणत्वात् ज्ञानज्ञानं विना तदनुत्पत्तेः, अपि तु मयि घटज्ञानमित्याकारकः, स च 'जानामि नवेति' संशयं 'न जानामी' त्यभावबुद्धिं वा प्रति न प्रतिबन्धकः, असमानाकारकत्वात्, तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताकं ज्ञानं प्रति तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावप्रकारकतद्धर्मावच्छिन्नविशेष्यताकग्रहस्यैव प्रतिबन्धकताया नव्यैः स्वीकारात् ।

वस्तुतस्तु घटत्वप्रकारकज्ञानात् पटाभावबुद्धेर्वारणाय विशिष्यैव फलबलेन क्वचित्तादृशकार्यकारणभावानां कल्पनीयत्वात् प्रतियोगितावच्छेदकप्रकारकज्ञानत्वधर्मिज्ञानत्वादिना प्रतियोगिविशेषिताभावज्ञानत्वसंशयत्वादिना च कार्यकारणभावानामप्रामाणिकत्वान्न तानादाय शक्यं प्रत्यवस्थातुमपि । न च प्रकृतेऽपि विशिष्य कार्यकारणभावः कल्प्यतामन्यथाऽतिप्रसङ्गादिति वाच्यम्; 'तद्धेतोरेवास्तु हेतुत्वं किं तेनेति' न्यायेन प्रतियोगितावच्छेदकप्रकारकज्ञानादिसामग्रीणामेव प्रतियोगिविशेषिताभावज्ञानादिकं प्रति नियामकताया वक्तुं शक्यत्वात् । अनन्यथासिद्धत्वमात्रकल्पनेन लाघवात् । एतेन-धर्मिज्ञानं च संशयहेतुः, अन्यथा संशये धर्मिनियमः कोटयुल्कटत्वञ्च न स्यादिति-निरस्तम्; धर्मिज्ञानजनकस्यैव नियाम-

'न जानामीति' वा विपर्ययो व्यतिरेकप्रमा वा । तेन जिज्ञासितस्यातत्त्वज्ञानव्यतिरेकप्रमाणामभावसमुदायः स्वव्यापकं जिज्ञासितस्य प्रमितत्वमानयति, अन्यथा हि जिज्ञासितप्रमितत्वव्यतिरेकव्यापकं जिज्ञासितव्यतिरेकोल्लेखि ज्ञानमविच्छिन्नजिज्ञासस्य

---

कत्वसम्भवात्, कोट्युत्कटत्वस्य च कोटिविशेषतद्व्यरितभूयोधर्मविशिष्टधर्मिविषयकत्वरूपस्य तादृशधर्मिविषयकत्वेन नियन्तुमशक्यत्वादन्यथाऽप्रामाण्यापत्तेरिति । न च व्यवसायनाशसमये संशयाद्यापत्तिकल्पे संस्कारप्रतिबन्धके कारविशेषस्य यथानायुपनिपातेऽप्यवसरेऽपि पङ्क्त्यर्थमनुभवमवेदिपं न वेति-संशयादिदर्शनादिष्टापत्तिः, विपर्यये स्वरूपासिद्धिश्चेति वाच्यम्, तादृशोपनिपाताभावस्थलीयज्ञानस्यैव पक्षत्वात् । जानामीति । घटमित्यादिः संशयविपर्ययावनाहार्यौ विवक्षितौ । व्यतिरेकप्रमेति । नन्विदमयुक्तम्, ज्ञानसत्त्वे तदभावग्रहस्य प्रमात्वानुपपत्तेः, तदसत्त्वेऽपि तथैव, तथाहि—तदा 'न जानामीति' व्यतिरेकप्रमापादने इष्टापत्तेः, ज्ञानस्यावर्तमानत्वात्, नाज्ञासिपमित्यस्यापादने च तस्य भ्रमत्वमेव, पूर्वं ज्ञानस्य जातत्वात्, अन्यथा शिष्टापत्तिरेव । अथ न नैयायिकं प्रति तृतीयापत्तिः, अपि तु माध्यमिकं प्रति, तन्मते ज्ञानस्य सांवृतसतोऽपि त्रैकालिकसार्वदेशिकात्यन्ताभावप्रतियोगित्वात् तदभावस्य तदधिकरणेऽपि प्रमात्वसम्भवात्, युक्तञ्चैतत्, योगाचारादिना ज्ञाने पारमार्थिकत्वस्यापि साधनीयत्वात् । तथाच घटज्ञानं यदि तादृशप्रतियोगितावत्स्यात्, तादृशप्रतियोगित्वप्रकारकप्रमाविशेष्यं स्यादित्यापादनीयम् । नचैवं माध्यमिकस्य व्यतिरेकप्रमायामिष्टापत्तिः; घटज्ञानं तादृशप्रतियोगितावदितिधीर्यदि प्रमा स्यादप्रमात्वप्रकारकप्रामाणिकव्यवहारविषयो न स्यादित्यत्र मूलतात्पर्यसम्भवादिति चेन्न; अर्थक्रियाकारित्वरूपसत्त्वग्रहस्य प्रतिबन्धकत्वेनाप्रमात्वप्रकारकव्यवहारविषयत्वस्य हेतोरुपपत्तेर्विपर्ययेऽप्रयोजकत्वात्, घटधर्मिकतादृशधियः पक्षीकरणे वेदान्तिनाऽपि तथैव समाधेयत्वात्, घटज्ञानस्यापि विशिष्टस्य मिथ्यात्वेनोक्तरक्षकस्थलेऽपि वेदान्तिना तथैव समाधेयत्वाच्चेति चेन्न; अगत्या व्यतिरेकप्रमापदस्य ज्ञानवद्भिन्नोऽहमिति भेदनिश्चयपरताया वक्तव्यत्वात्, प्रमात्वस्याविवक्षणीयत्वात् 'न जानामीति' विपर्ययस्यात्यन्ताभावविषयकत्वेनापीनत्वादिति परमार्थः । एवं च भेदनिश्चयोऽप्यनाहार्यो वक्तव्यः ।

तेन = विज्ञाने संशयाद्यविषयत्वस्य हेतोःसत्त्वेन । जिज्ञासितस्येति । इदं पक्षे जिज्ञासितत्वस्य विशेषणताऽभाव, समुदायान्वयि निष्ठत्वं षष्ठ्यर्थः, अतत्त्वज्ञाने = संशयविपर्ययौ व्यतिरेकप्रमा = भेदनिश्चयः, अस्याप्यतत्त्वज्ञानपदेन लाभसम्भवेऽपि पार्थक्येनोपादानमुक्तिवैचित्र्यमात्रम्, एतत्त्रयविषयतासामान्याभाव इत्यर्थः । यथा श्रुतं तु विषयतासम्बन्धावच्छिन्नप्रतियोगिताकतादृशज्ञानत्रयाभावस्य हेतुत्वाभिप्रायेण । जिज्ञासितस्य प्रमितत्वम् = जिज्ञास्यत्वविशिष्टस्य स्वप्रमाव्याप्यसत्ताकत्वाभावस्य स्वसत्ताव्यापकप्रमाविषयत्वाभावस्य वाऽभावम्, यथाश्रुतं तु जिज्ञासिते पक्षे पक्षधर्मताबललभ्यसाध्याभिप्रायेण, प्रमितत्वस्य स्वप्रमाव्याप्यसत्ताकत्वपर्यवसायित्वस्यावश्यकत्वात् । यद्यपि वेदान्तिमते साक्षिणो भ्रमप्रमासाधारण्यं, तथापि घटादिज्ञानांशे प्रमात्वं निराबाधम् । तदंशे प्रमात्वस्याप्रामाण्यग्रहानास्कन्दितत्वस्य च सूचनायैव ज्ञातत्वमनुक्त्वा मूले प्रमितत्वाभिधानम्, योगाचारमते तु स्वांशे तस्य सूचनायेति विवेकः । आनयति = अनुमापयति । विपक्षवृत्तित्वशङ्काबाधकं तर्कमाहान्यथेति । जिज्ञासितप्रमितत्वव्यतिरेकव्यापकम् = सामानाधिकरण्यसम्बन्धेन । जिज्ञास्यत्वविशिष्टस्य स्वप्रमाव्याप्यसत्ताकत्वाभावस्य व्यापकं जिज्ञासितस्य पक्षीभूतज्ञानस्य व्यतिरेकोल्लेखि = अभावविषयकं ज्ञानं = उक्तसंशयादिकं, व्यापकता विषयतासम्बन्धावच्छिन्ना बोध्या । जिज्ञासोत्तरं निद्रादिरूप-

स्यात्, अतः सर्वजनस्यात्मसंवेदनसिद्धमेवास्य बोधस्य स्वरूपम्। व्यवसायस्यानुव्यवसायनियमान्न तत्र संशयादिरिति चेन्न; यत्रैवानुव्यवसाये ज्ञेयता नोपेया, तत्र जिज्ञासायामात्मधर्मिकं तत्संशयमारभ्य व्यवसायविषयपर्यन्तं संशयाक्रान्तेर्दुष्परिहरत्वात्। विषयिसद्भावसंशये तद्विषयेऽपि संशयस्य सम्भवात्। एवं त्रिचतुरसंवेदनकक्षाध्रौव्यनियमाभ्युपगमेऽपीति। स्वप्रकाशे तु मानमेयभावव्यवस्थाया अभावादेव तदाश्रया दोषा निरवकाशाः।

---

प्रतिबन्धकोत्पत्तौ कारणाभावेन संशयादिविषयतापादनासम्भवादाहाविच्छिन्नजिज्ञासस्येति। स्वाव्यवहितोत्तरानुत्पत्तिकं तत्तत्प्रतिबन्धकं यस्या जिज्ञासायास्तादृशजिज्ञासाविशिष्टस्येत्यर्थः। तथाच पक्षतावच्छेदकादौ तादृशजिज्ञासाया एव घटकतेति भावः। अत्रेदमबोध्यम्, एकत्र विषयविषयिभावोपगमपक्षे 'घटमहं जानामीति' बुद्धेरपि ज्ञानविषयिकाया नानाज्ञानकल्पने गौरवात् लाघवसहकारेण स्वविषयत्वरूपस्वप्रकाशत्वसाधकत्वम्। स्वप्रकाशत्वं निगमयति अत इति। सार्वदिकस्य संशयादिविषयतासामान्याभावस्याश्रयत्वादित्यर्थः। स्वात्मकं यत्संवेदनं सर्वजनानां तत्सिद्धं = तद्विषयीभूतं तत्प्रयुक्तसंशयाद्यविषयताश्रयो वेत्यर्थः। अथवा वस्तुगतिमनुरुध्याहात इति। स्वप्रकाशत्वव्यवस्थितावित्यर्थः। स्वात्मकसंवेदनेन = मानान्तरमनपेक्ष्यैव सिद्धं = संशयादिविषयताशून्यमित्यर्थः। सर्वसाधकस्य तस्य साधकान्तरनिरपेक्षत्वमिति भावः।

संशयाद्यविषयत्वरूपहेतोरन्यथानुपपत्तिं शङ्कते व्यवसायस्येति। ज्ञेयता = अनुव्यवसायाविषयता। नोपेयेति। अनवस्थाविषयान्तरसञ्चाराभावादिभयादिति भावः। जिज्ञासायामिति। अनुपेक्षणीयतायामित्यर्थः। तथा चोक्तरीत्यैवानुव्यवसायाविषयीभूतं ज्ञानं पक्षीकृत्य संशयादिविषयतापादनसम्भवात् तस्य स्वप्रकाशताया वाच्यत्वे "प्रथमस्य तथाभावे प्रद्वेषः किन्निबन्धन" इति न्यायेन पूर्वस्यापि स्वप्रकाशत्वमस्तु, योगाचारादिमते 'अयं घट' इति ज्ञानापलापापत्त्या स्वविषयत्वरूपस्वप्रकाशतानौचित्येऽपि 'अयं घट' इत्येतद्व्यतिरिक्तस्य 'घटमहं जानामीति' ग्रहस्य स्वप्रकाशताया वेदान्तिसम्मताया अदुष्टत्वादिति भावः। आत्मधर्मिकमिति। घटज्ञानज्ञानमहं प्रमिणोमि न वेत्यहम्पदार्थविशेष्यकमित्यर्थः। तत्तत्कोटिविषयकत्वावच्छेदेन संशयत्ववति ज्ञाने धर्मिविषयकत्वावच्छेदेन निश्चयत्वस्य ध्रौव्यादनिश्चितज्ञानस्य धर्मित्वासम्भवादिति भावः। संशयादिविषयतापादने इष्टापत्तिं परिहरन्नाह व्यवसायेति। संशयाक्रान्तेः = संशयविषयतापत्तेः। सम्भवादिति। ज्ञानस्य निश्चयेऽप्यप्रामाण्यसंशयाहितसंशयस्य विषये सम्भवो यदा, तदा तज्ज्ञानसामान्यस्वरूपसंशयाहितसंशयस्य तत्र नितरां सम्भवः, प्रमाणसन्देहः प्रमेयसन्देहमाधत्ते इति न्यायादिति भावः। त्रिचतुरेति। 'अयं घट' इत्येका कक्षा, 'घटमहं जानामीति' द्वितीया. 'घटज्ञानमहं जानामीति' तृतीयेत्येवं त्रिचतुरकक्षाणां ध्रौव्यनियमस्य = अवश्यम्भावस्याभ्युपगमेऽप्युक्तरीत्यैव व्यवसायविषयपर्यन्तं संशयविषयतापत्तिरनिश्चितानुव्यवसायसंदेहाहितेत्यर्थः। ननु विषयविषयिभावस्य सम्बन्धत्वेनैकत्रासम्भवः, तत्प्रतियोगिकसम्बन्धत्वस्य तत्प्रतियोगिकभेदव्याप्तेः संयोगादिस्थलेऽवधारणात्, अत एव तादात्म्यस्यापि भेदगर्भता, तथा च कथं स्वविषयत्वरूपस्वप्रकाशत्वस्य सङ्गतिः, स्वजनकेन्द्रियसन्निकर्षानाश्रयत्वेन स्वाविषयत्वानुमानाच्च, किञ्चैवं स्वप्रकाशानुभवस्यापि दृश्यत्वेन मिथ्यात्वापत्तिः, अयं घट इति ज्ञानापलापापत्तिश्चेत्यतो वेदान्तिमतेनाह स्वप्रकाशे इति। मानमेयभावव्यवस्थायाः = विषयविषयिभावसम्बन्धस्य। एकस्मिन्निति शेषः। तदाश्रयाः = एकस्मिन् विषयविषयिभावोपगमनिबन्धनाः।

अन्यथा तु बोधस्वरूपमेव न सिद्ध्येत्। यदि हि विज्ञानं परतः सिद्ध्येत्तदाऽनवस्था स्यात्। न च वाच्यमवश्यवेद्यता वित्तेर्नाभ्युपेयते, स्वार्थे व्यवहारस्तु स्वरूपसत्तया प्रसूयते इति क्वानवस्थेति। यतस्तस्यां प्रमाणानुपन्यासे स्वरूपसत्तापि कुतः, यया व्यवहारोपपत्तिः, को ब्रूते सती सा वित्तिः? असत्येव न कुतः। सामान्यतो वित्तेस्तथात्वविधावपेक्षितसिद्ध्या यत्र विशेषरूपायां प्रमाणाप्रवृत्तिस्तदा तत्र सत्त्वसाधनासत्त्वेऽपि जिज्ञासायां सत्यां पश्चाद्व्यवहारसत्त्वैव वाऽन्यद्वा प्रमाणमस्त्येवेति चेन्न; तस्यापि कथं सत्त्वमित्यनवस्था वा स्यात्, शेषासिद्ध्या सर्वासिद्धिर्वा प्रसज्येतेत्यर्थासिद्धिपर्यन्तस्य व्यवसनस्य दुरुत्तरत्वात्। सेयं "अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यतीति"।

अन्यथा = स्वप्रकाशत्वानङ्गीकारे। नसिद्ध्येदिति। परप्रकाश्यत्वस्यानवस्थापादकत्वेनासम्भवात्, स्वप्रकाशत्वस्य चानङ्गीकारादिति भावः। अनवस्था स्यादिति। ज्ञानं नाप्रत्यक्षं योग्यात्मगुणत्वादिच्छादिवत्, नचाप्रयोजकत्वम्, अनौपाधिकत्वस्यैव प्रयोजकत्वात् तथा च ज्ञानस्य प्रत्यक्षत्वनियमे ज्ञानधारायाः क्वचिद्विश्रामस्य वक्तुमशक्यत्वात् कथं न परप्रकाश्यत्वेऽनवस्था, अतएव ज्ञानान्तरसामग्र्याः प्रतिबन्धोऽपि न वक्तुं शक्यते, अन्यथाऽवश्यप्रत्यक्षत्वहानेः, नचेश्वरप्रत्यक्षमादाय सिद्धसाधनम्, स्वसमानाधिकरणप्रत्यक्षस्यैव साध्यघटत्वात्। नचैवं ज्ञानयौगपद्यम्, इष्टत्वात् समूहालम्बनसम्भवाच्च, संशयत्वनिश्चयत्ववदेकत्र ज्ञाने मानसत्वचाक्षुषत्वादेरप्येष्टव्यत्वाच्चेति भावः। अत्र पराधीनापरोक्षत्वनिराकरणेन परिशेषानुमानेन व्यतिरेक्याख्येन स्वप्रकाशत्वसिद्धिः सूचिता तच्च योगाचारमते ज्ञानत्वम्, वेदान्तिमते तु नित्यज्ञानत्वम्, नित्यज्ञानस्य साधितत्वात्, एवं घटः स्फुरतीतिप्रतीतिसाक्षिकस्फुरणस्फुरणत्वयोरपि पक्षताहेतुतं सम्भवत इति ध्येयम्। योग्यात्मगुणत्वस्याप्रयोजकत्वाभिमानेनाशङ्कते नचेति। वित्तेः = वित्तिसामान्यस्य। वित्तिसामान्यस्यावश्यवेद्यतानङ्गीकारे चरमवित्तेरप्रामाणिकतापत्तिरित्याह यत इति। अनुपन्यासे = अप्रतीतौ को ब्रूते = किमत्र प्रमाणम्? न कुत इति। यदि चरमवित्तिरप्रामाणिकी स्यान्नैव स्यादित्यर्थः। चरमवित्तेः स्वकाले प्रमाणाविषयत्वेऽपि कालान्तरीयव्यवहारादिलिङ्गकानुमित्यादिविषयत्वान्नाप्रामाणिकतेति नासत्त्वापत्तिरित्याशङ्कते सामान्यत इति। सामान्यतो वित्तेः = सत्त्वासत्त्वान्तरधर्मप्रकारकनिश्चयाविशेष्यवित्त्युत्पत्तिसामर्थ्यात् तथात्वविधौ = विषयसत्त्वव्यवस्थितौ अपेक्षितस्य तत्तज्ज्ञानाधीनव्यवहारस्य सिद्ध्या यत्र = यस्यां वित्तौ विशेषरूपायां प्रमाणाप्रवृत्तिः = यद्विशेविशेष्यिकायाः सत्त्वप्रकारकप्रमायाः प्रमाणेन तदधिकरणक्षणावच्छेदेनानुपधानम्, तदा = स्वाधिकरणक्षणावच्छेदेन तत्र = चरमवित्तौ सत्त्वसाधनासत्त्वेऽपि = सत्त्वप्रकारकप्रमीयविशेष्यत्वासम्भवेऽपि। व्यवहारसत्त्वेति। तद्विषयकव्यवहारस्य तज्ज्ञानव्याप्यत्वादिति भावः। अन्यत् = इच्छाकृतिस्मृत्यादि। प्रमाणं = लिङ्गम्। तस्य = व्यवहारादेः। व्यवहारादिज्ञानस्याप्रकाशे व्यवहारादेः सन्दिह्यमानत्वं निष्प्रमाणकत्वेनासत्त्वं वा स्यादिति न लिङ्गत्वसम्भवः, प्रमाणान्तरमादाय सन्दिह्यमानत्वनिष्प्रामाणिकत्वयोरपाकरणेऽनवस्था। विश्रान्तौ त्वाह शेषासिद्ध्येति। चरमवित्तिसत्त्वानिश्चयेनेत्यर्थः। सर्वासिद्धिः = सर्वानिश्चयः। चरमवित्तिसामान्यसत्त्वसन्देहप्रयुक्तो मूलपर्यन्तसन्देह इति यावत्। व्यसनस्य = आपत्तेः। सेयमिति। उक्तार्थासिद्धिरेव 'अप्रत्यक्षोपलम्भस्येत्यादि' वाक्येन धर्मकीर्तिनोक्तेत्यर्थः। अप्रत्यक्षोपलम्भस्य = स्वतोऽप्रकाशमानप्रकाशोपगन्तुर्मते अर्थदृष्टिः = अर्थसिद्धिः न प्रसिद्ध्यति = न

घटसत्तां हि व्यवहर्त्ता प्रामाणिकेन तत्र प्रमाणसद्भावो वाच्यः। यदि प्रमाणमनुपन्यस्य साऽस्तीत्येवमङ्गीक्रियते तदा वैपरीत्यमेव किन्न स्यात्। ततश्च घटसत्तायां प्रमाणसत्ता दर्शनीया, तथा च प्रमाणसत्तापि तत्प्रमाणसत्तामन्तरेण प्रामाणिकस्य नाङ्गीकारार्हा, सर्वप्रमाणसत्तानिवृत्तेर्वस्तुसत्तानिवृत्तिनियतत्वात्, अन्यथा सप्तमरसादेरप्यापत्तेरिति व्यक्तमनवस्थादौस्थ्यमस्वप्रकाशवादिनः स्यात्। यदि हि विनैव प्रमाणसत्तां प्रमाणसत्तां परोऽङ्गीकारयेत्तदा घटसत्तामपि तथैवाङ्गीकारयतामिति घटेऽपि वृथा प्रमाणोपन्यासायासः। अथ नाव्ययवानलग्नविचलितक्षितिधाराऽभ्युपगम्यते,

---

सम्भवति। अत्र पुरोदीरितदिशा ज्ञानविशेषं पक्षीकृत्य सन्देहविषयत्वमापादनीयम्, तत्र चेष्टापत्तौ विमतं यदि सन्दिह्यमानसत्ताकं ज्ञानं स्यात्, सन्दिह्यमानविषयकं स्यादित्यापाद्यम्, एवं घटादिकं यदि सन्दिह्यमानज्ञानकं स्यात् सन्दिह्यमानं स्यादिति। आपत्तौ च बाधोऽनुगुण एवेति तर्कविदां सरणिः, अन्यथाऽबाधितार्थापादने इष्टापत्त्या तर्कस्याभासतापातात्। एतेन-सर्वासिद्धिः प्रसञ्जनमनुपपन्नम्, यत्पक्षीकृत्यासिद्धिरापाद्या तत्सिद्धौ बाधः, तदसिद्धावाश्रयासिद्धिः, दोषासिद्धेश्चापादकत्वेनाभिमताया असिद्धिः, 'शेषस्य चरमज्ञानस्य सिद्धौ तदूर्ध्वज्ञानस्यासिद्धि' रिति विशिष्टापादने स्ववचनादेव तयोरत्रैव सिद्धौ सुतरामापाद्यापादकयोरसिद्धिरिति-निरस्तम्।

प्रमाणसन्देहस्य प्रमेयसन्देहाधायकत्वं स्फुटयितुं 'यथा प्रमाणनिश्चायनेन प्रमेयं परोऽङ्गीकार्यते। तथा स्वयमपि प्रमाणनिश्चयेनैव प्रमेयोऽङ्गीकर्तुमुचित' इत्याह घटसत्तामिति। प्रमाणशब्दः प्रमापरः, तेन न सन्दर्भासङ्गतिः। अथवा, परार्थे प्रमाणनिश्चयावश्यम्भाववत्प्रमानिश्चयोऽपि सेत्स्यतीत्याशयेन करणपर एव। प्रामाणिकत्वनिश्चयोऽपि प्रमानिश्चयपर्यवसाय्येव। वाच्यः = निश्चेयः। अनुपन्यस्य = अनिश्चित्य। तेन 'अङ्गीक्रियते' इत्यस्य नासङ्गतिः। अस्य 'अङ्गीकार्यते' इत्येतत्परत्वे तु यथाश्रुतमेव सम्यक्। वैपरीत्यं = घटाभावः। सत्तायां प्रमाणेति। सत्ताविषयकप्रमाणेत्यर्थः। प्रमाणसत्तां = तद्दर्शनम्। सर्वप्रमाणेति। यस्य यत्र प्रमाणसामान्याविषयत्वं तस्य तत्रासत्त्वम्, यथा षड्रसव्यतिरिक्ते रसत्वमित्यर्थः। नियतत्वात् = व्याप्यत्वात्। एवञ्च प्रमाणसामान्याविषयत्वनिरासाय यत्किञ्चित्प्रमाणं ग्राह्यमिति तद्ग्रहमादायैवानवस्थेत्याह व्यक्तमिति। यास इति। तथा चाङ्गीकर्तृत्वमपि प्रमाणनिश्चयसापेक्षं पर्यवसन्नम्, युक्तश्चैवं विषयनिश्चयः प्रमानिश्चयसापेक्ष इति प्रमाया स्वविषयत्वं साक्षिविषयत्वं वाऽनङ्गीकृत्य न निस्तारः, अन्यथा घटप्रमोत्पत्तेरेव घटनिश्चयरूपत्वेऽपि घटप्रमासन्देहाधीनो घटे सन्देहः स्यात्। एवञ्च परेण प्रत्याय्यतास्थले प्रमाणनिश्चयप्रमानिश्चयोभयस्यैव प्रमेयनिश्चयापेक्षणीयता प्रमेयसन्देहविघटकता वा, स्वयमेव प्रमितौ तु प्रमानिश्चयस्यैव, सर्वत्रैव वा, प्रमाणनिश्चयस्यासार्वत्रिकत्वदन्यथासिद्धत्वाच्च। अन्यथा प्रमाणनिश्चयस्य स्वविषयत्वे साक्षिविषयत्वेऽपि वा स्वप्रमाणाविषयकत्वात्प्रमाणान्तरनिश्चयापेक्षायामनवस्थापत्तेरिति भावः। ननु स्वप्रकाशत्वेऽपि प्रमाणापेक्षयामनवस्था, स्वप्रकाशत्वस्यास्वप्रकाशत्वात् प्रमाणान्तरापेक्षत्वादिति चेदेकत्र विषयविषयिभावोपगन्तृमते स्वप्रकाशत्वसाधकानुमित्यादिकं स्वमिव स्वविषयत्वमपि विषयीकरोत्येवेति तत्तज्ज्ञानस्य स्वप्रकाशत्वं तद्विषय एवेति केचित्। वस्तुतस्तु प्रमेयसन्देहविघटनाय प्रमानिश्चयस्यावश्यकत्वेऽपि तद्गतस्वप्रकाशत्वनिश्चयस्यानुपयुक्तत्वात् प्रमाणानामपि ज्ञाततया साक्षाद्वा साक्षिणा ग्रहणाच्च नानवस्थाशङ्कापीति ध्येयम्।

किन्नाम कदाचित्कुतश्चित्काचिद्वित्तिः प्रमीयते इति सर्वा वित्तिः प्रमाणसिद्धैवेत्यभ्युपेयते इति चेन्न; स्यादप्येवं यदि 'घट' इति 'घटं जानामी'त्यतोऽधिका घटवित्तितद्वित्तिधारया विषयभावेन प्रविष्टया तादृग्विषयशतभारमन्थरा वित्तिरस्मदादेरुत्पद्यमानाऽनुभूयेत। यद्यस्मदादिविलक्षणजन्मनि सा सम्भाव्यते तदापि यस्या वित्तेस्तावद्विषयगर्भिता धीर्विषयः, साप्यन्यया कयाचिदुल्लेख्येत्यत्र प्रमाणाभावश्चानिर्मोक्षापत्तिश्च। नहि स्वमन्तर्भाव्य, कयाचिद्धिया स प्रवाहो ग्राह्यः, तथा सति स्वप्रकाशतासिद्धेः। अत एव चान्योन्यविषयता निरस्ता, सविषयकान्योन्यग्रहे स्वग्रहापत्तेः। न च पुरुषान्तरेण सा प्रमास्यते न तु तदभावे इति प्रमा तेऽस्ति, तदर्थमपि प्रमाणान्तरसद्भावपरम्परापत्तेः। नन्वेवं घटसामग्रीतत्सामग्रीगवेषणेऽप्यनवस्था स्यात्। वैषम्यात्. यदि हि घटसामग्रीतत्सामग्रीधारा कुत्रचिद्विच्छिद्येत तदा घटः सदातनः स्यादित्यर्थापत्त्यैव घटः सामग्री-

---

अव्यवधानलम्भत्वं वित्तितद्वित्तिविशेषणम्. वित्त्यव्यवहितोत्तरत्वविशिष्टतद्वित्त्यव्यवहितोत्तरत्वविशिष्टतद्वित्तीत्येवमव्यवहितपूर्वापरभावापन्नत्वं तदर्थः। कुतश्चित् = व्यवहारस्मरणलिङ्गादिना। घटविषयकवित्तेरेवं प्रमाणसिद्धत्वसम्भवेऽपि वित्तिविषयकवित्तेर्न तथात्वसम्भवः, अनुभवस्य तद्विषयकत्वादर्शनादित्याह स्यादिति। विषयभावेन प्रविष्टया = विषयीभूतया। विषयशतान्वय्यभेदस्तृतीयार्थः। एवञ्चोर्ध्वमुखधाराऽभिन्नत्वमधोमुखधारायामुक्तम्, तादृग्विषयशतभारेण = पूर्वपूर्वज्ञानीयानन्तविषयविषयकत्वप्रयुक्तं यन्मन्थरत्वं = अधिककालापेक्षाभिलापविषयत्वं तद्विशिष्टा। अयम्भावः 'विषयनिरूप्यं हि ज्ञानं तेन ज्ञानवित्तिवेद्यो विषय' इति न्यायात् घटज्ञानज्ञानज्ञानादेः पूर्वपूर्वज्ञानविषयविषयकत्वस्यापि वक्तव्यत्वादनन्तविषयकत्वमपि स्यादनुभवविषयोऽभिलप्येत वा विलम्बेन तादृशं ज्ञानं नत्वेवमिति न वित्तिसामान्यग्रहसम्भवः। ननु–अनुव्यवसायो विषयमात्रनिरूप्यो नतु तद्विषयपरम्परानिरूप्यो गौरवात्, तथा च ज्ञानज्ञानत्वेन सर्वा वित्तिरनुभूयते एवेति चेन्न; विषयीभूतज्ञानघटितप्रत्यासत्तेस्तौल्यात् यावद्विषयग्रहणसम्भवात्, अतएव व्यवसायोल्लिखितयावत्प्रकारविशिष्टो धर्मी ज्ञानग्रहविषय इति स्वतः प्रामाण्यवादिनो वदन्ति, विस्तरस्तु प्रमात्वव्युदसितप्रस्तुतिशेषे वक्ष्यते। अनुमाननिराकरणप्रकरणे सामान्यलक्षणाया निराकरिष्यमाणत्वेन ज्ञानज्ञानत्वेन ज्ञानस्य सर्ववित्तिविषयकत्वानुपपत्तेश्चेति। एवञ्च सर्वासां वित्तीनां तुल्याकारत्वमनुपपन्नमेव। यत्तु-घटत्वप्रकारकमाद्यं ज्ञानं तदनुव्यवसायस्तु घटत्वप्रकारकज्ञानज्ञानम्, एवं तदनुव्यवसायादेरपि घटत्वप्रकारकज्ञानज्ञानज्ञानतेति शेषपर्यन्तमेवानुव्यवसायसम्भवः, वस्तुतस्तु घटत्वप्रकारकत्वप्रकारकत्वप्रकारकमपि ज्ञानं जायते एव, नियमस्तु नास्तीति; तत्तु नानुभवैकशरणैर्मन्तुं युक्तमिति। योगजधर्मबलात्तादृशवित्त्युत्पत्तिमाशङ्क्याह यदीति। गर्भिता = विषयिणी। उल्लेख्या = विषयीकरणीया। तादृशवित्तिसिद्ध्यर्थं ज्ञानान्तरानुसरणे आहानिर्मोक्षेति। अशेषविशेषगुणोच्छेदो हि मोक्षो न सति ज्ञाने सम्भवति। अन्तर्भाव्येति। विषयीकृत्येति पर्यवसितार्थः। स्वप्रकाशतेति। स्वविषयत्वरूपेत्यादिः। अन्योन्येति। अन्त्योपान्त्यबुद्ध्योरित्यादिः। सविषयकेति। अन्योन्यविषयकेत्यर्थः। यद्यपि तार्किकैर्योगजधर्माधीनज्ञानस्य, ज्ञानं प्रमेयमेवेति व्याप्तिज्ञानस्य, अहेतुकत्वेन सर्वविषयकस्येश्वरज्ञानस्य च स्वविषयकत्वलक्षणं स्वप्रकाशत्वमभ्युपेयते एव, तथाऽप्यन्यत्रापि तत्यागे न बीजमिति भावः। स्वप्रकाशवादे निश्चितस्वरूपप्रामाण्योभयस्यैव ज्ञानस्य विषयनिश्चयरूपतेति स्फोरयितुमाह न चेति।

परम्पराविच्छेदरहित एव प्रमीयते । यदि तु ज्ञानेऽप्येवं स्यात्, तदा स्वस्य प्रवेशात्स्वप्रकाशतापत्तिः, अप्रवेशादनवस्था, अवेदने शेषासिद्ध्या सर्वासिद्धिरिति व्यसनं दुरुत्तरमेव । ये च मानमेयभावाश्रया दोषाः कीर्तनीयास्तेऽपि प्रसज्येरन् । न च तैर्दोषैर्नास्त्येव ज्ञानमित्यास्थेयम् । स्वतः सर्वसिद्धस्य दुरपह्नवत्वात् । स्वप्रकाशत्वाङ्गीकारादेव

---

सा = चरमवित्तिः । एवं = अनवस्थाभिया ज्ञाने ज्ञानान्तरवेद्यत्वनियमपरित्यागवत् । अनवस्था स्यात् = अनवस्थाभिया सामग्र्याः सामग्र्यन्तरजन्यत्वनियमपरित्यागोऽपि स्यात् । तथा च घटादेः कादाचित्कत्वं भज्येतेति भावः । बीजाङ्कुरवत् प्रामाणिक्यनवस्था न दोषावहेति तार्किकमतेन समाधत्ते चैवम्स्यादित्यादिना । सदातन इति । यद्यपि निस्सामग्रीकस्यापि प्रागभावस्य न सदातनत्वं, भावत्वे सति निस्सामग्रीकत्वमपि वेदान्त्यभिमतमायादौ व्यभिचारि, तस्य सान्तत्वेनासदातनत्वात्, तथापि तार्किकमते भावत्वे सति निस्सामग्रीकत्वं सदातनत्वव्याप्यं सम्भवति । वस्तुतस्तु सदातनशब्दोऽनादित्वपर एव युक्तः । तथा च घटसामग्रीसामग्री यदि निस्सामग्रीका स्यात्, अनादिः स्यात्, अनादित्वालीकत्वान्यतरवती वा स्यात् आत्मवत् खपुष्पवद्वा । तत्रालीकत्वे नेष्टापत्तिः, घटतत्सामग्र्योरप्यलीकत्वापत्तेः । अनादित्वेऽपि नेष्टापत्तिः, घटसामग्री यद्यनादिसामग्रीका स्यात्, अनादिः स्यात्, वेदान्तिमते जीवादिवत्, व्यतिरेके घटादिवद्वा । अनादिसामग्रीकत्वञ्च नानादिसामग्रीजन्यत्वम्, अपि त्वपेक्षणीयावदनादिकत्वम्, अपेक्षणीयत्वं च क्षैमिकसाधारणमिति नापाद्यापादकयोर्विरोधः । न चात्रापीष्टापत्तिः, घटो यद्यपेक्षणीययावदनादिकः स्यात्, अनादिः स्यात्, तथा च प्रत्यक्षविरोधः । कुसुमाञ्जलिस्थवर्धमानोक्तरीत्या तु एतदुत्तरकालानुत्पत्तिका घटसामग्रीसामग्री यद्येतदुत्तरकालानुत्पत्तिकत्वे सत्येतदव्यवहितपूर्वकालोत्पत्तिकानपेक्षा स्यात् एतत्पूर्वकालवृत्तिः स्यात्, चिरतरपूर्वसमयोत्पन्नघटादिवदित्यापादनीयम् । अत्र पक्षधर्मतावलात्सांशयिकमते सदातनत्वे पर्यवसानम् । अर्थापत्त्यैव = सदातनत्वाभावस्यानादित्वाभावस्य वाऽन्यथानुपपत्त्यैव । ज्ञाने = सर्वस्मिन् ज्ञाने । एवं स्यात् = ज्ञानान्तरवेद्यत्वनियमः स्यात् । तदाऽप्रवेशात् = 'सर्वं ज्ञानं ज्ञानान्तरवेद्य' मित्याकारकज्ञानस्य सर्वान्तर्गतत्वानङ्गीकारेऽनवस्था, तथा च सुषुप्तिमोक्षयोरभावप्रसङ्गः, स्वस्य = तादृशज्ञानस्य प्रवेशात् = सर्वान्तर्गतत्वोपगमे तु तस्य स्वविषयकत्वेन स्वप्रकाशतासिद्धिः, अनवस्था च अवेदने = तादृशज्ञानस्य न सर्वान्तर्भावो नापि ज्ञानान्तरवेद्यतेत्युपगमे शेषस्य = स्वातिरिक्तसर्वज्ञानग्राहकत्वेनाभिमतस्य तादृशज्ञानस्यासिद्ध्या = अनिश्चितत्वेन सर्वासिद्धिः = न सर्वस्मिन् ज्ञाने ज्ञानान्तरवेद्यत्वस्य सिद्धिः । अथवा स्वस्य प्रवेशात् = ज्ञानान्तरवेद्यत्वनियममूलकज्ञानपरम्परायां स्वग्राहकतया स्वस्य चरमस्य विश्रान्तिस्थ तस्य प्रवेशे स्वप्रकाशत्वम् अप्रवेशे तु ज्ञानानवस्था, अन्यथा त्वन्तिमासिद्ध्या मूलपर्यन्तासिद्धिरिति व्याख्येयम् । स्वतः सिद्धत्वपक्षे परस्यानपेक्षणीयत्वान्न कश्चिद्दोषः, घटादिवत्परतः सिद्धत्वे तु परेण सम्बन्धस्य चतुर्थपरिच्छेदे वक्तव्यदिशा दुर्निरूपत्वादनिर्वाच्यत्वप्रसङ्गः, प्रमाणाधीनसिद्धिकत्वेन प्रमाणखण्डनावतारश्चेत्याह ये चेति । मानमेयभावो = विषयविषयिभावः नास्त्येव = अनिर्वाच्यमेव । दुरपह्नवत्वात् = अनिर्वाच्यतायाः वक्तुमशक्यत्वात्. अन्यथाऽनिर्वाच्यत्वं न क्वापि सिद्ध्येदिति भावः ।

दोषहानिमेवाह प्रकाशात्मतेति । अभानापादकाज्ञानविरोधिचित एव प्रकाशात्मतापदेनाभिधानम्, तथा च 'स्वतः सिद्ध्यसम्भवे' इत्यस्य नासङ्गतिः । जडात्मकधर्मप्रतिद्वन्द्विता सूचनाय तु तल्लन्तप्रयोग औपचारिकधर्मनामादाय । अनानन्दापादकाज्ञानविरोधिचित एवानन्दत्वम्, असत्वा-

चानुभवस्य सर्वदोपहाने वक्ष्यमाणत्वात् । प्रकाशात्मतामात्रस्यैव स्वतः सिद्धिसम्भवे जडात्मनां धर्माणां केषामपि तदन्तर्भावानुपपत्तिः । अत एव धर्मोपग्रहप्रवर्तिष्णुवाग्व्यवहाराविषयत्वम्, कालानवच्छेदमादाय च नित्यतोपचारः, देशानवच्छेदमादाय च विभुत्वव्यपदेशः, प्रकारावच्छेदविरहनिबन्धनश्च सर्वात्मत्वाद्वैतादिव्यवहारः, सौगतप्राभाकरवद्भावे, नैयायिकवदभावे, अभावानतिरेकस्वीकारादेव चाद्वैताव्याघातः । भ्रमविषयनिषेधवच्च प्रतियोगिनः सर्वथैवासिद्ध्यापि न काचित्क्षतिः ।

---

पादकाज्ञानविरोधिचित एव सत्तात्वमित्याशयेन मात्रपदम् । स्वतः सिद्धिसम्भवे = स्वान्यसंविदपेक्षव्यवहारविषयान्यत्वसम्भवात् । जडानां तु तादृशविषयत्वमेव । पूर्णानन्दांशस्य सर्वदाऽपरोक्षत्वविरहेऽपि संविदस्तदनन्यत्वात्तस्य तादृशविषयान्यत्वमक्षतमेवेति भावः । जडात्मनां=निरुक्तविषयत्ववतामज्ञानान्तःकरणादीनां धर्माणां=आध्यासिकसम्बन्धेन चिदाश्रितानां तदन्तर्भावानुपपत्तेः = प्रकाशाभेदानुपपत्तेः, प्रकाशाभेदे हि तेषां जडत्वमेव न स्यात्, प्रकाशत्वमेव वा प्रकाशस्य न स्यात्, तथा च तस्य स्वतः सिद्धत्वविरहे स्यादेव खण्डनयुक्तिबाध्यता, नत्वेवमित्यर्थः । एवञ्च धर्मिणो भिन्नाभिन्नस्य तत्समसत्ताकस्यैव च धर्मत्वात् प्रकाशत्वादेर्नचिद्धर्मत्वम्, नाप्यन्यस्य, चित्समसत्ताकत्वाभावात् तदभेदाभावाच्चेति निर्धर्मकत्वं चित्युक्तप्रायम् । एतेनैवाशयेनाहात एवेति । चितो निर्धर्मकत्वादेवेत्यर्थः । धर्मोपग्रहप्रवर्तिष्णुः=धर्मनिमित्तकप्रवृत्तिकः, किञ्चिद्धर्मावच्छिन्नशक्यताक इति यावत्, वाग्व्यवहारः=शब्दः, तदविषयत्वं=तदवाच्यत्वं तदबोध्यत्वमित्येव वा, विषयतासामान्यस्यैव तत्र निषेधौचित्यात्, विषयतोपहिते एव विषयतायाः सत्त्वेनानुपहिते तदभावात् । तथा चोपहितस्यापि न शुद्धात्मकतेति तस्य पराधीनसिद्धिकत्वेन खण्डनयुक्तिबाध्यत्वेऽपि न क्षतिः । एवं नित्यत्वादिधर्माणामप्याभावरूपत्वेनाधिकरणात्मकतया ब्रह्मणि तद्वत्त्वासम्भवात् तद्वतो बाध्यत्वेऽपि न हानिः, निर्धर्मकत्वादेव च न ब्रह्मणोऽनित्यत्वादिप्रसङ्गोऽपीत्याशयेनाह कालानवच्छेदमादायेति । कालानवच्छेदनिबन्धन इत्यर्थः । एवमग्रेऽपि । कालानवच्छेदः=प्रागभावध्वंसाप्रतियोगित्वम् । उपचारः=गौणव्यवहारः, नित्यत्वस्य तत्स्वरूपत्वे तन्निष्ठतया नित्यत्वाभिधानस्य मुख्यत्वासम्भवादिति भावः । एवमग्रे व्यपदेशव्यवहारशब्दयोरपि बोध्यम् । देशानवच्छेदः = अत्यन्ताभावाप्रतियोगित्वम् । प्रकारावच्छेदविरहः=भेदकधर्मवैशिष्ट्याभावः, तथा च तादृशधर्मं विना तत्प्रतियोगिकभेदासम्भवात् भेदाप्रतियोगित्वं पर्यवसन्नम्, तच्च स्वानधिकरणसत्ताकभेदप्रतियोगित्वात्यन्ताभावः, तादृशप्रतियोगित्वञ्च घटादौ नतु ब्रह्मणि, तत्र कल्पितभेदप्रतियोगित्वस्यैव सत्त्वात् । प्रकारशब्देन च परप्रकाश्यत्वमिथ्यात्वादेरपि धर्मस्य लाभात् तद्विरहनिबन्धनत्वं स्वप्रकाशत्वसत्यत्वादिव्यवहारे लब्धं भवति, अतएवात्र आदिपदमुपात्तम् । द्वितासम्बन्धि द्वैतं भेदः, द्वित्वभेदयोः परस्परनान्तरीयकत्वात्, प्रतियोगितासम्बन्धेन तदभावत्वोपलक्षितमद्वैतमित्याशयेन भेदाप्रतियोगिन्यद्वैतशब्दप्रयोगः । सौगतमतेऽभावस्य तुच्छत्वादेव न भावरूपाधिकरणातिरेकः । प्रभाकरमतेऽपि "अभावश्च केवलाधिकरणं तत्कालसम्बन्धो वा स्वप्रकाशरूपं तज्ज्ञानं वेति" चिन्तामण्युक्तदिशा भावरूप एव । तार्किकैश्चाभावत्वप्रकारकप्रतीतेः प्रमात्वरक्षार्थं भावाधिकरणकाभावस्यातिरिक्तत्वोपगमेऽपि नाभावाधिकरणकाभावस्यातिरेक उपगम्यते, लाघवात्, तादृशप्रतीतेः प्रमात्वोपपत्तेश्च, यदाह शिरोमणिः—"सर्वस्यैवाभावस्य स्वसमानाधिकरणाभावान्तरभिन्नत्वात् तद्भेदस्यानवस्थाभयेन स्वस्वरूपानतिरिक्ततयेति" । अभेदेऽप्याधाराधेयभावश्च 'घटाभावे घटो नास्ती' त्यादौ बौद्धाधिकारे शिरोमणि-

तदेतत्तु श्रुत्या प्रमाणेनोपलक्षणन्यायात् तात्पर्यतः प्रकाश्यते; तेन परमार्थतोऽभिधानाभिधेयभावविरहे तात्पर्यतः श्रुतिस्तस्मिन्नविद्यादशायां पराभ्युपगमरीत्या प्रमाण-

---

भिरुक्त इति। ननु प्रपञ्चस्य सत्यत्वे तदनुयोगिकभेदस्यापि ब्रह्मान्यूनसत्ताकत्वसम्भवात् कथं तादृशभेदप्रतियोगित्वाभावो ब्रह्मणि, न च प्रपञ्चस्य मिथ्यात्वम्, सत्ये प्रपञ्चे सत्येव प्रपञ्चान्तरे मिथ्यात्वसम्भवात्, नहि हट्टस्थरजतं विना शुक्तौ रजतं मिथ्येत्यत आह भ्रमेति। अनिर्वचनीयख्यातेः साधितत्वेन भ्रमविषयस्यासत्यत्वात् नेदं रजतमित्याद्यनुभूयमाननिषेधप्रतियोगित्वाच्च प्रतीतेरेव निषेधप्रतियोगितायां तन्त्रत्वम्, न तु तद्गतप्रमात्वस्यापि, न च प्रपञ्चप्रतीतिरेव क्वचित्तत्प्रमां विना न सम्भवतीति वाच्यम्; संसारानादितायाः सर्वसम्मतत्वेन पूर्वपूर्वप्रतीत्यैव संस्कारादिद्वारोत्तरोत्तरप्रतीत्युपपत्तेः प्रमाधीनसंस्कारस्यैव भ्रमहेतुत्वमिति कल्पनाया गौरवपराहतत्वात् प्रत्युत सत्यं रजतमज्ञातवतो भ्रान्तवाक्यादिना शुक्तावेव रजतत्वप्रकारकज्ञानवतः पुनः शुक्तौ रजतभ्रमानुपपत्तिप्रसङ्गाच्चेति भावः। प्रतियोगिनः = प्रपञ्चस्य। सर्वथैवासिद्धावपि = क्वचिदपि पारमार्थिकत्वाभावेऽपि। न क्षतिः = न निषेधानुपपत्तिः।

शुद्धे शब्दविषयतानिषेधे तदप्रामाणिकत्वमाशङ्क्याह तदेतदिति। अद्वैतमित्यर्थः। श्रुत्यभिन्नप्रमाणेनेत्यर्थः। उपलक्षणन्यायादिति। शाखयाऽसम्बद्धोऽपि चन्द्रो यथा तया बोध्यते तथा वस्तुतो ब्रह्मासम्बद्धैरेव तत्तद्धर्मैरुपलक्षिततया तद्बोध्यते इत्यर्थः। तात्पर्यतः = शुद्धेतरपरत्वाभावेन, "नेति" इत्यादिवाक्यबोधितब्रह्मेतरनिषेधस्यानुपपत्तेः "केवलो निर्गुण" इत्यादिश्रुत्यसङ्गत्यापत्तेश्च न श्रुतेर्ब्रह्मेतरपरत्वमित्यन्यनिषेधमुखेनैव तद्बोधः, सत्यादिपदैरपि मिथ्याव्यावृत्तिफलकमवान्तरबोधं विशिष्टविषयकमुत्पाद्य शुद्धं बोध्यते, एवञ्च "सकलवाङ्मनसातिगता चितिः सकलवाङ्मनसव्यवहारभागिति" न्यायेन स्वन्यूनसत्ताकवाग्व्यवहारविषयताश्रयत्वेऽपि स्वसमसत्ताकवाग्व्यवहारविषयतावच्छिन्नत्वाद्वाग्व्यवहाराविषयत्वोक्तिः, स्वसमसत्ताकप्रवृत्तिनिमित्तावच्छिन्नत्वेनैव वाच्यत्वव्यवहारो, लक्ष्यताव्यवहारश्च। स्वन्यूनसत्ताकप्रवृत्तिनिमित्तवत्तामादाय वाच्यताव्यवहारस्तु गौण एवेति न हानिकर इति भावः। यत्तु-ब्रह्मणोऽपि विशिष्टात्मना वाच्यत्वात् वाच्यत्वे लक्ष्यत्वव्यापकत्वस्याबाधकत्वेऽपि तेन रूपेण वाच्यत्वनिरूपितव्याप्तेस्तेन रूपेण लक्ष्यतायां दर्शनात् शुद्धात्मना लक्ष्यस्य तेन रूपेण वाच्यत्वमप्यापततीति, तन्न, तेन रूपेण लक्ष्यत्वमित्यस्य तद्रूपावच्छिन्नलक्ष्यत्वमित्यर्थकत्वात् शुद्धे च किञ्चिद्रूपावच्छिन्नलक्ष्यत्वस्याभावेन स्वरूपासिद्धेः, स्वन्यूनसत्ताकधर्मावच्छिन्नवाच्यत्वसाधने सिद्धसाधनात्, स्वसमसत्ताकधर्मावच्छिन्नवाच्यत्वसाधने च क्वचिदपि धर्मे ब्रह्मसत्ताकत्वस्यैवासिद्धे र्बाधाच्चेति। अविद्यादशायामिति। अविद्याविरहे प्रमाणप्रमेयभावस्यैवाभावादिति भावः। पराभ्युपगमेति। मानाधीना मेयसिद्धिरिति पराभ्युपगमात् ब्रह्मणोऽवस्तुत्वशङ्कानिवृत्त्यै श्रुतिस्तत्र प्रमाणतयोपन्यस्यते, मन्मते तु स्वतः सिद्धमेव वस्तु, अन्यत्तु मानशतैरप्यविद्याधूलीधूसरैः सिद्धयदप्यवस्त्वेव, तत्तन्मानोपहितस्य ब्रह्मणोऽपि मिथ्यात्वान्न शुद्धे मानविषयत्वम्, उपहितानुपहितयोस्तादात्म्यात् 'शुद्धं पूर्णानन्दात्मक' मित्यादिवाक्यैर्वस्तुगत्या स्वजन्यमित्युपहिते तत्तद्धर्मविधायिभिरेव शुद्धत्वावच्छिन्नविशेष्यताकमपि पूर्णानन्दात्मत्वाभावविषयकसंशयादिकं पूर्णानन्दविषयकमज्ञानं च निवार्यते इति फलबलेन कल्प्यते इति नोक्ताव्योतिप्रसङ्गः, यदाहुः—"प्रमाता च प्रमाणं च प्रमेयं प्रमितिस्तथा। यत्प्रसादात् प्रसिद्ध्यन्ति तत्सिद्धौ किमपेक्ष्यते" ॥ इति, वस्तुतस्तु तादृशसंशयाज्ञानादिकमपि मान्योपहित एव।

मित्युच्यते । वस्तुतस्तु स्वात्मसिद्धमेव चिद्रूपम् । ननु स्वप्रकाशत्वं ज्ञानस्येत्यनुपपन्नमिदम्, क्रियाकर्मभावस्य भेदव्यतिरेकेणानुपपत्तेः, कार्या क्रिया हि कर्मणो भवति, कर्म च क्रियायाः, न च स्वेनैव स्वनिष्पादनं शक्यम्, पूर्वापरभावविशेषस्य हेतुहेतुमद्भावरूपत्वात्, कारणं न च तस्मादेव तदेव पूर्वमपरं च सम्भवति, तदनवच्छिन्नकालविशेषस्य तत्पूर्वशब्दार्थत्वात्, तदा च तस्य सद्भावस्वीकारे स एव कालस्तदवच्छिन्नस्तदनवच्छिन्नश्चेति विरोधात् । मैवम् । क्रियायाः कर्मजन्यतानियमानङ्गीकारात् । सर्वथैवानागतविषयकविज्ञाने तदसम्भवात्, क्वचिज्जनकतामादाय च कर्मणि कारकत्वव्यपदेशात् । करणव्यापारविषयत्वाद्वा परसमवेतक्रियाफलभागित्वाद्वा कर्मलक्षणात् विनापि क्रियाजनकत्वेन कर्मव्यवहारोपपत्तेः ।

---

तदेतदभिसन्धायाह वस्तुत इति । स्वात्मसिद्धमेव = मानमनपेक्ष्यैव सचिदंशे संशयाद्यविषयः ।

क्रियेति । धात्वर्थत्वेन विषयित्वेन क्रियात्वं विषयत्वेन च कर्मत्वमेकत्रासम्भवि । कर्मणः कार्या = कर्मजन्या, क्रियाजनकत्वं कारकत्वमिति सिद्धान्तात् । एकत्र विषयविषयिभावाङ्गीकर्तृयोगाचारादिमते ज्ञानस्य नित्यत्वानङ्गीकारादिति भावः । निष्पादनं=जननम् । पूर्वापरभावमात्रस्य रासभघटसाधारण्यात् विशेषस्येति । विशेषो नैयत्यमनन्यथासिद्धिश्च । तदव्यवहितप्राक्क्षणावच्छेदेन तत्समानाधिकरणभेदप्रतियोगितानवच्छेदकत्वे सति तन्निरूपितान्यथासिद्धिराहित्यं तत्कारणत्वं न तदभिन्ने सम्भवति । तदनवच्छिन्नः कालस्तद्ध्वंसकालोऽपीत्यत उक्तं विशेषस्येति तथा च तत्प्रागभावाश्रयकालस्तत्पूर्वकालः । तदा=तत्प्रागभावकाले । स एव=एक एव । एकावच्छेदेनेति शेषः, अवच्छेदकश्च ज्ञानोत्पत्त्यवच्छेदकः प्रदेशः । अवच्छिन्नः=आश्रयः । तथाच स्वं यदि स्वजनकं स्यात् स्वभिन्नं स्यादिति ज्ञानस्वरूपमेव विशीर्णम्, स्वप्रकाशत्वं तु दूरे इति भावः । क्रियायाः=सकर्मकक्रियायाः । तेनाकर्मकक्रियायां कर्मजन्यत्वव्याप्तिसम्भावनानारोहेऽपि न क्षतिः । अनागतेति अतीतस्याप्युपलक्षणम् । येन रूपेणातीतानागतयोर्ज्ञानं परोक्षम्, तेन रूपेण तयोः सत्कार्यवादेऽप्यसत्त्वात् ज्ञानजनकत्वासम्भवात्, रूपान्तरेण सत्त्वस्यानुपयोगित्वात् । वर्तमानविषयकपरोक्षं प्रति केनचिद्विषयस्य कारणता सम्भाव्येतापीत्याशयेन सर्वथैवेति । तदसम्भवात् = कर्मजन्यत्वासम्भवात् । यद्यपि प्रत्यक्षं प्रति विषयस्य कारणत्वात् ज्ञानमात्रस्य च स्वांशे प्रत्यक्षत्वात् प्रत्यक्षत्वेन रूपेण विषयजन्यतानियमस्य स्वप्रकाशत्वविरोधित्वं वक्तुं शक्यते, ईश्वरप्रत्यक्षे व्यभिचारे तु जन्यप्रत्यक्षत्वावच्छेदेनैव विषयजन्यत्वमस्तु, तथापि यत्किञ्चिद्विषयजन्यत्वेनैव प्रत्यक्षत्वोपपत्तौ यदंशे यस्य जन्यज्ञानस्य प्रत्यक्षत्वं लौकिकप्रत्यक्षत्वं वा तदंशे तस्य तज्जन्यत्वमिति नियमे न मानम्, स्वप्रकाशत्वं विना बोधासिद्धेरुक्तत्वात् स्वविषयकत्वावच्छेदेन तादृशनियमस्य सङ्कोच्यत्वात्, अन्यथा जन्यत्वमपि किमित्युपादीयते, प्रमाणबलाज्ज्ञाने नित्यत्वसिद्धिरिति तु स्वप्रकाशत्वसिद्धावपि तुल्यम्, अतिप्रसङ्गस्याभेदस्य स्वांशे प्रत्यक्षतानियामकतामुपेत्य वारणसम्भवात्, कर्मकारकता त्वतीतानागतयोरिव स्वांशे नास्त्येव, ज्ञानार्थकधातुसमभिव्याहारे विषयिताया एव द्वितीयार्थत्वस्य तार्किकसम्मतत्वादिति भावः । क्वचित् = घटादिविषयकत्वावच्छेदेन प्रत्यक्षत्वाश्रये, गमनादिक्रियायां वा । निरूपितत्वं सप्तम्यर्थो जनकतान्वयी । करणव्यापारविषयत्वात् = करणव्यापारजन्यफलाश्रयत्वप्रकारकेच्छीयमुख्यविशेष्यताश्रयत्वात् । संयोगरूपफलाश्रयत्वप्रकारकेच्छीयमुख्यविशेष्यतायाश्चैत्रेऽपि सत्त्वात् चैत्रश्चैत्रं गच्छतीति प्रयोगप्रसङ्ग इत्यतो लक्षणान्तरमाह परसमवेतेति ।

किञ्च तत्कर्मत्वं यत्स्वं प्रति विरुद्धयते । परसमवेतक्रियाफलभागित्वमिति चेन्न, अपादानस्यापि व्याप्तेः । अपादानं कर्मापीति चेन्न, वृक्षात्पतति पर्णमितिवत् वृक्षं पर्णं पततीत्यपि स्यात् । विवक्षातः कारकाणि भवन्तीति तदविवक्षया नैवमिति चेन्न; वस्तुतः सतस्ताद्रूप्यस्य यदि विवक्षा स्यात् तदा तदपि स्यात् । अपादानस्य कर्मत्वं न विवक्ष्यते इति शाब्दिकसम्प्रदायोऽयमिति चेत्, तर्हि निवृत्तसर्वकर्मव्यवहारेऽपि स्वकृतकर्मलक्षणानुरोधेन कर्मत्वमभ्युपगच्छता वस्तुमात्रं कर्मेत्याद्यपि लक्षणं सावकाशितं स्यात् ।

---

प्रकृतधात्वर्थव्यापारानाश्रयत्वे सति प्रकृतधात्वर्थतावच्छेदकफलाश्रयत्वादित्यर्थः । चैत्रे सत्यन्ताभावान्नोक्तप्रसङ्गः । नच काशीं गच्छन् पथि मृत इति प्रयोगानुपपत्तिः, काश्याः संयोगरूपफलानाश्रयत्वादिति वाच्यम्, तादृशफलाश्रयत्वप्रकारकेच्छीयमुख्यविशेष्यताश्रयत्वस्य विवक्षितत्वात् । ज्ञाततावच्छिन्नज्ञानस्य जानात्यर्थत्वमते फलपदेन ज्ञातताम् आदाय, ज्ञानानुकूलव्यापारस्यात्ममनोयोगादिरूपस्य जानात्यर्थत्वमते ज्ञानरूपफलमादाय लक्षणसमन्वयः, ज्ञानस्य विषयतया विषयसम्बद्धत्वात् । अज्ञाताविषयत्वावच्छिन्नज्ञानस्य तदर्थत्वे तु विषयेऽज्ञाताविषयत्वमादाय लक्षणसमन्वयः । प्रतीतिबलाद्वा सत्कार्यवादमाश्रित्य वाऽतीतादेरपि विषयताऽज्ञाताविषयतयोराश्रयत्वोपगमात् । ज्ञानत्वस्यैव जानात्यर्थतावच्छेदकत्वमिति तार्किकमते तु ज्ञानस्थले नोक्तरूपं कर्मत्वम्, अपि तु ज्ञानविषयत्वमेवेति ध्येयम् ।

यथाश्रुतेऽपादानेऽतिव्याप्तिमाह अपादानस्येति । व्याप्तिः कर्मत्वेन, तथा च कर्मत्वापत्तिरित्यर्थः । तत्क्रियानाश्रयस्य तत्क्रियाजन्यविभागवत एवापादानत्वात् पर्णसमवेतपतनक्रियाजन्यविभागरूपफलवत्त्वं वृक्षस्यापीति भावः । विवक्षात इत्यादिग्रन्थेनोद्घाटनीयाभिसन्धिमूलके शङ्कासमाधाने अपादानमित्यादिना । नच–धात्वर्थतावच्छेदकफलाश्रयत्वविवक्षायां नेदं दूषणम्, अधः संयोगस्यैव पतधात्वर्थतावच्छेदकत्वेन वृक्षस्य तदनाश्रयत्वात् तदाश्रयभूमेः कर्मत्वं त्विष्टमेव, अधिकरणानवच्छिन्नत्वं वा फले विशेषणीयम्. नरकं पतित इति प्रयोगस्तु 'पतितोऽयं ब्राह्मण' इत्यादाविव पतधातोरर्थान्तरे लक्षणया समर्थनीयः, नहि तत्राधःसंयोगावच्छिन्नस्पन्दप्रतीतिः, उक्तं हि दुःखविशेषवाचकनरकपदसमभिव्याहारे पतधातोर्भोगानुकूलपातित्यार्थकत्वं शब्दशक्तिप्रकाशिकायाम्, व्युत्पत्तिवादतत्त्वालोके च । एकत्र तत्र भोगान्वितविषयत्वमेव द्वितीयार्थ इति—वाच्यम्; काशीं गच्छन् पथि मृत इत्यत्र तथाप्यव्याप्तेरिति भावः । निष्कृष्टेच्छाघटितमेव लक्षणमादरणीयमित्याशयेनाशङ्कते विवक्षात इति । कारकाणि = कारकविभक्तयः । तदविवक्षया = अपादाने कर्मत्वाविवक्षया नैवम् = वृक्षं पततीति प्रयोगो न । इच्छाघटितलक्षणकरणेन काशीं गच्छन्नित्यत्राव्याप्त्युद्धारेऽपि पर्णं वृक्षं पततीति प्रयोगापत्तिरस्त्येव, तादृशफलाश्रयत्वप्रकारकेच्छीयमुख्यविशेष्यताया वृक्षेऽपि सम्भवात्, नहि कस्यचिदिच्छा वृक्षेऽधः संयोगाश्रयत्वसम्भवमनुरुन्धे, सर्वस्यापि किञ्चिदपेक्षयाऽधस्त्वेन संयोगेऽधस्त्वस्याव्यावर्तकत्वाच्च, अपादानापेक्षाधस्त्वविवक्षायां चापादानत्वस्य तत्क्रियानाश्रयत्वसमानाधिकरणतज्जन्यविभागाश्रयत्वात्मकत्वेन तत्तादृघटितत्वेनाननुगतत्वेन पतधातोः सङ्केतग्रहानुपपत्तिः, कथमन्यथा आनन्त्यव्यभिचाराभ्यां व्यक्तौ शक्तिर्त्यागः सङ्गच्छेत; एवमुदासीनघटादावप्यतिव्याप्तिरित्याशयेनाह वस्तुत इति । सतस्ताद्रूप्यस्य = वृक्षे वर्तमानस्य परसमवेतक्रियाजन्यफलाश्रयत्वरूपकर्मत्वस्य, सत्यर्थान्वयि प्रकारत्वं षष्ठ्यर्थः । विवक्षेति । प्रकृत्यर्थोऽविवक्षितः । वृक्षवितोष्यकेच्छेत्यर्थः । तदपि = वृक्षे कर्मत्वमपि । तत्कारणे शाब्दिकनिष्ठत्वमिच्छायां विशेषणीयमिति नोक्तातिव्याप्तिः, शाब्दिकस्य धात्वर्थतावच्छेदकफलाश्रयत्व-

कथं च लोकोत्तरप्रश्नेन निवृत्तसर्वकर्मव्यवहारेऽपि स्वकृतकर्मत्वमस्तीत्यधिगतम्। अपादानेतरदीदृशं कर्मेति चेन्न, तत्रापि 'नदी वर्द्धते' इत्यादौ तद्वृद्धेरप्राप्ततीर-

प्रकारकेच्छायाः कर्मातिरिक्तेऽसम्भवादिति मनसि निधायाह अपादानस्येति। तर्हीति। अयम्भावः—शाब्दिकस्य तादृशेच्छीयविशेष्यताशून्येऽशाब्दिकस्य तादृशेच्छीयविशेष्यतावति व्यक्तिविशेषेऽव्याप्तिः, अन्यत्र जिगमिषोर्भ्रमाद्वा यदृच्छया वाऽपरदेशगमने तस्य कर्मत्वानुपपत्तिः तादृशेच्छीयविशेष्यतानाश्रयत्वात्, तथाचेच्छाऽघटितं परसमवेतक्रियाफलशालित्वादिकं लक्षणं वाच्यमेव, तच्चापादानमप्यनुगच्छतीति शाब्दिकैः सर्वैः कर्मत्वेनाव्यवह्रियमाणेऽप्यपादाने स्वप्रणीतस्य तादृशकर्मलक्षणस्यानुरोधेन कर्मत्वाभ्युपगमो नोचितः, लक्ष्यव्यवस्थाया लौकिकव्यवहारानुरोधित्वात्, अन्यथा परसमवेतपदमपि निष्फलं वस्तुत्वादिकमेव च लाघवात् कर्मत्वमस्तु, तथाचैतस्यैतन्निरूपितकर्मतेति व्यवहारलोपापत्तिः। एतेन लक्षणानामतिप्रसक्तत्वेऽपि सञ्ज्ञानां बाध्यबाधकभावमादाय तत्र तत्र प्रयोगातिप्रसङ्गं परिहरन्तोऽपास्ताः। ननु लक्षणद्वयं वाच्यम्, प्रकृतधात्वर्थतावच्छेदकफलशालित्वमित्येकं, तादृशफलाश्रयत्वप्रकारकेच्छीयमुख्यविशेष्यताश्रयत्वमिति चापरं, नचाननुगमः, अन्यतरत्वेनानुगमसम्भवात्। मैवम्, अन्यतरत्वं तावन्नाखण्डम्, तस्य प्रतीतिविशेषमादायैव परं प्रति प्रत्याय्यत्वात् प्रतीतिविषययोः परस्पराधीननिरूपणकतयाऽन्योन्याश्रयापत्तेः। तादृशफलाश्रयभिन्नं सत् यत्तादृशविशेष्यताश्रयभिन्नं तदन्यत्वं कर्मत्वमित्येवमन्यतरत्वनिरुक्तिस्त्वसर्वज्ञदुर्ग्रहा, प्रतियोगिभूतभेदद्वयस्यानुगतधर्मावच्छिन्नप्रतियोगिताकत्वाभावेनानन्त्ये एव पर्यवसन्नत्वात्। तादृशभेदद्वयानुयोगितावच्छेदकतायास्तादृशभेदद्वयातिरिक्ते एव वक्तुमौचित्येन विशिष्यानन्तानुयोगितावच्छेदकग्रहस्यापेक्षणीयत्वापाताच्च। स्वाश्रयत्वस्वनिष्ठतादृशेच्छीयप्रकारतानिरूपितविशेष्यताश्रयत्वान्यतरसम्बन्धेन प्रकृतधात्वर्थतावच्छेदकफलवत्ताऽभिधानं तु नोचितम्, परम्पराणां संसर्गताया अप्रामाणिकत्वस्य केवलान्वयिप्रकरणेऽनुमितिप्रकरणे च गदाधरैरेवोक्तत्वात्। किञ्चैवमपि 'काशीं गच्छति न प्रयागमित्यत्र' प्रयागस्य कर्मत्वानुपपत्तिः फलाश्रयत्वस्य तादृशेच्छीयविशेष्यत्वस्य वा तत्राभावात्; योग्यतां तु निवेश्य तु न निस्तारः, योग्यतावच्छेदकस्यैव निरूपणीयत्वापातात्, तन्निरूपणे तु तस्यैव लक्षणत्वमस्तु, अवश्योपस्थितिकत्वात्, अन्यथा वैयर्थ्याच्च। प्रकृतक्रियानिरूपितकर्मताविरहिण्यपि तादृशयोग्यतासम्भवेन प्रयोगातिप्रसङ्गाच्च, तद्व्यावृत्ता योग्यता तु दुरवधारणैव। एतेन प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वं कर्मत्वमित्यपि निरस्तम्; फलाश्रयत्वेनोद्देश्यतायाः फलाश्रयत्वप्रकारकेच्छीयमुख्यविशेष्यताश्रयत्वरूपत्वेनोदीरितसकलदोषोन्मेषादिति।

कृतं = प्रणीतं। कर्मत्वं = कर्मलक्षणं। ईदृशं = परसमवेतक्रियाफलशालि। यद्यप्यपादानसामान्यभेदो न निवेशयितुं शक्यः, प्रकृतकर्मणोऽपि क्वचिदपादानत्वेनाव्याप्तेः, अतएव परसमवेतक्रियाफलशालित्वापादानत्वाभावयोर्देशकालोभयघटितसामानाधिकरण्यविवक्षयापि न निस्तारः, तादृशफलशालित्वदशायामेव क्रियान्तरं प्रत्यपादानत्वसम्भवात्, प्रकृतक्रियापादानभेदनिवेशे तु पुनात्यादिक्रियाकर्मण्यव्याप्तिः, प्रकृतक्रियाऽपादानाप्रसिद्धेः, तथापि यादृशक्रियायामपादानप्रसिद्धिस्तत्कर्मण्येवापादानभेदो निवेश्य इति भावः। सति चैवमग्रे समर्थनीयदूषणमात्रस्याननुगमस्य सत्त्वे एवाह तत्रापीति। उक्तनिवेशेऽपीत्यर्थः। तद्वृद्धेः = नदीवृद्धेः। अप्राप्तस्य तीरभागस्य प्राप्तिः = तीरभागसंयोगः। तादृशफलाश्रयत्वं तीरस्येति नदी तीरं वर्द्धते इति प्रयोगस्य प्रामाणिकत्वापत्तिः। नद्याः परपदेनोपादानसम्भ-

भागप्राप्तिफलायाः सकर्मकत्वापत्तेः। अपादानेतरदिति स्थाने क्रियानाशकेतिकरणेऽप्यस्य दोषस्य तादवस्थ्यात्। विनाशलक्षणायां वृद्धौ तदसम्भवाच्च। वृत्तं त्यजतीत्यादावकर्मत्वप्रसङ्गाच्च। आत्मानं जानामीत्यत्र परत्वाभावादव्याप्तेः। तत्राप्युपाधिभेदात्परत्वं, कर्तृत्वभोक्तृत्वाद्युपहितस्यैवात्मनो ज्ञेयत्वाभ्युपगमादिति चेन्न; यतोऽस्तु तावद्यथा कथञ्चिदेवं, तथाप्यध्यात्मविदो निरुपाधिमात्मानं जानतो ज्ञानं नात्मकर्मकं स्यात्। पच्यते फलं स्वयमेवेत्यादौ च कर्मकर्तरि का गतिः स्यात्। सर्वज्ञमीश्वरं मन्यमानेन च नित्यज्ञाने तस्मिन् भगवति फलनाशकत्वस्यानभ्युपगमात् तं प्रत्येतल्लक्षणा-

वात्। यद्यपि धात्वर्थतावच्छेदकफलाश्रयत्वविवक्षायां नेदं दूषणम्, अवयवोपचयरूपफलावच्छिन्नव्यापारस्य वर्धत्यर्थत्वेन तादृशफलस्य तीरेऽवृत्तेः। अप्राप्तदेशप्राप्त्युपहितावयवोपचयस्य तदर्थत्वेऽपि फले आश्रयानवच्छिन्नत्वस्य विशेषणीयतया न दोषः, तथापि लक्षणस्यास्यापि निरस्तत्वान्न दोषः। इति स्थाने = इत्येतद्विशेषणसाध्यव्यावृत्तिसिद्धये, तेन फलस्यैव धात्वर्थक्रियानाशकत्वेन तस्य फले एव विशेषणीयत्वेऽपि न क्षतिः। अपादाननिष्ठस्य विभागस्य तु पतनक्रियानाशकत्वाभावान्नातिप्रसङ्गः, अधः संयोगस्यैव तन्नाशकत्वात्। अस्य = तीरे वृद्धिकर्मत्वप्रसङ्गस्य। तादवस्थ्यादिति। तीराश्रितसंयोगस्य वृध्यर्थव्यापारनाशकत्वात्, एवञ्च क्रियानाशकत्वनिवेशः पूर्वोक्तापादानसामान्यभेदादिविकल्पनिबन्धनदोषपरिजिहीर्षयेति भावः। वृद्धाविति। वृधु छेदने भौवादिक आत्मनेपदी सेट् चेति सुधायां नामानुशासनव्याख्यायां भानुजिदीक्षितः, तस्यैवैतद्रूपम्, वर्ध छेदनपूरणयोरिति चौरादिकस्तु न ग्राह्यः, वृद्धाविति प्रयोगासङ्गतेः। यद्यपि छेदनं न विनाशोऽपि तु द्वैधीभावानुकूलो व्यापारः, द्वैधीभावोऽप्यवयविविनाशफलो नत्ववयविविनाशः तथापि विनाशाभिप्रायेणैव वृक्षं वर्धते इति प्रयोगस्थले वृक्षेऽव्याप्तिः, एवं चेदं विनाशपरसकर्मकधातुमात्रोपलक्षणम्, विनाशस्यानन्तत्वेन तन्नाशकाप्रसिद्धेरिति। ननु क्रियानाशकत्वं हि न प्रकृतधात्वर्थमात्रनाशकत्वं येनोक्तदोषः स्यात्, अपि तु प्रकृतधात्वर्थव्यापारनाशकत्वम्, विनाशानुकूलव्यापारस्तु वर्धकनिष्ठो विनश्यत्येव सति फले विनाशे इत्यतो दोषान्तरमाह वृत्तमिति। विभागानुकूलस्पन्दविशेषो हि त्यजत्यर्थः, नच वृक्षाद्विभागे सति खगस्य स्पन्दो विनश्यतीति वृक्षेऽव्याप्तिरित्यर्थः। ननु विभागानुकूलः स्पन्दो विनष्ट एव सति विभागे, पुनस्तु खगे स्पन्दान्तरमुत्पद्यते इति यदि कश्चिद्ब्रूयात्तदाप्याह आत्मानमिति। अज्ञानाविषयत्वादिरूपफलाश्रयस्यैव तदनुकूलज्ञानाद्यात्मकक्रियाश्रयत्वादित्यर्थः। कर्तृत्वेति। विशेषगुणोपहितस्यैवात्मनो ग्रहणम्, अतएव सुषुप्तौ नाहमर्थस्य ग्रहणम्, गुणिग्रहणस्य विशेषगुणग्रहणव्याप्यत्वात्, ज्ञातृत्वं तु मनोविशिष्टत्वेनेति भावः। यथाकथञ्चिदिति। उपाधिभेदेनोपहितभेदस्य सर्वैरङ्गीकारादिति भावः। नन्वद्वैतं निश्चितवत आत्मविषयकं ज्ञानमुपाध्यविषयकमप्युपहितविषयकमेव, वृत्त्यात्मकज्ञानस्यैव तदोपाधेः सत्त्वात् मनसोऽपि सदा सत्त्वेन तदुपहिते ज्ञातृत्वस्यापि सम्भवात्, नहि कर्मणः स्वभिन्नत्वेन ज्ञानं कर्तुरपेक्षितं येन तत्र कर्मलक्षणाव्याप्तिः स्यादित्यत आह पच्यते इति। केति। कर्मकर्त्रोरैक्येन विवक्षितत्वादिति भावः।

ननु कारकविभक्तेर्विवक्षाधीनत्वेऽपि कर्मलक्षणे परत्वं न वैवक्षिकं, येनैकत्वविवक्षया तद्भावेन कर्मकर्तर्यव्याप्तिः स्यात्, अपि तु वास्तवम्, तथा च देवदत्तादिसमवेतक्रियाजन्यविक्लित्यादिफलाश्रयत्वान्नाव्याप्तिरित्याशङ्क्य, एवं सति प्रकृतलक्षणस्य प्रयोगानौपयिकत्वेन तदौपयिकलक्षणान्तरस्यावश्यवाच्यत्वात्, इष्टापत्तितस्य च तस्य निरस्तत्वात्, अस्य च वैयर्थ्यमेव स्यादित्यादिदोषसत्त्वे एवाह सर्वज्ञ-

सिद्धेः। करणव्यापारविषयः कर्मेति चेन्न; हस्तेन रामेण शरेणेत्यादावतिप्रसङ्गात्। तस्माद्व्याकरणकारैः शब्दसिद्ध्यर्थं नदीवृद्ध्यादिवत् कर्मापि परिभाषितमित्यलं तदनुगतलक्षणगवेषणया। लक्षणं विनापि, क्रियाजनकत्वे सति व्यापारोद्देश्यत्वेन कर्मव्यवहारोपपत्तेः। शेषं चेश्वराभिसन्धौ स्वप्रकाशवादे निर्वक्ष्यामः।

---

मिति। भगवतीति। भगवद्वृत्तिनित्यज्ञाननिरूपितफलनिष्ठनाशकत्वस्यानभ्युपगमादित्यर्थः। यद्यपि नित्यज्ञानवदीश्वरवादिनाऽज्ञानाविषयत्वज्ञाततादेर्ज्ञानफलत्वं नोपेयते जानात्यर्थत्वं च ज्ञानत्वावच्छिन्नस्यैवेति फलस्यैवाप्रसिद्धिः, इच्छाकृत्योरीश्वरे नित्यत्वेन ज्ञानफलत्वासम्भवात्. तथापि ज्ञानस्य निष्फलत्वपरिहाराय जगत्सर्जनादिकं तत्फलं जानात्यर्थतानवच्छेदकमप्यवश्यं वक्तव्यम् यथाश्रुतलक्षणे धात्वर्थतावच्छेदकत्वस्य फलेऽविशेषितत्वात्, तथाच तन्नाश्यत्वस्य नित्यज्ञानेऽभावाज्जगति कर्मत्वानुपपत्तिरित्यर्थः। करणव्यापारविषयत्वं यदि प्रकृतक्रियाकरणव्यापारजन्यफलाश्रयत्वं तदा दूषयति हस्तेनेति। हतो वालिरिति शेषः। हस्तव्यापारजन्यस्य धनुरारोपणरूपफलस्य शरेऽपि सत्त्वात्तस्य कर्मत्वापत्तेः, प्रकृतधात्वर्थतावच्छेदकफलवत्त्वविवक्षायां यद्यपि नायं दोषः, धनुरारोपणस्य हन्त्यर्थतानवच्छेदकत्वात्, तथापि तदसाङ्गत्यमपि निवेदितमेव। शब्दसिद्ध्यर्थम् = ग्राममित्यादिप्रयोगोपपत्तये। आदिना गुणदिघुप्रभृतयो ग्राह्याः। लक्षणम् = अव्याप्त्यादिदोषशून्यं लक्षणम्। व्यापारोद्देश्यत्वं फलवत्त्वेन बोध्यम् तच्च प्रकृतधात्वर्थव्यापारजन्यफलवत्त्वेनेच्छीयमुख्यविशेष्यत्वमेव, एवञ्चैतेनैवाकारकव्यावृत्तेरपि सिद्धौ तदर्थं सत्यन्तमनुपादेयमेव, तस्योक्तार्थ एव कथञ्चित्तात्पर्यग्राहकत्वात्। शेषमिति। तद्धीजन्यव्यवहारभागित्वमेव तद्धीकर्मत्वम्, तच्च घटादाविव स्वस्मिन्नपि सम्भवति, ज्ञानविषयत्वमेव वा ज्ञानकर्मत्वं, विषयत्वञ्चाभेदेऽपि। नच—स्वजनकेन्द्रियसन्निकर्षानाश्रयत्वेन स्वस्य स्वाविषयत्वं साधनीयम्, विषयत्वनियामकेन्द्रियसन्निकर्षादेरभावे स्वविषयत्वानुपपत्तेरिति वाच्यम्; सन्निकर्षवज्ज्ञानाभेदस्यापि विषयतानियामकत्वात् सन्निकर्षत्वस्य षोढासाधारणस्य दुर्वचत्वेन स्वत्वस्य चाननुगतत्वेनाननुगमस्योभयोः समानत्वात्। अथ—प्रत्यक्षाजनकस्य प्रत्यक्षविषयतानुपपत्तिः, अनागतविषयकसाक्षात्कारहेतुप्रत्यासत्त्यनाश्रयनिष्ठप्रत्यक्षविषयताया जनकत्वव्याप्तत्वात्; विद्यमानत्वसामान्यप्रत्यासत्त्यधीनप्रत्यक्षविषये व्यभिचारस्तु न, अजनकविषयकसाक्षात्कारान्यसाक्षात्कारविषयताया एव जनकत्वव्याप्ततया विवक्षितत्वात्, नचैवं ज्ञानस्य स्वांशेऽजनकविषयकत्वेनोक्तव्याप्तिर्न क्षतिकरीति वाच्यम्; अलौकिकसाक्षात्कारान्यसाक्षात्कारविषयताया विवक्षितत्वात्, नच तथापीश्वरज्ञानस्य विषये व्यभिचारः तस्य तदजनकत्वादिति वाच्यम्; द्वितीयसाक्षात्कारे जन्यत्वस्यापि निवेशनीयत्वादिति चेन्न; अन्यथानुपपत्तिबलात्स्वप्रकाशत्वस्यावश्यापेयत्वे तादृशसाक्षात्कारीयविषयताया ज्ञानान्यनिष्ठाया एव जनकत्वव्याप्ततया वाच्यत्वात् अन्यथा स्वप्रयोजकत्वात् अतिप्रसङ्गस्याभेदनियामकत्वमुपगत्य वारणात्। स्वप्रकाशत्वं विना बोधासिद्धेरुक्तत्वेन धर्मिग्राहकमानबाधाच्च। एतेन—चाक्षुषं ज्ञानं न चक्षुर्जन्यज्ञानविषयः, चक्षुरसन्निकृष्टत्वात् असन्निकृष्टघटवदित्यादिकं—निरस्तम्; स्वजन्यज्ञानतादात्म्यसम्बन्धेन चक्षुषश्चाक्षुषज्ञाने सन्निकृष्टत्वेन स्वरूपासिद्धेश्च, संयोगादिसन्निकर्षापेक्षाया अप्रयोजकत्वात्। एतेन—इच्छात्वादीनामननुगमेन लाघवानुगमाभ्यां प्रत्यक्षत्वस्येन्द्रिययोग्यतावच्छेदकत्वस्थितौ ज्ञानस्य प्रत्यक्षत्वेनेन्द्रियसन्निकर्षाश्रयत्वम्, मनःसन्निकर्षजन्यत्वेन च मानसत्वमिति—निरस्तमिति भावः।

ननु चाभेदे विषयविषयिभावस्यासङ्गतत्वं, विषयित्वं हि विषयसम्बन्धिता, सम्बन्धश्च भेदमन्तरेणासम्भवदवस्थितिः, सम्बन्धमितेः सम्बन्धिस्वरूपभेदमितिव्यतिरेके वैपरीत्यावधारणात् । मैवम् । विषयविषयिभावो हि सम्बन्धो न सम्बन्धिस्वरूपाद्भिन्नः, तथाभूतत्वेऽपि चान्ततस्तत्सम्बन्धस्यापि स्वाश्रयात्मकत्वमभ्युपगम्यम्, अनवस्थाभयात्, तथा सति च सैव यथा सम्बन्धमितिः सम्बन्धस्वरूपात्सम्बन्धिनोर्भेदमनादायैव पर्यवस्यतीत्यभ्युपगन्तव्यम्, स्वभावसम्बन्धस्येतरसम्बन्धमर्यादातिशायित्वात्, तथा विनापि सम्बन्धिभेदं विषयविषयिभावात्माऽयं सम्बन्धः पर्यवसास्यति, तदवगमोऽपि तथावगमव्यतिरेकेणैव भविष्यति, को विरोधः । न चैवं घटतज्ज्ञानयोर्यादृग्विषयविषयिभावस्ततो मात्रयापि स्वप्रकाशे विषयविषयिभावान्यत्वे बाध्यत्वकत्र स्यात् । अस्त्येव ह्यविद्याविद्यमाने घटतज्ज्ञाने बाध्यत्वम्, परमार्थसति तु स्वप्रकाशे पारमार्थिकत्वमिति द्वयोरननुगमेऽपि न दोषः ।

अथवा स्वात्मना सह क्रियाकर्मभावो विषयविषयिभावो वा स्वप्रकाशार्थ इति नाभ्युपेयमेव, यथा तु भवतां सत्तासम्बन्धादितरत्र सद्व्यवहारव्यवस्था, सत्ता तु स्वय-

---

तत्सम्बन्धस्य तद्भेदव्याप्यत्वं वाच्यम्, अन्यथा संयोगेन तद्व्यक्तिस्तद्व्यक्तिमतीति धियः प्रमात्वापत्तिरित्याशयेनाशङ्कते नन्विति । अभेदे विषयविषयिभावस्य = स्वस्मिन् स्वनिष्ठविषयत्वनिरूपिविषयित्वस्य । वैपरीत्यम् = अभावः । न भिन्न इति । यदाह शिरोमणिः "सामान्यतो विषयता ज्ञानमेव, घटादिविषयता तु घटादिसम्बन्धितत्तद्धीस्वरूपा, सम्बन्धसम्बन्धिनोश्चाभेदो न दोषाय, सर्वत्र स्वरूपसम्बन्धस्थले तथा कल्पनादिति ।" एवञ्च स्वरूपातिरिक्तसम्बन्धस्यैव भेदव्याप्यत्वं वाच्यम्, अन्यथा विषयविषयिभावस्य सम्बन्धिभेदे सम्बन्धस्यासम्बद्धस्य सम्बन्धत्वादर्शनात् सम्बन्धान्तरापेक्षायामनवस्थापत्तिः । क्वचित्सम्बन्धस्य सम्बन्धिस्वरूपतोपगमे तु न्यायसाम्यात् प्रथमस्यैव तथात्वमित्याशयेनाह तथाभूतत्वेऽपीति । सम्बन्धिस्वरूपाद्भिन्नत्वेऽपीत्यर्थः । सैव = अन्तिमा । इतरसम्बन्धानां मर्यादा = स्वसम्बन्धिभेदव्याप्यत्वम् । तदवगमः = विषयविषयिभावावगमः । तथावगमव्यतिरेकेण = सम्बन्धिभेदावगमं विना । विरोधः = अनुपपत्तिः, अतीतानागतयोरपि ज्ञानविषयत्वदर्शनेन विषयविषयिभावस्य द्विष्ठत्वमनुभवानुसारिणा वक्तुमशक्यमिति भावः । यादृग् = भेदनियतः । अन्यत्वे = विलक्षणत्वे । यद्यपि वेदान्तिनाऽभेदे विषयविषयिभावो नोपेयते, तथाप्यभ्युपगमवादेन तन्मतेन परिहरति अस्त्येवेति । योगाचारादिमते तु घटज्ञाने आविद्यकत्वं वक्तुमशक्यम्, तस्यैव स्वप्रकाशत्वेन परमार्थसत्त्वादिति बोध्यम् । घटतज्ज्ञाने इति समाहारद्वन्द्वः । बाध्यत्वं पारमार्थिकत्वं च विषयविषयिभावस्यैवोक्तम्, सम्बन्धिस्वरूपस्य तस्य तत्समसत्ताकत्वस्योचितत्वादिति भावः । अननुगमो = वैलक्षण्यम् ।

एतावता योगाचारस्य नव्यप्राभाकरस्य च मते स्वकर्मत्वरूपं स्वविषयत्वरूपं वा स्वप्रकाशत्वं निर्वाहितम्, अभेदे विषयविषयिभावानुपगन्तुः प्राचीनप्राभाकरस्य तदनुगन्तुर्वेदान्तिनश्च स्वप्रकाशत्वमिदानीं दृष्टान्तद्वयेनाह अथवेति । अयम्भावः—संयोगादिस्थले क्लृप्तं तत्सम्बन्धे तद्भेदव्याप्यत्वं न त्याज्यम्, स्वरूपस्य काप्यसम्बन्धत्वात्, घटस्य घटीयत्वानुपपत्तेः, रूपभेदेन तस्य तदीयत्वोपपादने तु तादृशरूपस्यातिरिक्तत्वे रूपवत्तोऽपि तथात्वमस्तु, न्यायसाम्यात् अनतिरिक्तत्वे तु न तद्बलादपि तस्य तदीयत्वोपपत्तिः, अतिरिक्तानतिरिक्ततापि च तस्य किं विषयतया न समाना, अतएव शिरोमण्या-

मेव सद्रूपा, न चैतावता स्वात्माश्रयता तस्याः, तथा ज्ञानमपि स्वत एव सिद्धस्वरूपम्। अथवा यथा बहुव्रीहिसमासे तद्गुणसंविज्ञाने गुणमादायैव प्रधानस्यान्यपदार्थस्य बहुव्रीहिसिद्धपदप्रतिपाद्यता, तथा विज्ञानस्याविषयमपि स्वात्मानमादायैव स्वविषये व्यवहारप्रवर्तनं समभ्यर्थताम्। सोऽयं गुरूणां सविषयकविज्ञानस्वप्रकाशतापक्षो न ब्रह्मस्वप्रकाशतापक्षः, तत्र विषयाभावात्। एतावन्मात्रेण तु स्यात्,—यथा

---

दिभिरपि विषयताया अतिरिक्तत्वमेव सिद्धान्तितम्, सम्बन्धस्य सम्बन्धान्तरापेक्षत्वेनानवस्था तु तार्किकैस्तस्याः प्रामाणिकत्वेनादूषणत्वमुपगम्य समाधेया, वेदान्तिभिस्त्वनिर्वचनीयतामुपगम्य, तस्मात्तादात्म्येन स्वस्यैव स्वव्यवहारप्रयोजकतामुपगम्य स्वातिरिक्तसंविदपेक्षव्यवहारविषयान्यत्वमेव स्वप्रकाशत्वं वक्तव्यम्, स्वाविषयत्वेऽपि स्वव्यवहारजनकतोपपत्तौ स्वविषयत्वकल्पनाया अनौचित्यात्, अतएव "न दृष्टेर्द्रष्टारं पश्येः", 'येनेदं सर्वं विजानाति तं केन विजानीयादिति" श्रुतिरपि स्वरसतः सङ्गच्छते इति भावः। भवतामिति। तार्किकाणामित्यर्थः। प्राभाकराणां तु ज्ञानविषयत्वमेव सर्वत्र सत्ता, गुणादौ जात्यनङ्गीकारात्, वेदान्तिनां तु ब्रह्मरूपैव सा सर्वत्र तादात्म्येन भासते इति भावः। सम्बन्धात् = समवायात् सामानाधिकरण्याद्वा। स्वयमेव सद्रूपेति। सत्त्वप्रकारकस्वविशेष्यकव्यवहारे स्वातिरिक्तसत्तापेक्षं यत्तदन्येत्यर्थः। स्वतएव सिद्धस्वरूपं = स्वातिरिक्तसंविदनपेक्षव्यवहारकम्। ननु तद्विषयकज्ञानस्यैव तद्विषयकव्यवहारसाधकत्वदर्शनात् ज्ञानं यदि स्वविषयकव्यवहारसाधकं स्यात् स्वविषयकमपि स्यात्, अन्यथा स्वविषयकव्यवहारसाधकमपि न स्यादिति कथमुक्तस्वप्रकाशत्वनिर्वाह इत्यत आह अथवेति। तद्गुणसंविज्ञाने इति। तस्य प्रधानस्यान्यपदार्थस्य "अनेकमन्यपदार्थे" इत्यनुशासनबलात् बहुव्रीहिपरिनिष्ठितपदप्रतिपाद्यस्य गुणाः = उपसर्जनीभूता बहुव्रीहिघटकपदार्थाः विधेयान्वयितया विधेयकालसन्निहिततया वा यदधीनविज्ञानविषया भवन्ति तत्र बहुव्रीहिसमासे लम्बकर्णमानय, शुक्लवाससं भोजयेत्यादावित्यर्थः। गुणमादायैव = अशक्यगुणसहितस्यैव। विज्ञानस्येति। निष्ठत्वं षष्ठ्यर्थः प्रवर्तनान्वयी। अविषयमपि स्वात्मानमादायैव = स्वाविषयीभूतस्वसहित एव। स्वविषये इति सप्तम्यर्थो विषयित्वं व्यवहारेऽन्वेति, व्यवहारेति संस्कारस्याप्युपलक्षणम्। प्रवर्तनं = जनकत्वम्। तथाच तद्विषयकव्यवहारसाधकज्ञानत्वस्य तद्विषयकत्वव्याप्यत्वमप्रयोजकत्वादसम्भवि, अशक्ये बहुव्रीहेरिव स्वाविषयेऽपि स्वात्मनि ज्ञानस्य व्यवहारजनकत्वोपपत्तेः, अन्यथा सत्ता यदि सत्ताप्रकारकव्यवहारविशेष्या स्यात्, सत्तासमवायवती स्यात् घटादिवदिति मयाऽपि शक्यते वक्तुम्। अथ सत्ताप्रकारकव्यवहारविशेष्यता सत्तासम्बद्धत्वस्यैव व्याप्या, तच्च तादात्म्येन सत्तायामपि, सत्ताप्रतियोगिकसमवायवत्त्वव्याप्यत्वं त्वप्रयोजकत्वान्नेति ब्रूषे, तर्हि तद्विषयकव्यवहारसाधकज्ञानत्वं तत्सम्बद्धत्वस्यैव व्याप्यम्, तच्च तादात्म्येन ज्ञानेऽपीति ममापि तुल्यम्। ज्ञाने च व्यवहारदर्शनादेव स्वाविषयकत्वेऽपि स्वव्यवहारजनकत्वं स्वीकृतमिति नान्यत्र स्वाविषयकत्वस्वाभेदयोः सत्त्वमात्रेण व्यवहारोऽतिप्रसञ्जनीयः, अन्यथा तवापि सत्तादेर्विलोपापातादिति भावः। अन्यमते ज्ञानत्वस्य सविषयकत्वव्याप्यत्वं, अतएव प्राभाकरादय आत्मनो ज्ञानरूपतां नानुमन्यन्ते, अन्यथा सुषुप्त्यादौ ज्ञानस्यात्मरूपस्य सत्त्वेन तस्य निर्विषयकत्वोपगमापातात्, किन्तु तादृशव्याप्यत्वमपि स्वविषयकत्वव्याप्यत्वमिवाप्रामाणिकमिति स्वमतेनाह सोऽयमिति। गुरूणां = प्रभाकराणां। विषयाभावादिति। विषयाणां मिथ्यात्वेनासार्वदिकत्वात् मुक्तचितौ तत्सम्बन्धानुपपत्तेः, तथाच कालिकव्याप्तेरसम्भवेऽपि दैशिकव्याप्तिर्नास्माकं क्षतिकरी, अवि-

स्वाविषयेऽपि कुटादौ बहुव्रीहिवाक्यं व्यवहारं प्रवर्तयति, तथा ज्ञानमविषयेऽप्यात्मन्य-
विद्यादशायामिति ।

तदेवं यद्यदन्यत्र दृष्टवैधर्म्यं स्वप्रकाशे पर्यवसास्यति तत्सर्वमन्यथानुपपत्तिरेव
स्वप्रकाशसाधकतया प्रदर्शिता स्वीकारयिष्यति । तद्यथा—अन्यो ज्ञाताऽन्यश्च ज्ञेयः

---

द्यादशामादाय तदुपपत्तेः, इयांस्तु विशेषः, यन्मम मते सविषयकत्वमप्याविद्यकमेव, तदुक्तमुदयनाचार्यैः,
"परमार्थतो नानुभवस्य विषयेण सम्बन्धः, संवृत्या तु गगनगन्धर्वनगरयोरिवास्त्येवेति" भावः ।
स्यात् = गुरुब्रह्मवादिपक्षयोः साम्यं स्यात् । स्वाविषये इति । अन्यपदार्थात्मकौत्सर्गिकविषयादन्यस्मि-
न्नित्यर्थः । एतेन—गुणीभूतस्यापि बहुव्रीहिप्रतिपाद्यतया अनुपदमुक्तत्वात्तद्विरोध इति, चैत्रशालीया
आनीयन्तामित्यत्र चैत्रत्वेनोपलक्षणस्यापि चैत्रस्य स्वशालास्थत्वेन चैत्रशालीयपदविषयत्ववत् "गाङ्कुटा-
दिभ्य" इत्यत्र कुटत्वेनोपलक्षणस्यापि कुटस्य पुटादेरिव कुटादिगणपठितत्वेन कुटादीतिबहुव्रीहिविषयत्व-
मिति च—निरस्तम् । औत्सर्गिकविषयत्वस्यैव निषेधात् । कुटादावित्यादिना सर्वादीनीत्यादिकं ग्राह्यम् ।
व्यवहारं प्रवर्तयति = प्रत्ययविशेषस्य ङित्वादिकं विधत्ते । अविषये = स्वाविषये । आत्मनि = स्वस्मिन् ।
आचार्यास्तु—स्वाविषये इत्यस्य कुटादिघटितसमुदायत्वेन रूपेण बहुव्रीहिविषयेऽपि समुदायितामयो-
जकेन कुटत्वेन रूपेण तदविषये इत्यर्थः । तथा च यथा कुटत्वेनाज्ञानेऽपि धीविशेषविषयत्वरूपसमुदायत्वेन
कुटस्य ज्ञानात् ङित्वकार्यम्, तथा शुद्धचिद्रूपेणाज्ञानेऽपि प्रमातृत्वादिरूपेण ज्ञानात् प्रमात्रादाविव शुद्ध-
चितावपि व्यवहारादिः, शुद्धमात्रस्याव्यवहार्यत्वात् विशिष्टघटकतयैव तस्य व्यवहार्यताया वक्तव्यत्वात्
अहं ब्रह्मेति शुद्धव्यवहारकाले तु तद्विषयकवृत्तेरपि सत्त्वात् न बहुव्रीहेर्दृष्टान्ततेति लघुचन्द्रिकायां प्राहुः ।
अत्र पक्षे "एतावन्मात्रेण तु स्यादित्यस्य दृष्टान्तदार्ष्टान्तिकभावः स्यादित्यर्थः । यद्वा विशिष्टान्वय एवौत्स-
र्गिको नतूपलक्षितान्वयः, विशिष्टग्रहणे बहुव्रीहिघटकपदाप्रतिपाद्यस्यान्यपदार्थस्यापि ग्रहणात् न 'अनेक-
मन्यपदार्थे' इति सूत्रासङ्गतिः, तावतैव तत्पुरुषाद्बहुव्रीहेर्विषयविभागसिद्धेः । एवञ्च स्वाविषये इत्य-
स्यातद्गुणसंविज्ञानलभ्यार्थभिन्ने इत्यर्थः । नचैवं विशिष्टान्वयलाभहेतुत्वेन तद्गुणसंविज्ञानस्यैव मुख्य-
त्वात् बहुव्रीहिविषयमायाः कुटेऽपि सत्त्वात् तादृशभिन्नत्वकथनं व्यर्थमिति वाच्यम्; यथा बहुव्रीहेः
स्वघटककुटपदार्थकुटज्ञानोत्तरपाठविशेषजन्यज्ञानविषयत्वरूपात् स्वपदार्थसम्बन्धात् स्वघटकपदार्थ-
व्यतिरिक्तपुटादिपरप्रत्यये ङित्वविधानम्, तथा स्वघटकपदार्थकुटपरप्रत्ययेऽपि ङित्वविधानम्, कुट-
ज्ञानोत्तरपाठविशेषजन्यज्ञानविषयत्वरूपेण कुटावृत्तिना कुटस्याबोधेऽपि कुटत्वेन रूपेण तस्य विशेषण-
तया बोधात् । नच-कुटसाधारणैकज्ञानविषयत्वेन कुटस्यापि ग्रहणसम्भवेन कुटव्यावृत्तोक्तरूपेण बोधोक्ति-
रयुक्तेतिवाच्यम्; अतद्गुणसंविज्ञानस्थले कुटव्यावृत्तरूपेणैव बोधस्य वाच्यत्वात् तद्गुणसंविज्ञानस्थलेऽ-
पि तदौचित्यात्, नह्युक्तस्थलयोर्भिन्नरूपाभ्यामन्यपदार्थधीकृतो विशेषः, किन्तु कुटस्योपलक्षणत्वाविशे-
षणत्वकृतः, अत एव "तद्गुणसंविज्ञाने तद्विशिष्टस्येतरान्वयः, अन्यत्र तदुपलक्षितस्येति" सर्वादिसूत्र-
कैयटोद्योतेऽप्युक्तम् एवं प्रकृतेऽपि यथा विज्ञानं स्वसम्बन्धादन्यत्र व्यवहारं प्रवर्तयति तथा स्वस्मिन्नप्य-
विद्यादशायामित्यर्थं इत्यपि वदन्ति ।

अन्यत्र दृष्टं = स्वजनकेन्द्रियसन्निकर्षाश्रयस्यैव स्वविषयत्वं, तद्विषयकव्यवहारहेतोर्ज्ञानस्य
तद्भिन्नत्वं, तद्विषयकत्वं च तस्य वैधर्म्यं = विरहः । अन्यथाऽनुपपत्तिः = संशयाद्यविषयत्वस्य ज्ञाने
स्वसत्ताव्यापकस्वज्ञानकत्वं विनाऽनुपपत्तिः । स्वीकारयिष्यतीति । उपपाद्येन सर्वमपि स्वोपपादकमा-

इत्यन्यत्र दृष्टमहमिति व्यवहारान्यथानुपपत्त्या त्याज्यम्; तथाऽन्यज्ज्ञानमन्यज्ज्ञेयमिति 'जानामीति' व्यवहारान्यथानुपपत्त्या त्याज्यम्; सर्वतो बलवती ह्यन्यथानुपपत्तिस्तथा-दृष्टतामात्रबलमवलम्ब्य प्रवृत्तं तर्कशतमपि बाधते। तदिदमाहुः,—"प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपीति " तस्मात्—

अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका।
पिनष्टि दृष्टवैमत्यं सैव सर्वबलाधिका॥ ३॥

---

क्षिप्यते इति भावः। उपाधिभेदेऽप्युपहितस्यैकत्वात् 'अहमिति' ज्ञानस्याश्रयविषययोरैक्यम्, अत एव प्रत्यक्षमणवालोके परसमवेतेत्यादिकर्मलक्षणस्य 'मामहं जानामी' त्यत्राव्याप्तिरुक्तेति भावः। तथेति दृष्टान्तसमुच्चये। अन्यज्ज्ञेयमिति त्याज्यमित्यनेनान्वयः। अन्यत् = ज्ञानत्वानाश्रयः। तेन 'जानामी' त्यत्र परमते व्यवसायानुव्यवसाययोर्भेदेऽपि नासङ्गतिः। वस्तुतस्तु स्वविषयत्ववादिमते तथेत्यादेर्दार्ष्टा-न्तिकपरत्वमपि सम्भवत्येव, लाघवसहकारेण जानामीत्यादिप्रतीतेरेव स्वविषयत्वे प्रमाणतया मण्यादुक्त-त्वात्. निरूपितञ्चैतत्पूर्वम्। सर्वत इत्यादि। उक्तमेतन्मणावपि। यद्यपि वेदान्तिभिः श्रुतेरेव सर्वतो बलवत्त्वमुच्यते यदाहुरद्वैतरत्नकाराः "श्रुतेरन्यस्य बलवतः प्रमाणस्याभावात्, सर्वतो बलवती हि श्रुति-रिति।" अतएव 'द्वा सुपर्णेत्यत्र' द्वित्वान्यथानुपपत्त्या प्रतीयमानोऽपि भेदोऽभेदश्रुत्या बाध्यते इति सिद्धान्तः। तथापि स्वप्रकाशत्वसाधकान्यथानुपपत्तेः स्वयंज्योतिष्ट्वश्रुतिमूलकत्वान्न दोषः, अन्यथानुप-पत्तिशब्देन प्रकृताया एव ग्राह्यत्वात्। सर्वशब्दस्य श्रुत्यतिरिक्तपरत्वं वा वक्तव्यम्। अयन्तु पर-मार्थः—अन्यथानुपपत्तिः = अन्यथानुपपद्यमानं प्रमाणमात्रम्। तच्च श्रुतिर्वाऽनुमानं वाऽन्यद्वा सर्वतो बलवदेव, अत एव व्यावहारिकत्वेनोपपद्यमानभेदविषयकप्रत्यक्षादेरन्यथानुपपद्यमानाभेदविष-यकश्रुत्या बाधः, अभेदस्य प्रातिभासिकत्वेन व्यावहारिकत्वेन वाऽनुपपत्तेः। अतएव यजमानः प्रस्तर-इत्यादिश्रुतेरपि यजमानप्रस्तरभेदग्राहिप्रत्यक्षेण बाधः। प्रकृते च संशयाद्यविषयत्वस्य बोधसिद्धेश्चाऽन्य-थानुपपत्तेरन्यथानुपपद्यमानं प्रमाणमर्थापत्तिर्वाऽनुमानं वा स्वेतरबाधकमिति भावः। तथा दृष्टता-मात्रबलमवलम्ब्य प्रवृत्तं = स्वविषयादौ स्वजनकेन्द्रियसन्निकर्षाश्रयत्वादिदर्शनमात्राधीनप्रवृत्तिकं प्रवृत्तिः = प्रतीत्युपधानम्। मात्रपदेन व्याप्त्यवच्छेदः। वह्निरनुष्णः कृतकत्वादित्यादौ पक्षव्यतिरिक्ते व्याप्तिभङ्गाभावेऽपि बाधोन्नीतपक्षेतरत्वरूपोपाधिनैवानौपाधिकत्वरूपव्याप्तिभङ्गो यथा, तथा प्रकृतेऽ-पीति भावः। तर्कशतमिति। ज्ञानं यदि स्वविषयकत्वावच्छेदेन प्रत्यक्षं स्यात् स्वजनकेन्द्रियसन्निकर्षाश्रयः स्यात्. यदि स्वातिरिक्तवेद्यं न स्यात् वस्तुत्वं जह्यात्, यदि ज्ञानत्वे सति स्वव्यवहारहेतुः स्यात् स्वभिन्नं स्यात्। स्वविषयकत्वानङ्गीकारपक्षे तु ज्ञानं यदि स्वविषयकव्यवहारप्रयोजकं स्यात् स्वविषयकं स्या-दित्यादितर्का द्रष्टव्याः। बाधते इति। तादृशतर्काधीनविपर्ययानुमितावप्रामाण्यग्रहमाधत्ते इत्यर्थः। प्रतीत्युत्पत्तिप्रतिबन्धस्तु सिद्धान्तविरुद्ध एवेति भावः। प्रमाणवन्ति = प्रमाणाधीनधीविषयाः। अदृष्टानि = प्रत्यक्षाविषयाः। कल्प्यानि = वस्तुत्वप्रकारकनिश्चयीयविशेष्यतायोग्यानि। योग्यतावच्छे-दकं च प्रमितिविषयत्वं प्रमाणवन्तीत्यनेनोक्तम्। "अदृष्टशतभागोऽपि न कल्प्यो ह्यप्रमाणक" इति तन्त्र-वार्त्तिकोत्तरार्द्धम्। अन्यथानुपपत्तिः = कल्पकस्य कल्प्यं विनाऽनुपपत्तिज्ञानम्। दृष्टवैमत्यं पिनष्टि = अन्यथादर्शनप्रयुक्तविवादविरहप्रयोजिका। सर्वबलाधिका = सर्वस्माद्बलेऽधिका = इतरापेक्षया भूयो-बलवती। बलं च कल्पकस्य वस्तुतो यदुपपादकं तद्विषयकत्वम्, कल्प्यं विना कल्पकानुपपत्तिविषयकत्वा-

वाच्यान्यथोपपत्तिर्वा त्याज्यो वा दृप्तताऽऽग्रहः ।
नह्येकत्र समावेशश्छायातपवदेतयोः ॥ ७ ॥ इति ।

तदित्थं त्वदङ्गीकृतसद्विचारलक्षणोपपन्नैरेवंविधैर्विचारैः स्वप्रकाशता भवता सुप्रतिपदा; अस्माभिस्तु संवेदनबलादेव स्वतः सिद्धरूपं विज्ञानमास्थीयते इति ।

इति खण्डनखण्डखाद्ये स्वप्रकाशवादः ॥

## अथानिर्वाच्यत्वनिरुक्तिः ।

एवं च सति सौगतब्रह्मवादिनोरयं विशेषो यदादिमः सर्वमेवानिर्वचनीयं वर्ण-

---

वच्छेदेन कल्पकविषयकत्वावच्छेदेन च प्रमात्वम् । अन्यथोपपत्तिः = संशयाद्यविषयत्वस्य बोधसिद्धेश्च स्वप्रकाशत्वं विनापि विनैव वा सम्भवः । दृप्तताग्रहः = व्यवहारविशेष्यकव्यवहर्तव्यभिन्नज्ञानसाध्यत्वप्रकारकदर्शनादिविशेष्यकप्रमागत्वप्रकारकाभिनिवेशः । एतयोः = अन्यथानुपपत्तिताद्दशदर्शनसाध्यस्वप्रकाशत्वपरप्रकाश्यत्वयोरेकत्र वृत्तिर्नहि, येनोभयबलादुभयमप्यनुरोद्धव्यं स्यादिति भावः ।

सद्विचारलक्षणोपपन्नैः = प्रमित्युपधायकस्य परामर्शस्य, अर्थापत्तिकरणस्य वा प्रयोजकैर्विचारैः कथात्मकैः । भवता = मेयसिद्धौ मानाधीनत्ववादिना । सुप्रतिपदा = सुग्रहा । अस्माभिः = पराधीनसिद्धिकस्य मृषात्ववादिभिः । संवेदनबलादेव = संविदतिरिक्तमनपेक्ष्यैवास्थीयते = विप्रतिपत्तिविषयतां नासाद्यते इति । यत्तु—स्वप्रकाशस्यैवं सिद्धौ तद्विषयत्वेनैव प्रपञ्चस्य सत्यत्वमपि सिद्ध्यतीति स्वप्रकाशसाधनं परानुकूलमिति—तन्न, अन्यथाख्यातिवादिनाऽपि संसर्गस्यासत एव वक्तव्यत्वात् सर्वज्ञभगवज्ज्ञानस्य भवन्मते स्वप्रकाशस्य तद्विषयकत्वावश्यकत्वात्तत्रैव व्यभिचारात्, अनिर्वचनीयशुक्तिरूप्यध्वंसे साक्षिणोऽपि भ्रमत्वेन भ्रमप्रमासाधारणस्वप्रकाशविषयत्वस्य सत्यत्वसाधनेऽप्रयोजकत्वाच्च, अनिर्वचनीयख्यातेः साधितत्वात् शुक्तिरूप्यादौ मिथ्यात्वेन गृहीतव्याप्तिकस्य स्वप्रकाशविषयत्वस्य सत्यत्वसाधने विरुद्धत्वाच्च, आत्मनि स्वविषयताऽनङ्गीकारेण सत्यत्वनिरूपितव्याप्तिग्रहस्थलस्यैवाभावाच्च, भवन्मते ईश्वरीयस्वप्रकाशज्ञानविषयताविरहस्य क्वाप्यभावेन व्यतिरेकिणोऽप्यसम्भवाच्चेति । तस्मात्सुसाधितेऽमुष्मिन् स्वप्रकाशैकचेतने । कल्पितत्वात्प्रपञ्चोऽयं नाभ्युपेयः सुधीधनैः ॥ प्रकाशपाशबद्धस्य मृषाभूतस्य सत्यता । व्यवहारे न हेयेति नो विरोधो मनागपि ॥

इतिखण्डनशारदायां शून्यवादापवादः स्वप्रकाशवादः ॥



एवं च सति = स्वप्रकाशस्य शून्यत्वासम्भवे सति । सौगतोऽत्र माध्यमिको न तु योगाचारादिः, तेन ज्ञानस्यानिर्वच्यतानङ्गीकारात् । तदतिरिक्तस्य चानिर्वाच्यत्वमनङ्गीकृत्यालीकताया ज्ञानात्मना सत्तायाश्चाङ्गीकारात् । सर्वमेवेति । दृग्दृश्योभयमेवेत्यर्थः । दृग्दृश्ययोर्भेदासम्भवात् भेदे च सम्बन्धस्यासम्भवस्य सम्बन्धत्वानुपपत्त्या सम्बन्धान्तरापेक्षायामनवस्थादुष्टस्यानिर्वाच्यत्वात् तादृशसम्बन्धानुयोगिप्रतियोगिनोरपि तथात्वम् । किञ्च "विषयनिरूप्यं हि ज्ञानमिति" यदभिदधता [illegible] विषयनिरूपणाधीननिरूपणकत्वं तावत्स्वीकृतम्, विषयाणां च विषयतानुयोगित्वप्रतियोगित्वतां-दन्तापर्याप्त्यवच्छेदकत्वादीनां प्रतीतिविशेषसाक्षिकत्वेन निर्वचनं कुर्वद्भिर्ज्ञानादिकं [illegible]निरूपणाधीननिरूपणकत्वं स्फुटमुररीकृतम्, उक्तातिरिक्तविषयाणामपि खण्डनोक्तरीत्या निरामेऽवश्यम्भाविनि तु तेषामपि प्रतीतिविशेषसाक्षिकत्वेनैव निर्वचनं कर्तुं युक्तम्, गत्यन्तराभावात्, तथा च ज्ञेयसामान्यस्यैव

यति । तदुक्तं भगवता लङ्कावतारे—"बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते । अतो निरभिलप्यास्ते निस्स्वभावाश्च देशिता" इति ॥ विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसद्भ्यां विलक्षणं ब्रह्मवादिन सांङ्गिरन्ते । तथाहि—नेदं सद्भवितुमर्हति, वक्ष्यमाणदूषणग्रस्तत्वात्, नाप्यसदेव, तथा सति लौकिकविचारकाणां सर्वव्यवहारव्याहत्यापत्तेः ।

ज्ञाननिरूपणाधीननिरूपणकत्वमित्यवश्योपेयं धीमता, सति चैवं ज्ञानज्ञेययोरुभयोरपि परस्पराश्रितत्वात्कथं नानिर्वाच्यतेति परमार्थः। अनिर्वचनीयमिति । तत्त्वं च चतुष्कोटिविनिर्मुक्तत्वम्, "न सन्नासन्नसदसन्न चानुभयतत्त्वकम् । विमतं तर्कपीड्यत्वान्मरीचिषु यथोदकम्" ॥ इत्यद्वयवज्रसङ्ग्रहादावुक्तत्वात्। भगवता = बुद्धेन निरभिलप्याः = सत्त्वादिचतुष्कोटिभिरनिर्वाच्याः । निस्स्वभावाः = परमार्थस्वभावरहिताः सांवृतसत्त्ववन्त इति यावत् । विज्ञानव्यतिरिक्तमिति । ययोर्ज्ञानज्ञेययोर्निरूपणे परस्परापेक्षत्वमस्तु तयोरनिर्वाच्यत्वम्, अस्तु च दृग्दृश्यसम्बन्धानुयोगित्वेन रूपेण दृशोऽपि तथात्वम्, शुद्धात्मना त्वसङ्गत्वात्साक्षित्वाच्च न तस्यास्तथात्वसम्भव इति भावः । वृत्त्यादौ जडे विज्ञानपदस्यामुख्यत्वात् विज्ञानव्यतिरिक्तत्वं वृत्त्यादावपि निराबाधम् । इदम् = सत्त्वेन प्रतीयमानं सत्त्वावच्छिन्नप्रतियोगिताकत्वविशिष्टतादात्म्यविशिष्टमिति यावत्, एतच्चालीकस्य व्यावृत्तये अन्यथा तस्यानिर्वाच्यत्वानुपगमादसङ्गतेः । अलीकस्येदमा निर्देशानुपपत्तेस्तत्सामर्थ्यादलीकभिन्नत्वस्य धर्मितावच्छेदकत्वोक्तौ तु 'नाप्यसदेवे'त्यग्रिमग्रन्थासङ्गतिः । अलीकभेदावच्छिन्नोद्देश्यताया अलीकभेदत्वपर्याप्तावच्छेदकताकविधेयताकत्वासम्भवात्, तस्माद्विज्ञानेऽपि तादृशतादात्म्यवैशिष्ट्याभावादुक्तरूपेणैव धर्मिता । सदसद्भ्यां विलक्षणम् = सत्त्वावच्छिन्नप्रतियोगिताकसत्त्वावच्छिन्नप्रतियोगिताकसदसदुभयत्वावच्छिन्नप्रतियोगिताकभेदवत् । उभयात्मकतापक्षे सद्भेदासद्भेदयोः सत्त्वात्तृतीयभेदनिवेशः, एवञ्च कोटित्रयविनिर्मुक्तत्वमुक्तं भवतीति सौगतमताद्विशेषः । वस्तुतस्तु तात्त्विकत्वेन सद्भेदासद्भेदाभ्यां निर्वचनासम्भवादेव सौगतैश्चतुर्थकोटेस्त्यागात्, "नहि स्वरूपतो दुर्निरूपस्य किञ्चिदपि रूपं वास्तवं सम्भवतीति" वदद्भिरद्वैतिभिरपि चतुर्थकोटेरनिर्वाच्यत्वोपगमाच्च फलतो न कश्चिद्विशेषः, अतएव प्रतियोगिदुर्निरूपताप्रकटनायैव सदादिभेदोक्तिरित्यद्वैतसिद्ध्यादावुक्तम् । इदन्तु बोध्यम्—सर्वशून्यत्ववादे शून्यत्वस्यापि सर्वान्तर्गतत्वात् सद्रूपत्वानुपपत्तिः, क्वचिच्छून्यतायाः पारमार्थिकत्वोक्तिस्तु शून्यत्वं व्यवस्थापयता शून्यत्वस्यैव पारमार्थिकत्वमवश्योपेयम्, *अन्यथा प्रपञ्चस्याशून्यत्वापत्तेरित्याशयेनैव, एवञ्चैतदाक्षेपभीरुणा केनचित्सौगतेन चिदद्वैतवादिनाऽन्येन* वौपनिषदगुप्तचरेण शून्यतायाः सद्रूपत्वस्य चिदादिरूपत्वस्य चोपगमे तस्यैवौपनिषदत्वापत्तिर्युज्यते सर्वं शून्यमिति स्वसिद्धान्तत्यागात् नत्वौपनिषदानां सौगतत्वापत्तिः, स्वसिद्धान्तात्यागादिति । सद् = त्रिकालाबाध्यम् । वक्ष्यमाणेति । बाधयोग्यत्वादित्यर्थः । असत् = अलीकम् । लौकिकाः = शास्त्राध्ययनसंस्कृतमतिविरहिणः, विचारकाः = तादृशमतिमन्तः । पत्तेरिति । यद्यसत्स्यात् व्यवहारविशेषविषयो न स्यात्, तद्विषयत्वात्त्वसन्नेत्यर्थः । सदसदुभयात्मकत्वं तु विरोधादेव न सम्भवतीति भावः । एतेन—यथा सत्त्वाविशेषेऽपि किञ्चित्प्रत्यक्षं किञ्चिन्न, तथा श्रुत्यवगतासत्त्वमपि किञ्चित्प्रत्यक्षं किञ्चिन्नेत्यस्तु, असद्विलक्षणत्वं तु श्रुतिबाध्यत्वान्न मन्तुमुचितम्, जगति खपुष्पवैलक्षण्यसद्भावेऽपि नासत्त्वहानिः, असद्विशेषत्वादेव, नह्यसतोरपि खपुष्पशशशृङ्गयोरेकाकारा धीः समुन्मिषति, तथा सति शब्दविशेषान्वयव्यतिरेकयोरभावप्रसङ्गात्, जनकत्वस्य चासत्यप्युपपादितत्वात्, तस्मादनिर्वचनीयतोक्तिरियमापातत एव बालानां सन्तोषायेति—परास्तम्; शाब्दबोधे शब्दस्यापि भानेन खपुष्पादिशाब्दबुद्धेर्विचित्राकारतोपपत्तावलीकानां परस्परविशेषवत्तोपगमस्याप्रामाणिकत्वात्, अन्यथाऽ-

यदपि निर्वक्तुमसामर्थ्ये गुरव उपास्यन्ताम्, येभ्यो निरुक्तयः शिक्ष्यन्ते इत्युपालम्भवचनं तत्तदा शोभेत यदि मेयस्वभावानुगामिनीयमनिर्वचनीयतेति न ब्रूयुः, वक्तृदोषादिति च वदेयुः। यस्तु निरुक्त्यभिमानं धत्ते स निर्वक्तु न तु शक्ष्यति, वक्तव्यदोषात्। नच ते दोषाः स्वकमपि घ्नन्तो जातयः कथं न स्युरिति वाच्यम्; यतो निर्वचनीयत्वं बाध्यते तैर्दोषैः स्वयमप्यनिर्वचनीयैरेव, अनिर्वचनीयैरेव च तैर्व्यवह्रियते एवेति कुतोऽस्मान् प्रति व्याघातः स्यात्। तज्जातित्वस्य च निरुच्य योजयितुमशक्यत्वात्। ननु

---

लीकत्वव्याहतेः, सत्तादात्म्यानापन्नस्वरूपासत्त्वस्यालीकगतस्य प्रपञ्चव्यावृत्तत्वेन सत्तादात्म्यापन्नत्वरूपासत्त्वस्य प्रपञ्चगतस्यालीकव्यावृत्तत्वेन च खपुष्पप्रपञ्चोभयानुगतासत्त्वस्य सर्वदेशकालवृत्त्यत्यन्ताभावप्रतियोगित्वातिरिक्तस्य विशेषस्य च कालसम्बन्धित्वासम्बन्धित्वातिरिक्तस्य दुर्वचतया वाचोभङ्ग्यन्तरेण सदसद्विलक्षणत्वस्य तवापि पर्यवसानाच्च, नहि तादृशप्रतियोगित्ववतो न सद्वैलक्षण्यं, कालसम्बन्धित्ववतश्च नासद्वैलक्षण्यमिति।

मेयस्वभावानुगामिनी = मेयत्ववैशिष्ट्यसमनियता। उक्तं हि सौगतैः– "इदं वस्तुबलायातं यद्वदन्ति विपश्चितः। यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथेति॥" "यथा यथा विचार्यन्ते विशीर्यन्ते तथा तथा। यदेतत्स्वयमर्थेभ्यो रोचते तत्र के वयमिति" च॥ स्वकमपि घ्नन्तः = स्वविरहस्यापि ज्ञापकाः, प्रपञ्चान्तर्गतत्वात्। जातयः = स्वव्रक्तोपगतस्य व्याघातकान्यसदुत्तराणि। यथा धूमवत्त्वमस्तु वह्निमत्त्वं माऽस्त्वित्युत्तरं स्ववक्त्रोपगतधूमवत्त्वविरहप्रसञ्जकत्वेन व्याघातकत्वादसदुत्तरम्, एवं विषयविषयिभावसम्बन्धखण्डनेऽनिर्वाच्यत्वादिविषयकज्ञानस्यापि स्वविषयेण सम्बन्धानुपपत्त्या त्वदभ्युपगतानिर्वाच्यत्वादेरप्यसिद्धिः, भेदो भिन्ने निविशतेऽभिन्ने वेति विकल्प्य भेदखण्डने चाऽभेदस्यापि तथाखण्डनसम्भवेन त्वदभ्युपगताभेदासिद्धिः, एवं प्रमात्वादिखण्डनेन त्वदभ्युपगतप्रपञ्चमिथ्यात्वादेरसम्भवः, तद्विषयकप्रतीतेः प्रमात्वाद्यनुपपत्तेरिति भावः। अनिर्वचनीयस्यापि साधकताया उपपादितत्वादनिर्वचनीयविषयविषयिभावमादायैवानिर्वाच्यत्वादिसिद्धिः, व्यावहारिकप्रमात्वादिस्वीकाराच्च नाभीष्टानिर्वाहः, अभेदस्य स्वरूपात्मकत्वान्नोक्तविकल्पविषयता, भेदस्य स्वरूपात्मकता तु न सम्भवतीति वक्ष्यते इत्याशयेनाह यत इति। अस्मान् प्रतीति। एतेन वक्तुरभिमतव्याघातकत्वमेव जातेर्दूषकताबीजमिति सूचितम्। अत्र-वैतण्डिकतामाश्रित्य वदतो मम स्थापनीयाभावेन मां प्रति जातेर्व्याघातकत्वाभावः, सर्वदृश्यानां त्वया मया वाऽभ्युपगतानां खण्डनयुक्तिभिर्बाधस्य मदिष्टत्वात्, 'अभीष्टसिद्धावपी' त्यादिवक्ष्यमाणत्वात् ब्रह्मणश्च बाधासम्भवस्य निवेदितत्वादित्यपि वदन्ति। इदन्तु बोध्यम्–दूष्यतावच्छेदकावच्छिन्नं दूषयतां खण्डनानां न जात्युत्तरत्वशङ्काऽपि, दूष्यतावच्छेदकस्य स्वपरसाधारणत्वात्। दूषणासमर्थोत्तरत्वस्यैव च जातिलक्षणत्वात् "अनुमानमात्रोच्छेदकतया जातित्वान्न पक्षेतर उपाधिरित्यपास्तम्, दूषणसमर्थत्वेन जातित्वाभावादिति" वदता चिन्तामणिकारेण, तत्पङ्क्तिव्याख्यातृभिर्जगदीशगदाधरमथुरानाथैश्च तथैव जातिलक्षणाभिधानात्। दूष्यतावच्छेदकावच्छिन्नादूषकत्वस्यैव जातेर्दुष्टिबीजत्वात्, खण्डनेषु दूषकतौपयिकरूपस्यानिरासाच्च, नहि निर्वाच्यत्वमपि तत्तद्दोषोपलक्षणघटकमिति। तज्जातित्वस्येति। मदुक्तदोषेषु जातित्वस्येत्यर्थः। अयम्भावः, स्वाभ्युपगतव्याघातकोत्तरत्वं तावन्न जातित्वम्, महाविद्यानुमानेषु त्वया जातित्वेनाभ्युपगतेष्वव्याप्तेः, तेषामनुत्तरत्वात्, उत्तरत्वस्य दूषकतानौपयिकत्वेन वैयर्थ्याच्च, स्वत्वस्य चानुगतत्वे मदभ्युपगतव्याघातकस्य त्वदुक्तदूषणस्यापि जातित्वापत्तेः अननुगतत्वे तु प्रातिस्विकरूपेणानन्तव्यक्तिग्रहणानुपपत्तेर्दुर्ज्ञेयतापत्तेः, व्याघातकत्वस्य च विरहप्रसञ्जकत्वरूपत्वे

सदसत्पक्षयोर्दोषदर्शनादनिर्वचनीयतेति ब्रुवाणस्य किं सदसत्त्वसंशयः, किं वा सदसत्त्वपक्षबहिर्भावाभ्युपगमः ?, आद्ये भवितव्यं तावत्सदसत्त्वयोरन्यतरेणेत्येकपक्षदोषस्याभासत्वम्, तच्च सत्त्वपक्षदोषस्यैवाभ्युपेयम्, आवश्यकत्वात्। यदि तावत्सत्त्वपक्षस्तदा सत्त्वपक्षदोषः कथं सङ्गच्छेत, अथासत्त्वपक्षस्तदा सर्वासत्त्वे तद्दोषः कथं सद्भाववान् भवितुं प्रभवेत्। द्वितीयस्तु व्याघातादेवासम्भवी "परस्परविरोधे हि न प्रकारान्तरस्थितिः" रिति ।तदेतदनाकलितपराभिसन्धेः प्रत्यवस्थानम्, यो हि सर्वमनिर्वचनीयसदसत्त्वं ब्रूते स कथमनिर्वचनीयतासत्त्वव्यवस्थितौ पर्यनुयुज्येत, साऽपि हि कृत्स्नप्रपञ्चपरसर्वशब्दाभिधेयमध्यनिविष्टैव। परस्य व्यवस्थयैवं पर्यवस्यति–निर्वचनप्रतिक्षेपादनिर्वचनीयत्वम्, विधिनिषेधयोरेकतरनिरासस्येतरपर्यवसायितायास्तेनाभ्युपगमात्। ततः

विरहव्याप्यत्वरूपत्वे वा जनकताव्याप्यतावच्छे.करूपनिरूपणं विना न निस्तारः, तन्निरूपणे वा तस्यैव लक्षणत्वमुचितम्, अन्यथा वैयर्थ्यात्, नवा तदप्यनुगतं सम्भवति। एतेन दूषणासमर्थमुत्तरमित्यपि निरस्तम्; स्वपक्षदूषणासमर्थस्य स्वदुत्तरस्य जातित्वापत्तिवारणाय यत्पुरुषीयदूष्यत्वप्रकारकेच्छीयविशेष्यताशालि यत्, तद्दूषणासमर्थस्य तत्पुरुषीयोत्तरस्य तत्र जातित्वमित्येवं वाच्यत्वे स्वत्ववद्यत्वादेरनुगमाननुगमाभ्यामुक्तदोषात्, नह्यनुगमपक्षे यद्व्यक्तेः पूर्वेण यदादिपदेन ग्रहणं तस्या एवोत्तरेण तेनेति नियमः सम्भवति व्यक्तं चैतत्सिद्धान्तलक्षणतत्त्वालोके, अत्रैव द्वितीयपरिच्छेदे च एवं दूषणसामर्थ्यस्य दूषणयोग्यतारूपत्वेन तदवच्छेदकस्यावश्यनिरूपणीयत्वेन तस्य चैकस्यासम्भवेनाननुगतधर्मावच्छिन्नप्रतियोगिताकत्वेनानन्ताभावानां लक्षणघटकत्वापत्तावसर्वज्ञदुर्ग्रहत्वापत्तिरिति ॥ संशय इति। सत्त्वासत्त्वकोटिताकसंशयीयविशेष्यत्वमनिर्वाच्यत्वमित्यर्थः। बहिर्भावेति। सत्त्वाद्यवच्छिन्नप्रतियोगिताकभेदद्वयवत्त्वमनिर्वाच्यत्वमित्यर्थः। अन्यतरेणेति। भावाभावयोस्तृतीयप्रकारासम्भवादित्यभिमानः। आवश्यकत्वमेव स्फोरयति यदीति। सत्त्वपक्ष इति। प्रमित इति शेषः। एवमसत्त्वपक्ष इत्यत्रापि। सङ्गच्छेत = अनाभासः स्यात्। सर्वेति। विज्ञानातिरिक्तसर्वेऽर्थः। सद्भाववान् = परमार्थः। दोषस्योक्तसर्वान्तःपातित्वादिति भावः। व्याघातात् = परस्परविरहरूपयोरेकनिषेधेऽपरसत्त्वावश्यम्भावेन तृतीयप्रकारानुपपत्तिरूपप्रतिकूलतर्कात्। प्रसञ्जनं तु सद्भिन्नत्वेनासत्त्वस्यासद्भिन्नत्वेन च सत्त्वस्य करणीयमिति भावः। परस्परेति। द्वयोः परस्परविरहात्मकत्वे तदन्यप्रकारानुपपत्तिरित्युदयनाचार्योक्तेरर्थः।

सर्वं = दृश्यमात्रम्। अनिर्वचनीयसदसत्त्वम् = सत्त्वासत्त्वप्रकारकनिरुक्तिविषयताऽनर्हम्। सत्त्वव्यवस्थितौ = सत्त्वोपपादनाय। प्रपञ्चपरेति। प्रपञ्चप्रतीतौच्छयोचरितेत्यर्थः। परस्य = तार्किकस्य। परकीयव्यवस्थामाह विधीति। इतरपर्यवसायितायाः = इतरात्मकतायाः। परकीयरीत्या = भावाभावयोः परस्परविरहात्मतानियममुपेत्य। यद्यपि सत्त्वस्य त्रिकालाबाध्यत्वरूपत्वेऽसत्त्वस्य च सत्तादात्म्यानापन्नत्वरूपत्वे न "परस्परविरोधे हीति" न्यायावतारशङ्कापि, ब्रह्मण्युभयोरपि रूप्यादौ चोभयाभावस्यैव सत्त्वात् व्याघातानुपपत्तेः, तथापि परस्परविरहरूपतामुपेत्यैव समाहितम्। तत्र चानिर्वचनीयतायाः अनिर्वचनीयत्वोक्त्या परस्परविरहरूपयोरेकत्र विरहद्वयस्यातात्त्विकत्वं सूचितम्, किन्तु तादृशप्रतियोगिकाभावयोरेकत्र वृत्तेर्विरुद्धाया उपगमे तत्प्रतियोगिनोरप्येकत्र वृत्तेरतात्त्विक्या अनुपगमे न बीजम्, न्यायतौल्यात्। इदन्त्ववश्यावधातव्यम्—यथा परस्परविरहरूपयोरपि द्वित्वतद्भेदयोर्घटत्वावच्छेदेन निषेधसमुच्चयो व्युत्पत्तिवादे गदाधरभट्टाचार्यैरुक्तः, कस्यापि द्वित्वस्य घटत्वावच्छेदेनावृत्तेः, द्वित्वभेदस्यापि तदवच्छेदेन वृत्तौ चैकत्वाविवक्षादशायां घटो न द्वाविति प्रयोगस्य प्रामाणिकत्वप्रसङ्गः,

परकीयरीत्येदमुच्यते,—'अनिर्वचनीयत्वं विश्वस्य पर्यवस्यतीति ॥ इति खण्डनेऽनिर्वाच्यत्वनिरुक्तिः ॥

---

## अथ परमतनिरासोपपत्तिः ।

वस्तुतस्तु वयं सर्वप्रपञ्चसत्त्वासत्त्वव्यवस्थापनविनिवृत्ताः स्वतः सिद्धे चिदात्मनि ब्रह्मतत्त्वे केवले भरमवलम्ब्य चरितार्थाः सुखमास्महे । ये तु स्वपरिकल्पितसाधनदूषणव्यवस्थया विचारमवतार्य तत्त्वं निर्णेतुमिच्छन्ति तान् प्रति ब्रूमः—न साध्वीयं भवतां विचारव्यवस्था, भवत्कल्पितव्यवस्थयैव व्याहतत्वात् । अतएवास्मदुपन्यस्यमानदूषणस्थितिविषयाः पर्यनुयोगा निरवकाशाः, त्वद्व्यवस्थयैव त्वद्व्यवस्थाया व्याहत्युपन्यासात् । न चोपन्यास एव निर्बन्धकारणम्, विचारोपन्यासस्य सदसत्त्वोपगमाद्युदासीनैर्विचार्यमित्युपेत्यैव परं विचारप्रवर्तनायाः शक्यत्वमित्यावेदितत्वात् । यदि तु विचार-

---

यथा वा "एकदेशवृत्तेर्व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावानङ्गीकारादि"त्यवयवप्रकरणे गदाधरोक्तरीत्या घटपटोभयत्वावच्छेदेन न घटत्वतदभावौ नापि घटाभेदतद्भेदौ, तथाच तृतीयैव कोटिः, अन्यथा घटेऽपि घटत्वाभावस्य घटभेदस्य च पटेऽपि घटत्वस्य घटाभेदस्य चापत्तौ पूर्णाद्वैतसाम्राज्यापत्तिः, एवं प्रकृतेऽपि तृतीयैव कोटिः, प्रमाणस्य तवेव ममापि सत्त्वात्, विधिनिषेधयोरेकतरनिरासस्येतरपर्यवसायितायास्त्वयैव त्यागादिति । यत्तु प्रकृतमूलमुद्धृत्य सदसदुभयख्यातिरेव श्रीहर्षस्य सम्मतेति नागेशभट्टेनोक्तम् तदनवबोधविजृम्भितम्, सदसद्भ्यां विलक्षणं विश्वमित्यनुपदमेव मूले उक्तत्वात् । प्रमात्वनिरासप्रस्तावे च "मम ह्येवं दर्शनम्, प्रतीतिसिद्धत्वादत्यन्तासद्विलक्षणं भवदपि जगत्तथा सत्त्वोपगमेऽपि बाध्यमानत्वादनिर्वचनीयमिति" वक्ष्यमाणत्वात् सदसद्विलक्षणत्वस्य स्वासम्मतत्वे ममेत्यस्यासङ्गतेः । तस्मात् 'परस्य व्यवस्थयेति' सन्दर्भानुसारेण परकीयरीत्येत्यस्यास्मदुक्त एवार्थो युक्तः, नतु 'कस्यचिद्वेदान्तिनो रीत्येत्यर्थ' इति ॥ इति खण्डनशारदायामनिर्वाच्यत्वनिरुक्तिः ॥

सत्त्वासत्त्वेति । सत्त्वासत्त्वान्यतरस्य तदुभयस्य वा युक्त्यधीनप्रतिपत्त्यनुकूलव्यापारविरहिण इत्यर्थः । स्वतः सिद्धे = परप्रकाश्यत्वाभावत्वोपलक्षिते । ब्रह्मतत्त्वे = परिच्छेदसामान्याभावत्वोपलक्षिते । केवले = द्वैतसामान्याभावत्वोपलक्षिते । चिदात्मनीति विशेष्यपदम् । श्रद्धान्वयिविषयित्वं सप्तम्यर्थः । भरं = निर्भरं श्रद्धाख्यचेतोवृत्तिविशेषमिति यावत् । अवलम्ब्य = द्वैतदुःखनिवृत्तये सम्पाद्य । चरितार्थाः = जीवन्मुक्ताः । एतादृशब्रह्मनिष्ठेन भवता विचारद्वारा परः कथं प्रतिपाद्यते इत्याशङ्क्य निष्कम्पानुकम्पापरवशतयैवेत्याशयेनाह ये त्विति । साधनदूषणव्यवस्थया = स्वपक्षसत्यत्वपरपक्षासत्यत्वविषयकप्रमित्यात्मकव्यवस्थाप्रयोजकप्रमाणतर्कतदाभासैः । एवमग्रेऽपि व्यवस्थाशब्दार्थो बोध्यः । अधीनत्वं तृतीयार्थो विचारान्वयी । विचारस्तत्त्वनिर्णयादिफलो वचननिचयः । अवतार्य = कृत्वा । तत्त्वं = अबाधितार्थम् । विचारव्यवस्था = विचारौपयिकनिरुक्तव्यवस्थाप्रयोजकाः । व्याहतत्वादिति । बाधितत्वात् । भवदुक्तप्रमाणतर्कतदाभासैर्भवदुक्तप्रमाणादीनामेव वक्ष्यमाणरीत्या खण्डने कृतैः कस्यचित्पक्षस्य सत्यत्वासत्यत्वान्यतरावधारणमिति भावः । अतएव = भवदुक्तप्रमाणादेर्भवदुक्तप्रमाणादिनैव बाधादेव । दूषणस्थितिः = आत्माश्रयादेः सत्यत्वम् । असत्यस्यादूषकत्वात्सत्यत्वोपगमापत्तिरियमभिमानः । व्याहत्युपन्यासात् = बाधकथनात् । सत्यत्वमस्तु मा वा, त्वदुपगतैस्तैरस्माभिर्व्यवहर्तुं शक्यते एवेति भावः । निर्बन्धकारणम् = स्वसत्यत्वाभ्युपगमापादकम् । विचारोपन्यासस्येत्यत्र कर्मधारयः । षष्ठ्यर्थो

स्य सत्त्वमनभ्युपेत्य न विचारयितुं शक्यमित्युच्यते, तदा प्रमाणमव्यापार्य न तदीयसत्त्वाभ्युपगमोऽपि शक्यते, अतिप्रसङ्गादिति विचारस्यापि विचार्य ग्रहणेऽनवस्थया विचारारम्भ एवाशक्यः स्यात् । न च पूर्वपूर्वसिद्धत्वाद्विचारे विचारान्तरमिदानीमगवेषणीयम् । विचारस्य पूर्वसिद्धत्वे, विचार्यरूपस्वविषयव्यवस्थितत्वात्तस्य विचार्यमपि पूर्वमेव विचारितमित्यनारम्भ एव विचारस्य । अथ विचार्यविशेषस्य पूर्वमसिद्धत्वात्तदर्थं विचारारम्भः, तर्हि विचारविशेषस्यापि तद्विषयकस्य पूर्वमसिद्धिरेवेति वृथा शुष्कचर्वणम् ।

यदि च त्वद्दर्शनरीत्याऽभिधीयमानमस्माभिर्बाध्यं बाधसे तदा स्वाभ्युपगतरीतिबाधाभिधायितैव ते स्यात् । अस्माभिर्निर्वाह्यमानस्य त्वया खण्डनयुक्त्यैव बाधेऽस्माकमेव जेतृता, 'खण्डनयुक्तयो बाधिकाः, निर्वाह्यपक्षश्च बाध्य' इत्यस्यास्मदुक्तपक्षस्य त्वयैव निर्वाहात् । तस्मात्त्वया निर्वाह्यमस्माभिस्तु खण्डनीयमितीदृश्यामेव परं कथायां त्वन्निर्वाह्यनिर्वाहे तव जयो नान्यथेति । तदेवं भेदप्रपञ्चोऽनिर्वचनीयः, ब्रह्मैव परमार्थसदद्वितीयमिति स्थितम् । इति खण्डने पररीत्या परमतनिरासोपपत्तिः ॥

## अथाद्वैते प्रमाणप्रश्नखण्डनम् ।

नन्वद्वैते किं प्रमाणम् ? । प्रश्न एव तावदद्वैतमनङ्गीकुर्वतो नोपपद्यते । प्रमाणं

---

विशेष्यत्वमुपगमान्वयि । प्रमाणमव्यापार्य = प्रमाणाधीनविचारमकृत्वा । तदीयेति । विचारीयेत्यर्थः । विचार्येति ल्यबन्तम् । ग्रहणे = अभ्युपगमेऽनाहार्यनिश्चयात्मके । पूर्वपूर्वेति । प्रवाहानादित्वात्पूर्वपूर्वविचारेणोत्तरोत्तरविचारस्य निश्चितत्वादित्यर्थः । पूर्वसिद्धत्वे विचार्यमपि पूर्वमेव विचारितमिति योजना । तत्र हेतुः विचार्यरूपेत्यादि । व्यवस्थितत्वात् = तादात्म्येन व्याप्यत्वात् । तस्य = विचारस्य । व्यापकता विषयिनया । विचार्यविशेषस्य = अद्वैतादिरूपस्य । तर्हीति । तथाच विचारविशेषस्य विचारपूर्वकाभ्युपगमेऽनवस्थेति भावः । विचारत्वेन रूपेण विचारसामान्यस्य सत्यत्वाभ्युपगमोऽपि न विचाराङ्गम्, तस्यापि विचाराधीनत्वेन व्यभिचाराद्विचारसामान्याङ्गताया वक्तुमशक्यादित्याशयेनाह वृथेति । स्वकर्तृकशुष्कास्थिचर्वणमिव स्वच्छन्दजालं निष्फलमित्यर्थः ।

बाध्यं = दूषणम् । निर्वाह्यमानस्य = उपपाद्यमानस्य प्रक्रियाजातस्य । ब्रह्मणो बाधस्तावन्न केनापि शक्य इत्युक्तम् । तदन्यस्य बाधस्तु त्वया वा मया वा क्रियतां, मत्पक्षस्य प्रपञ्चमिथ्यात्वस्योपोद्बलक एव, खण्डनयुक्तिभिः सत्त्वाभावसिद्धौ प्रतीयमानत्वेनानलीके मिथ्यात्वस्यैव पर्यवसानात् । बाधिकाः = दृश्याभावज्ञापिकाः । निर्वाह्यपक्षः = दृश्यसत्यत्वं तस्मात् = त्वया खण्डने तव स्वाभ्युपगतरीतिबाधाभिधायितापातात् । इतीदृश्यामेवेति । इत्येतत्समयबन्धाधीनायामित्यर्थः । चिद्रूपत्वेन ब्रह्मणः स्वतःसिद्धत्वेन तदन्यस्य च मया साधयितुमनिष्यमाणत्वेन विधिकोटेर्मयाऽनालम्बनीयत्वात् खण्डनकोटिरेव मयाऽवलम्बनीया मध्यस्थस्यापि तादृशकोट्यालम्बने एव मह्यमाज्ञादानमुचितम् अन्यथा तन्मौढ्यं स्यात् द्वैताभावादिप्रतिपादककोटेर्विधिकोटित्वं कथं वाचेति भावः । भेदप्रपञ्च इति । स्वसमसत्ताकभेदप्रतियोगितानुयोगितान्यतरवानित्यर्थः, भेदत्वावच्छिन्न इत्येव वार्थः, सर्वं ब्रह्माभिन्नमिति मूलकाराभिप्रायस्याग्रे वर्णनीयत्वात् ॥ इति खण्डनशारदायां पररीत्या परमतनिरासोपपत्तिः ।

अद्वैते = ब्रह्मपदार्थोपलक्षणीभूतात्यन्ताभावत्वनिरूपितप्रतियोगिताया भेदप्रपञ्चनिष्ठत्वे, अद्वै-

यत्राद्वैते पृच्छ्यते तस्याप्रतीतौ कथमेवंभूतः प्रश्नः सङ्गच्छेत, नहि प्रमाणमात्रं भवता पृच्छ्यते किन्नाम विषयविशेषनियतम्, तच्च तदोपपद्यते यदि तादृशं ते प्रतीतिमारोहेत्, प्रश्नस्य वाग्व्यवहारविशेषत्वात्, व्यवहारस्य च स्वजनकज्ञानविषयनियतत्वात्। अन्यथा व्यवहाराणां विषयनियमप्रयोजकस्यान्यस्यासम्भवेन व्यवहारविषयपारिप्लवापत्तेः। यदि चाद्वैतं प्रश्नविषयः प्रतीतमुच्यते तदा तत्प्रतीतिस्ते प्रमा वा स्यादप्रमा वा। आद्ये यदेव तस्याः प्रमायाः करणं तदेवाद्वैते प्रमाणं तथापि सम्प्रतिपन्नमिति वृथा तस्य प्रश्नः। न च वाच्यं सामान्यतोऽद्वैतप्रमाणसिद्धौ भूतायामपि विशेषतः प्रमाणप्रश्नः; यतः सामान्यसिद्धावेवाद्वैतसिद्धौ विशेषविचारः काकदन्तपरीक्षावत्स्यात्। सामान्यसिद्धिरेव च विशेषमप्याक्षिप्यानयन्ती विशेषमपि ते कथितवती किमत्र प्रश्नेन।

तत्वेनाभिमते वा। अद्वैतमिति। अद्वैतप्रमाणमित्यपि द्रष्टव्यम्। अनङ्गीकुर्वतः = अप्रतीतवतः। अद्वैतप्रतीतिसिद्धौ प्रमाणसिद्धिरग्रे वक्ष्यते। पृच्छ्यते इति। येन विषयविशेषस्याद्वैतस्य ते प्रतीतिर्न स्यादिति शेषः। विषयविशेषनियतम् = अद्वैतविषयकप्रमितिकरणम्। तच्च = तादृशप्रमाणविषयकप्रश्नकरणं च। तादृशं = अद्वैतविषयकप्रमितिकरणत्वविशिष्टम्। प्रतीतिमारोहेत् = प्रतीतिविषयः स्यात्। खाण्डनिको मदीयामद्वैतप्रमाणविषयकजिज्ञासां जानात्वित्याकारकेच्छाधीनशब्दविशेषप्रयोगो हि प्रकृतप्रश्नः, स च व्यवहारविशेषः, तद्विषयकव्यवहारत्वेन तद्विषयकज्ञानत्वेन च कार्यकारणभावात् स्वजनकज्ञानसमानविषयकत्वं व्यवहारस्य नियतम् तथाचाद्वैतविषयकप्रतीतिरपि तद्घटितनिरुक्तकरणत्वविशिष्टं प्रतीतवत आवश्यकी, विशिष्टविषयकप्रतीतेर्विशेषणविषयकत्वनियमादित्याह प्रश्नस्येत्यादिना। विषयनियतत्वात् = विषयविषयकत्वनियमात्। विषयनियमप्रयोजकस्य = अयमेवास्य व्यवहारस्य विषयो नान्य इति व्यवस्थाप्रयोजकस्य। अन्यस्य = स्वजनकज्ञानातिरिक्तस्य। पारिप्लवः = अव्यवस्था। घटज्ञानस्यापि पटव्यवहारहेतुतापत्तिरित्यर्थः। एवमद्वैतप्रतीतिं प्रसाध्य तत्फलमाह यदीति। तदेति। अद्वैतस्य प्रत्यक्षाविषयत्वेन मानान्तरस्य च ज्ञायमानत्वेन करणत्वात् ज्ञानात्मकत्वाद्वा न जिज्ञास्यत्वम्, प्रत्यक्षविषयत्वेऽपि वा स्वयमेव घटप्रत्यक्षादेरिव तत्करणस्य त्वया सुग्रहत्वमिति न प्रश्नावकाशः, स्ववृत्तिज्ञानगतप्रमात्वज्ञाने तद्गतप्रमाणजन्यत्वज्ञानस्यापि सम्भवाच्चेति भावः। सामान्यत इति। प्रश्नेनोपपाद्येन स्वोपपादकं सामान्यज्ञानमेवाक्षिप्यते नतु स्वानुपपादकं विशेषज्ञानमपि, तस्मिन् सति जिज्ञासानिवृत्तौ तज्ज्ञानोद्देश्यकशब्दप्रयोगात्मकप्रश्नानुपपत्तेरिति, एवमद्वैतप्रमायां समोत्पत्तावपि वायोरभावस्य च प्रमाया इव करणविशेषजन्यत्वसन्देहात्प्रश्नोपपत्तिः, विवदन्ते हि वार्यः प्रत्यक्षत्वानुमेयत्वयोरभावस्य चानुपलब्धत्वप्रत्यक्षत्वयोरिति भावः। सामान्येति। प्रमाणत्वेनेत्यर्थः। अद्वैतसिद्धौ = अद्वैतस्य प्रामाणिकत्वोपपत्तौ। स्यात् = निष्फलः स्यात्। अद्वैतप्रामाणिकत्वस्यैवाभीष्टत्वादिति भावः। ननु सामान्यस्य निर्विशेषस्यानुपपत्तेः विशेषाभावस्य निश्चयं सामान्यनिश्चये बाधितत्वग्रहो मा भूदिति विशेषोऽवश्यं निश्चेय इत्यत आह सामान्यसिद्धिरिति। आक्षिप्यानयन्ती = स्वविषयान्यथानुपपत्तिज्ञानाधीनविशेषविषयकप्रमायोग्या सती। विशेषं ते कथितवती = विशेषविषयकत्वासमवेतप्रमया स्वाश्रयहितपूर्वक्षणवृत्तित्वसम्बन्धेन विशिष्टाऽभूत्। तथाचागृहीताप्रामाण्यकसिद्धिविषयीभूतसामान्यस्य विशेषं विनाऽनुपपत्तेर्ग्रहात् तादृशसामान्यसिद्ध्या विशेषविषयकप्रमोपधाने विशेषाभावनिश्चयस्यासम्भवेन न सामान्यनिश्चये बाध्यत्वग्रहो नवा विशेषस्य जिज्ञास्यत्वमिति तद्विषयकप्रश्नो वृथैव। न च विशेषस्यापि विशेष्यत्वेनैव प्रमितिर्न तु विशिष्येति वाच्यम्, विशेषत्वस्य तद्व्यक्तित्वातिरिक्तस्य दुर्वचत्वात् अन्यथा स्व-

परिगणितेषु हि प्रमाणप्रकारेषु मध्ये यत्रैव दोषं न प्रमिणोषि, तत्रैव विशेषे सामान्यस्य विश्रान्तेः। यदि च परिचितत्वरेषु प्रमाणप्रकारेषु सर्वेष्वेव दोषं प्रमिणोषि तदा प्रमाणान्तरमाक्षिप्यापि सामान्येन विश्रमणीयमेव। यदि च 'का प्रमाणव्यक्तिरसौ' इति प्रश्नार्थः परिशिष्यते; तदा न सर्वा व्यक्तिविशेषतो निर्देष्टुं शक्यते इति तदनिर्देशेऽपि न नः किञ्चिदपचीयते। यदि च द्वितीयः, तदानीमद्वैतप्रतीतिमप्रमां मन्यमानस्य तव 'अप्रमाविषये किं प्रमाणमिति' कथं न प्रश्नो व्याहन्यते।

---

हानेर्जातिबाधकतानुपपत्तेः, तद्व्यक्तित्वस्यासाधारणधर्मस्य निश्चये तु न जिज्ञासा सावसरेति भावः।

प्रमाणप्रकारेषु = प्रत्यक्षादिरूपप्रमाणविशेषेषु। दोषं = अद्वैतावगाहिधीजननयोग्यताविरहं सामान्यस्य = अद्वैतविषयकप्रमानिरूपितकारणत्वस्य तत्रैव विशेषे विश्रान्तेः = तादृशविशेषमात्रविशेष्यकार्थापत्त्यात्मकप्रमाप्रकारत्वात्। प्रमिणोषीत्यत्र णत्वमपाणिनीयं मन्यन्ते। नन्वद्वैतप्रमितौ नेन्द्रियं करणम्, सद्रूपस्य सत्ताकालादिवद्बहिरिन्द्रियग्राह्यत्वसम्भवेऽपि त्वदभिमतस्य द्वैताभावत्वोपलक्षितस्य तेन ग्रहणासम्भवात् अन्यथाऽद्वैते विप्रतिपत्तिविरहापत्तेः, भेदधिक्कारादौ "अप्रमाणं मनोऽसत्त्वमि"त्यादिवदद्भिस्त्वदीयैर्मनसः प्रमाणताया एवानभ्युपगमात्, सुखादेः साक्षिणैव ग्राह्यत्वात्, आत्मनश्च स्वतः सिद्धत्वात्, प्रमाकरणत्वेनाकॢप्तस्य मनसो नाद्वैतेऽपि प्रमाणत्वसम्भवः, द्वैतात्यन्ताभावस्य प्रागप्रतीतेश्च। नाप्यनुमानम्, तस्य पक्षसाध्यसंसर्गविषयकधीजनकत्वेन निर्विकल्पकमात्रग्राह्योक्ताद्वैतविषयकधीजनकत्वानुपपत्तेः, तद्घटस्तद्घटवानिति प्रतीतेः प्रमात्ववारणानुरोधेन भेदसमानाधिकरणस्यैव संसर्गस्य विशिष्टधीविषयताया लघुचन्द्रिकादौ व्यवस्थापितत्वेनाद्वैते तत्संसर्गविषयकानुमितेरप्यसम्भवाच्च, नाप्युपमानम्, तस्य सादृश्यविषयकप्रमितेः पदवाच्यत्वविषयप्रमितेर्वा जनकस्याद्वैतप्रमितिजनकत्वानुपपत्तेः। नापि शब्दः, निर्धर्मके शक्तेर्लक्षणाया वा क्वाप्यदृष्टचरत्वात्, निर्धर्मकत्वेन शक्यत्वलक्ष्यत्वयोरभावसाधने श्रुतिबाधस्य तत्प्रयुक्तोपाधेर्वा श्रुतेस्तत्र प्रामाण्योपपादनं विनाऽसम्भवात्, शाब्दबोधस्थले 'साक्षात्करोमी'त्यनुव्यवसायस्य कदाप्यनुदयेनाद्वैतबोधस्य साक्षात्कारताया अनुपपन्नत्वे द्वैतापरोक्षभ्रमनिवर्तकत्वानुपपत्तेश्च। नाप्यर्थापत्तिः—तस्या अनुमानसमानयोगक्षेमत्वेन निरुक्तदोषात्। अद्वैतं विना व्यवहारे कस्याश्चिदनुपपत्तेरभावेन, श्रुत्यनुपपत्तेश्च श्रुतेस्तत्र प्रामाण्यव्यवस्थापनं विनाऽसम्भवेनार्थापत्तेरुदेतुमसामर्थ्याच्च। नाप्यनुपलब्धिः, तस्या अभावमात्रविषयकत्वात्, भावस्यैवाभावाभावत्वेन धीजनने तु सप्रकारकबोधस्याद्वैतविषयस्य 'तमेव विदित्वे'त्यादिश्रुतिविरोधेन मुक्त्यनौपयिकत्वप्रसङ्गात्, अद्वैते भावत्वस्याप्रामाणिकत्वप्रसङ्गाच्च, तत्र मानान्तरप्रसरविरहस्योदीरितत्वात्, अभावत्वे तु सप्रतियोगिकत्वेन मिथ्यात्वप्रसङ्गाच्च बौद्धमतमनुसृत्याभावस्य तुच्छताया एव समर्थनीयत्वाच्च। एवं च प्रमाणविशेषाभावकूटनिश्चये प्रमाणसामान्याभावसिद्ध्याऽद्वैतं खपुष्पायितमेवेत्यत आह यदीति। प्रमाणान्तरमित्यादेः स्वप्रकारकप्रमाणान्तरविशेष्यकार्थापत्त्यात्मकाक्षेपोत्तरकालीन एव प्रयोजकतासम्बन्धेन सामान्यनिष्ठः स्वोपपादकजिज्ञासाविरहरूपो विश्रम इत्यर्थः। शब्देऽद्वैतावगाहिधीजनकत्वविरहग्रहस्य वक्तव्यरीत्या प्रमात्वाभावेन यदोक्तमुक्तम्। तदेति। प्रतिस्वं तत्तत्प्रमाणव्यक्तीनामानन्त्यात् प्रदर्शयितुमशक्यत्वात्, अशक्यप्रदर्शनाप्रदर्शनस्य च न्यूनभावानाधायकत्वात्, "अन्यथाऽतिप्रसङ्गादिति भावः। प्रमाणत्वस्य सामान्यस्य प्रत्यक्षत्वादिना पर्यवसानवत् प्रत्यक्षत्वादेरपि व्यक्तिविशेषमादाय पर्यवसानसम्भवः, व्यक्तिविशेषं पृच्छतस्तज्ज्ञानमप्यावश्यकमिति प्रश्नो वृथेत्यपि द्रष्टव्यम्। अप्रमाविषये = अद्वैतत्वप्रकारकभ्रान्तिविषयेऽद्वैतत्वप्रकारकप्रमितिकरणं किम्। अद्वैतत्वप्रकारकभ्रान्तिविषयस्य तादृशप्रमितिविषयत्वं

अथाप्रमा सा मम मते त्वन्मते तु प्रमैवेति तत्करणं प्रमाणं पृच्छ्यते इति ब्रूषे, नैतदप्युपपद्यते, तवाद्वैते ज्ञानं यदुत्पद्यते तत्करणं मया प्रमाणरूपं वक्तव्यमित्यत्र मानियमात्। यदि नाम मया सदद्वैतमभ्युपेयते तावता किं तावकीनस्य तज्ज्ञानस्य करणमवश्यं प्रमाणं स्यात्। वस्तुतो वह्निमत्यपि पर्वते यदि कश्चिद्वाष्पं धूमं प्रतीत्य ततो वह्निमनुमिनोत्येतावता किं वाष्पविषयं धूमज्ञानं करणं प्रमाणमेष्टव्यमिति। इत्यद्वैते प्रमाणप्रश्नखण्डनम्।

---

न तव मते कदापीति व्याघातः। इदमुपलक्षणम्—अन्यथाख्यातिवादिनयेऽद्वैततत्त्वस्य क्वाप्यप्रमितौ तत्प्रकारकभ्रमस्यासम्भवः, अन्यमतेऽपि प्रतिवादिवचसो वाऽन्यतो वा यद्यद्वैतत्वप्रकारिका प्रतीतिस्तदा बाधकं विना तस्यापि प्रमाणत्वात्तच्च प्रष्ट्रा प्रतिपन्नमेव, तस्याविश्वसनीयत्वे तु बाधकस्यैव तत्राभिधानमुचितं प्रश्नस्तु वृथैवेत्यपि बोध्यम्।

अप्रमा = अप्रमात्वेन स्वीकृता। प्रमा = प्रमात्वेन स्वीकृता। तेन वस्तुनि विरुद्धद्वैरूप्यासम्भवेऽपि न क्षतिः। मन्निष्ठायास्त्वया प्रमात्वेन स्वीकृताया अद्वैतप्रतीतेः किं करणमिति प्रश्न इत्यर्थः। **अनियमादिति।** भ्रमस्य प्रमाणत्वाव्यवहारानुरोधेन ज्ञाननिष्ठं प्रमाकरणत्वं प्रमात्वे सति प्रमोपधायकव्यापारवत्त्वं, नतु प्रमोपधायकव्यापारवत्त्वमात्रम्, प्रमात्वं च सर्वांशे विवक्षितम्। सत्यन्तस्थाने दोषासमवहितत्वोक्तिस्तु ज्ञानभिन्नप्रमाणस्यापि साधारण्यमावहति। तथाच दैवाद्यत्र प्रमैव भ्रमात्मकतयाऽप्रमाणभूतेन व्याप्तिज्ञानेन जन्यते तत्र व्यभिचारेण प्रमायाः प्रमाणजन्यत्वनियमस्यासम्भवेन मया प्रमात्वेनोपगतायाः अप्यद्वैतप्रतीतेस्त्वन्निष्ठायाः करणस्याप्रमाणस्यापि सम्भवेन न मम तत्र प्रमाणाभिधाननियन्त्रणेत्यभिप्रायः। सत् = तात्त्विकम्। वैज्ञानिकवह्निमत्त्वव्यावृत्तये वस्तुत इति। ततः = वाष्पे धूमत्वावगाहिव्याप्तिज्ञानात्। वह्निमनुमिनोति = वह्निविधेयताकानुमितिमान्। **प्रमाणमिति।** वाष्पस्य वह्निव्याप्यत्वधूमत्वविरहित्वेन तदंशे व्याप्तिज्ञानस्य भ्रमत्वेन दोषसमवहितत्वेन चाप्रमाणत्वादिति भावः। **यदि तु**—प्रमोपधायकव्यापारवत्त्वमेव प्रमाणत्वम्, अतएवानुमितिकरणस्यापि परस्परोपश्लिष्टतया व्याप्यादिघटकतत्तत्पदार्थावगाहिनिश्चयरूपतैव, नतु वस्तुसद्व्याप्तिविशिष्टविषयकत्वमपि तत्रापेक्षणीयम्, तथा च स्वतो भ्रमस्यापि प्रमाणत्वमव्याहतम् एवञ्चादुष्टत्वमपि न प्रामाण्यप्रयोजकमिति कथं मूलसङ्गतिः। दोषजन्यज्ञानत्वमप्रमात्वसमनियतमिति मीमांसकमतेऽपि कथं सा, अदुष्टस्यैव प्रमाणत्वेन तन्मते वाष्पे धूमत्वं वह्निव्याप्यत्वं चावगाहमानस्य ज्ञानस्य प्रमाणत्वाभावेऽपि तज्जन्यानुमितेरपि विशेष्यावृत्तिव्यक्तिप्रकारकत्वमुपगम्य तेनाप्रमात्वोपगमात्, मूले च तत्प्रमात्वस्यैव विवक्षितत्वात्, अन्यथा सन्दर्भविरोधादित्युच्यते तदाप्यसत्ख्यातिमनुपगम्य परमतमात्रसिद्धपदार्थविषयकप्रश्नो नैवोपपद्यते, न वा साऽपि प्रामाणिकी, शून्यवादापादकत्वात्। अतएव प्रपञ्चपदार्थनिष्ठात्यन्ताभावस्य यत्किञ्चिन्निष्ठात्यन्ताभावस्य वा प्रपञ्चसामान्यप्रतियोगिकत्वे भेदत्वावच्छिन्नप्रतियोगिकत्वे वा, तादृशात्यन्ताभावीयप्रतियोगितायाः प्रपञ्चसामान्यगतत्वे, दृश्यत्वव्यापकीभूतप्रतियोगितायाः किञ्चिद्वृत्त्यत्यन्ताभावनिरूपितत्वे वा किं प्रमाणमित्यादिरपि प्रश्नोऽनुपपन्न एव। तादृशात्यन्ताभावप्रपञ्चप्रतियोगिकत्वाद्योः संसर्गस्य सत्त्वेनावधारणे तावतैवाभीष्टसिद्धेः प्रमाणस्यानभिधेयत्वात्, असत्त्वेनावधारणे च तत्र प्रमाणप्रश्नानौचित्यात् संसर्गानतिरेकितानादस्य च बहुशो निरस्तत्वात्। अतएव शशशृङ्गादिप्रमाणप्रश्ना अपि न सचेतसाम्। **यदि तु**—प्रमाया गुणजन्यत्वेन तार्किकमते भ्रमजन्यमितेः कथं प्रमान्तर्भावः, तस्या यथार्थत्वे भगवतो लिङ्गज्ञानस्यैव तत्र गुणत्वकल्पनसम्भवेऽपि स्वतस्त्वमनेन प्रमात्वखण्डने वक्ष्यमाणरीत्या प्रमायां गुणजन्यत्वस्याप्रामाणिकत्वेन दोषाभावप्रयोज्यताया एव वक्तव्यत्वेन दोषसमवहितभ्रमज्ञानस्य कथं

## अद्वैतस्य प्रामाणिकत्वम् ।

अस्तु वा प्रश्नोऽयं यथा तथा, श्रुतिरेवाद्वैते प्रमाणमिति ब्रूमः । श्रूयते खलु "एकमेवाद्वितीयं नेह नानास्ति किञ्चने"त्यादि । श्रुतिप्रामाण्यं सिद्धार्थप्रामाण्यं चेश्वराभि-

प्रमान्तर्भाव इति तल्लक्षणस्य कथं प्रमाणत्वम्; न चैवमुक्तरीत्या मीमांसकमतेन तस्या यथार्थताया एव स्वीकार्यत्वेन मूलसन्दर्भविरोध इति वाच्यम्; अबाधितप्रत्यभिज्ञानबलेन पर्वतवृत्तिवह्नेरेवोक्तानुमितिविषयत्वस्य वाच्यत्वेन यथार्थत्वस्यावश्यकत्वात् तस्येच्छादिसाधारण्यात्, क्लृप्तप्रमास्वन्तर्भावासम्भवापराधेनैव तत्र प्रमात्वस्य दुर्वचतायास्तत्त्वानुभवत्वखण्डनान्ते वक्ष्यमाणत्वात्, द्रष्टव्यञ्चाधिकं तत्रैव, अनुमिनोमीत्युक्तिस्तु व्याप्तिज्ञानजन्यत्वेनैव । एवञ्चाद्वैतप्रतीतेर्यथार्थत्वेऽपि तत्र प्रमाणं नाभिधानीयमितीद्यते तदा यथाश्रुतं मूलं समीचीनतापरिचितमेवेत्यवधेयम् । प्रश्नखण्डनस्य च परस्य गलितगर्वतैव प्रयोजनमिति प्रश्नमात्रेण वस्तुसिद्धिरिति न भ्रमितव्यम् । नचैवं प्रश्नखण्डने कथासम्प्रदायोच्छेदः, विजयोद्देश्यककथायामेव तत्खण्डनात् ॥ इति खण्डनशारदायामद्वैते प्रमाणप्रश्नखण्डनम् ॥

अथ तादृशसंसर्गस्य द्वैताभावत्वोपलक्षितब्रह्मणो वा प्रतीतिमात्रमेव प्रश्नौपयिकम्, सदसत्त्वावधारणं तु नापेक्षणीयम्, तादृशप्रतीतेर्भ्रमत्वप्रमात्वान्यतरवत्त्वं तु प्रमाणतदभावान्यतरनिर्णयेनैव निर्णेयमिति ब्रूषे, तर्हि प्रतीतिमात्रस्य व्यवहारहेतुतां ब्रुवाणस्यानिर्वचनीयवादिता, नत्वन्यथाख्यातिवादितेति स्यात्, तन्मतेऽप्रमितस्याव्यवहार्यत्वात्, एवं तादृशप्रतीतेर्भ्रमत्वप्रमात्वे सन्दिहानस्य प्रश्न इति तद्बुभुत्सुतैव प्रवृत्तिरिति स्यात्, तथा चैतादृशं प्रति वक्तव्यमेवोत्तरमित्याशयेनाह **अस्तु वेति। श्रुतिरेवेति** । मानान्तरानपेक्षेत्यादिः, तेनानुमानादेः श्रुतिमूलकस्य मानान्तरस्य सत्त्वेऽपि न क्षतिः । अयम्भाव — एकमेवाद्वितीयमितिवाक्यादद्वितीयविषयकशाब्दबोधस्तावदानुभविकः, परन्तु प्रकारान्तरस्य ब्रह्मणि प्रमितावद्वितीयत्वस्य तत्र श्रुत्या प्रमितस्य व्याघातो माभूदिति श्रुतिप्रामाण्यवादिना वस्तुतो निर्धर्मकस्यैव बोधोऽभ्युपेयः, फलबलाच्च तत्र वृत्तिरपि कल्पनीया, सा च विशिष्टस्य शक्यत्वे विशेष्यस्यापि तथात्वमिति मते शक्तिरेव, मतान्तरे तु लक्षणैवेत्यत्र नादरः, वृत्तिं विनापि वा बोधः कुतो नोपपाद्यताम्, सर्वतो हि बलवत्यन्यथानुपपत्तिरित्यस्य सर्वसम्मतत्वात् । यदाहुः—"अगृहीत्वैव सम्बन्धमभिधानाभिधेययोः । हित्वा निद्रां प्रबुद्ध्यन्ते सुषुप्ते बोधिताः परैरिति" । न च वृत्तिं विना शाब्दोपगमेऽतिप्रसङ्गात् तत्पदजन्यशाब्दबोधं प्रति तत्पदवृत्तिज्ञानाधीनोपस्थितेर्हेतुताया वक्तव्यत्वात्कथं वृत्तिं विना बोधः, एवं च सुषुप्त्यव्यवहितोत्तरक्षणेऽपि वृत्तिज्ञानं कल्पनीयम्, तदधीनपदार्थोपस्थितिश्चेति वाच्यम्; तत्तद्घटितत्वेनोक्तकार्यकारणभावस्यानुगतस्याभावात्तमादाय प्रत्यवस्थानस्याशक्यत्वात्, अतएव सुषुप्त्यव्यवहितोत्तरक्षणे उक्तोपस्थित्यादेरनुभवासिद्धस्य कल्पनमप्यप्रामाणिकम्, तादृशोपस्थित्यनपेक्षणे च तदा स्वरूपसत्यपि वृत्तिर्निष्फलैव, वृत्तिं तज्ज्ञानादिकं वा विना शाब्दस्य स्थलविशेषे एवोपगमाच्च नातिप्रसङ्गः, त्वदुक्तानन्तकार्यकारणभावानामेव चातिप्रसङ्गवारकत्वात् । नचैतादृशकल्पनामपेक्ष्याद्वितीयश्रुतिरेव किमिति न सङ्कोच्यते इति वाच्यम्; तत्सङ्कोचस्याग्रे निरसनीयत्वात् । एवं च ब्रह्म न शक्यं लक्ष्यं वा निर्धर्मकत्वादित्यत्र सिद्धसाधनम्, शक्यत्वादेः स्वीकारपक्षेऽपि तस्य मिथ्यात्वोपगमेन ब्रह्मवृत्त्यत्यन्ताभावप्रतियोगित्वात्सिद्धसाधनं दुर्वारम् । नच प्रतिपत्तिविषयताया एव विरहः साधनीयः, इष्टापत्तेः, तस्या अपि मिथ्यात्वात्, धर्मिग्राहकमानबाधाच्च, निर्धर्मकस्य कस्यचिदभावे स्वरूपासिद्धेश्च, नह्यलीकमेव तादृशम्, तस्य निस्स्वरूपस्य धर्माभावाधिकरणताया धर्माभावस्वरूपताया वाऽसम्भवात् । साक्षदभिन्नविषयकत्वेन च मानब्रह्मज्ञानस्यापरोक्षत्वम्, साक्षात्करोमीति प्रतीतिश्चेति नापरोक्षभ्रमानिवृत्तिरित्यन्यत्र विस्तर इति । **एकमिति** । पदत्रय-

सन्धौ साधयिष्यते । सिद्धार्थानां श्रुतीनामन्यपरत्वमपि यदि स्यात्, तथापि पदसमन्वय-

स्वारस्याद्द्वैतसामान्याभावोपलक्षितमित्यर्थः, प्रतिज्ञाऽहानिरितिन्यायेन ब्रह्मातिरिक्तस्य श्रुतितात्पर्यविषयत्वासम्भवादेकादिशब्दस्य प्राधान्याद्यर्थकत्वं न युक्तम्, अत एवाहुः—"भेदसत्यपरस्तर्को भेदमायापरोऽपरः। भेदसत्यपरस्तर्कोऽसन् वेदविरोधतः । एकविज्ञाननिगमान्नेहनानेति च श्रुतेरिति" ॥ द्वैताभावत्वोपलक्षितवस्तुमात्रप्रतीतावपि न द्वैतसत्यत्वबुद्धेः प्रतिबन्धः, नवा "ननु नाद्वैतश्रुतीना"मित्यग्रिमग्रन्थोत्थानसम्भव इति तु न व्यपदेश्यम्; द्वैताभावप्रकारकद्वैतवद्ब्रह्मविशेष्यकस्यावान्तरबोधस्याप्युक्तश्रुत्या जननात् सदेवेदमित्युपक्रान्तवाक्येन द्वैतवद्ब्रह्मणः समर्पणात्, देशकालरूपावच्छेदकवाचकपदसमभिव्याहाराभावसहकृतत्वेन द्वैताभावांशेऽनवच्छिन्नवृत्तिकत्वस्यापि तादृशबोधेनावगाहनात्तस्य मिथ्यात्वविषयकत्वादित्यन्यत्र विस्तरः । इह = द्वैततादात्म्यापन्ने ब्रह्मणि नाना = ब्रह्मभिन्नं किञ्चन नास्ति । एतद्वाक्याधीनबोधस्यापि निरुक्तरीत्यैव मिथ्यात्वविषयकत्वमिति न सन्दर्भासङ्गतिः। वस्तुतस्तु भेदसामान्याभाववद्ब्रह्मैवोक्तश्रुत्योरर्थो मूलकृत्सम्मत इत्यनुपदं व्यक्तीभविष्यति । श्रुतिप्रामाण्यमिति । आकाङ्क्षादिमता शब्देन यथार्थबोधजननात् शाब्दयामीत्यनुभवेन चानुमानाद्यनन्तर्भावाच्छब्दस्य प्रमाणत्वसिद्धौ श्रुतिरपि तादृशी प्रमाणम्; नहि तस्या ज्ञानानुत्पादकत्वसंशयजनकत्वे, नवा दुष्टत्वम्, अनाप्तप्रणीतत्वात् तद्धि पौरुषेयत्वाभावे आप्तप्रणीतत्वे वोभयथाऽपि सम्भवति, अतएव न बाधितार्थकत्वमपि, ज्ञानसामान्यसामग्री हि प्रमामेव जनयतीत्युत्सर्गः, दोषसहकारात्तु भ्रममेव, न चात्र दोषसम्भावनेति कथं नाबाधितार्थकत्वम् । अतएव दृष्टफलेषु क्वचित्फलासिद्धौ साधनवैगुण्यमेव कल्प्यते । अदृष्टफलेषु तु बाधस्य ग्रहीतुमशक्यत्वमेवेति भावः । सिद्धार्थप्रामाण्यमिति । कार्यतावाचकलिङाद्यघटितवाक्यप्रामाण्यमित्यर्थः । यद्यपि—कार्यान्विते व्यवहारदर्शनात्तत्रैव तदधीना शक्तिः पदानां युक्ता, अतएव प्राथमिकव्युत्पत्त्यनुरोधेन कार्यपदाश्रुतावपि तदध्याहारः, नच—क्वचित्सिद्धार्थेऽन्वयप्रतीतिदर्शनेन पश्चादन्वयमात्रे शक्तिर्वक्तव्या, बाधनीयं च प्राचीनं कार्यान्विते शक्तिज्ञानमिति वाच्यम्; अध्याहारादिनैवोत्तरज्ञानानामुपपत्तेः प्राचीनज्ञानाप्रामाण्यासाधकत्वात्, तथापि—अनन्यलभ्यो हि शब्दार्थ इति न्यायात् कार्यान्वितेऽन्वितस्यापि प्रविष्टत्वेन लाघवाच्च कार्यांशे गृहीतामपि शक्तिं परित्यज्यान्वितांशे एव शक्तिग्रहोऽनुरोद्धव्यः । नचोत्तरज्ञानेन पूर्वज्ञानबाधो न युक्त इति वाच्यम्; लाघवाख्यतर्केणानन्यलभ्यत्वन्यायेन च सहकृतस्योत्तरज्ञानस्य बलवत्त्वात्, अन्यथा 'नेदं रजतमि'त्यपेक्ष्य 'इदं रजतमि'त्यस्यैव प्राबल्यं स्यात् । एवञ्चान्वयांशेऽपि शक्तिस्वीकारोऽप्रामाणिकः गौरवात्, आकाङ्क्षाबललभ्यत्वाच्च । अतएव—अन्वयः शक्यो लक्षणाग्रहाजन्यशक्तिग्रहाजन्यशाब्दधीविषयत्वादिति—निरस्तम्, आकाङ्क्षयैवान्वयप्रतीत्युपपत्तावप्रयोजकत्वात्, एतेनैवाशयेनाहुः "एकपदार्थे चापरपदार्थस्य संसर्गः संसर्गमर्यादया भासते" इति । तद्विषयकशाब्दबोधे वृत्तिज्ञानाधीनतद्विषयकोपस्थितेर्हेतुतेति पक्षकक्षीकरणेऽपि लक्षणयैव निर्वाहसम्भवाच्छक्तिकल्पनालौचित्याद् उक्तहेतोः स्वरूपासिद्धत्वात् । एवञ्च 'तात्पर्याधीना वृत्तिर्न तु वृत्त्यधीनं तात्पर्यमिति' तार्किकमर्यादया सिद्धार्थे तात्पर्यावगमे तत्र प्रामाण्यत्यागस्याप्रामाणिकत्वमिति सिद्धेऽपि ब्रह्मणि श्रुतिप्रामाण्यसम्भव इत्यन्यत्र विस्तरः । सिद्धार्थकश्रुतीनां दूरस्थत्वेन कर्मोपासनाशेषत्वासम्भवेऽप्यभ्युपेत्यवादमवलम्ब्याह सिद्धार्थानामिति । अन्यपरत्वं = कर्मोपासनापरत्वम् । "सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते । पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधारणात् ॥ आत्मज्ञानं हि संयोगपृथक्त्वन्यायेन क्रत्वर्थं पुरुषार्थत्वेन ज्ञायते तं न विना कर्मसु प्रवृत्तिनिवृत्त्यसम्भवात्" इति व्याकरणाधिकरणे भट्टपादोक्तदिशाऽन्यपरत्वेऽप्युपनिषदामद्वैतासत्यसम्भवः । अतएव मीमांसाकौस्तुभेऽप्यर्थवादाधिकरणे "विनापि देहादिव्यतिरिक्तनित्यकर्तृभोक्तृ-

चलेन तासु प्रतीयमानमर्थमबाधितमादायैव तासामन्यपरीभवनात्, धियां स्वतः प्रामाण्यस्य बाधकैकापोद्यत्वात्। इत्यद्वैतस्य प्रामाणिकत्वम्॥

## अथ प्रत्यक्षादिबाधोद्धारः॥

ननु नाद्वैतश्रुतीनामृजावर्थे प्रामाण्यं सम्भवति, प्रत्यक्षादिबाधात्; ततश्चान्यत्रैव क्वचित्तात्पर्यं कल्प्यम्। मैवम्। यदद्वैतश्रुतेर्बाधकं प्रत्यक्षादि मन्यसे तदात्मीये विषये घटपटादेर्भेदे नियते पर्यवस्यते, न तु प्रत्यक्षादिकं भूतभाविवर्तमानसकलव्यक्तिभेदग्राहि

रूपात्मप्रतिपादिकानामुपनिषदां परलोककर्मविध्यपेक्षितोक्तरूपात्मपरत्वमेव। उक्तविधात्मज्ञानस्य चानारभ्याधीतस्यापि सामर्थ्यात्, "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति" वाक्याद्वा क्रत्वङ्गत्वाविरोधः। असंसारिसगुणनिर्गुणात्मप्रतिपादिकानां तूभयविधोपासनाविध्यपेक्षितत्वेन स्वार्थपराणामेवाभ्युदयनिःश्रेयसहेतुत्वमि"त्युक्तम्। एवञ्चार्थवादाधिकरणे भट्टपादानामुपनिषदामर्थवादत्वोक्तिर्न तासां स्वार्थपरत्वाभावाभिप्रायेण, अपि तु स्वार्थपरत्वेऽपि विधिमन्त्रनामधेयनिषेधार्थवादरूपवेदविभागेषु विध्यादावन्तर्भावासम्भवेनार्थवादान्तर्भावाभिप्रायेणैवेति व्यक्तमन्यत्र। अर्थवादत्वेऽपि प्राप्तिबाधयोरभावेनानुवादत्वगुणवादत्वयोरसम्भवेन भूतार्थवादत्वस्यैव वक्तव्यत्वात् देवताधिकरणन्यायेन "वज्रहस्तः पुरन्दर" इत्यादिभूतार्थवादबलाद्देवताविग्रहस्येव "एकमेव"त्यादि भूतार्थवादबलादद्वितीयब्रह्मणोऽपि सिद्धिरिति भावः। पदसमन्वयबलेन = तत्तत्पदसमभिव्याहारान्यथानुपपत्त्या। तासु प्रतीयमानं = उपनिषदधीनप्रतीतिविषयम्। आदायैव = अभ्युपेत्यैव। अन्यपरीभवनात् = अन्यपरत्वस्य वक्तव्यत्वात्। तेन न ल्यपोऽसङ्गतिः। अन्यपरीति च्व्यन्तम्, ह्रस्वपाठस्तु सन्दर्भविरुद्धः।-अथवा बलेनेत्यस्यादायेत्यनेनान्वयः, प्रतीयमानमित्यस्य तत्तत्पदबोध्यत्वेनेत्यादि', घटकत्वं सप्तम्यर्थः, आदाय = बोधयित्वा, तथा च स्वघटकतत्तत्पदबोध्यत्वेन प्रतीयमानाबाधितार्थविषयकप्रतीतिनिमुक्तसमभिव्याहारान्यथानुपपत्त्योरद्वैतोपनिषदामन्यपरताप्राप्तेरित्यर्थः। ईदृशस्थले विरम्यव्यापारादेर्दोषत्वानङ्गीकारात्, मुख्यतात्पर्यस्य पर्यवसितप्रतीतेश्चैक्यात्, कथमन्यथा देवताधिकरणन्यायोऽर्थापत्तिमणवेकस्यैव मानस्य मितिद्वयजनकत्वोक्तिश्च सङ्गच्छेतेति भावः। उपनिषदधीनप्रतिपत्तेरबाधितविषयकत्वं कुतस्तत्राह धियामिति। स्वतः प्रामाण्यस्य = ज्ञानसामान्यसामग्र्यधीनत्वेनौत्सर्गिकप्रामाण्यस्य। बाधकैकापोद्यत्वादिति। अत्र तु बाधकस्य निरसनीयत्वेनाबाधितार्थविषयकत्वरूपं प्रामाण्यं सुस्थमिति भाव'। इति खण्डनशारदायामद्वैतस्य प्रामाणिकत्वम्॥

ऋजौ = यथाश्रुतेऽद्वैते। प्रत्यक्षादिबाधात् = प्रत्यक्षादिबोध्याभावप्रतियोगिविषयकधीजनकत्वात्, प्रत्यक्षादिज्ञाप्याप्रामाण्यकधीजनकत्वाद्वा बोधोत्पत्तिप्रतिबन्धस्तु बाधकज्ञानेन न क्वापीष्टः। ततश्च = बाधितार्थत्वेन गुणवादत्वाद्देवताधिकरणन्यायावतारासम्भवे च। अन्यत्रैव = उपासनादावेव। एवेन स्वार्थपरत्वव्यवच्छेदः। नच-प्रमाणत्वाविशेषात्प्रत्यक्षादिभिरेव कुतः श्रुतेर्बाधश्चोदित', तेषां तयैव स कुतो न स्यादिति-वाच्यम्, प्रत्यक्षस्य सर्वप्रमाणोपजीव्यत्वेन प्राबल्यम् अतएव तदनुरोधेनैव "आदित्यो यूप" इत्यादेरन्यथानयनम् एवञ्च प्रत्यक्षसंवाद्यनुमानादेरपि श्रुत्यपेक्षया प्राबल्यादादिपदमपि सङ्गतमिति। नियते = यत्किञ्चित्प्रतियोग्यनुयोगिके। अत्रेदं द्रष्टव्यम्-वेदान्तिनां मतद्वयमत्र, केचिद्धि नेह नानेतिश्रुतिरेकमेवेति श्रुतिश्चोक्तरीत्या प्रपञ्चमिथ्यात्वमाहतुरित्याहुः। परे तु-नेह नानेति भेदसामा

जायमानमावयोः सम्प्रतिपन्नमस्ति, तादृशेन ज्ञानेन चोत्पद्यमानेन सर्वज्ञतां तदा तव श्रद्दध्यां यदि जानासि मम चेतसि किं वर्तते इति। यदि च प्रत्यक्षादि किञ्चिन्मात्रविषयं तदा तद्विषयादन्यत्रापि प्रवर्तमानाऽद्वैतश्रुतिस्तेन न बाधितुं शक्यते, स्वविषयमात्रे प्रमया विपरीतविषयज्ञानबाधनात्; अन्यथाऽतिप्रसङ्गात्। मा हि भूदग्नीषोमीयपश्वालम्भनविधिना सर्वभूताहिंसाश्रुतेर्वैयर्थ्यम्।

यदा चैवं, तदा बाधिकायाः प्रत्यक्षधियो बाध्यायाश्चाद्वैतबोधने श्रुतिर्निराबाधा

---

न्याभावं बोधयति, नानापदस्य भेदार्थकत्वात्, अद्वितीयमिति श्रुतिरपि भावप्रधानतया द्वितीयत्वस्य भेदव्यापकस्याभावबोधनद्वारा भेदसामान्याभाववद्ब्रह्मेत्यर्थे पर्यवस्यति, अभावस्याधिकरणस्वरूपत्वात् भेदाभावत्वमपि ब्रह्मणि, अतएव घटपटादीनामभेदोऽपि ब्रह्मैव, भेदाभावत्वविशिष्टं तदपि मिथ्या, तदुपलक्षितं तु तत् सत्यमिति 'पारमार्थिकमभेदमिच्छन्तोऽपी'ति पङ्क्तिव्याख्यानावसरे व्युत्पादनीयमित्याहुः। तत्राद्यमते प्रपञ्चसामान्यस्य मिथ्यात्वबोधनेऽधिष्ठानमेकमेव तदीयसत्त्वमित्यर्थाल्लभ्यते तच्च घटपटादेर्भेदसत्त्वेऽनुपपन्नम्, भिन्नानामेकसदात्मकत्वस्यानुपपत्तेरित्याशयेन नन्वित्यादिनाऽद्वैतश्रुतेर्बाधशङ्का तत्परिहारश्च। द्वितीयमते तु भेदसामान्याभावस्य ब्रह्मणि लोके वा श्रुत्या बोधनं घटपटादेर्भेदसत्त्वे नोपपद्यते इति स्फुट एव शङ्कासमाधानयोरवकाशः, एवञ्च स्वरसतो द्वितीयमतमेव मूलकृदभिमतम्, अन्यथा श्रुत्या मिथ्यात्वबोधने घटः सन्नित्यादिसत्यत्वग्राहिप्रत्यक्षादिबाधशङ्कासमाधानयोरेवौचित्येन भेदग्राहिप्रत्यक्षादिबाधशङ्कादेरयुक्तत्वापत्तेः। तथाच घटपटयोर्भेदसत्त्वे तयोर्ब्रह्माभेदो न स्यात्, ब्रह्मण एव तु द्वैरूप्यं स्यादिति तयोर्भेदो बाधनीयः। सर्वं ब्रह्माभिन्नमित्यस्य च सर्वं ब्रह्मातिरिक्तसत्ताशून्यमिति नार्थः, तादृशसत्तासिद्ध्यसिद्धिव्याघातात्, अपि तु तत्तद्विशेषधर्मावच्छेदेनाविद्यादशायां प्रसिद्धस्य ब्रह्मभेदस्याभाववत्तत्तद्विशेषधर्मावच्छिन्नमित्यर्थः, एवञ्च ब्रह्मातिरिक्तस्य पारमार्थिकत्वे सर्वस्मिन् ब्रह्माभिन्नत्वं बाधितं स्यादिति तस्यापारमार्थिकत्वमर्थादायाति, एतेन सर्वस्य ब्रह्माभिन्नत्वे सत्यत्वापत्तिः, ब्रह्मणो वा मिथ्यात्वापत्तिर्नाशङ्कनीया। तादृशेनेति। अभेदस्मृतीयार्थः सर्वज्ञघटकज्ञानान्वयी। चेतसि वर्तते = मानसज्ञानविषयः। प्रमेयत्वादिसामान्यलक्षणाधीनग्रहस्य तु तादृशभेदप्रत्यक्षानुपयोगः, विशिष्यैव प्रतियोग्यनुयोगिग्रहस्य तदर्थमपेक्षणीयत्वादिति भावः। अन्यत्रापि प्रवर्तमाना = अन्यस्याप्यभेदं विषयीकुर्वती। श्रौतधियो वस्तुतो सर्वाभेदविषयकत्वमेवेति सूचयितुमपि'शब्दः। श्रुत्या घटपटयोर्ब्रह्माभेदबोधनेनैव घटपटयोरभेदबोधनं, भिन्नयोरैकात्म्यतानुपपत्तेरिति भावः। स्वविषयेति। समानविशेष्यताश्रयासत्त्वैव तत्प्रकारकतदभावप्रकारकधियोः प्रतिबध्यप्रतिबन्धकभावादिति भावः। अगृहीताप्रामाण्यकबुद्धेः, स्वतःप्रामाण्यमते गृहीतप्रामाण्यकबुद्धेर्वा प्रतिबन्धकत्वालाभाय ज्ञानेनेत्यनुक्त्वा प्रमयेत्युक्तम्, विरोधिग्रहभ्रमत्वप्रमापकत्वं प्रमयामेवेत्याशयेन वा। समानविशेष्यताभस्त्वासत्त्वा बाध्यबाधकभावानुपगमेऽग्नीषोमीयपशुहिंसनविशेष्यकेष्टसाधनत्वप्रकारकज्ञानस्य "अग्नीषोमीयं पशुमालभेते"ति श्रुतिजन्यस्य सर्वभूतहिंसनविशेष्यकबलवदनिष्टाजनकत्वविशिष्टेष्टसाधनत्वाभावप्रकारकज्ञानं "न हिंस्यात् सर्वा भूतानीति" श्रुतिजन्यं प्रत्यग्नीषोमीयपदबनिरिक्तांशेऽपि बाधकत्वप्रसङ्ग इत्याह मा हि भूदिति। सामान्यशास्त्रस्य विशेषशास्त्रेण स्वविषये बाधस्य सङ्कोचात्मकतया प्रसिद्धत्वेऽप्यत्र बाध इत्यनभिधाय वैयर्थ्यमित्यभिहितम्।

बाधिकायाः = बाधकत्वेनाभिमतायाः। बाध्यायाः = बाध्यत्वेनाभिमताया ऐक्यधियः। अद्वैतबोधने निराबाधा = अप्रामाण्यज्ञानानास्कन्दितभेदबोधप्रतिबन्धकासमवहिता, भेदाभेदधियोर्भेदमादि-

सती तयोरैक्यं बोधयतीति तत्प्रत्यक्षादि कथं स्वात्मानमेव बाधेत। घटेन पटेन तद्भेदेन च स्वविषयेण सह तस्या एव धियः श्रुत्या सर्वस्याद्वैतं गोचरयन्त्या कथं नाभेदे प्रामाण्यमासादयितव्यम्, तत्राबाध्यमानत्वात्; नहि तस्या धियः स्वात्मा वा स्वात्मना सह घटपटादेर्भेदोऽपि वा विषयः; 'घटपटौ भिन्नावि'त्येवमाकारा हि सा जायते नतु 'अहं घटात्पटाच्च भिन्ना मत्तो वा तौ भिन्ना'विति। स्वप्रकाशताऽपि स्वमात्रे साक्षिणी, न तु यतो यतः प्रकाशो भिद्यते ततस्ततस्तस्य भेदेऽपि। अन्यथा तत्तदपि स्वप्रकाशकुक्षौ निक्षिपन्ती न कथमद्वैते एव पर्यवस्यति।

---

बुद्ध्यन्तराभावस्थले इदं द्रष्टव्यम्। तयोः = भेदाभेदधियोः। ऐक्यं बोधयति = ऐक्यविषयकाप्रामाण्यज्ञानानास्कन्दितबोधं जनयति ऐक्यविषयकत्वावच्छेदेनाप्रामाण्यग्रहानास्कन्दिता भवतीति यावत्। नन्वभेदबुद्धेर्भेदबुद्ध्यात्मकत्वं वा, भेदबुद्धेरभेदबुद्ध्यात्मकत्वं वा अभिन्नविषयकत्वं वैक्यं विवक्षितम्, नान्त्यः, तस्याद्याप्यसिद्धेः। न द्वितीयः, अभेदबुद्धेः परिशेषे विनिगमकाभावात् तस्या भेदविषयकत्वमेव किन्न स्यात्, नाद्यः, भेदबुद्धेः परिशेषेऽभीष्टासिद्धेरित्याशङ्क्याह तत्प्रत्यक्षादीति। अभेदबुद्ध्यभिन्नतया ज्ञातं भेदप्रत्यक्षादि कथं स्वात्मानमेव बाधेत = कथं स्वात्मकाभेदबुद्धिबाधकतया ज्ञातुं शक्येत; स्वस्य स्वाप्रामाण्यग्रहासञ्जनरूपस्वबाधकताग्रहानुदयेन बाध्यबाधकभावज्ञानस्य तद्भेदग्रहाधीनत्वकल्पनात्; तथाच भेदाभेदबुद्ध्योरैक्यविषयकत्वावच्छेदेनाप्रामाण्यग्रहानुत्पत्तौ तवाभिमता भेदबुद्धेर्बाधकता न सम्भवतीत्येव ममाशय इति घटपटाभेदविषयकत्वावच्छेदेनापि श्रुतिजाद्वैतबुद्धौ नाप्रामाण्यग्रहसम्भव इति, ऐक्यं च ग्रहरूपमेवेति वक्ष्यते इति तस्यैव परिशेषो नतु कस्याश्चिद्धिय इति। अद्वैतश्रुतेः सञ्चारस्थलान्तरमाह घटेनेति। तस्याः = घटपटभेदधियः। अभेदे इत्यनेनान्वयः। श्रुत्या = श्रौतबुद्ध्या। भेदबुद्धितद्विषययोरभेदविषयकत्वावच्छेदेन प्रामाण्यप्रकारकग्रहविशेष्यता कथं नाश्रयितव्येत्यर्थः। तादृशाभेदांशेऽप्रामाण्यग्रहविघटने तादृशविशेष्यताश्रयत्वस्य श्रुतिजन्यबुद्धौ सम्भव इति भावः। तत्राबाध्यमानत्वात् = तादृशाभेदविषयकत्वावच्छेदेनाप्रामाण्यग्रहानास्कन्दितत्वात्। अयम्भावः—भेदबुद्धेः स्वविषयेणाभेदज्ञाने भेदज्ञानासम्भवेन तस्या भेदविषयकत्वं तद्घटितप्रमात्वं वा न ज्ञातुं शक्यम्, एकत्र विषयविषयिभावोपगमपक्षेऽपि ज्ञानत्वेनैव भेदविषयकत्वं ज्ञातुं शक्यते नतु भेदत्वेन भेदविषयकत्वम्, अभेदबुद्धेः प्रतिबन्धकत्वात्, *तथाच न भेदधियाऽभेदबुद्धावप्रामाण्यग्रहास्कन्दनसम्भव* इति। नचैवमभेदबुद्धेरपि प्रमात्वं न सुग्रहम्, स्वविषयस्य स्वस्मिन्नभेदस्यापि तद्विषयत्वादिति वाच्यम्; सर्वाभेदसिद्धेरेवाभिलषितत्वेन प्रमात्वाग्रहस्याकिञ्चित्करत्वात्, ममाविद्यकभेदेनापि निर्वाहाच्चेति भावः। घटो न पट इतिधीसमये तस्याः स्वविषयभेदग्राहकाभावं स्फुटयति नहीति। आदिना भेदो ग्राह्यः। अहं घटपटभेदधीः। मत्तः = तादृशधियः। पटाच्चेति ताविति च भेदस्याप्युपलक्षणम्, तस्यापि विषयत्वात्। स्वप्रकाशत्वपक्षे घटादिवत्स्वस्यापि स्वविषयत्वात् स्वस्य घटादितो भेदग्रहस्य स्वेनैव सम्भवेन न तत्र श्रुतिः सावकाशेत्यत आह स्वप्रकाशतापीति। स्वस्य स्वविषयकत्वमपीत्यर्थः। स्वमात्रे साक्षिणी = स्वज्ञानत्वेतराविषयकत्वनियतम्, स्वात्मानं तद्वृत्ति तत्प्रकारकज्ञानत्वं च विषयीकुर्वाणमपि ज्ञानं तदितराविषयकत्वात् स्वस्य स्वविषयभेदं विषयीकर्तुमक्षममित्यर्थः। अन्यथा = स्वस्मिन् स्वविषयभेदस्यापि विषयीकरणे। तत्तदपि स्वप्रकाशकुक्षौ निक्षिपन्ती = ज्ञानान्तर्भावेनैव तत्तद्विशिष्टविषयताया निरूपिका। घटाद्भिन्नं पटं जानामीत्याकारैव स्वप्रकाशधीर्वाच्या, तत्र चाश्रयतया आत्मन एव विषयविधया च घटपटतद्भेदानामेव ज्ञानात्मना च स्वस्यैवोल्लेखात्स्वानुयोगिकस्वविषयप्रतियोगिकभेदस्य तत्र भानार्थमुक्तत्रये कचिदन्तर्भावो वाच्यः, स च ज्ञाने एव

नच तया धिया स्वस्य स्वविषयस्य च स्वरूपावगाहने स्वरूपलक्षणो भेदः प्रकाशित एव स्यादिति वाच्यम्; 'पुरोवर्ति रजतमि'ति भ्रान्तौ पुरोवर्त्यात्मनो रजतात्मनश्च प्रकाशे भेदग्रहापत्तेः। धर्मविशेषमन्तर्भाव्य स्वरूपस्य भेदत्वे धियोऽपि तथा स्यादिति सैव धीर्न तत्प्रकाशः, तस्मिन्सन्निकर्षापेक्षायां धियः प्राक्तदसम्भवात्।

---

युक्तः, तस्यानुयोगित्वात्, भेदस्यानुयोगिस्वरूपतायाश्चान्यत्र क्लृप्तत्वात्। तथाच घटपटतद्भेदप्रतियोगिकभेदस्य ज्ञानत्वे प्रतियोगिनामपि तत्त्वमित्यद्वैतप्रसङ्गः, भेदस्य सप्रतियोगिकस्वरूपत्वात्, उपलक्षणत्वे प्रतियोगिनां तद्विनिर्मुक्तस्यापि भेदस्य भेदत्वेन प्रत्यक्षप्रसङ्गात्। ज्ञाने एवान्तर्भाव इत्यस्याविनिगम्यत्वे वा घटाद्यन्यतमरूपत्वेऽपि तादृशभेदस्य घटपटतद्भेदानामपि घटाद्यन्यतमाभेदप्रसङ्ग इति भावः। एवमन्यान्यविषयकबुद्धीरादाय सर्वाद्वैतलाभः, तदभिन्नाभिन्नस्य तदभिन्नत्वध्रौव्येण चैकात्मतामापन्नानां परस्पराभेदबोधसम्भव इति द्रष्टव्यम्।

**स्वस्य स्वविषयस्य चेति**। अनुयोगिप्रतियोगिस्वरूपद्वयं भेद इत्याशयेनेदम्, परस्पराभावत्वानुरोधात्, अन्यथाऽनुयोगिस्वरूपावगाहनस्यैव प्रकृतोपयोगितया वक्तव्यत्वापातात्। अनुयोगिमात्रस्वरूपत्वेऽपि बुद्धौ विषयभेदस्य, विषये च बुद्धिभेदस्य प्रतीतत्वप्रदर्शनार्थमिदमुक्तमिति तु युक्तम्, अन्यथैकभेदग्रहेऽप्यपरभेदस्याग्रहीतत्वात् श्रुतिर्लब्धपदा स्यादिति ध्येयम्। **भ्रान्तौ** = भेदाग्रहनिबन्धनव्यवहारप्राक्क्षणे, व्यवहारश्चाभिलापादिरूपो नतु ज्ञानरूपः तेन ज्ञानाविषयकस्य रजतमित्याद्याकारकज्ञानस्य तन्मतेऽप्रसिद्धावपि न क्षतिः। **भेदग्रहापत्तेरिति**। तथाच भेदाग्रहनिबन्धनव्यवहाराभावप्रसङ्गो मा भूदिति स्वरूपस्य भेदत्वमयुक्तमिति भावः। उक्तप्रसङ्गपरिहाराय वैधर्म्यालिङ्गितस्वरूपस्यैव भेदत्वमुपेयम्, तज्ज्ञाने च भेदग्रह इष्ट एवेत्यत आह **धर्मेति**। **अन्तर्भाव्य** = स्वरूपे विशेषणीकृत्य भेदत्वे = भेदत्वोपगमे। तेन न ल्यपोऽसङ्गतिः। **तथा स्यात्** = वैधर्म्यालिङ्गितमेव स्वरूपं भेदः स्यात्। **सैव धीः**=घटपटभेदधीः। **न तत्प्रकाशः** = न वैधर्म्यविषयिणी। यद्यपि ज्ञानत्वं वैधर्म्यं प्रभाकरमते ज्ञानमात्रविषय एव, तथापि तस्याग्रे दूषणीयत्वाभिप्रायेणेदमुक्तम्। अतएवाह **तस्मिन्निति**। ज्ञानत्वरूपवैधर्म्ये इत्यर्थः। सन्निकर्षोऽन्वयनुयोगित्वं ससम्यर्थः। स्वसंयुक्तसमवेतसमवायलक्षणो मनसः सन्निकर्षो ज्ञानत्वस्य मानसप्रत्यक्षोपपत्तये वक्तव्यः, अन्यथा प्रकारान्तरेण भेदधीविषयतायास्तदंशेऽसम्भवात्; किन्तु बुद्ध्युत्पत्तेः पुरा बुद्धिनिष्ठसमवेतत्वघटितोक्तसन्निकर्षस्याप्यसम्भव एवेति कथं तदंशे भेदधियो मानसत्वमपीत्यर्थः। ज्ञानस्य ज्ञानत्वेनैव स्वविषयत्वं नतु ज्ञानत्वांशे मानसत्वमित्याशयेनाह **आत्मवदिति**। आत्मशब्दः स्वपरः। ज्ञानस्य जिज्ञासितग्राह्यात्मधर्मत्वे संस्कारवदमानसत्वम् अजिज्ञासितग्राह्यत्वे ज्ञानपरम्परानुपरमापत्तिरिति न मानसत्वमिति न मनः सन्निकर्षापेक्षेति भावः। आत्मधर्मे ज्ञानत्वे प्रत्यक्षत्वार्थमिति शेषः। ग्रहणत्वं = अनुभवत्वम् स्मरणान्यज्ञानत्वमिति यावत्। प्रमात्वं = विशेष्यावृत्त्यप्रकारकज्ञानत्वं, तेन तद्वति तत्प्रकारकज्ञानत्वस्य प्रभाकरमते ज्ञानमात्रविषयत्वेऽपि न क्षतिः। आदिना अगृहीतासंसर्गकधर्मधर्मिविषयकैकज्ञानत्वस्य सङ्ग्रहः। **तथैव स्यात्** = सन्निकर्षमनपेक्ष्यैव बुद्धेरनुभवत्वादिविषयकत्वावच्छेदेन प्रत्यक्षता स्यात् तथा च पुरोवर्तिविषयकरजतविषयकज्ञानयोरनुभवत्वस्मृतित्वाभ्यामगृहीतभेदयोः प्रवर्तकत्वमिति तव सिद्धान्तो व्याहन्येत, निरुक्तप्रमात्वादेर्ज्ञानविशेषे विप्रतिपत्तिश्च न स्यादित्यर्थः। यदि तु—'जानामी' त्युल्लेखमहिम्ना ज्ञानत्वेनैव ज्ञानस्य स्वविषयत्वम्, तत्तासम्प्रमोषहेतुदोषबलादेव 'रजतं स्मरामी' त्येवं न स्मृतित्वोल्लेखः, स्मर-

आत्मवदात्मधर्मेऽपि सन्निकर्षानपेक्षा सेति चेन्न; ग्रहणत्वस्मृतित्वप्रमात्वादावपि तथैव स्यादिति।

तदेवं सा बुद्धिः श्रुत्या घटपटात्मतया व्यवस्थाप्यमाना कथमात्मनः स्वस्मादेव भेदे प्रमाणीभवितुं प्रभवतीति बाधिकायां बुद्धौ घटपटयोर्भेदे प्रमात्वाभावमासादयन्त्यां श्रुतिस्तत्रतत्राप्रतिद्वन्द्वितयासङ्कुचितस्वतःप्रामाण्यबललब्धतत्तदर्थैक्यान्यथानुपप-

---

पान्यत्वविशेष्यावृत्त्यप्रकारकत्वादिविशेषणस्य प्रागनुपस्थितेस्तु स्मरणान्यत्वविशिष्टज्ञानत्वादेर्न भानप्रसङ्गः, सामग्रीसत्त्वासत्त्वाभ्यां विशेषात्, तथा च ज्ञानत्वालिङ्गितस्वरूपस्य भेदात्मकस्य ग्रहे न बाधकमित्युच्यते तदा मूलमित्थं व्याख्येयम्—तस्मिन् = तादृशस्वरूपस्य भेदत्वेन रूपेण ग्रहार्थम्। सन्निकर्षापेक्षायां=प्रतियोग्यादिज्ञानविधया कारणीभूताया विषयतद्बुद्ध्योर्बुद्धेरपेक्षायां 'घटाद्भिन्नं पटं जानामी' तिधियः प्राक् तादृशबुद्धेरभावेन नोक्तधियः स्वस्य स्वविषयस्य च भेदविषयकत्वसम्भवः। कार्यताकारणतावच्छेदकयोः प्रतियोग्यादिबुद्धित्वभेदबुद्धित्वयोरेकत्रानुपपत्तेः। आत्मवत् = स्वविषयितायामिव आत्मधर्मेऽपि = ज्ञानत्वविशिष्टस्य भेदत्वावच्छिन्नविषयितायामपि सन्निकर्षानपेक्षा = अन्यत्र क्लृप्तकारणानपेक्षा सा धीरपरोक्षा। यथाहि घटमहं जानामीति बुद्धिं प्रति विशेषणतावच्छेदकप्रकारकज्ञानविधया क्लृप्तकारणताकं घटविषयकज्ञानत्वप्रकारकज्ञानं विनैव तादृशबुद्धिः स्वविषया स्वप्रकाशवादिनोपेयते तथा भेदत्वेन रूपेण स्वरूपापरोक्षत्वेऽपि प्रतियोग्यादिज्ञानं तत्सामग्रीं वा विनैव स्यादित्यभिमानः। एवं सति विशेषणोपस्थितेस्तत्सामग्र्या वा विरहेऽपि स्मरणान्यज्ञानत्वादेर्भानं स्यादिति वदन्नभिमानं निराकरोति ग्रहणत्वेति। घटाद्भिन्नं पटं जानामीति बुद्धौ घटपटयोर्भेदस्य भेदत्वेनोल्लेखेऽपि ज्ञानतद्विषययोर्भेदो न तेन रूपेणोल्लिख्यते इति तस्य तादृशबुद्धिविषयतोपगमेऽनुभवविरोधोऽपि द्रष्टव्यः, एवं स्वविषयत्वपक्षे घटाद्भिन्नः पट इति प्रतीतेरनुभूयमानाया अपलापप्रसङ्गश्चेति।

घटेति भेदस्याप्युपलक्षणम्। बुद्धिः = घटपटभेदबुद्धिः। आत्मनः = स्वस्य। प्रमाणीभवितुं प्रभवति = प्रमाणतया ज्ञातुं शक्यते। घटपटयोर्बुद्ध्यात्मकत्वप्रतीतेरिदानीमप्रामाण्यप्रकारकग्रहाविषयत्वेन प्रामाण्यप्रकारकग्रहविषयत्वसम्भवात् घटपटभेदबुद्धेर्भेदांशे प्रामाण्यग्रहानुपपत्तेरिति भावः। इति = उक्तरीत्या बुद्धिघटाद्योरभेदविषयकत्वावच्छेदेनाद्वैतबुद्धेः प्रामाण्यग्रहास्कन्दितत्वेन भेदबुद्धेर्घटपटभेदविषयकत्वावच्छेदेन प्रामाण्यप्रकारकग्रहविषयत्वासम्भवात्। बाधिकायां = बाधकत्वेनाभिमतायाम्। प्रमात्वाभावमासादयन्त्यां=अप्रामाण्यग्रहास्कन्दितायां। विरुद्धार्थयोरेकतरस्य प्रामाण्यग्रहास्कन्दितत्वेऽपरस्याप्रामाण्यग्रहास्कन्दितत्वसम्भवात्। श्रुतिः = श्रौतधीः। तत्रतत्र = बाध्यबाधकत्वाभिमतबुद्ध्योः बाधकत्वाभिमतबुद्धितद्विषययोश्चाभेदव्यवस्थापने। अप्रतिद्वन्द्वित्वेन = विरोधिमानान्तरशून्यत्वेन। अप्रामाण्यग्रहानास्कन्दितभेदधिय एव विरोधित्वसम्भवादिति भावः। असङ्कुचितम् = अनपोदितम्, स्वप्रकारकप्रतीतिविशेष्येऽभावप्रतियोगित्वेनाप्रतीतमिति यावत् स्वं प्रामाण्यम्। प्रामाण्ये स्वाश्रयज्ञानविषयकग्रहविषयत्वव्याप्यताया एव तादात्म्यसम्बन्धावच्छिन्नाया ज्ञप्तिस्वतस्त्वात् स्वप्रकारकप्रतीतिविशेष्यताया अभेदबुद्धावावश्यकत्वात्। उत्पत्तिस्वतस्त्वस्य तु सङ्कोचो निवृत्तिरूप एव स्यात् किन्तु स न विरोधिमानान्तरप्रयोज्यः, दोषासमवहितज्ञानसामान्यसामग्र्याः प्रामाण्यस्योत्पन्नत्वेन तदपसारणानुपपत्तेरिति भावः। स्वतः प्रामाण्यमेव बलं तेन लब्धं = तदाश्रयीभूतश्रौतधिया विषयीकृतं तत्तदर्थैक्यं = बाध्यबाधकयोर्बाधकतद्विषययोश्चैक्यं तस्यान्यथानुपपत्तिः = बाध्यबाधकभावाभावं विषयाणां परस्पराभेदं विना चानुपपत्तिः, बाध्यबाधकभावासम्भवस्यापि फलतो विषयैक्ये एव पर्यवसानं विषयाणां भेदे ह्येकबाधकबुद्धेरतदैक्या-

त्तिसहायसम्पदजय्या तयोरप्यभेदं बोधयन्ती न प्रतिहन्तुं शक्येति न क्वचिदपि प्रतिहतप्रसरा सती सर्वाद्वैतप्रमापिकेति ।

भेदप्रमान्यथानुपपत्त्या च वैपरीत्यमशक्यम्, तत्राद्वैतश्रुत्या सन्दिह्यमानस्य प्रमात्वस्यैवासिद्धेः; भेदधीमात्रस्य च द्विचन्द्रादिबोधवदन्यथाप्युपपत्तेः । एकमित्युपादाय

---

सम्भवेन घटपटभेदविषयकत्वेन तस्या प्रमात्वेन ग्रहीतुं शक्यतया अभेदबुद्ध्यभिन्नतया ग्रहीतुमशक्यत्वात् बाध्यबाधकभावोपपत्तिः । तादृशानुपपत्तिरेव सहायसम्पत् = अनुग्राहिका, तत्त्वं च प्रकृते श्रुतेः सर्वाभेदांशे प्रामाण्यनिश्चायकतयैव, सर्वाभेदबोधस्य श्रुत्यैव सिद्धत्वात् । तत्प्रयुक्तं यद्भेदबुद्ध्यबाध्यत्वरूपमजय्यत्वं तद्वती तयोः = घटपटयोरप्यभेदं बोधयन्ती = विषयीकुर्वाणा न प्रतिहन्तुं शक्या = घटपटाभेदविषयकत्वावच्छेदेनाप्यप्रमात्वेन ग्रहीतुमशक्या । शुक्तितद्विषयाद्यभेदविषयकत्वावच्छेदेन तु न पूर्वमप्यप्रमात्वेन गृहीतेत्याशयेनापि शब्दः । उपसंहरति न क्वचिदपीति । न सतीति योजना । किञ्चिद्भेदविषयकत्वावच्छेदेनापि भ्रमत्वेन न गृहीता सर्वाद्वैतप्रमापिका = सर्वाभेदविषयकत्वावच्छेदेन प्रमात्ववती । "अत्यन्तासत्यपी"ति वक्ष्यमाणन्यायेन सर्वाभेदबोधस्य प्रागुत्पन्नत्वेन भेदधीप्रयुक्तस्य तत्तदंशेऽप्रमात्वग्रहस्य विघटनद्वारा सर्वाभेदांशे प्रमात्वस्यैव व्यवस्थापनीयत्वात् । अतएव—चैत्रस्य घटपटभेदज्ञानं, मैत्रस्य कटकुटभेदज्ञानं देवदत्तस्य नटविटभेदज्ञानमिति तत्तदन्यसर्वाद्वैतार्थत्वे श्रुतेर्वाक्यभेद इति—निरस्तम् । नच—सर्वाभेदेऽद्वैतग्रहस्य द्वैतोपमर्दकत्वं कथं, तेन द्वैतस्यापि स्वविषयाभिन्नतया विषयीकरणादिति-वाच्यम्, अप्रामाण्यग्रहानास्कन्दितस्याद्वैतग्रहस्यैव द्वैतोपमर्दरूपत्वात्; तस्य चोक्तरीत्या सम्भवादिति भावः ।

अथ शुक्तितद्विषयाद्यभेदांशे प्रमात्वान्यथानुपपत्तिसहकारेण यथा घटपटाद्यभेदांशेऽपि श्रौतबोधस्य प्रमात्वं त्वयोक्तम्, तथा घटपटभेदप्रतीतेः प्रमात्वान्यथानुपपत्त्या शुक्तितद्विषयादिभेदोऽपि कल्प्यताम्, अन्यथा तदभिन्नाभिन्नेति न्यायेन घटपटयोरप्यभेदापत्त्या तद्भेदप्रतीतेः प्रमात्वं न स्यात्, नचेष्टापत्तिः, श्रुतिप्रामाण्यस्यानिर्णीतत्वेन मानान्तरस्य चाभेदासाधकत्वेन बाधविरहाद्भेदप्रतीतेः प्रमात्वस्यावश्योपेयत्वादित्यत आह भेदप्रमेति । भेदप्रतीतेः प्रमात्वेत्यर्थः । वैपरीत्यं = घटपटयोरभेदबाधनम् । तत्र = भेदप्रतीतौ । असिद्धेः = अनिश्चयात् । अभेदप्रतीतावपि भेदप्रतीत्या प्रमात्वं सन्दिग्धमेवेति विनिगमनाविरहमाशङ्क्याह भेदधीमात्रस्येति । मात्रशब्देन निर्णीतप्रमात्वकधियो व्यवच्छेदः । साकल्यार्थको वा सः । चस्त्वर्थः । तथाचान्यत्र क्लृप्ताप्रमात्वकसजातीयत्वेन घटपटादिभेदबोधस्यैवाप्रमात्वं कल्पयितुमुचितम् न तु श्रौतबोधस्य, तज्जातीयस्य क्लृप्ताप्रमात्वकत्वाभावेन कल्पनागौरवात्, नच—कस्यचिच्छ्रौतबोधस्य सर्वथाऽप्रमात्वस्याक्लृप्तत्वेऽपि स्वार्थेऽप्रमात्वेनान्यपरत्वं "आदित्यो यूप"इत्यादौ क्लृप्तमेवेति प्रकृतेऽपि तथास्त्विति-वाच्यम्; अद्वैतश्रुतावन्यपरताप्रयोजकरूपविरहात्, अनन्यप्रकरणस्थत्वात्, षड्विधलिङ्गैरद्वैतेऽवधृततात्पर्यकत्वात्, अन्यथा नेतुमशक्यत्वात् । "आदित्यो यूप"इत्यादिश्रुतिर्हि कर्मप्रकरणस्था व्यवहारदशायामेव परीक्षितप्रत्यक्षविरुद्धेत्यन्यथैव नेतुमर्हा । स्तुतिद्वाराऽन्यशेषतामासादयन्ती हि सा नाभेदप्रमामाधत्ते, प्रत्यक्षाविरुद्धैरेव गुणैः स्तुतिसम्भवेन तदर्थं प्रत्यक्षविरुद्धार्थकल्पनानौचित्यात् । प्रातिभासिकप्रामाण्यस्याऽप्रमाणवृत्तित्वात् व्यावहारिकप्रामाण्यस्य चाद्वैतस्य व्यवहाराविषयत्वेनाद्वैतश्रुतावसम्भवेन परिशेषात्तात्त्विकप्रामाण्यस्यैव वाच्यत्वात् । भेदबुद्धेस्तु भेदस्य व्यवहारविषयत्वेन व्यावहारिकप्रामाण्येनैवोपपत्तिरित्यद्वैतसिद्ध्यादौ विस्तरः । नच—घटपटभेदधीर्भ्रमो भेदधीत्वात् चन्द्रभेदधीवदिति मूलाभिप्रेतानुमाने गृहीतबाधत्वमुपाधिरिति—वाच्यम्; अद्वैतश्रुतेरन्यथ नयनासम्भवेन पक्षेऽपि श्रु त्या

यदेवकारमप्युपादत्ते श्रुतिः "एकमेवेदमि"तिरूपा, तदैकान्तिकमैक्यं बोधयतीति भेदाभेदेनाप्यशक्यसमर्थनं घटपटादिभेदग्राहिप्रत्यक्षादिप्रामाण्यमिति ।

बाधग्रहात्, भ्रमत्ववद्गृहीतबाधताया अपि साधनसम्भवाच्च, नहि केनापि न बाधो गृहीत इत्यर्वाग्दर्शा प्रत्येतुं शक्यते इति । यत्तु सर्वाभिन्नत्वस्य श्रुतिबोधितस्य स्वस्मात्सर्वाभेदमादायाप्युपपत्तिः, "नेह नाने"ति श्रुतेरपि किञ्चिदपि न नाना किन्तु प्रत्येकमेकमेवेत्यर्थकतयोपपत्तिः, प्रमेयत्वादिनाऽभेद एव वा श्रुत्यर्थोऽस्तु 'तानेव तित्तरीनि'त्यादाविव रूपान्तरेण साजात्यमादाय वा सोऽस्तु, तथा च श्रुतेरन्यथानयनासम्भवो नेति; तत्तुच्छम्. सप्रयोजनानधिगताबाधितार्थकतायामेव श्रुतेः प्रामाण्यसम्भवेन निष्प्रयोजनाधिगतार्थपरत्वे प्रामाण्यानुपपत्तेः, स्वाध्यायाध्ययनविध्यधीनग्रहणानुपपत्तेश्च नहि प्रामाण्यविघटनमेव प्रमाणस्यान्यथानयनम् । एतेन– एक एव नरपति'रित्यादाविव सजातीयमात्रनिषेधकत्व"मेकमेवेति" श्रुतेः, ब्रह्ममात्रावशेषस्य विवक्षितत्वे "ब्रह्मैवैकमिति" वचनव्यक्तेरापत्तेरिति–निरस्तम्; एकशब्दादेकवचनबलादेव वा सजातीयनिषेधबोधसम्भवेन एकमेवाद्वितीयमिति पदत्रयवैयर्थ्यप्रसङ्गात्, सजातीयविजातीयस्वगतभेदनिषेधकतयैव तत्साफल्यात् । अतएव 'ब्रह्मैवैकमिति' वचनव्यत्ययभावेऽपि न क्षतिः । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाश्रुतेश्च ब्रह्ममात्रावशेषतां विनानुपपत्तेस्तत्रैव श्रुतितात्पर्यावधारणात् । एतेन —तात्पर्याधीनं श्रुतिप्रामाण्यमतः कुत्रार्थे तात्पर्यमित्यनिश्चयात्, दुर्बलायाः श्रुतेरेव सर्वत्र प्रत्यक्षेण बाध इति–निरस्तम्; तात्पर्यस्य निश्चेतुमशक्यत्वे मीमांसावैफल्यप्रसङ्गाच्च । तस्मात्—वेदसिंहभयोद्विग्ना भेदबुद्धिमृगीततिः । मोहारण्येऽपि विश्वासं कथमासादयिष्यति ॥ अन्यचिन्ताक्षसा त्यक्त्वा मीमांसामानमानिनी । लप्स्यते विमलानन्दं श्रुतिरात्मपरापरा ॥ उपादाय = स्वघटकीकृत्य एकमितिपदघटिता सतीति यावत् । उपादत्ते = स्वघटकीकरोति एवकारघटिता भवतीति यावत् । ऐकान्तिकम् = भेदासमानाधिकरणम् । भेदाभेदेन = भेदाभेदौ स्वीकृत्य । किञ्चैकत्र भेदाभेदौ विरुद्धावित्यपि द्रष्टव्यम् । तथाचैकतरस्य मिथ्यात्वे द्वैतवादो वाऽद्वैतवादो वा, द्वैताद्वैतवादस्य तु क्वावकाशः । नच रूपभेदेनाविरोधः, रूपयो रूपिभ्यां भेदाभेदौ विना रूपभेदेन विरोधस्य परिहर्तुमशक्यत्वात् अन्यथाऽन्यभेदेनापरभेदोपगमेऽतिप्रसङ्गात् । नचास्तु रूपयोः स्वस्वाश्रयेण भेदाभेदः; एवं सति तयोरपि रूपान्तरेणैव भेदाभेदयोरविरोधस्योपपादनीयत्वे कथन्नानवस्था, स्वरूपेणैव वा क्वचिद्भेदाभेदे कथं न विरोधस्तत्रैव दत्तपदः । नचेष्टव्यैवानवस्था, अननुभूयमानरूपपरम्परोपगमानुपपत्तेः, किञ्चिद्धि वस्तु स्वतो व्यावृत्तमिति न्यायात् । न च भेदाभेदयोः सामानाधिकरण्यान्यथानुपपत्त्या रूपपरम्परा कल्पनीया, भेदस्याविद्यकत्वकल्पनयैवोपपत्तेरन्यथानुपपत्त्यप्रसरात्, अननुभूयमानानन्तरूपकल्पनापेक्षयाऽनुभूयमानभेदे एवाविद्यकत्वकल्पनायां लाघवात् नचानवस्थाभियैकावच्छेदेनैव तावुपगन्तव्यौ गुणगुण्यादिस्थले इवेति वाच्यम्; गुणगुण्यादिस्थलेऽप्यवच्छेदकभेदेनैव तयोर्वक्ष्यमाणत्वात् । एकावच्छेदेन तत्र तयोरुपगमेऽपि सामानाधिकरण्यप्रतीतेराविद्यकभेदमादायैवोपपत्तेः सत्ययोस्तयोर्विरुद्धयोः सामानाधिकरण्यकल्पनानवकाशात् । अतएव "विरुद्धमिति नः क्व प्रत्ययो यत्प्रमाणविपर्ययेण वर्तते" इति न्यायावतारोऽपि न । एतेन–"द्वासुपर्णे"त्यादिभेदश्रुतीनामपि दर्शनात् "तुल्यं तु साम्प्रदायिकमि"ति न्यायेन तासामन्यथानयनानौचित्यात् चिदचिदात्मकशरीरविशिष्टस्य ब्रह्मण ऐक्यमेव "एकमेवाद्वितीयमिति" श्रुतिप्रतिपाद्यम्, देहदेहिनोर्भेदविवक्षया 'ममेदं शरीर'मितिवद्भेदश्रुतेः, अभेदविवक्षया 'चाहं गच्छामी'तिवदभेदश्रुतेरुपपत्तेः, तथाच विशिष्टाद्वैतात् जीवजडयोरपरिलोपो नेति–निरस्तम्; तथाहि–विशिष्टस्य चिदचिद्ब्रह्मभिर्व्यतिरेको वाऽव्यतिरेको वा, आद्ये चतुष्टयवादो नत्वद्वैतवाद इति कथमेकमेवाद्वितीयमिति श्रुतिसङ्गतिः । द्वितीयेऽपि त्रितयवाद-

बुद्धेर्विरम्य व्यापाराभावात्कथमित्थमिति चेन्न; श्रुतितो द्रागेव जातायाः सर्वविषयाया अद्वैतधियोऽस्मद्बुद्धय एवंविधविचारसोपानपरम्परामारोहन्त्यो नानाविषयेषु तत्प्रामाण्यविषयाः क्रमेण परिनिनिष्ठन्तीत्युच्यमानत्वात्। ननु यदि नाम प्रत्यक्षवित्त्या तया घटपटभेदोल्लेखिन्या स्वात्मना सह घटपटयोर्भेदो न गोचरीक्रियते तावता कथं तस्याः स्वविषयेण सहाद्वैते श्रुतिः प्रामाण्यमासादयितुमीष्टे, बुद्ध्यन्तरेण तया सार्द्धं घटपटयोरपि भेदमुल्लिखता तत्राद्वैतश्रुतेर्बाधादेव। मैवम्। तर्हि तस्या अपि विषयमापाततः परित्यज्य ययैवापरया बुद्ध्या घटपटभेदबुद्धेर्घटाद्य पटाद्य भेदो विषयीक्रियते तस्याः स्वविषयेण सहाद्वैते श्रुतिः प्रामाण्यमवलम्ब्य लब्धपदा घटपटतद्भेदबुद्धिभिः सह द्वितीयाया बुद्धेरभेदे पर्यवस्यन्ती सर्वेषामेव तेषामभेदे विश्राम्यति। एवञ्च सति

एवेति कथमुक्तश्रुतिसङ्गतिः। व्यतिरेकाव्यतिरेकपक्षस्तु त्वयाऽनुपगतः, उक्तरीत्यैव निरसनीयश्च। दुर्वचश्च शरीरशरीरिभावः। तस्मादौपाधिकभेदायत्तद्वित्वमेवोक्तश्रुत्यानूद्यते इति युक्तम्। एवं शुद्धाद्वैतवादोऽप्यसङ्गतः, ब्रह्मणः परिणामित्वोपगमेन शून्यवादापत्तेः। नच—"श्रुतेस्तु शब्दमूलत्वादिति" न्यायेन ब्रह्मणः परिणामित्वं नित्यत्वं चोभयमपि श्रुतिसामर्थ्यादास्थेयमिति वाच्यम्; ब्रह्मणः परिणामित्वस्य श्रुत्यसिद्धत्वात्, "सच्च त्यच्चाभवदि"त्यादिवचसां विवर्तवादमादायैवोपपत्तेर्युक्तिविरुद्धार्थमादायोपपादनानौचित्यात्, नहि प्रमाणान्तरविरोधपरिहारेण सङ्गमयितुं शक्योऽर्थस्तद्विरोधेन सङ्गमनार्हः, सर्वमीमांसोपमर्दापत्तेरिति भावः।

बुद्धेरिति। क्षणिकत्वादिति शेषः। अतएवोक्तं भट्टपादैः—"तस्माज्जन्मैव विषये बुद्धेर्व्यापार इष्यते।" इति। इत्थं = क्रमेणाद्वैतबोधनम्। प्रामाण्यग्रहक्रमो यद्यप्युक्तस्तथाप्यद्वैतबोधक्रमोक्तिभ्रमेणेयमाशङ्का। भ्रमं निराकरोति श्रुतित इति। द्रागेव = सकृदेव। सर्वविषयाया अद्वैतधियः = सर्वाद्वैतधियः, विषयत्वं विचारान्वयि षष्ठ्यर्थः। सोपानपरम्परा = कक्ष्याक्रमः। तदारोहणं तदधीनक्रमिकोत्पत्तिकत्वम्। नानाविषयेषु = तत्तद्भेदविषयकत्वावच्छेदेन। तत्प्रामाण्येति। अद्वैतधीप्रामाण्येत्यर्थः। परिनिनिष्ठन्ति = अप्रामाण्यग्रहानास्कन्दिताद्वैतबोधौपयिकताश्रयाः। बुद्ध्यन्तरेणेति उल्लिखतेत्यन्वयः विषयीकुर्वतेत्यर्थः। तया = घटपटभेदधिया सार्द्धं = तदनुयोगिकं। तत्र = भेदधीतद्विषयाभेदविषयकत्वावच्छेदेन। बाधात् = अप्रामाण्यज्ञापनात्। तस्या अपि विषयमापाततः परित्यज्य = भेदधियो विषयेण सह योऽभेदस्तद्विषयकत्वावच्छेदेन प्रामाण्यप्रकारकग्रहविशेष्यतामनासाद्य। यया = घटपटभेदधीः स्वविषयाद्भिन्नेत्याकारया। बुद्धेरिति भेदान्वयानुयोगित्वं षष्ठ्यर्थः। अद्वैते = अद्वैतविषयकत्वावच्छेदेन श्रुतिः = श्रौतधीः। प्रामाण्यमवलम्ब्याभेदे पर्यवस्यन्तीत्यन्वयः। अप्रामाण्यप्रकारग्रहविशेष्यतानाश्रयताप्रयुक्तं यद्द्वितीयबुद्धितद्विषयाभेदविषयकत्वावच्छेदेन प्रामाण्यप्रकारकग्रहविशेष्यतारूपं पर्यवसानं तद्वतीत्यर्थः। प्रतिबन्धकस्याप्रामाण्यप्रकारकग्रहस्याभावे प्रामाण्यप्रकारकग्रहस्य सम्भवात् तस्य च सर्वाभेदे प्रामाणिकत्वसन्देहविघटनार्थमावश्यकत्वादिति भावः। लब्धपदा = द्वितीयधीतद्विषयाभेदांशे प्रमात्वान्यथानुपपत्त्यात्मकसहकारिरूपं यत्पदं तद्विशिष्टेत्यर्थः। सर्वेषामेव तेषां घटपटादीनां विषयाणां परस्परमभेदे विश्राम्यति = निरुक्तपर्यवसानाश्रयः। अनेकेषामेकात्मतायाः परस्परैकतां विनाऽनुपपत्तिः भेदविषयकत्वेन ज्ञातुमशक्या विपर्यस्ताभेदा धीर्नाभेदधीप्रतिबन्धिकेत्यादिकं पूर्वोक्तं स्मरणीयम्। अथवा प्रमात्वस्वतस्त्ववादे प्रामाण्यमवलम्ब्येति औत्सर्गिकप्रमात्वप्रकारकनिश्चयविशेष्यताभिप्रायम्। लब्धपदत्वं चाप्रामाण्यज्ञापकासमवहितत्वम्। पर्यवसानं चाबाधितप्रामाण्यकत्वम्। विश्रान्तिस्तु

यत्रैव गत्वा बाधबुद्धिपरम्पराविच्छेदो विषयान्तरसञ्चारोच्छेदभयादनवस्थाभयाद्वाऽभ्युपेयस्तस्यामेव बुद्धौ पदमारोप्याऽद्वैतश्रुतिः सर्वतत्तद्विषयविषयिप्रवाहमद्वैते स्थापयन्ती न केनापि प्रमाणेन क्वचिदपि विषये बाधितुं शक्या । तस्मात्—

सुदूरधावनश्रान्ता बाधबुद्धिपरम्परा ।
निवृत्तावद्वयाम्नायैः पार्ष्णिग्राहैर्विजीयते ॥ ८ ॥

न च यत्र तस्य प्रतिपत्तुर्बुद्धिधाराविश्रान्तिस्तत्र पुरुषान्तरबुद्धिर्भेदे प्रमाणं स्यात् । तथापि पुरुषान्तरेण भिन्नतया सा प्रतीयते इत्यत्र प्रमाणं त्वया वाच्यम् । नहि तदपि पुरुषान्तरेणैव, नच सम्भाव्यमानम्, श्रौतेन निश्चयेन तन्निवर्तनात्; तथाप्यनवस्थाना-

---

निरुक्तान्यथानुपपत्तिप्रयुक्तप्रामाण्यप्रकारकनिश्चयविशेष्यत्वम् । एवं च सति = अप्रामाण्यग्रहविघटनौपयिकोत्कर्षातेर्जागरूकत्वे सति । सञ्चारो मनसो ज्ञानजनकत्वम् । तस्यामेव बुद्धौ पदमारोप्य = तद्बुद्धितद्विषयाभेदविषयकत्वावच्छेदेन प्रामाण्यप्रकारकनिश्चयविशेष्यतामाश्रित्य । अग्रिमाश्रयणे उत्तरकालीनत्वस्य ल्यबर्थस्यान्वयः । प्रवाहमद्वैते स्थापयन्ती = प्रवाहाद्वैतविषयकत्वावच्छेदेनोक्तनिश्चयविशेष्यताश्रयः । शक्येति । अद्वैतबोधे तादृशनिश्चयदशायां कस्यापि भेदग्राहिप्रमाणस्याप्रामाण्यप्रकारकग्रहानास्कन्दितत्वविरहादिति शेषः । सुदूरं = चरमभेदधीव्यतिरिक्तेषु विषयेषु धावनेन = तत्तद्भेदविषयीकरणेन श्रान्ता = सुषुप्त्यादिजनकादृष्टप्रतिबद्धा भेदधीधारा स्वनिवृत्तौ = चरमभेदधीतद्विषययोरगृहीतभेदकत्वप्रयुक्तबाधकन्यायोग्यत्वदशायां पार्ष्णिग्राहैः = पृष्ठतोवर्तिवैरिरूपेणाध्यवसितैर्विरुद्धविषयकत्वरूपविरोधितावच्छेदकरूपविशिष्टैरद्वयाम्नायैः = तज्जन्यबोधैः बाध्यते = अप्रमाणतया ज्ञाप्यते । नच—चरमबुद्धिज्ञाने चरमत्वव्याघातः, तदज्ञाने च कुत्र श्रुतेः पदारोपणम् श्रुतिप्रवृत्त्यर्थं त्वयैव तदुपस्थापने पुनश्चरमत्वव्याघातः; तदैव तयापि समं भेदग्रहश्चेति—वाच्यम्; शब्देन वा धीधारा क्वचिदुच्छिद्यते प्रवाहत्वादित्यनुमानेन वा चरमधियः प्रतीतावपि तस्या इदानीमुत्पत्त्यभावेन चरमत्वोपपत्तेः, तद्विषयकप्रत्यक्षस्य तवेदानीमनुत्पन्नत्वात्, तथाच तदनुयोगिकभेदस्त्वया न प्रत्यक्षीकर्तुं शक्यः, अनुयोगिप्रत्यक्षं विना भेदप्रत्यक्षासम्भवात्, अनुमानं तु स्यात् तच्चानुपदं मूले निरसनीयमिति भावः । तवेदानीं भेदग्रहस्येव ममाभेदग्रहस्यापि जातत्वात् तयोः परस्परविरोधितायाः अपि समत्वाच्चेत्यपि कश्चिदाह स्म ।

पुरुषान्तरेति । चरमत्वोक्तिस्तु स्वसामानाधिकरण्यस्वपूर्ववृत्तित्वोभयसम्बन्धेन ज्ञानविशिष्टज्ञानान्यत्वाभिप्रायेणेति भावः । भेदे प्रमाणं = चरमधीतद्विषयादिभेदविषयिणी भिन्नतया = स्वविषयज्ञानान्तरादिभिन्नतया । सा = चरमधीः । प्रमाणमिति । तथाच तत्रैवानुमानादौ प्रमाणे श्रौताभेदबोधस्य नाप्रामाण्यग्रहास्कन्दनम् । साक्षिणापि मानान्तरसापेक्षेणैव स्वस्मिन् स्वभिन्नभेदग्रहः, अन्यथाऽन्तः करणादिनाऽभेदभ्रमानुपपत्तेरिति भावः तदपि = उक्तार्थे प्रमाणमपि । वाच्यमित्यनुषज्यते । त्वयैव सह कथाप्रस्तावात्, पुरुषान्तरधीधाराया अपि क्वचिद्विश्रान्त्यावश्यकत्वाच्चेति भावः । सम्भाव्यमानमिति । भेदग्रहणमभेदग्रहाप्रामाण्यग्राहकं स्यादिति शेषः । एवं सति चरमधियः स्वविषयादितो भेदस्य सम्भावनैवाभेदनिश्चयस्य प्रतिबन्धिकेत्युक्तं स्यात्, तच्चासङ्गतमित्याह श्रौतेनेति । निश्चयेनेति । नवादिपदघटितविप्रतिपत्त्यादिवाक्यादाहत्य संशयस्य सत्प्रतिपक्षदीधित्यादावुक्तत्वेऽपि शब्दान्तरस्य निश्चयजनकत्वमेवेति भावः । तन्निवर्तनात् = भेदसम्भावनाप्रतिबन्धात् । भेदसम्भावना जातापि श्रौताभेदनिश्चयेऽप्रामाण्यग्रहमाधातुमशक्तेति तु तत्त्वम् । अतएव दीधित्यादौ विशिष्टपरामर्शस्यानुमितिकारणत्वे गौरवसम्भावनायाः प्रतिबन्धकत्वमाशङ्क्य "सम्भाव्यते ननु सम्भावनं प्रतिबन्धकमि"त्युक्तम् । अन्यथा

दिति। अथ ब्रूषे—यदा कियद्दूरं बुद्धिपरम्परया सा बाधिता भवत्यद्वैतश्रुतिः तदा तन्न्यायात् याऽपि बुद्धिः शेषं गत्वा नानुव्यवसीयते तत्रापि तद्बाधोऽवगम्यते यत्र सा बाध्यते तत्तुल्यन्यायत्वादन्तिमबुद्धेरपीति। मैवम्। किं कियतीषु बुद्धिषु व्याप्यव्यापकौ कावप्यवलम्ब्य व्याप्तिग्रहरूपयैव धिया शेषबुद्धौ बाधं व्युत्पादयसीत्यमद्वैतश्रुतेः? किं वा बुद्ध्यन्तरदृष्टव्याप्तिसनाथया पक्षधर्मं हेतुमुल्लिखन्त्या बुद्ध्याऽन्तिमबुद्धिविषयया?

घटत्वदण्डत्वादिसामान्यरूपेण कार्यकारणभावनिर्णयस्य विलोपापातादिति भावः। व्यभिचारशङ्कायां तर्कान्तरस्येवोत्कटैककोटिकसंशयरूपसम्भावनायामपि तर्कस्यानवस्थाव्यवस्थापकतायमाणस्य विघटकत्व-सम्भव इत्याशयेनाह तथापीति। सम्भावनायाः स्वविषयेण भेदस्यावगाहनं बुद्ध्यन्तरेणैव बाध्यमिति भावः। यत्तु—भेदसम्भावनामनुपनयतोऽद्वैतिनः श्रुतिविषयानुपन्यासः, उपनयतश्च यथा भेदसम्भावना-यामनवस्था, तथा तत्रतत्राऽभेदबोधनेऽपीति—तन्मन्दम्। श्रुतिघटककिञ्चनपदेनैव बोधनीयाभेदकस्योपस्थि-तत्वादद्वैतबोधस्य सर्वतोऽरन्नत्वात्। त्वया तत्राप्रामाण्यग्राहकतयोद्भाव्यमानस्य भेदसम्भावनस्यैवेदानी-मनवस्थापादनेन विघटनीयत्वात्। अन्यथा मदीयशङ्कायामिव तवोत्तरेऽप्यनवस्थेति ब्रुवाणश्चार्वाको वरा-कस्त्वया पुरुषायुषैरपि जेतुमशक्यः स्यात्। कियद्दूरं = चरमबुद्धिव्यतिरिक्ते। बाधिता = अप्रामाण्य-ग्रहास्कन्दिता. तन्न्यायात् = चरमधीव्यतिरिक्तधीरूपदृष्टान्तावगतव्याप्तेः। सा च बुद्धित्वे विषयभेद-निरूपिता। अधीनत्वं पञ्चम्यर्थोऽवगम्यते इत्यत्रावगमे, अग्रेऽध्याहृियमाणभेदग्रहे चान्वेति। शेषं गत्वा = सुषुप्त्यव्यवहितपूर्वक्षणोत्पत्तिकतामासाद्य। तत्रापि तद्बाधः = चरमबुद्धिनिष्ठमभेदधीबाध-कत्वमप्रामाण्यज्ञापकत्वरूपम्।, अवगम्यते इति। भेदग्रहद्वारेति शेषः। तेनात्रोक्तव्याप्तिग्रहरूपाया अनुमितिरूपाया वा धियोऽग्रे बाधात्मताभिधानस्य नासङ्गतिः, नहि बाधकताविषयकग्रहस्य बाधरूप-त्वमपि तु भेदविषयकस्यैव। दृष्टान्तपक्षसाध्यान्यभिधाय हेतुमभिधातुमाह यत्रेति। तत्तुल्यन्यायत्वात् = बुद्धित्वाविशेषात्। तथाच चरमबुद्धेरपि बुद्धित्वाद्बुद्ध्यन्तरवत्स्वविषयभिन्नत्वात् सम्भवत्यभेदग्रहाप्रा-माण्यज्ञापकत्वमिति भावः। व्याप्यव्यापकौ बुद्धित्वस्वविषयभिन्नत्वरूपौ। अवलम्ब्य = गृहीत्वा। व्याप्तिग्रहरूपया धियेति। बुद्धित्वव्यापकस्वविषयभिन्नत्वसमानाधिकरणं बुद्धित्वमिति धिये-त्यर्थः। अत्र व्यापकतागर्भेऽधिकरणत्वेन रूपेण चरमबुद्धेरपि प्रविष्टत्वात् तेन रूपेण तत्रापि स्वविषय-भिन्नत्वस्यात्यन्ताभावाप्रतियोगित्वग्रहात् तादृशव्याप्तिधियस्तत्रापि तेन रूपेण स्वविषयाभेदग्रहप्रति-बन्धकत्वसम्भवः, अभेदस्य भेदाभावरूपत्वात्। बुद्धित्वावच्छेदेनैव च स्वविषयाभेदग्रहस्य मया विघट-नीयत्वात्। किञ्च 'चरमधीः स्वविषयभेदाभाववतीति' बुद्धौ स्वविषयभेदव्यभिचारो बुद्धित्वे भासते, तत्र चरमधीत्वसामानाधिकरण्यस्य तादृशभेदाभावे भाने उक्तव्यभिचारभानस्यानिवार्यत्वात्। अतएव धर्मितावच्छेदकसामानाधिकरण्येनाभावविशिष्टबुद्धेर्धर्मितावच्छेदके प्रतियोगिव्यभिचारावगाहित्वं परा-मर्शगादाधर्यामुक्तम्। तथाच व्यभिचारबुद्धेर्व्यापकताग्रहप्रतिबध्यतायाः पक्षधरमिश्रादिभिः स्वीकारा-दस्मदभीष्टनिर्वाहः। किञ्चोक्तचरमधीविशेष्यकबुद्धेर्व्यभिचारधीरूपत्वे मूलस्थव्याप्तिग्रहपदेन स्वविषय-भिन्नत्वव्याप्यं बुद्धित्वमिति ग्रहोऽपि शक्यग्रहः। तस्य तादृशबुद्धिबाधकताया निर्विवादत्वात्। किञ्च बुद्धिः स्वविषयभिन्नेत्यवच्छेदकधर्मदर्शनस्यापि संसर्गतया व्यापकताविषयकत्वेन तादृशबुद्धि-प्रतिबन्धकतासम्भव इति भावः। द्वितीयकल्पे वक्ष्यमाणस्य दोषस्यात्रकल्पे न सम्भवः, व्यापकतादि-विषयकबुद्धौ स्वविषयाभेदग्रहस्यापि तादृशव्यापकतादिबुद्धिबाध्यत्वादिति द्रष्टव्यम्। श्रुतेरिति। निरूपितत्वं षष्ठ्यर्थो बाधान्वयी। व्याप्तिसनाथया = व्याप्तिग्रहजनितया व्याप्तिविषयिकया वा।

नाद्यः, व्याप्तिबुद्धिर्यदि विषयविशेषेऽपि स्वातन्त्र्येण बाधात्मिकोपेयते तदा सैव विशेषबुद्धिरपि स्यादिति गतमनुमानकथया। अथानुमितिमभ्युपैषि, तदा सा नात्मानमपि धर्मीकृत्य प्रवर्तते इति तत्रैव दत्तपदा सर्वामद्वैतश्रुतिः परम्परामालम्बते इत्युक्तमावर्तते।

---

पक्षधर्महेतुमुल्लिखन्त्या = हेतोः पक्षवृत्तिताविषयिकया। स्वविषयभिन्नत्वव्याप्यबुद्धित्ववती चरमबुद्धिः स्वविषयभिन्नत्ववतीत्यनुमित्येत्यर्थः। चरमबुद्धिस्तादृशभिन्नत्ववतीति धियैव प्रकृतनिर्वाहेऽपि विधेये उद्देश्यतावच्छेदककालावच्छिन्नत्वभानस्य व्युत्पत्तिसिद्धतामुपेत्य हेतुकालीनसाध्यस्यानुमितौ भानार्थमुदयनाचार्यैः स्वीकृतस्यानुमितौ लिङ्गोपहितलैङ्गिकभानस्योपगमेनैवोक्ताकारानुमितेरुक्तिः। नचैवं व्याप्तिसनाथशब्देन व्याप्तिविषयकत्वाभिधानमयुक्तम् हेतुमात्रस्योद्देश्यतावच्छेदकत्वेनैव तत्कालीनत्वस्य साध्ये भानसम्भवादिति वाच्यम्; पूर्वं साध्यव्याप्यत्वेन हेतोरुपस्थितत्वात् सामग्रीसत्त्वेन तेन रूपेणैव *हेतोरनुमितावपि भानादित्याशयात्। लिङ्गोपहितलैङ्गिकभानस्याप्रामाणिकत्वे तु बुद्धधर्मेत्यन्तेन* परामर्श एवोक्तः, जन्यत्वं तृतीयार्थः। तथाच तादृशपरामर्शजन्ययान्तिमबुद्धिविशेष्यकस्वविषयभेदसाध्यकानुमित्येत्यर्थः। चरमधीः स्वविषयभिन्नेतिधीनिर्वाह्यस्य बुद्धित्वव्यापकत्वग्रहेण निर्वाहवत्, पर्वतो वह्निमानित्यनुमित्या निर्वाह्यस्यापि धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इति परामर्शेनैव निर्वाहोऽस्त्विति तत्रातिरिक्तानुमितिमुपगम्य पर्वतो वह्निमान्नवेत्यादिसंशयविघटनोपगमो न स्यात्। अनुमिनोमीत्यनुव्यवसायविषयतायास्तादृशपरामर्शे एव कल्पनसम्भवादित्याह व्याप्तिबुद्धिरिति। विषयविशेषे = तद्विशेष्यकतत्प्रकारकज्ञानप्रतिबध्ये तद्विशेष्यकतदभावप्रकारज्ञाने। स्वातन्त्र्येण = तद्विशेष्यकतत्प्रकारकानुमितिमनुत्पाद्यैव बाधात्मिका = बाधिका। विशेषबुद्धिः = पक्षे साध्यविषयिणी। अनुमानकथया = परामर्शोत्तरानुमितिस्वीकारेण। अयम्भावः—मणिमन्त्रादिन्यायेन व्यभिचारग्रहप्रतिबन्धकतया व्यापकताबुद्धावप्रामाणिकत्वेन विरुद्धविषयकत्वस्य च विरहेण चरमधीः स्वविषयभेदाभाववतीति बुद्धिं प्रति न बुद्धित्वव्यापकत्वेन स्वविषयभेदग्रहस्य प्रतिबन्धकत्वासम्भवः। समानाकारकतायामेव प्रतिबध्यप्रतिबन्धकभावात्। अतएव स्वविषयभेदव्याप्यं बुद्धित्वमितिधियोऽपि न तत्प्रतिबन्धकता तत्र भेदाभावसमानाधिकरणताया बुद्धित्वे संसर्गतया भानात्, व्याप्तिबुद्धौ च भेदवद्वृत्तित्वस्य प्रकारतया भानात्। किञ्च, हेतुघटितपक्षतावच्छेदकस्थले सर्वत्रैव त्वदुक्तरीतिर्वक्तुं शक्यत्वेनोदाहरणस्योपनयस्यैव वा प्रयोगः स्यात्, ननूद्देश्यीभूतानुमित्यन्यूनानतिरिक्तविषयकशाब्दजनकप्रतिज्ञायाः, तदन्यस्य वा तदिदमप्युक्तं गतमनुमानकथयेति। *प्रतिज्ञादिघटितन्यायप्रयोगेण गत*मित्यर्थः। अनुमितिमात्रोच्छेदस्तु न, व्याप्तिव्यापकत्वयोरतीन्द्रियत्वेनानुमितिं विना प्रायो व्याप्त्यादिबुद्धेरेवासम्भवात्, तस्या एवानुमितित्वापादनस्य विवक्षितत्वाच्च। विषयित्वस्य स्वविषयभिन्नत्वव्याप्यस्वविवक्षायामपि चरमधीः स्वविषयाभिन्नेत्यत्र धीत्ववह्निविषयित्वस्यापि बुद्धौ भानात् स्वविषयेत्यस्य स्वनिष्ठविषयिताकेत्यर्थकत्वात् निरुक्तशङ्कासमाधानयोस्तुल्यत्वात्। अन्यत्तु बुद्धित्वाघटितं स्वविषयभिन्नत्वव्याप्यं दुर्वचम्, निर्विषयकसाधारणस्य स्वविषयाप्रसिद्ध्या व्यभिचारित्वात्। बुद्धिः स्वविषयभिन्नेति बुद्धित्वावच्छेदेन स्वविषयभेदग्रहे तु बुद्धित्वेन गृह्यमाणचरमबुद्धौ स्वविषयभेदग्रह अवश्यम्भावी, तत्सामग्रीसत्त्वात्। अतएवावच्छेदकधर्मदर्शनस्य न क्वापि प्रतिबन्धकत्वं युक्तिसहम्, विशिष्टबुद्धेरत्रावश्यकत्वात्। कथमन्यथोद्बुद्धसंस्कारस्य नानुमितिहेतुत्वं तत्सत्त्वे स्मृतेरावश्यकत्वादिति तार्किकोक्तिः सङ्गच्छेतेति। तथा च चरमबुद्धिः स्वविषयभिन्नेत्यत्र श्रुतिपादारोपणं बाध्यबाधकयोरैक्ये चेति। कथयेत्यनेन चेदं सूचितम्—बुद्धित्वे स्वविषयभिन्नत्वव्याप्तिरेवानुपपन्ना,

अथ सर्वा विवादाध्यासिता बुद्धयः स्वविषयेभ्यो भिन्ना बुद्धित्वाद्घटपटबुद्धिवदिति सामान्याकारेणात्मानमपि धर्मीकृत्यात्मनोऽपि स्वविषयाद्भेदं साधयिष्यत्यनुमेति मन्यसे; मैवम्, एवमपि विषयिणो विषयस्याभेदं बोधयन्ती श्रुतिरनुमानमप्यनवकाशयति। विषयिविषययोर्मिथोभेदेऽपि साध्येऽस्तु हेत्वनुयोगः। परबुद्धीस्तद्विषयांश्च प्रति निराबाधा सती श्रुतिरेकस्या बुद्धेर्विषयादपराम्परस्याश्च विषयात्परामभेदबोधाय धावन्ती सर्वाद्वैते एव पर्यवस्यतीति। न च शक्यमनुमातुं सर्वस्या बुद्धेर्विषयात्सर्वा बुद्धिर्भिन्नेति, माभूदन्यबुद्धिविषयादात्मनोऽपि बुद्धिर्भिन्नेति। न ह्यात्मव्यतिरिक्तादित्युक्ते निस्तारः स्यात्। अद्वैतवादिनः सर्वाभेदमिच्छतः क्वचिदपि तदसिद्ध्या विशेषणाप्रसिद्धेरिति।

स्वपदस्य बुद्धिसामान्यपरत्वे बुद्धेरपि बुद्ध्यन्तरविषयत्वेन स्वस्मादपि स्वभेदप्रसङ्गात्, एकत्र विषयविषयिभावोपगमपक्षे सुतराम्। एवं यत्किञ्चिद्बुद्धिपरत्वेऽपि व्यभिचारः। तथाच धीविशेषस्यैव स्वेभिन्नत्वनियमो वाच्य इत्यनुगतव्याप्तेरभावे क तद्बलाच्चरमबुद्धौ भेदसाधनमिति।

विवादेत्यादि सिद्धसाधनपरिहाराय दृष्टान्तबुद्धिं पक्षेऽनन्तर्भावयितुम्। सामान्याकारेण = बुद्धित्वेन। आत्मशब्दोऽत्र सन्दर्भे स्वपरः। उक्तस्वघटितत्वनिबन्धनदूषणसत्त्वे एवाह–एवमिति। विषयिणः = विषयिप्रतियोगिकं, विषयानुयोगिकमभेदम्। उक्तानुमित्या तु विषयप्रतियोगिक एव भेदो गृह्यते। अभेदं बोधयन्ती = अभेदांशेऽगृहीताप्रामाण्यिका। अनुमानमिति। विषयप्रतियोगिकभेदस्य विषयिणि सिद्धौ तदन्यथानुपपत्त्या विषयिप्रतियोगिकभेदस्यापि विषये सिद्धिर्यद्यपि सम्भवति, तथापि साऽर्थापत्तिरेव स्यात् नत्वनुमितिः, सा च परतो निरसनीयेति भावः। हेत्वनुयोग इति। विषयो विषयिणो भिन्न इत्यत्र विषयत्वं न हेतुः, ज्ञेयत्वस्य त्वन्मते केवलान्वयित्वेन विषयिणोऽपि विषयत्वाद्व्यभिचारात्। विषयिभिन्नत्वस्य हेतौ निवेशस्तु साध्यसिद्धिमपेक्षते। विषयविषयिणौ मिथो भिन्नौ विषयत्वविषयित्वान्यतरवत्त्वात्, विषयत्वाद्वेति तु बालालापः। विषयो विषयिणो विषयी च विषयाद्भिन्न इत्यतोऽतिरिक्तस्य प्रतिज्ञार्थस्याभावेन साध्यपक्षैक्याभावादनुमित्यैक्यानुपपत्तेः, नहि शब्दानुगमेनार्थानुगमः। अतएव शब्दमणिमाथुर्यां परस्परत्वस्याननुगतत्वमवादि। स्वत्वाननुगमेन यत्किञ्चिद्बुद्धेरेव यत्किञ्चिद्विषयाद्भेदस्य साधयितुं शक्यत्वेनापरबुद्धितद्विषयैः सह बुद्ध्यन्तरादेरभेदबोधने श्रुतेः प्रामाण्यविघटको न कश्चिदित्याह–परबुद्धीरिति।
*परबुद्धितद्विषयैः सहान्यबुद्ध्यादेरभेदविषयकत्वावच्छेदेनाप्रामाण्यज्ञापकविरहिता सतीत्यर्थः।* अपराम्परां बुद्धिं धावन्तीत्यन्वयः। अभेदबोधाय = अभेदप्रकारकबोधोद्देशेन धावन्ती = विषयीकुर्वती। अत्रैव विषयादिति पञ्चम्यन्तद्वयार्थस्य विषयावगाहनपूर्वकत्वस्यान्वयः। विषयपदं च बुद्धेरप्युपलक्षणम्। एकबुद्धितद्विषयस्यापरबुद्धितद्विषयस्य च योऽभेदस्तद्विषयकत्वावच्छेदेन प्रामाण्यप्रकारकग्रहविशेष्यतावतीति तु निष्कृष्टार्थः। किञ्चनपदबलात्सर्वस्य सकृदेव विषयीकृतत्वात्, अभेदबोधस्य पूर्वमुत्पन्नत्वादनुद्देश्यत्वात् प्रामाण्यप्रकारकग्रहविशेष्यताविशिष्टस्योद्देश्यत्वे तु तादृशविशेष्यतायामेव तथात्वपर्यवसानात्। श्रुतेः सविषयकत्वं च तज्जन्यज्ञानानुबन्धि। सर्वाद्वैते इति। घटादेस्तद्बुद्धेश्च पटादितद्बुद्धिभ्यां सहाभेदे श्रुतिप्रमाणत्वस्य घटपटाद्यभेदे तत्प्रमाणत्वं विनानुपपत्तेः। अनुमातुमिति। बुद्धित्वेन हेतुनेति शेषः। भिन्नेति। तथाच नोक्तरीत्यापि श्रुतिः सावसरेति भावः। निस्तारः = उक्तदोषाभावः। स्वव्यतिरिक्तत्वं पारमार्थिकं मन्मतेऽप्रसिद्धम्, आविद्यकं तु तवापसिद्धान्तापादकमिति न तन्निवेशसम्भवः। न च सामान्यतोऽपि तन्निवेशः, आविद्यकभेदस्य मयोपगमेऽपि तदभावस्यापि मयो-

एतेन 'सर्वं भिन्न'मितिवाक्येन, विना बाधं स्वतः प्रमाणेन, सत्प्रतिशब्दा सेयमद्वैतश्रुतिरित्यप्यनवकाशं प्रत्ययस्थानं मन्तव्यम् । यस्मात्कस्मादपि भेदे मिथ्यातः सत्यभेदोपगमेन सिद्धसाधनात् । सर्वस्मादिति स्वतोऽप्यापत्तेः, स्वव्यतिरिक्तादिति चाद्वैतवादिन्यव्यवच्छेदकम् । तदेवम्—

हेत्वाद्यभावसार्वज्ञ्ये सर्वं पक्षयताऽऽस्थिते ।
किञ्चित्तु त्यजता दत्ता सैव द्वारद्वयश्रुतेः ॥ ६ ॥

ध्यावनीयत्वात् , अन्यथा मिथ्यत्वानुपपत्तिरित्याशयेनाह—अद्वैतवादिन इति । विनेति । धियामौत्सर्गिकप्रमात्वे तार्किकाणामप्यविवादात् , उक्तं ह्येतत्परामर्शगादाधर्यामिति भावः । सत्प्रतिशब्दा = सन् = विद्यमानो विरोधी शब्दो यस्याः सा ।

एतेनेत्यस्यातिदेश्यमाह यस्मादिति । भेदे इति प्रतिपिपादयिषिते इति शेषः । मिथ्यात इत्यादि । मिथ्याप्रतियोगिकस्य तदनुयोगिकस्य वा ब्रह्मानुयोगिकस्य तत्प्रतियोगिकस्य वा भेदस्याविद्यकस्योपगमेनेत्यर्थः । मिथ्याभूतयोरप्याविद्यकपरस्परभेदस्येदमुपलक्षणम् । तथाच व्यवहारकालाबाध्यविषयकत्वेन व्यावहारिकं प्रामाण्यमस्तु तादृशवाक्यस्येति भावः । सर्वस्मादित्येवं प्रतियोगिनोऽभिधाने इत्यर्थः । एवमग्रेऽपि । अत्र कल्पे सिद्धसाधनासम्भव इति भावः । स्वत इत्यादि । स्वस्मिन् स्वप्रतियोगिकभेदस्याप्यापत्तेरित्यर्थः । तथाच बाधकसत्त्वान्न तद्वाक्यस्य प्रामाण्यसंभव इति भावः । अद्वैतवादिनि = तन्मते । अव्यवच्छेदकमिति । तथा च यतः कुतश्चिदेव भेदस्य त्वया साधनीयत्वात् तदप्रतियोगिनोऽभेदांशे श्रुतेर्नाप्रामाण्यग्रहसम्भव इति भावः । हेत्वादीति । सर्वस्य पक्षीकरणे हेतोरपरिशेषः. पक्षैकदेशस्य हेतुत्वे स्वस्मिन् स्वावृत्तेर्भागासिद्धिः । तद्भिन्नत्वस्य पक्षतावच्छेदकघटकत्वं त्वद्वैतिनोऽनाविद्यकभेदाप्रसिद्ध्याऽसम्भवि । एवं साध्यदृष्टान्तयोरपि पक्षैक्यात् बाधो दृष्टान्तासिद्धिश्च । भेदप्रतियोग्यनुयोगिनोर्विशिष्यैव तत्तद्रूपेण पक्षसाध्यकुक्षिनिक्षेप्यत्वात् सार्वज्ञ्यापत्तिः । अन्यथा पटस्य घटेन द्रव्यत्वादिना भेदाभावात्तेन रूपेण भेदसिद्ध्याचनिष्टप्रसङ्गोऽर्थान्तरञ्च स्यात् । आस्थिते = स्वीकृते, सर्वं पक्षयतस्तथापन्ने इति यावत् । एतदापत्तिभिया कस्यचित्पक्षबहिर्भावे तु तत्र भेदासिद्ध्याऽप्रतिबद्धा श्रुतिरुक्तरीत्या सर्वाभेदे प्रामाण्यमासादयति । सा = पक्षबहिष्कृतव्यक्तिरूपा द्वाः = सर्वाभेदविषयकत्वावच्छेदेन प्रामाण्यग्रहविशेष्यतौपयिकप्रामाण्यग्रहविशेष्यतावच्छेदकं यदभेदविषयकत्वं तादृशीत्यर्थः । ननु घटपटभेदप्रत्यक्षं यद्यद्वैतज्ञानस्वविषयाभ्यां भिन्नं न स्यात् भेदविषयकमेव न स्यात्, अद्वैतज्ञानात्मकत्वेऽद्वैतविषयकत्वस्यैव तन्नौचित्यात्, विषययोः स्वज्ञानभिन्नत्वाभावे तदभिन्नाभिन्नस्येतिन्यायेनाभेदावश्यम्भावात् । तथाच भेदविषयकत्वान्यथानुपपत्त्या भेदधियः स्वविषयादद्वैतज्ञानाच्च भेदः सिद्ध्यतीत्याशङ्कां पूर्वं निरस्तामपि प्रकारान्तरेण निरसितुमाह अतएवेति । श्रुतेर्द्वारलाभादेवेत्यर्थः । घटो न पट इत्याद्यधीस्तद्विषयीभूतस्य भेदस्यान्यथानुपपन्नता = आद्यधियः स्वविषयादद्वैतबोधाच्च भेदं विनाऽनुपपत्तिज्ञानम् । अन्ते = धीधाराविश्रान्तौ । स्वज्ञानापेक्षणादिति । स्वं = उक्तानुपपत्तिज्ञानं तस्मिन्नद्वैतज्ञानघटादिभेदज्ञानापेक्षणात् । तादृशभेदज्ञानाभावे तत्रैव श्रुतेर्लब्धपदत्वेन सर्वाद्वैते प्रामाण्यासादनम् । यदि चोक्तानुपपत्तिज्ञानस्यापि भेदविषयकत्वमद्वैतज्ञानादिभेदवत्तां विनाऽनुपपन्नमिति ज्ञानान्तरेण प्रथमानुपपत्तिज्ञानेऽद्वैतज्ञानादिभेदसिद्धिस्तदापि तादृशज्ञानान्तरस्य स्वविषयाभेदे श्रुतेः प्रामाण्यं विघटयितुमनुपपत्तिज्ञानान्तरापेक्षायामनवस्था मा भूदित्यन्तिमानुपपत्तिज्ञानस्य वक्तव्यत्वात्सैव श्रुतेर्द्वाः, सर्वभिन्नत्वं विनाऽनुपपत्तिज्ञानं तु घटपटभेदसाधकं न वक्तुं शक्यम्, स्वस्मादपि स्वभेदप्रसङ्गादिना दत्तो-

अतएव च—

आद्यधीवेद्यभेदीयाऽप्यन्यथानुपपन्नता ।
स्वज्ञानापेक्षणादन्ते बाधते नाद्वयश्रुतिम् ॥ १० ॥

नच संस्काराऽऽरूढदृढान्वयव्यतिरेकान्वयव्यतिरेकान्वयप्रतिपत्त्युत्पत्तिप्रतिबन्धः शक्यशङ्कः । यतः—

अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि ।
अबाधात्तु प्रमामत्र स्वतः प्रामाण्यनिश्चलाम् ॥ ११ ॥

त्त्वात्, अपि तु पृथक्पृथगेवानुपपत्तिज्ञानमिति सावकाशा श्रुतिरिति भावः । अद्वैतज्ञानस्योत्पत्तावे-वोक्तदिशा प्रामाण्यं शक्यं निश्चेतुम्, अयोग्यताया एव तत्र ग्रहे तु क तदुत्पत्तिरपीति शङ्कां निरस्यति नचेति । संस्काराऽऽरूढः = घटः पटभिन्न एवेति ज्ञानजन्यसंस्कारविषयः, अतएव दृढान्वयः = दृढस्थितिकः सत्यत्वेन निश्चित इति यावत् । व्यतिरेको = भेदः तस्यान्वयव्यतिरेकौ = घटत्वं पटादिभेदव्याप्यमिति, घटत्वं पटादिभेदाभावव्यापकीभूताभाव प्रतियोगीति च ज्ञाने ताभ्यामनुमित्युत्पादनद्वारा तदधीनानुमित्ये-ति यावत्, तद्विषयकविशेषदर्शनेन, विशेषदर्शनोत्तरभेदप्रत्यक्षेण चेत्यपि बोध्यम् । निश्चितप्रमात्वकस्या-प्रमात्वसम्भावनाविरहस्य वा लाभायेत्थमभिधानम्, तत्र तद्व्याप्यवत्त्वस्य ग्रहे तत्र तदग्रहेऽप्रमात्वग्रहानुपपत्तेः। तृतीयार्थप्रयोज्यत्वस्यानुत्पादेऽन्वयः । अद्वैतविषयिकाया अन्वयप्रतिपत्तेः = शाब्दबोधस्य उत्पत्तिप्रति-बन्धः = अनुत्पादः शङ्कितुं न शक्य इत्यर्थः । अद्वैतसविकल्पकबोधस्यान्वयविषयकत्वादन्वयप्रतिपत्तिश-ब्देनाभिधानम्, एवमग्रे संसर्गत्वप्रकमित्यत्रापि द्रष्टव्यम् । अत्यन्तेत्यादि । स्वप्रकारकधीविशेष्यनिष्ठा-त्यन्ताभावप्रतियोगिनीत्यर्थः । कलहादौ मिथ्याऽभिशापादिदानस्थले सत्यपि बाधरूपायोग्यतानिश्चये शाब्दोत्पत्तिरानुभविकी, अन्यथा क्रोधाद्यनुत्पत्त्यापत्तेः, मुखं चन्द्र इत्यादिरूपकस्थलेऽपि सत्यपि बाध-निश्चये बोधोदयाच्चेति भावः । हिशब्दस्तादृशज्ञानस्यानुभविकत्वलाभाय । शब्द इति । बाधितार्थविष-यकज्ञानजनकज्ञानविषयताश्रयः शब्द इत्यर्थः । शाब्दान्यविशिष्टबुद्धिं प्रत्येव बाधनिश्चयस्य प्रति-बन्धकत्वादिति भावः । केचित्तु—अत्यल्पमिदमुच्यते, न परं शाब्दे एव, वस्तुतस्तु बाधज्ञानं न क्वापि प्रतिबन्धकम्, तस्मिन् सत्यपि स्वस्वसामग्रीवशादुत्पन्नयोर्यत्र ज्ञाने सदोषसामग्रीजन्यत्वग्रहस्तत्राप्रा-माण्यग्रहमात्रमित्याहुः । बाधितस्थले न शाब्दोत्पत्तिः, अपितु तत्तत्पदात्तत्तत्पदार्थोपस्थितौ मानसो विशि-ष्टसाक्षात्कार एवेति तु मतमनुभवविरुद्धम्, तत्र शृणोमि, शाब्दयामीति धीसत्त्वात् । एवं बाधनिश्चय-स्याप्रतिबन्धकत्वस्थितौ बाधाभावज्ञानमपि न हेतुः, अन्यथोक्तस्थले शाब्दानुत्पत्त्यापत्तेः, नचाहार्ययोग्य-ताज्ञानात्तदुत्पत्तिः निश्चिताप्रामाण्यकस्यापि योग्यताज्ञानस्य हेतुत्वात्, एकरूपावच्छिन्नेऽपररूपावच्छि-न्नस्यान्वयितावच्छेदकसंसर्गस्य योग्यतारूपत्वादिति वाच्यम्; अनाहार्ययोग्यताज्ञानं विनेवाहार्ययोग्यता-ज्ञानं विनाऽपि तदितरकारणसत्त्वे शाब्दबोधोदयेन योग्यताज्ञानसामान्यस्यापि कारणतया अप्रामाणि-कत्वात् । आहार्ययोग्यताज्ञानस्य प्रकृतेऽपि सम्भवाच्च । नचैवमद्वैतबोधस्याहार्यतापत्तिः, इष्टापत्तेः । बाधनिश्चयस्य भ्रमत्वेन मननादिना तन्निवृत्तावद्वैतस्याप्रामाणिकत्वानुपपत्तेः । स्वविरुद्धधर्मधर्मितताव-च्छेदककत्वघटितमाहार्यत्वं तु भेदवति भेदाभावबोधोपगमे एव शङ्कितुं शक्यम्, नवा तत्रापि, मिथ्यात्वपक्षे भेदतदभावयोर्विरोधस्यैवाभावात् । स्वप्रकारकग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरू-पितविषयतासम्बन्धावच्छिन्नावच्छेदकतावद्धर्मस्य स्वविरुद्धधर्मपदेन विवक्षितत्वेऽपि द्वैताद्वैतप्रमाणानां विषयव्यवस्थितिविधाने द्वैतस्य मिथ्यात्वग्रहे प्रतिबध्यप्रतिबन्धकभावासम्भवान्न काचित् क्षतिरिति भावः । तदिदमाह **अबाधादिति** । अप्रामाण्यज्ञापकाभावादित्यर्थः । अत्र = अद्वैतविषयिकां प्रमां

असंसर्गाग्रहस्यापि मन्ता शंसत्यबाधिते ।
अत्यन्तासदसंसर्गाग्रहं संसर्गलग्नकम् ॥ १२ ॥
अनौचित्यापि तर्केण दुर्बाधैवाद्वयश्रुतिः ।
अनारोपितमूलत्वाद्बलवत्त्वादतादृशा ॥ १३ ॥

---

करोति = तादृशप्रमानिरूपितजनकत्ववज्ज्ञानविषयः शब्द इत्यर्थः । स्वतः प्रामाण्यनिश्चलां = प्रमात्वस्य-तत्त्वप्रयुक्तेनाप्रामाण्यग्रहानास्कन्दितत्वेन विशिष्टाम् ।

नन्वसंसर्गग्रहस्य भ्रमप्रतिबन्धकत्वेन तदभावस्य भ्रमार्थमवश्यापेक्षणीयत्वेन तद्धेतोरेवेति न्यायेन तेनैव व्यवहारोपपत्तौ बाधितस्थले संसर्गबोधोक्तिरयुक्तेत्यत आह असंसर्गाग्रहस्येति । मन्ता = विसंवादिप्रवृत्त्यौपयिकत्वेन स्वीकर्ता । अबाधितस्थले अत्यन्ताऽसतोऽसंसर्गस्याग्रहं संसर्गलग्नकं = स्वाव्यवहितपूर्वक्षणवृत्तित्वसम्बन्धेन संसर्गग्रहविशिष्टं शंसति = कथयति । इदं रजतमिति प्रमास्थले रजतत्वसमवायसंसर्गस्य सत्त्वादसंसर्गस्यात्यन्तासत्त्वमेवात्यन्ताभावप्रतियोगित्वरूपमिति नासौ गृहीतः । बाधितस्थले तु रजतत्वासंसर्गः सन्नपि दोषबलादगृहीत इत्युभयत्राप्यसंसर्गाग्रहस्यैव सत्त्वात् । प्रवृत्तिसामान्यं प्रति यद्यपि तन्मते कारणत्वमिष्टतावच्छेदकधर्मिणोरसंसर्गाग्रहस्यैव, तथापि संवादिप्रवृत्तिं प्रति तयोः संसर्गग्रहस्यापि कारणत्वमिति नाबाधितस्थले संसर्गप्रमानुपपत्तिः । अन्यथा विशिष्टग्रहाप्रसिद्धावसंसर्गाग्रहस्याप्यप्रसिद्धेः । विशेषकार्यकारणभावश्चायं तन्मते लघुचन्द्रिकायामुक्तः । परामर्शप्रकरणे गदाधरैस्तु—"यद्यपि तन्मते विशिष्टज्ञानस्थलेऽप्यसंसर्गाग्रह एव विशिष्टव्यवहारहेतुर्न तु विशिष्टज्ञानं, तथापि विशिष्टज्ञानस्यापि विशिष्टविषयकत्वमपुरस्कृत्य तत्तत्पदार्थविषयकत्वेनासंसर्गाग्रहनिष्ठकारणतायामवच्छेदकत्वात् व्यवहारप्रयोजकत्वं न तु कारणत्व"मित्युक्तम् । प्रकृते तु नोभयथापि विरोधः । चतुर्थे एकादशतर्कान् वक्ष्यति तत्रानौचितीं प्रामाणिकाव्यवहार्यस्वरूपां द्वैताभावे निराकर्तुमाह अनौचित्येति । तर्केण=प्रमाणजन्यधीजनकप्रतिसन्धानविषयेण । तेनापत्तित्वापरपर्यायतर्कत्वस्य 'आपादयामीति' प्रतीतिसाक्षिकमानसत्ववृत्त्यजातिविशेषतायास्तर्कप्रकरणे जगदीशोक्तदिशा तार्किकसम्मतत्वेनात्माश्रयादिपञ्चकस्यैवापत्तिरूपस्य मुख्यतर्कतासत्त्वात् कथमनौचित्या अप्रसङ्गात्मिकायास्तर्कत्वमिति नाशङ्कनीयम् । अतएव प्रमाणसहकारित्वेन लाघवादौ तर्कताव्यवहार इत्युक्तं न्यायसूत्रवृत्ताविति । वस्तुतस्तु—आत्माश्रयाद्यापादकप्रसङ्गस्य यथाऽऽत्माश्रयादिशब्देन व्यवहारः, घटो यद्यात्माश्रितः स्यात् स्वभिन्नः स्यादित्यादिप्रसङ्गे आत्माश्रयादेरेवापादकत्वात्, स्वयं चाप्रसङ्गत्वात्, तथाऽनौचित्यापादक'प्रसङ्गस्यानौचितीशब्देन व्यवहारे न काचित्क्षतिः, द्वैतं यदि मिथ्या स्यात् प्रामाणिकाव्यवहार्यं स्यादित्यापादनस्य सम्भवात् । किञ्च, लाघवादौ तर्कताभिधानस्य चिन्तामण्यादौ बहुशो दृष्टत्वेन मुख्यस्य च तस्य संभवे कथञ्चित्तत्समर्थनस्यानौचित्येन निरुक्तप्रतिसन्धानविषयत्वस्यैव तर्कतामुख्यव्यवहारनियामकत्वं युक्तम् । किञ्च, व्याप्यारोपेण व्यापकारोपात्मकप्रसङ्गस्य साध्यादिभेदभिन्नमूर्तिकव्याप्त्यादिघटितत्वेनाननुगतत्वात्. जातेरपि नियतव्यञ्जकसापेक्षतायाः परतो वक्ष्यमाणत्वेन तद्घटितलक्षणस्याप्यसम्भवात् हेत्वाभासादेरिवान्यतमत्वघटितलक्षणस्यैव वक्तव्यत्वाद्व्यवहारानुरोधाल्लाघवादेरपि तर्कत्वसम्भवः,—लाघवादिबलादित्थं तर्कयामीतिप्रतीतेः तर्कपञ्चकातिरिक्तस्थलेऽपि सम्भवाच्चेति लाघवादेस्तर्कतास्वीकर्तुर्मूलकर्तुराशयः । तथाचानौचित्यनुगृहीतभेदग्राहिप्रत्यक्षादिनेति तृतीयान्तार्थः । तर्कमात्रस्य बाधकत्वशङ्कानुदयात् । दुर्बाधा = अप्रमाणत्वेन ज्ञापयितुमशक्या । अनारोपितमूलत्वात् बलवत्त्वात् = अबाधितवस्तुविषयकत्वेन भेदग्राहिप्रमाणबाधकत्वात् । अतादृशा = बाधितवस्तुविषयकेनोक्तप्रत्यक्षादिना । भेदस्या-

प्रवृत्तेनाप्यनौचित्यमूलं येन न लूयते।
तत्रानौचित्यसाम्राज्यं वैपरीत्यात्तु नात्र तत् ॥ १४ ॥

ननु यद्यदेवोदाह्रियते त्वया-नेत इतोऽस्य भेदो गृहीत इति ततोऽस्याद्वैताम्नायेर्- भेदबोधने तद्द्वारा सर्वभेदे पर्यवसातव्यमिति; ततस्ततस्तस्य भेदस्तदैव गृह्यते मया, तस्मादुदाह्रियमाणतायामनुदाह्रियमाणतायाञ्च कस्यचिदेतत्प्रत्यवस्थानमस्थाने इति। नैवम्। अन्तिमबुद्धेरद्वैतश्रुतिजबुद्ध्यादितो भेदो न त्वया प्रमित इति मयोच्यमाने यस्त्व- दीयस्ततो भेदः प्रमातव्यः, स न तावत्प्रत्यक्षेण, तत्कालमन्तिमबुद्धेरनुपस्थितेः। यदि च केनचिद्धेतुना वा कयाचिदनुपपत्त्या वा तथा स्यात्, तदानीमद्वैतवादिनं प्रति हेतोः साध्याविशिष्टतया, अनुपपत्तेश्च येन विना सा तदविशिष्टतया ततः कथमाभासात्प्रमोदयः स्यात्। नच वाच्यं, स्वयं मया स भेदो ज्ञायते इति नास्ति पाक्षिकोऽपि मां प्रत्यसिद्ध्या-

---

नुपदं खण्डनेन बाधितत्वस्य निवेदनीयत्वात्परिशेषादभेदस्याप्रामाण्यत्वमायाति, अन्यथा शून्यतापत्तेः, भेदस्य मिथ्यात्वेऽप्यलीकत्वाभावाद्व्यवहार्यत्वसम्भवः, सत्यत्वेन तस्य व्यवहर्तॄणां तु प्रामाणिकत्वे एव न सम्प्रतिपत्तिरिति भावः। अद्वयश्रुतेरबाध्यत्वे युक्त्यन्तरमाह प्रवृत्तेनापीति। स्वाश्रयग्रहितप्राक्क्षण- वृत्तित्वसम्बन्धेन प्रमाविशिष्टेनापीत्यर्थः। येन प्रमाणेनानौचित्यमूलं = अनौचित्यकल्पनामूलं विरोधि- मानान्तरं न लूयते = स्वविषयातिरिक्तविषये न व्यवस्थाप्यते मिथ्यात्वेन न बोध्यते इति वा। अत्र = अद्वैतश्रुतौ। वैपरीत्यादिति। अद्वैतश्रुतेः पारमार्थिकविषयकत्वेन द्वैतग्राहिप्रमाणस्य च व्यावहारिक- विषयकत्वेन विषयविरोधपरिहारात्, प्रपञ्चान्तरस्यैव द्वैतग्राहिप्रमाणस्यापि तया मिथ्यात्वबोधनाच्च, सर्वकल्पनामूलस्याज्ञानस्यापि तया निवर्तनाच्च न तस्या बाध्यत्वसम्भव इति भावः।

उदाह्रियते प्रतियोग्यनुयोगिविधया। इत इतः = अभेदबुद्ध्यादितः। अस्य = अन्तिमबुद्ध्यादेः। तदैव = उदाहरणोत्तरक्षणे। कस्यचिदिति। कस्यचिदनुयोगिनः प्रतियोगिनश्चोदाहरणे मया भेदस्य ग्रहणाच्छ्रुतावप्रामाण्यग्रहः, अनुदाहरणे तु श्रुतेः प्रामाण्यग्रहस्थलानिरूपणमिति भावः। एतत्प्रत्यव- स्थानं = त्वदुक्तं श्रुतेः प्रामाण्यासादनं। अस्थाने = अनुपपन्नम्। अनुपस्थितेः = अप्रत्यक्षात्। भेद- प्रत्यक्षेऽनुयोगिप्रत्यक्षस्यापेक्षितत्वादिति भावः। हेतुनेति। अद्वैतधीकालावृत्तित्वेनेत्यर्थः। पक्षीभूतान्ति- मधीविशेषस्येदानीमप्रत्यक्षत्वेन तत्रोक्तहेतोर्ग्रहः। बुद्धित्वं तु न हेतुः, अद्वैतबुद्धौ व्यभिचारात्। तद्भेदस्य साध्यत्वात्। भिन्नसामग्रीकत्वमपि न हेतुः, कार्यभेदासिद्धौ तदसिद्धेः। अपुनरुक्तशब्द- वाच्यत्वमपि न, अर्थभेदासिद्धौ शब्दयोरपुनरुक्ततायाः वक्तुमशक्यत्वात्। स्वविषयभेदमात्रे साध्ये तु बुद्धित्वस्य हेतुता सम्भवत्येवेति। अनुपपत्त्येति उक्तहेतोर्वा घटो न पट इतिधीविषयीभूत- भेदस्य वाऽनुपपत्त्येत्यर्थः। तथा स्यात् = अद्वैतबुद्ध्यादिप्रतियोगिकभेदप्रमितिः स्यात्। साध्यावि- शिष्टतयेति। अद्वैतिनो हेतुसाध्ययोरद्वैतग्रहे साध्यवद्धेतोरप्यसिद्धत्वग्रहेणेत्यर्थः। अनुपपत्तेश्च तदवि- शिष्टतयेत्यन्वयः। अनुपपत्तिरुपपाद्यस्याप्युपलक्षणम्। येन = उपपादकतयाऽभिमतेन। सा = अनुप- पत्तिः। तथाचानुपपत्त्यादेरुपपादकेनाद्वैतग्रहे उपपादकवत्तस्याप्यसिद्धत्वग्रहेणेत्यर्थः। उभयत्राप्यवि- शिष्टत्वमभेदग्रह एव वा। ततः = उक्तहेतोरुक्तानुपपत्तेर्वा। आभासात् = अनुमितेरर्थापत्तेर्वा प्रतिबन्धकीभूतं यज्ज्ञानं तद्विषयीभूतात्। आविद्यकभेदमुपेत्य तु भेदसत्यत्ववादिना व्यवहर्तुम- शक्यम् तदुक्तं भट्टपादैः-"योऽपि तावत्परासिद्धः स्वतः सिद्धोऽभिधीयते। भवेत्तत्र प्रतीकारः स्वतोऽ- सिद्धे तु का क्रिये"ति भावः। पाक्षिकोऽपीति। वेदान्तिमतमादाय शङ्कोद्भावनोऽपीत्यर्थः। परार्थानु-

दिरिति; यतोऽस्य त्वद्वचनस्य वैयर्थ्यापत्तिः, वचनस्य परार्थत्वात्। मौनमवलम्ब्यावतिष्ठानश्च भवानप्रतिभातो न मुच्यते। न च–स्वयं मया प्रमितो भेदः परं प्रति वचसा केवलं बोध्यते इति–वाच्यम्; त्वद्वचसि परस्याप्रत्ययात्। विजिगीषुं परं प्रति विजिगीष्वन्तरवचनं हि तत्रार्थे तज्जिज्ञासोत्पादनद्वारेण तस्य स्वतस्तदर्थप्रमित्युत्पादनपर्यवसायितयोपयुक्तम्, नचाद्वैतवादिनं प्रति तथा कर्तुं शक्यते, तं प्रत्यन्यतरासिद्धेरुक्तत्वात्।

न च वाच्यं मम वचनात्सन्देहेनापि श्रुत्या तत्र सन्दिग्धबाधितभावया नाभेदप्रतिपादनं ते घटते इति; यस्मादद्वैतं मन्यमानेन भेदासिद्ध्या सर्वत्र साध्याविशेषादिदोषप्रतिसन्धायिना संशयस्याप्यनवकाशीकरणमेव स्यात्। तस्मात्—

एकं ब्रह्मास्त्रमादाय नान्यं गणयतः क्वचित्।
आस्ते न धीरवीरस्य भङ्गः सङ्गरकेलिषु ॥ १५ ॥

---

माने एवासिद्ध्यादेरुद्भावनीयत्वात्, वस्तुतश्च त्वन्मतेऽसिद्ध्यादिसत्त्वेऽपि ममानुमित्यप्रतिबन्धादिति भावः। एतादृशपाक्षिकत्वं चाद्वैतवादिनं प्रतीति वदता पूर्वं सूचितम्। असिद्ध्यादिः = स्वरूपासिद्धिदृष्टान्तासिद्धिबाधाः। दृष्टान्तादेरपि पक्षाभिन्नतया प्रतीतत्वात्। परार्थत्वात् = परप्रतिपिपादयिषाधीनप्रयोगविषयत्वात्। त्वया तु प्रतिपन्नोऽपि भेदो मां न प्रतिपादयितुं शक्यः, मयाऽसिद्ध्यादेरुद्भावनीयत्वात्। अप्रतिभातः = उत्तराप्रतिपत्तिलक्षणनिग्रहस्थानात्। अप्रत्ययात् = अविश्वासात्। वक्तृगतदोषावगमेनैवोत्सृष्टप्रामाण्यापवाद इति न परतः प्रामाण्यापात इति। तत्रार्थे = विजिगीष्वन्तरवचनप्रतिपाद्येर्थे। तच्छब्दद्वयेन परविजिगीषुपरामर्शः। जिज्ञासेति। विप्रतिपत्तिवाक्याधीनसाध्यतदभावसंशयाधीनैकतरकोटिजिज्ञासाव्यतिरिक्तैव वादिप्रयुक्तन्यायाधीना 'वाद्युपन्यस्तप्रमाणेनानुमिनुयामिति' जिज्ञासाऽत्रोक्तेति द्रष्टव्यम्। स्वतः = स्वस्य, निष्ठत्वं षष्ठ्यर्थः प्रमितावन्वेति। स्वस्मै इति वार्थः। स्वनिष्ठसंशयनिवृत्त्यादिप्रयोजनकेति यावत्। तदर्थप्रमित्युत्पादनपर्यवसायितयोपयुक्तम् = उक्तवचनार्थविषयकप्रमित्युपधायकपरामर्शोत्पत्तिरूपफलवत्। तथा कर्तुं = भेदजिज्ञासोत्पादनद्वारा भेदप्रमित्युपधायकपरामर्शोत्पादनमद्वैतवादिनि न शक्यते। तं प्रति = तन्मतमादाय तन्मताभ्युपगमाधीनेति यावत्, एतच्चासिद्धावन्वेति। तथाच तन्मते एवासिद्धिरुक्ता भवति। अन्यतरशब्दश्च वादिप्रतिवाद्यन्यतरपरत्वात्। हेत्वादेरुभयसिद्धस्यैव परसिद्धस्यैव वा परं प्रति वक्तव्यत्वादिति भावः।

वचनात् = भेदप्रतिपादकवचनात्। तत्र = अन्तिमबुद्ध्यभेदबुद्ध्याद्यभेदविषयकत्वावच्छेदेन। नाभेदेति। तार्किकैरपि कैश्चिद् यद्यपि बाधनिश्चयस्यैव प्रतिबन्धकतोच्यते, नतु तत्सन्देहस्य, यदाह कुसुमाञ्जलिप्रकाशे वर्धमानः—"योग्यतायाश्च लाघवात् संशयादिसाधारणं ज्ञानमात्रं हेतुः, बाधसंशयस्य ज्ञानाप्रतिबन्धकत्वात्, अन्यथा प्रमामात्रोच्छेदप्रसङ्गादि"ति। प्रतिवादिवचनाधीनभेदबोधे चाप्रामाण्यसन्देहे तदाहितसन्देहस्य तद्विषये भेदे सम्भवेन भेदनिश्चयस्यासम्भावितत्वात्, तथाप्युपेत्यैवाह यस्मादिति। त्वद्वचनाधीनभेदविषयकबोधे ममाप्रामाण्यनिश्चय एव नतु तत्संशयो येन भेदसंशयोऽपि स्यात्। भेदग्राहिमानमात्रविषये श्रुतेः प्रवृत्तत्वात्, भेदग्राहिमानानामबाधितविषयकत्वाभावात्, व्यावहारिकविषयकत्वेनैवोपपत्तेश्चेति भावः। वस्तुतस्तु बाधितभावोऽप्रामाण्यम्, तुल्यबलत्वेन प्रतिसन्धीयमानविरुद्धार्थग्राहकमानद्वयोपनिपाते विषयसन्देहस्यान्यतरत्वेनाप्रामाण्यसन्देहस्य चौचित्यावर्जितत्वात्, अतएव संशयकरणिकामर्थापत्तिं केचित्सत्प्रतिपक्षस्थले संशयात्मानुमितिश्चाहुरित्याशयेनैवाशङ्का। तुल्यबलत्वेन प्रतिसन्धानमेव नास्तीत्याशयेन च समाधानमिति द्रष्टव्यम्। ब्रह्मेति। वृत्त्यभिव्यक्तीभूय सर्वप्रपञ्चबाधकत्व-

अपि च, प्रतीयते तावदिदं सामान्यतो, यन्नाम किञ्चित्परश्चेतसा चिन्तयन्नस्तीति, किञ्चिद्वा विवक्षुरित्यादि, तत्र परस्य बुद्धिविषयो विवक्षाविषयो वा विशेषतो विनिगमनं विना नैव प्रतीयते, ततोऽन्तिमबुद्ध्यादिभेदो न भवता शक्यग्रहः, परेण तच्चिन्तनादेरपि सम्भवात्। स्वस्मात्स्वस्य भेदाभावात्। ततस्तत्र लब्धपदा कथमद्वैतश्रुतिर्विश्वाभेदे पर्यवस्यन्ती त्वया शक्यबाधा स्यात्। तस्मात्—

कथं सामान्यतो ज्ञाते नैव ज्ञाते विशेषतः।
पदरोधस्त्वया कर्तुं शक्यः स्यादद्वयश्रुतेः॥ १६॥

ननु भेदमनङ्गीकुर्वतो भवतः कथं तत्तत्पदपदार्थवैचित्र्यीव्यवहारो न व्याहन्यते; कथं व्याहन्यते, प्रतिवदयते हि तत्। किञ्च, योऽयं त्वया व्याघात आपादनीयः, सोऽपि कस्माच्चिदापादकात्, न चापाद्यापादकमभिद्यमानमापत्त्यै प्रभवेदिति। तस्मात्—

---

मेव ब्रह्मणोऽस्त्रत्वम्। आदाय=पारमार्थिकत्वेन निश्चित्य। क्वचित् = क्वापि, सदधिकरणमात्रे इति यावत्, अन्यं=ब्रह्मभिन्नं न गणयतः; सत्त्वव्यापकतावच्छेदकानुयोगिताविशेषनिरूपितप्रतियोगितानिरूपितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वनिष्ठप्रकारताकब्रह्मातिरिक्तविशेष्यताकनिश्चयवत इति निर्गलितार्थः। धीरवीरस्य = अचञ्चलचेतस्त्वे सति ब्रह्मचर्यादिजनितशक्तिविशेषवतः। समरकेलिषु = वाग्युद्धक्रीडासु। विनिगमनं विनेति। परकीयमुखमालिन्यादेरगणितहेतुकत्वेन सामान्यस्य गृहीतस्यापि विशेषे पर्यवसानमसम्भवीति भावः। ततः = परकीयबुद्धिविषयात् परकीयविवक्षाविषयाच्च। तच्चिन्तनादेः = अन्तिमबुद्ध्यादिविषयकचिन्तनादेः। तथाचान्तिमबुद्धिर्देवदत्तीयबुद्धिविषयभिन्ना बुद्धित्वादित्याद्यनुमानं न सम्भवति, अनुयोगिभूतान्तिमबुद्धेरेव देवदत्तीयबुद्धिविषयत्वे तस्या एव स्वनिष्ठभेदप्रतियोगित्वापत्तेरिति। तदिदमाह स्वस्मादिति। तत्र=परकीयबुद्धिविषयान्तिमबुद्ध्याद्यभेदविषयकत्वावच्छेदेन। लब्धपदेत्यादिकमुक्तार्थकम्। सामान्यत इति। परकीयबुद्ध्यादिविषये इत्यादिः। सामान्यधर्मप्रकारकज्ञानविशेष्यविशेषधर्मप्रकारकज्ञानाविशेष्यपरकीयबुद्ध्यादिविषयनिष्ठो योऽन्तिमबुद्ध्याद्यभेदस्तद्विषयकत्वावच्छेदेनाद्वैतश्रुतेरप्रामाण्यग्राहकः पदरोधस्त्वया कर्तुं न शक्य इत्यर्थः। न च परचिन्त्यमानत्वावच्छेदेनान्तिमधीभेदो ग्राह्यः, अन्तिमबुद्धेरपि तादृशावच्छेदकवत्त्वसन्देहे तदवच्छेदेनान्तिमभेदस्य निश्चयासम्भवात्, भेदस्य पारस्परिकत्वेनानुयोग्यवृत्तिधर्मस्य प्रतियोगितावच्छेदकत्ववत्प्रतियोगयवृत्तिधर्मस्यैवानुयोगितावच्छेदकत्वात्, व्यापकधर्मावच्छिन्नानुयोगिताकव्याप्यधर्मावच्छिन्नप्रतियोगिताकभेदस्याप्रामाणिकत्वात्, अतएव द्रव्यं घटान्यदित्यस्याप्रामाणिकत्वं व्याप्तिवादे जगदीशेनोक्तम्। यद्यपि कदाचित्कथञ्चित्परकीयबुद्धिविषयं प्रतीत्य ततोऽन्तिमबुद्ध्यादिभेदग्रहः स्यात्, तथापि श्रुतेरवकाशोऽसर्वज्ञं प्रति सुवच एव सर्वदा सर्वत्र तेन भेदाग्रहात् स्खलनामदौर्भिक्ष्यात्, श्रुतेः सर्वविषयकत्वात्। सर्वज्ञेन तु भेदो गृह्यते इत्यस्याप्रामाणिकत्वम्, तत्रासर्वज्ञत्वादिति भावः। अनङ्गीकुर्वतः = अप्रतीतवतः। वैचित्र्यीव्यवहारः = भेदप्रतिपत्त्यधीनव्यवहारः। पदान्तरं परित्यज्य तत्तत्पदस्यैव प्रयोगो भेदस्यैव खण्डनार्थं न त्वभेदस्येति भेदप्रतिपत्तिमन्तरेण न घटनां प्राञ्चति, एवं द्वैतवादिनं स्वभिन्नतया प्रतीत्यैव तेन सह कथायाः सम्भवः। यदि चात्र भेदज्ञानं नापेक्षणीयं मपित्वभेदज्ञानविरह एव, तदाऽभेदज्ञानस्यैव व्यवहारविरहापादकतायां तात्पर्यं द्रष्टव्यम्। पदविशेषार्थं तु भेदज्ञानमपेक्षणीयमेव। प्रतिवदयते इति। अद्वैतज्ञानेन द्वैतज्ञानस्य भ्रमत्वग्रहेऽपि प्रारब्धकर्माधीनभोगौपयिकस्य तस्यानिवृत्तेर्व्यवहारसम्भवः, व्यवहारस्याविद्यकद्वैतज्ञानेनैवोपपत्तौ पारमार्थिकत्वेन द्वैतज्ञानानाक्षेपकत्वादिति भावः। व्याघातः = व्यवहाराभावः। यदि भवान् भेदज्ञानवान् न स्यात् व्य-

नानात्वमचलम्व्यापि यदत्यद्वैतवादिनि ।
असिद्धभेदाद्व्याघातः पतेदापादकात्कुतः ॥ १७ ॥

इदमपि च विचारमर्हति, यदद्वैतश्रुतीनां बाधकमुपन्यस्यते प्रत्यक्षादि घटपटप्रभृतिभेदग्राहि, तदपि कीदृश्यर्थे पर्यवस्यति । तथाहि—प्रत्यक्षेण योऽसौ भेदो गृह्यते स किं स्वरूपभेदः, किमन्योन्याभावः, किं वैधर्म्यम्, किमन्यदेव वा, यदि तावत्स्वरूपं भेदः, स नाम घटपटयोर्हि स्वरूपं यत्परस्परस्माद्भेदः, तत्परस्परमनन्तर्भाव्य न सम्भवति, भेदो

---

वहारवान् न स्यादिति प्रसङ्गः । आपाद्यापादकमिति समाहारः । अभिद्यमानं = अभिन्नतया निश्चितम् । अवलम्ब्य = प्रतीत्य । तथाचापादकमेव नास्ति । परमार्थभेदघटितमापादकं त्वप्रसिद्धमप्रयोजकञ्च । यदि च पारमार्थिकत्वेन भेदनिश्चयोऽपेक्षणीयस्तदा मामुद्दिश्य व्यवहाराभावापत्तिरेव न त्वया दातुं शक्या, अपाद्यापादकभेदस्य पारमार्थिकत्वेन ममानिश्चयादापाद्यापादकभावासम्भवस्यैव मयोद्भावनीयत्वादित्याह असिद्धभेदादिति । पारमार्थिकत्वेनानिश्चित आपाद्यप्रतियोगिको भेदो यस्य तस्मादापादकादित्यर्थः ।

येषामुक्तीः समालोच्य खण्डनं मण्डयते मया ।
ब्रह्मानन्दाभिधाचार्यान् वन्दे तांश्चन्द्रिकाकृतः ॥

भेदग्राहीति । घटाद्भिन्नः पट इति धीरेव विवक्षिता । कीदृशीत्यादि । घटप्रतियोगिकतया किंविषयिकेत्यर्थः । प्रत्यक्षेण = प्रत्यक्षादिना । एवमग्रेऽपि । किमिति । उक्तधीर्घटप्रतियोगिकतया पटस्वरूपविषयिणी न वेत्यादिरीत्या स्वरूपस्थानेऽन्योन्याभावादिकं निवेश्य विप्रतिपत्तिरूह्या । स्वरूपभेदः = भिद्यमानं स्वरूपं अनुयोगिस्वरूपमिति यावत् । वैधर्म्यालिङ्गितमनुयोगिस्वरूपं वा । क्लृप्तेनाधिकरणेनैवोपपत्तावतिरिक्तभेदकल्पनायां मानाभावात्, रूपभेदेन चाधाराधेयभावोपपत्तेः, भावरूपाणामधिकरणानां निष्प्रतियोगिकत्वेऽपि भेदत्वादिना सप्रतियोगिकत्वोपपत्तेः, घटत्वेन निष्प्रतियोगिकस्यापि घटाभावाभावत्वेन सप्रतियोगिकत्ववत्, रीतिश्चेयं न परं भेदे, अपि त्वभावमात्रे, यदाहुः प्राभाकराः—"दृष्टस्तावदयं घटोऽत्र च पतन् दृष्टस्तथा मुद्गरो, दृष्टा खर्परसंहतिः परमितोऽभावो न दृष्टोऽपरः । तेनाभाव इति श्रुतिः क्व निहिता किञ्चात्र तत्कारणम्, स्वाधीना कलशस्य केवलमियं दृष्टा कपालावलि"रिति । प्रकृतेऽपि प्रतियोग्यनुयोग्यतिरिक्तं नोपलभ्यत इति भावः । अन्योन्याभाव इति । अनुयोग्यतिरिक्तो भेदत्वाख्याखण्डोपाध्याश्रय इत्यर्थः । अभावत्वप्रकारकप्रतीतेः प्रमात्वरक्षार्थमनिरिक्तताया एवौचित्यात् निष्प्रतियोगिकस्य सप्रतियोगिकत्वे विरुद्धधर्माध्यासेन वस्तुभेदापत्तेः, अतएव घटाभावाभावोऽप्यतिरिच्यत एवेति भावः । वैधर्म्यमिति । तदभावव्याप्यो धर्मस्तदाश्रयान्स्वाश्रयस्य भेद इत्यर्थः । घटत्वाभावव्याप्यस्य पटत्वस्यैव घटात्पटभेदत्वम् । अन्योन्याभावस्याप्येतदधीनत्वादवश्योपगन्तव्यत्वात्, भेदत्वप्रकारकप्रतीतेरेतद्विषयकत्वेनैव प्रमात्वसम्भवात् । भेदत्वेन सप्रतियोगिकत्वसिद्धौ च निष्प्रतियोगिकत्वसप्रतियोगिकत्वयोरसामानाधिकरण्यरूपविरोधस्यैवामन्तव्यत्वात्, नचैवं स्वरूपमेव भेदोऽस्तु, आधाराधेयभावानुभवापलापापत्तेः, रूपभेदेनाधाराधेयभावस्य च "नहि दण्ड्यपि देवदत्तः कुण्डलित्वमारोहती"तिन्यायेनानुपपत्तेरिति भावः । इदन्तु बोध्यम्—मतभेदेन कल्पत्रयं व्याख्यातम्, भेदशब्दस्य कर्मभावकरणव्युत्पत्त्या स्वरूपान्योन्याभाववैधर्म्यपरत्वे तु कल्पत्रयमपि नैयायिकादिना शक्यावलम्बनम्, कथमन्यथा भेदसिद्धियोद्धाधिकारादौ त्रयाणामेव समर्थनं सङ्गच्छेतेति । अन्यदेवेति । पृथक्त्वं, विभागो, घटाद्यभिन्नत्वे सति घटादिप्रतियोगिकविशेषवत्त्वञ्चेत्यर्थः । तत्राद्यो घटादन्यः पट इति प्रतीतिसाक्षिकः, अन्यत्वस्य पृथक्त्वरूपत्वात्, अन्योन्याभावस्य तद्रूपत्वे तु घटात्पटो नेत्यपि प्रयोगा-

हि भवन् कस्मादपि भवति, अन्यथा 'स्वरूपं भेद' इति पारिभाषिकं नाम स्यात्, यदा च घटाद्भेदः पटस्येत्येतावानेवार्थः पटादेः स्वरूपं प्रत्यक्षेण गृह्यते, तदा घटोऽपि पटात्मन्येव प्रविष्ट इति पटघटयोरैकात्म्यमेव भेदग्राहिणा प्रत्यक्षेणावगाहितमिति विपरीतमापद्यते ।

ननु यथेयं प्रतीतिरभेदोल्लेखितया व्याख्यायते, तथा भेदोल्लेखित्वेऽपि दीयतामस्यां दृष्टिः; अभेदे हि घट इत्येव पट इत्येव वा बुद्धिः स्यात्, न तु घटाद्भिन्नः पट इति

---

पत्तेः । अन्योन्याभावस्तु घटो न पट इत्येव भासते इति तर्कामृते जगदीशः । केचित्तु पृथक्त्वस्य वैशेषिकमते भेदरूपतामाहुः, तदसत, वैशेषिकोपस्कारादौ तयोर्भेदेन स्फुटं साधितत्वादिति । द्वितीयस्य भेदत्वं तु भेदसिद्धौ व्यवहृतम्, "य इह नानेव पश्यति" त्यत्र विभागलक्षणभेदो निन्द्यते इति तत्रोक्तत्वात् । तृतीयस्तु माध्वसम्मतः, "भेदहीने त्वपर्यायशब्दान्तरनियामकः । विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषत" इति भेदजयश्रीग्रन्थे तैरुक्तत्वात् । घटभेदयोरभेदेऽपि घटपदभेदपदयोरपर्यायत्वनियामको विशेष इत्यर्थः । स्वरूपं भेदः = भेदपदार्थः स्वरूपम्, घटप्रतियोगिकत्वविशिष्टं पटत्वनुयोगिस्वरूपमेवेति यावत । घटपटयोः स्थलभेदेनानुयोगिनोः । यत्परस्परस्मात् = यस्मात्परस्परस्मात् भेदत्वेन प्रतीयमानं तत्परस्परमनन्तर्भाव्य = अविशेषणीकृत्य घटपटयोः स्वरूपं न सम्भवतीत्यन्वयः । विशेषणताया औत्सर्गिकत्वेन भेदत्वेन प्रतीयमाने प्रतियोगिनो विशेषणत्वे विधेयान्वयित्वावश्यम्भावात् घटस्याप्यनुयोग्यात्मतापत्तिरित्यर्थः। एतदेव विवृणोति भेद इति । कस्मादपि = किञ्चित्प्रतियोगिक एव । पारिभाषिकं = लोकव्यवहारमननुसन्धानम् । पटस्येति दृष्टान्तार्थम् । यथा पटस्येति प्रतीयमानं पटस्य स्वरूपं तथा घटाभेद इत्यपीत्यर्थः । विपरीतं = भेदविरुद्धम् । नच–घटभेदः पटात्मक इत्यत्र घटस्य भेदे विशेषणत्वेऽपि भेदीयविधेयान्वयितावच्छेदकसम्बन्धातिरिक्तेन स्वप्रतियोगिकभेदीयस्वरूपसम्बन्धविशेषेणैव विधेयान्वयित्वं, तावतैव विशेषणतोपपत्तेरिति वाच्यम्; प्रकृतविधेये विशेष्यान्वयितावच्छेदकसम्बन्धेनान्वयितायामेव विशेषणताव्यवहारस्य दण्डिनं पश्येत्यादौ दर्शनेन तदतिरिक्तसम्बन्धेनान्वये उपाधितासम्भवेऽपि विशेषणत्वासम्भवात् । अन्यथा शब्दोऽनित्य इत्यत्र शब्दत्वस्य स्वाश्रयद्वारकसम्बन्धेनानित्यत्वान्वयसम्भवात् तस्योपाधित्वव्यवहारो न स्यात् वस्तुतस्तु क्वापि विशेषणतोपाधिताव्यवस्था न स्यादिति भावः ।

अभेदोल्लेखितया = अभेदप्रतिपादकशब्दाभिलप्यमानविषयकतया । अविद्येति । एतेनोत्पत्तिविनाशकल्पनायां गौरवात् भेदस्य नित्यत्वसिद्धौ ब्रह्मवत्पारमार्थिकत्वमस्त्विति निरस्तम्; वक्ष्यमाणयुक्तिभिर्भेदस्य बाधे तस्य नित्यताया वक्तुमशक्यत्वेनाविद्यकत्वस्य वक्तव्यत्वात् । भेदं प्रत्यादिशाम इति योजना । पारमार्थिकमभेदमिति । एतेन घटपटाद्यभेदस्य ब्रह्मात्मकत्वं सूच्यते, अन्यथा ब्रह्मातिरिक्तस्य पारमार्थिकत्वेऽद्वैतव्याघात, अतएव घटपटादीनामकल्पितस्वरूपमपि ब्रह्मैव, अन्यथा घटाद्यस्वरूपत्वे ब्रह्मणो घटादिस्वरूपभूताभेदस्वरूपत्वोक्त्यसङ्गतेः । अभेदमिति स्वरूपभेदपक्षे इत्यादिः । निरुक्ताभिलप्यमानोविषयिकेत्यर्थः । आद्ये = अभेदविषयकत्वावच्छेदेन । अन्त्ये = भेदविषयकत्वावच्छेदेन प्रमा न स्यात्, अन्यथा स्वापेक्ष्यवैशसात् = भेदोपजीव्यस्याभेदस्य बाधप्रसङ्गात् । ननु प्रतियोगिनो विशेषणत्वे उक्तरीत्याऽभेदविषयकत्वस्य भेदप्रतीतावापत्तावपि भेदस्यानुयोगिस्वरूपत्वेनाभेदस्य च तदभावरूपत्वेन विपरीत एवोपजीव्योपजीवकभाव इति भेदविषयकत्वावच्छेदेनैव तस्याः प्रमात्वमुचितमिति चेन्न, भेदस्य स्वरूपत्वेऽपि भेदत्वेन सप्रतियोगिकत्वं तस्यावश्यं वाच्यम्, अन्यथा घटाद्भिन्नः पट इति

चेत्; स्यादप्येष पर्यनुयोगो यद्यविद्याविद्यमानभावं भेदं पारमार्थिकमभेदमिच्छन्तोऽपि प्रत्यादिशामः । तस्मात्—

अभेदं नोल्लिखन्ती धीर्न भेदोल्लेखनक्षमा ।
तथा चाद्ये प्रमा सा स्यान्नान्त्ये स्यापेद्यवैशसात् ॥

मुख्यनुपपत्तेः, तत्प्रतियोगित्वं चाभेदस्वरूपघटादेरिति कथं नाभेदस्य भेदोपजीव्यत्वम्, न ह्येकं विनाऽनेकमित्यस्य निर्विवादत्वात् । तथाचाभेदविषयकत्वावच्छेदेनैव प्रतीतेः प्रमात्वम् । भेदाभावत्वेन त्वभेदस्यापि भेदोपजीवकत्वेन मिथ्यात्वमेव, शून्यतापत्तिभिया तु भेदाभावत्वोपलक्षितस्वरूपस्य सत्यत्वमावयोः समानम् । न चैवं भेदत्वोपलक्षितस्वरूपस्यापि सत्यत्वमस्त्विति देयम्, एवं सति भेदत्वविशिष्टस्य त्वया मिथ्यात्वं स्वीकृतमेव, तदुपलक्षितमपि किं ब्रह्म वा घटादिस्वरूपभूतभेदो वा, आद्ये ब्रह्मणः सर्वाभेदात्मतावादेऽनृतभेदात्मतायास्तत्रासम्भवेन भेदत्वोपलक्षितत्वस्य तत्रासम्भवात्, भेदस्यापि सर्वान्तर्गतत्वेन तदभेदस्य ब्रह्मात्मकत्वे तदीयमकल्पितस्वरूपमपि ब्रह्मैव यद्यपि तथाप्येवं भेदभेदाभावत्वोपलक्षितत्वमेव ब्रह्मणः भेदभेदाभावत्वस्य भेदत्वरूपत्वेऽपि कल्पितेन तेनोपलक्षितस्य ब्रह्मणः सत्यत्वे का क्षतिः, कल्पितत्वं तु तस्य वक्ष्यदिशा दुर्निरूपतया । द्वितीये तु "नात्र काचन भिदास्ती"त्यादिश्रुतिविरोधः । वक्ष्यमाणदूषणगणग्रासश्चेति भावः । अनया च कारिकया 'प्रतियोगिनो भेदे उपाधित्वमिति' पक्षोऽपि निरस्त इति न्यूनता नाशङ्कनीया, तथाहि–धीः = घटो न पट इति समानविभक्त्यन्तपदाभिलप्यमानविषयिका धीरभेदं घटपटयोरविषयीकृत्य तयोर्भेदं विषयीकर्तुमक्षमा । नीलो घट इत्यादाविव घटो न पट इत्यत्रापि विभक्तीनामभेदार्थकतायाः संसर्गतयाऽभेदभानस्य चोचितत्वात्, प्रतियोगित्वानुयोगित्वयोर्विभक्त्यर्थताकल्पने गौरवात्. नच तयोः संसर्गतया भानान्न गौरवम्, अभेदस्यैव संसर्गतया एकस्य प्रतियोग्यनुयोगिनोरभावीयसंसर्गतासम्भवे प्रतियोगितानुयोगितयोरतिरिक्तयोः संसर्गताकल्पने गौरवात् । अतएव नामार्थयोरभेदान्वयबोधनियमस्यापि नात्र सङ्कोचः । भेदाभेदरूपतादात्म्यस्य सामानाधिकरण्यप्रतीतिप्रयोजकत्वपक्षेऽपि भेदस्याविषयकत्वकल्पनयैव विरोधः समाधेयः, अनुपलब्धिप्रकरणस्थभट्टपादवार्त्तिकानुकारीत्या प्रतियोग्यनुयोगिभ्याममभावस्य भेदाभेदोपगन्तृमीमांसकमतेऽपि तथैव वक्तुं युक्तम्, तथाच तदभिन्नाभिन्नस्य तदभिन्नत्वेन घटाभिन्नाभेदाभिन्नत्वेन घटे घटाभेदवत् पटाभिन्नभेदाभिन्नत्वात् घटे पटाभेदः, भेदभानस्यापि स्वीकाराच्च नानुभवविरोधः, किन्तूक्तरीत्यैकत्वस्योपजीव्यत्वेन तद्विषयकत्वावच्छेदेनैव धियः प्रमात्वं ननु भेदविषयकत्वावच्छेदेन, अन्यथोपजीव्यव्याघातादिति भावः । सिद्धे चैवमनुयोगिप्रतियोगिभेदानामभेदे यदि भेदांशेऽपि तादृशधियः प्रमात्वं तर्हि घटो न घट इत्यस्या अपि तदंशे प्रमात्वं स्यादिति शून्यतापत्तिरित्यपि द्रष्टव्यम् । एतच्चान्योन्याभावादिसाधारणम् । भेदत्वनिर्वचनभङ्गेन चोपाधितापक्षो व्युदस्यः । केचित्तु–यदि एवमभेदमुल्लिखन्ती धीर्न जायते, तदा तदनन्तरोत्पन्ना धीर्भेदोल्लेखनक्षमा न सम्भवतीति भेदस्याभेदोपजीवकत्वेनाभेदविषयकत्वावच्छेदेनैव धियः प्रमात्वम् । नहि तादात्म्याभावो न भेद इति वक्ष्यते तथाऽऽरोपं विनाऽभावलौकिकप्रत्यक्षमिति भेदत्वेन भेदलौकिकप्रत्यक्षार्थं घटपटयोस्तादात्म्यमारोपणीयम् । तथाच पूर्वोत्तरज्ञानयोः किं प्रमाणमिति सन्देहे उपजीव्यत्वेन पूर्वमेव, उत्तरं तु द्विचन्द्रादिज्ञानमिव भ्रमः, पूर्वापरबलीयस्त्वं तु निरपेक्षविषयम् । नचैवं शुक्तौ 'इदं रजतमिति' ज्ञानस्यैव प्रमात्वं स्यात् नतु 'नेदं रजतमि'त्यस्येति वाच्यम्; वस्तुतस्तस्य प्रमात्वेऽपि सर्वाभेदनिश्चयाभावेन व्यावहारिकप्रमात्वविशिष्टं नेदं रजतमिति ज्ञानमपेक्ष्य भ्रमत्वव्यवहारात्, रजते रजतत्वाभावावगाहिनेदन्त्व तत्र मिथ्यात्वनिश्चयात्पूर्वं भ्रमत्वव्यवहारवदिति व्याकुर्वते ।

अथ भेद इत्येतावन्मात्रं पटस्य स्वरूपम्, घटादिति च तद् घटेन प्रतियोगिनाऽन्येनैव निरूप्यते; तदपि नोपपद्यते, निष्प्रतियोगिकस्य भेदस्य प्रमाणागोचरत्वात्। नित्यं प्रतियोगिघटिते एव तस्मिन् प्रमाणप्रसरात्। का चेयं वाचोयुक्तिर्यदन्यासाकाङ्क्षं पटस्य स्वरूपमन्येन प्रतियोगिना निरूप्यमाणं ततो भेदो भवतीति। नहि यत्स्वरूपेणैव नीलं, तत्पीतेन निरूप्यमाणं नीलं भवति।

नतु घटत्वावच्छिन्नप्रतियोगिताकत्वमनुगमकमेवोपलक्षणतया, स्वरूपं तु भेदमात्रमिति न विशेषणपक्षोक्तदोष इत्याशङ्कते अथेति। घटादिति च = घटादित्यभिलप्यमानघटप्रतियोगिकत्वेन तु। तत् = पटस्वरूपं। प्रतियोगिनेति वस्तुगत्या अन्येनेत्युक्त्यैव निर्वाहात्। तृतीयार्थः प्रयोज्यत्वं ज्ञानजन्यत्वरूपं प्रतीतावन्वेति। निरूप्यते = प्रतीयते। तथाच पटात्मकभेदनिष्ठं घटप्रतियोगिकत्वप्रकारकज्ञानविषयत्वं घटज्ञानजन्यज्ञानविषयत्वप्रयुक्तमेव. पटस्वरूपस्यापि भेदत्वेन ज्ञानस्य प्रतियोगितावच्छेदकप्रकारकज्ञानजन्यत्वात्. तद्विषयकसाक्षात्कारजनकज्ञानविषयस्य च तद्विषयकसाक्षात्कारत्वव्यापकविषयिताकत्वनियमादिति भावः। यदि नियममिममाश्रित्य भवता भेदप्रत्यक्षस्य प्रतियोगिविषयकत्वमुपपाद्यते, तदा प्रतियोगिनः प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वस्य वोपलक्षणता न वक्तुं शक्या, उपलक्ष्यविषयकप्रतीतेः कदाचिदुपलक्षणाविषयिकाया अपि दर्शनेन प्रतियोगिन उपलक्षणत्वे तस्य भेदत्वावच्छिन्नविषयकसाक्षात्कारत्वव्यापकविषयिताकत्वं न स्यादित्याशयेनोपलक्षणपक्षस्यासम्भवदुक्तिकतामुपाधिपक्षोक्तदूषणसत्त्वे एवाह निष्प्रतियोगिकस्येति। प्रतियोग्यविषयकप्रत्यक्षविषयस्येत्यर्थः। प्रतियोगिघटिते = प्रतियोगिविषयकप्रत्यक्षविषये। उक्तनियमे एव तात्पर्यम्। अतएवाभावस्य सविकल्पकैकवेद्यत्वमिति तार्किकाः। तथा च कदाचिद्भेदस्य प्रतियोग्यविषयकप्रत्यक्षविषयतायामिष्टापत्तिरशक्येति भावः। एतावता स्वरूपभेदपक्षेऽद्वैतप्रसङ्गमभिधाय सप्रतियोगिकत्वानुपपत्तिं दूषणान्तरमाह का चेति। अन्यासाकाङ्क्षम् = घटादिविषयिताव्याप्यसाक्षात्कारीयविषयिताया अनिरूपकम्। अन्येन निरूप्यमाणं = घटादिविषयकज्ञानजन्यज्ञानविषयताश्रयीभवत्। ततो भेदः = घटादिप्रतियोगिकोभेदः। नीलं भवति = पीतप्रतियोगिकं नीलं भवति यथा नीलस्वरूपस्य वस्तुनः कदाचित्पीतज्ञानजन्यज्ञानविषयत्वेऽपि स्वनीलभावस्य पीतप्रतियोगिकत्वे तादृशज्ञानविषयत्वमप्रयोजकम्, तथा पटस्वरूपस्य घटादिविषयकज्ञानजन्यज्ञानविषयत्वेऽपि घटादिप्रतियोगिकत्वे न तत्प्रयोजकम्, पट इत्याकारकसाक्षात्कारस्यापि सत्त्वेन पटस्वरूपस्य घटादिविषयिताव्याप्यसाक्षात्कारीयविषयित्वानिरूपकत्वात्, तादृशविषयित्वनिरूपकत्वस्यैव च घटादिप्रतियोगिकत्वप्रयोजकत्वात्। नच पटत्वेन तादृशविषयित्वानिरूपकत्वेऽपि भेदत्वेन तन्निरूपकत्वात् घटादिप्रतियोगिकत्वं स्यादिति वाच्यम्; एवं हि पटभेदयोरभेदेऽपि पटत्वभेदत्वाभ्यां भेद इत्यायातम्, तथासति भेदाभेदवादो नतु स्वरूपमेव भेद इति, नचासावपि युक्तः, भेदस्यैव निरूप्यमाणत्वात्। भिन्नाभ्यां हि रूपाभ्यां भेद इति तयोरपि भेदनिरूपणप्रसङ्गे रूपान्तराणामननुभूयमानानां प्रसङ्गं को वारयिता। किञ्च भेदत्वमपि पटात्मकं चेत्, तर्हि पटस्य स्वरूपेणैव सप्रतियोगिकत्वनिष्प्रतियोगिकत्वयोरापत्तिरिति विरोधो भेदपदानुयोगिवाचकपदयोः पर्यायतापत्तिश्च माभूदिति भेदत्वस्य पटातिरिक्तत्वमेव वाच्यम्, किन्तु भेदस्यातिरिक्तत्वकल्पनयाऽप्युक्तविरोधादिपरिहारोपपत्तौ भेदत्वस्यैवातिरेके विनिगमकं दुर्लभम्, प्रत्युत तदतिरेके तस्यापि रूपान्तरमुक्तरीत्या वक्तव्यमित्यनवस्था। यदि च भेदातिरेकपक्षेऽपि भेदे भेदान्तरस्योपगन्तव्यत्वेनानवस्था समानैव, तदापि रूपभेदेनाप्याधाराधेयभावासम्भवस्योक्तत्वेन भेदातिरिक्तैव

यदपि चोक्तं, प्रतियोगिना घटेन निरूप्यमाणं पटस्य स्वरूपं भेद इति, तत्रापि पटं प्रति प्रतियोगित्वं घटस्य किं स्वरूपं, किं वा धर्मः कश्चित्। यदि प्रथमः, तदा पटं प्रति प्रतियोगित्वमित्येतावानेवार्थो घटस्य स्वरूपं भवदात्मन्येव पटमपि प्रक्षिपतीति कथं नाद्वैतमेव पर्यवस्यति। तत्रापि यदि प्रतियोगित्वमात्रं घटस्यात्मा, पटं प्रतीति च पटापेक्षित्वमन्यदेव। तदप्यनुपपन्नम्। अकिञ्चिदपेक्षस्य प्रतियोगित्वस्य प्रमाणाविषयत्वात्। 'पटं प्रती'त्यत्रापि च स्वरूपतदन्यविकल्पे दोष एव। नापि द्वितीयः; योऽसौ धर्मः पटं प्रति प्रतियोगित्वं तस्यात्मनि पटोऽपि प्रविशतीति तेन सह पटस्याद्वैतं स्यात्। यदा च पटो घटस्य धर्मतामापन्नस्तदा घटोऽपि पटस्य धर्मतामनेनैव न्यायेन गच्छेत्। नहि पट-प्रतियोगित्वस्य घटेन प्रतियोगिना निरूप्यमाणत्वे घटस्यान्या गतिरस्तीति परस्परमाश्रि

युक्ता। किञ्च भेदत्वेन सप्रतियोगिकत्वं पटस्येत्यनेन भेदत्वसप्रतियोगिकत्वमेव पटस्य सप्रतियोगिकत्वं तज्जन्यं वा तज्ज्ञाप्यं वा तदिति त्रयमप्यभिप्रेतं न सम्भवति, भेदत्वं घटप्रतियोगिकं पटः घटप्रतियोगिक इति प्रतीत्यनुदयेन भेदत्वपटयोः सप्रतियोगिकत्वाभावात्। नापि भेदत्वावच्छिन्नं पटनिष्ठं सप्रतियोगिकत्वमित्यभिप्रेतं युक्तम्, पटे भेदत्वनिरूपणं विना तदवच्छिन्नसप्रतियोगिकत्वस्य तत्र वक्तुमशक्यत्वात्, तथा चान्योन्याश्रयः। दुर्वचं च भेदत्वमिति वक्ष्यते इति भावः।

प्रकारान्तरेणाद्वैतमापादयितुमाह यदपीति। पटं प्रति = पटात्मकभेदनिरूपितं। आत्मनि = स्वाभिन्नघटे। स्वं पटनिरूपितत्वविशिष्टं निरूपितत्वसम्बन्धेन पटविशिष्टं वा प्रतियोगित्वं। पटं प्रक्षिपतीति। पटाभेदप्रयोजकीभवतीति यावत्। विशिष्टस्य घटाभेदे पटस्य विशेषणस्यापि तदावश्यंकत्वात् तत्प्रयोजकत्वस्य विशिष्टे सम्भवः। पटनिरूपितत्वस्य पटस्य वा प्रतियोगितायामुपलक्षणत्वे पट-निरूपितप्रतियोगितायाः कदाचित्पटनिरूपितत्वाविषयकसाक्षात्कारविषयत्वप्रसङ्गः, नचेष्टापत्तिः, सनिरूपकपदार्थमात्रस्य स्वनिरूपकनिरूपितविषयिताव्याप्यसाक्षात्कारीयविषयितानिरूपकतायाः क्लृप्तत्वादित्याह अकिञ्चिदपेक्षस्येति। तादृशविषयित्वानिरूपकस्येत्यर्थः। अत्राप्युपाधित्वविवक्षायां तु पुरोदीरितरीत्यैव यो यदभेदेन प्रतीयमाननिरूपकः स तदभिन्न इति व्याप्तिमाश्रित्य 'पटनिरूपितं प्रतियोगित्व'मित्यत्र निरूपिताभेदेन प्रतीयमानप्रतियोगित्वनिरूपकः पट इति स निरूपिताभिन्नः, अनुपदं वक्ष्यमाणरीत्या पटप्रतियोगित्वयोरपि स्वभावसम्बन्धस्यैव वक्तव्यत्वाद्वा स निरूपिताभिन्न इति निरूपिताभिन्नप्रतियोगित्वाभिन्नघटाभिन्नोऽपीत्यद्वैतं प्रसञ्जनीयम्। घटो न पट इति धियमादाय त्वद्वैतमुक्तमेव। पटं प्रतीति। पटनिरूपिता घटात्मकप्रतियोगितेत्यत्र पटविशिष्टनिरूपितत्वस्य घटस्वरूपत्वेऽद्वैतम्, पटस्योपलक्षणत्वञ्चोक्तरीत्याऽसम्भवदुक्तिकम्। उपाधित्वेऽप्युक्तरीत्याऽद्वैतम्। तादृशनिरूपितत्वस्य घटधर्मत्वे तु धर्मधर्मिसम्बन्धस्यातिरेके तस्यापि सम्बन्धान्तरं वाच्यमिति सम्बन्धानन्त्यम्, अनतिरेके च धर्मधर्मिणोरप्यद्वैते एव पर्यवसानमित्यर्थः। प्रविशति = विशेषणीभवति। तेन = प्रतियोगित्वेन। स्यादिति। धर्मधर्मिणोरभेदातिरिक्तसम्बन्धस्यानवस्थापादकत्वात् यो यदभेदेनेति व्याप्तिसत्त्वाच्चेति भावः। तथा च पटप्रतियोगित्वयोरैक्ये सति प्रतियोगिताया इव पटस्यापि घटधर्मत्वमायातमित्याशयेनाह यदेति। न्यायमेव स्फोरयितुमाह नहीति। पटनिरूपितप्रतियोगित्वस्य भेदप्रतियोगिघटनिरूप्यत्वमप्यस्ति, घटस्य तदाश्रयत्वात्, तथा च धर्मधर्मिणोरभेदेन घटप्रतियोगितयोरैक्ये प्रतियोगितानिरूपकत्वमिव घटनिरूपकत्वमपि पटे स्यात्. निरूपकतासम्बन्धेन घटधर्मित्वं पटे स्यादिति यावत्। अथवा घटः पटो नेति प्रतीतिमादायेदं द्रष्टव्यम्—पटप्रतियोगित्वस्य = पटनिष्ठप्रतियोगित्वस्य। प्रतियोगिना = उक्त-

तत्त्वमाश्रयत्वं च स्यात्; नच कस्यचित् प्रमाणस्य विषयो घटारूढः पटस्तत्पटारूढश्च स एव घट इति।

किञ्च धर्मस्य तस्य धर्मिणा सममसम्बन्धेऽतिप्रसङ्गः, सम्बन्धानन्त्येऽनवस्था, प्रथमतोऽन्ततो गत्वा वा स्वभावसम्बन्धाभ्युपगमे सम्बन्धान्तरस्यापि तत्स्वभावप्रवेशादभेदे एव पर्यवसानं स्यादिति। एवमन्यस्मिन्नपि धर्मे विकल्प इति। तस्मात्स्वरूपभेदे प्रमाणं भवत्प्रत्यक्षमद्वैते एव प्रमाणं भवति। ननु घटादिकमेव यदाऽन्यानपेक्षं वीक्ष्यते

प्रतियोगितानिरूपकेण। घटस्यानुयोगितया भेदत्वात् तन्निरूपकत्वध्रौव्यात्। तथाच घटतन्निरूपितप्रतियोगितयोः स्वभावसम्बन्धाद्वा, उक्तव्याप्तेर्वाऽभेदे सति प्रतियोगितावद्घटस्यापि पटधर्मत्वं स्यादिति भावः। परस्परधर्मधर्मिभावप्रसङ्गमुपसंहरति इति परस्परमिति। स्यादित्यन्वयः। आश्रितत्वेनान्वये स्वाश्रयत्वस्य पृथगभिधानमसङ्गतं स्यात्। स्यादिति। घटो वा पटो वा यदि स्वाश्रयाश्रयः स्यात् स्वभिन्नः स्यादिति। अतएव प्रमेयत्वाभिधेयत्वयोरपि न परस्पराश्रयत्वम्, प्रमेयत्वादिव्यक्तीनां नानात्वात्, केवलान्वयित्वं तु प्रमेयत्वत्वादिनैवेति भावः।

न परं घटपटयोरेव धर्मधर्मिभावेनाभेदः, अपि तु धर्मधर्मिमात्रस्येत्याशयेनाह किञ्चेति। तस्य = पटनिरूपितप्रतियोगित्वादेः। धर्मिणा = घटादिना। अतिप्रसङ्गः = असम्बद्धयोरपि धर्मधर्मिभावप्रसङ्गः। सम्बन्धिभ्यामतिरिक्तो यदि सम्बन्धः, तदाऽसम्बद्धस्य सम्बन्धत्वासम्भवात् तस्य सम्बन्धान्तरमेव स्यादेवमग्रेऽपीत्यनवस्थेत्याह सम्बन्धानन्त्ये इति। अथेष्टमानन्त्यम्, प्रामाणिकत्वात्, नच पूर्वपूर्वकार्यस्योत्तरोत्तरेणैव निर्वाहात् पूर्वपूर्वसम्बन्धवैयर्थ्यम्; पूर्वस्य सम्बन्धत्वप्रतीत्यन्यथानुपपत्त्या कल्पितेन तदुत्सारणायोगात् उपजीव्यव्याघातानौचित्यादिति चेन्न; सम्बन्धिनोर्योग्यत्वे सम्बन्धस्य योग्यत्वावश्यकत्वेनाद्यसम्बन्धवत्सम्बन्धान्तराणामपि कदाचित्प्रत्यक्षापत्तेः। अतएवार्थापत्त्याऽपि न तेषां सिद्धिः, अनिर्वाच्यतयैवोपपत्तेस्तदप्रसराच्चेति भावः। तत्स्वभावप्रवेशात् = सम्बन्धस्वभावत्वप्रसङ्गात्। अभेदे एव पर्यवसानं स्यात् = अभेदस्यैव सिद्धिः स्यात्। अयम्भावः—सम्बन्धिनोरन्यतरस्य स्वभावः सम्बन्धः, उत द्वयोरेव, नाद्यः, विनिगमनाभावात् द्वयोः सम्बन्ध इति व्यवहारविरोधाच्च, स्वं न स्वीयमित्यनुभवबाधाच्च, रूपभेदं परिकल्प्य स्वस्मिन् स्वीयत्वोपपादनस्य 'नहि दण्ड्यपि देवदत्तः कुण्डलिनं स्वमारोहती'ति न्यायेनासम्भवाच्च। नापि द्वितीयः तथाहि—द्वौ स्वभावौ सम्बन्धौ वा सम्बन्धो वा, नाद्यः, द्वयोरेकः सम्बन्ध इति व्यवहारविरोधात्, उक्तानुभवबाधाच्च; असम्बद्धयोरपि द्वयोः स्वभावसत्त्वेन सम्बद्धत्वधीप्रसङ्गाच्च। द्वितीये त्वद्वैतप्रसङ्गः, द्वयोरैक्यं विनैकसम्बन्धात्मकत्वासम्भवात्। अतिप्रसङ्गेन द्वाभ्यामेकसम्बन्धात्मकतामनापद्यैकसम्बन्धत्वव्यवहारोपपादनासम्भवात्. अतिरिक्तसम्बन्धस्यानवस्थया निरस्तत्वादिति। नच—सम्बन्धित्वमाश्रित्याभेदसाधने उपजीव्यविरोधः, अभेदे सति द्वयोः परस्परसम्बन्धित्वानुपपत्तेरिति वाच्यम्; आविद्यकभेदमादायैवाविद्यकपरस्परसम्बन्धित्वोपपत्तेरिति। धर्मे इति। घटत्वादेर्घटादिना समवायः सम्बन्धः, तस्य च स्वरूपमेवेति समवायघटयोः स्वरूपद्वयं सम्बन्धः, अन्यतरस्वरूपं वेत्यादिकमुक्तरीत्या विकल्पनीयमित्यर्थः। धर्मविकल्प इति समस्तपाठे तु धर्मधर्मिभावस्य विकल्पो भ्रान्तिरित्यर्थः। ननु स्वरूपभेदस्य निष्प्रतियोगिकत्वेन त्वदुक्तरीत्या वस्तुतः सप्रतियोगिकत्वं मास्तु, तथापि सप्रतियोगिकत्वेन प्रतीतिस्तु स्यादित्याशयेनाशङ्कते नन्विति। अन्यानपेक्षं वीक्ष्यते इति। स्वात्मकभेदीयप्रतियोगितावच्छेदकप्रकारकत्वशून्यज्ञानीयविषयताश्रय इत्यर्थः। तादृशभेदप्रतियोग्यविषयकज्ञानविषयताश्रय इत्यर्थस्तु न सम्भवति. घट इति प्रतीतावपि घटानुयोगिकभेदप्रतियो-

तदा घटादिकमित्येव प्रतीयते, यदा पुनः पटादिना निरूप्यते तदा ततो भेद इति प्रतीयते। मैवम्। 'घटादिक'मित्येवंभूतप्रतीतेस्तावद्भेदप्रतीतिर्विलक्षणा; सा च न घटादिमात्रेण स्वविषयेणान्यथाकारा भवितुमर्हति। न च पटादिकमधिकं तदा प्रकाशते इति विशेषः स्यात्; घटपटविषयप्रतीतितोऽपि वैलक्षण्यात्, नहि 'घटः पटश्चे'ति 'घटात्पटो भिन्न' इति प्रतीतयोरेकार्थकत्वं कश्चित्प्रत्येति, तत्कस्य हेतोः? पञ्चम्या प्रथमया च वैकल्पिकं निर्देशमसहमानयैव प्रतीतिकलहनिरासात्, नहि 'घटः पटश्चे'ति प्रत्येतव्ये कश्चिद् 'घटात्पटो भिन्न' इति प्रत्येति। तस्माद्घटस्य न स्वरूपनिरूपणे पटप्रतीत्यपेक्षा।

नच यत्प्रतीतिर्यत्प्रतीतेः कारणं स्यात्, तत्र तस्याः कारणभूतायाः प्रतीतेर्योऽर्थः,

गिनो घटत्वस्य स्वरूपेण भानात् तत्प्रतियोगिकत्वेन भेदभानापत्तेः। प्रतियोगितानुयोगितावच्छेदकधर्मप्रकारकज्ञानसत्त्वे तु सप्रतियोगिकत्वेन भेदात्मनो घटस्य भानं भवत्येवेति भावः। विषयवैलक्षण्यं विना प्रतीतिवैलक्षण्योपगमे साकारवादापातात् 'घटात्पटो भिन्न' इति 'घटपटौ' इति प्रतीत्योर्वैलक्षण्यस्य सप्रतियोगिकं कञ्चित्पदार्थमनुपेत्योपपादनानुपपत्तेः सप्रतियोगिकः कश्चित्पदार्थोऽवश्योपेयः, स च न पट इत्युक्तमेवेत्यतिरिक्तो भेदः स्वीकार्य इत्याशयेनाह घटादिकमिति। एवम्भूतेति। एवमाकारेत्यर्थः। भेदप्रतीतिः = भेदत्वप्रकारिका प्रतीतिः। सा = उक्तभेदप्रतीतिः। अन्यथाकारा = घटादिकमित्याकारकप्रतीतिविलक्षणाकारा। तदा = तत्र, उक्तभेदप्रतीताविति यावत्। वैलक्षण्यादिति। उक्तभेदप्रतीतेरित्यादिः। एकार्थकत्वं = चकारार्थातिरिक्तांशे समानविषयकत्वम्। प्रत्येतीति। एतेनेदमपि सूचितम्, प्रतियोगितानुयोगितावच्छेदकविषयकत्वे न सप्रतियोगिकत्वेनानुयोगिविषयकत्वनियमः, अन्यथा घटः पटश्चेति प्रतीत्यपलापापत्तेः। नच प्रतियोगितानुयोगितावच्छेदकयोः परस्परभेदत्वेन ग्रहणानन्तरं सप्रतियोगिकत्वेनानुयोगिभाननियम इति वाच्यम्, एवं सति प्रतियोगितानुयोगितावच्छेदकयोः परस्परभेदत्वेन ज्ञानार्थं रूपान्तरयोस्तत्रिष्ठयोर्भेदत्वेन ग्रहोऽपेक्षणीय इत्यनवस्थापत्तेः। वस्तुगत्या परस्परभेदरूपयोः प्रतियोगितानुयोगितावच्छेदकयोर्ज्ञानस्यानुयोगिनः सप्रतियोगिकत्वेन भाननियामकत्वे द्रव्यत्वघटत्वयोर्ज्ञानानन्तरं घटो द्रव्यं नेति प्रतीत्यापत्तेः, एकस्मिन्नानात्वभ्रमानुपपत्तेश्च। एतेन वस्तुतो व्यधिकरणयोर्धर्मयोरुक्तभाननियामकत्वं निरस्तम्; व्यधिकरणत्वेन तयोर्ज्ञानस्योक्तभाननियामकत्वमुपेत्योक्तानुपपत्तिवारणे तु व्यधिकरणत्वस्य तद्वद्वृत्तिभिन्नत्वादिरूपत्वेऽनवस्था, तद्वद्वृत्तित्वाभाववत्त्वादिरूपत्वे त्वभावत्वस्य भावभिन्नत्वरूपत्वेनोक्तदोषः अभावत्वस्याखण्डोपाधित्वे तु प्रतीतिविशेषसाक्षिकतयैव तस्य निरूप्यत्वात्प्रतीतिविषययोः परस्परनिरूपणेनान्योन्याश्रयापत्तेः। असहमानयेति। पञ्चम्याः प्रतियोगित्वार्थकत्वेन प्रथमायाश्च धर्मिमात्रबोधकत्वेन तयोः समानार्थकत्वनियतविकल्पानुपपत्तेरित्यर्थः। प्रतीतिकलहनिरासात् = उक्तप्रतीत्योः समानविषयकत्वविवादनिरासात्। इदमुपलक्षणम्—भिन्न इत्यंशमादायापि समानविषयकत्वाभावो द्रष्टव्यः, अनुयोगिनो भेदाधारत्वेन प्रतीत्यसम्भवस्य स्वरूपभेदपक्षेऽभिहितत्वात्। प्रत्येतव्ये = प्रत्याययितव्ये। प्रत्येति = प्रयुङ्क्ते। अभिलापजन्यप्रतीतितुल्यत्वादभिलप्यमानप्रतीतेरिति भावः।

धूमाद्वह्निरित्यत्र पञ्चमीसमभिव्याहारेण ज्ञानजन्यज्ञानविषयत्वं वह्नौ भासते, तच्चान्वयव्यतिरेकाभ्यामुक्तरीत्या लक्षणया पञ्चम्यर्थ इति वा, धूमपदं स्वार्थज्ञाने वह्निपदं च स्वार्थज्ञानविषये लाक्षणिकं पञ्चमी तु हेत्वर्थैवेति मतान्तरेण तादृशपदद्वयप्रतिपाद्यं वैयत्यदेतत्। एवञ्च प्रकृतेऽपि पटस्य भेदात्मना च ज्ञानजन्यज्ञानविषयत्वात् 'घटात्पटो भिन्न' इति वाक्याभिलप्यप्रतीतिरतिरिक्तसप्रतियोगिक-

तस्मादयमिति कृत्वा कार्यभूतायाः प्रतीतेरर्थः प्रतीयते; मा भून्निर्विकल्पकार्थादेवं सविकल्पकार्थस्य प्रतीतिः; मा च सादृश्यादेरेवं स्मर्यमाणादेः स्यात्। तस्मात् 'पटो घटाद्भिन्न' इत्याद्याकारेण पटादेर्भेद एव भेदावधिभूतघटादिसङ्घटितः स्फुटं सर्वलोकसाक्षिकः प्रतीयमानो नैकप्रतीतेरन्यप्रतीत्यपेक्षामात्रेण समर्थयितुं शक्योऽतिप्रसङ्गादिति।

पदार्थोपगमं विनैव निर्वाहमासादयन्ती न तादृशपदार्थसाधनायालमित्यत आह नचेति। योऽर्थः स 'तस्मा'दिति कृत्वा, कार्यभूतायाः प्रतीतेरर्थस्तु 'अय'मिति कृत्वा प्रतीयते इत्यन्वयः। यथायोगं पञ्चम्यन्तप्रथमान्तपदाभिलप्यप्रतीतिविषयताश्रय इत्यर्थः। यद्यपि 'घटात्पट' इति न प्रतीतिरपितु घटाद्भिन्नः पट इति, तथाच भेदत्वेनैव घटज्ञानजन्यज्ञानविषयत्वं पटस्य वाच्यम्, तच्चायुक्तम्, भेदत्वस्य पटे निरस्तत्वात्तथापि दूषणान्तरमाह मा भूदिति। निर्विकल्पकार्थात् = गोत्वादितः एवं = अयमिति कृत्वा प्रतीतिः। तथाच गोत्वादिविषयकनिर्विकल्पकजन्यज्ञानविषयीभूतगवादेः 'गोत्वाद्गौ'रित्याकारा प्रतीतिःस्यात्। ननु व्याप्यव्यापकभावप्रतिसन्धानदशायामिष्टापत्तिः, यदि चोक्तप्रतिसन्धानस्याभावदशायामुक्तप्रतीतिरापाद्यते, तद्दशायामपि च 'गोत्वाद्गौ' रिति प्रतीतौ गोत्वत्वेनैव गोत्वस्य भानात् तेन रूपेण च तस्य निर्विकल्पकाविषयत्वात्, निर्विकल्पकविषयीभूतरूपेणैव च पञ्चम्यन्तपदाभिलप्यविषयताकप्रतीतेरापाद्यत्वान्नेष्टापत्तिः, अत एव गौर्गौरित्यत्रापि न सा, गोत्वविशिष्टस्य निर्विकल्पकाविषयस्यैव तत्र पञ्चम्यन्तपदेनाभिलापादित्युच्यते, तदाऽपि जनकीभूतसविकल्पकज्ञानविषयस्य तथा भाने न बाधकम्, भेदधीजनकज्ञानस्य प्रतियोगितावच्छेदकप्रकारकत्वेन सविकल्पकत्वादित्यत आह मा चेति। सादृश्यादेः = आह्लादकत्वादिरूपसादृश्यादितः। तथा च चन्द्रमुखयोराह्लादकत्वं सादृश्यं गृहीतवतस्तयोरेकतरस्याह्लादकत्वेन ज्ञानेऽपरांशे प्रथमान्तपदाभिलप्यविषयिका आह्लादकत्वांशे च पञ्चम्यन्तपदाभिलप्यविषयिका प्रत्यक्षात्मिका प्रतीतिःस्यात्, एवं दण्डादिज्ञानजन्यधियोऽपि दण्डाद्यंशे पञ्चम्यन्तपदबोध्यविषयकत्वं स्यात् यदि तद्विषयकप्रतीतिजन्यप्रतीतेस्तदंशे तादृशपदबोध्यविषयकत्वनियमःस्यादित्यर्थः। धूमाद्वह्निरित्यादिशब्दबोधे एवोक्ता सरणिर्नत्वन्यत्र, अत एव परार्थानुमानाधीनानुमितेरपि न धूमादिति पञ्चम्यन्तपदबोध्यविषयकत्वं ज्ञायमानविशेषणजन्यत्वेन विशेषणकालवृत्तितया विशेष्यभाननैयत्यपक्षेऽपि धूमवान् पर्वतो वह्निमानित्येवानुमितिः, घटाद्भिन्नः पट इत्यादिप्रतीतिस्तु प्रत्यक्षात्मिकाया अपि जायमानत्वात् कथं पञ्चम्या ज्ञानजन्यज्ञानविषयत्वाभिलापः, घटप्रतियोगिकत्वस्यैव तत्र भेदेऽनुभवादिति भावः। पटादेरिति। पटाद्यनुयोगिक इत्यर्थः। अवधिः = प्रतियोगी। सङ्घटितः = विशिष्टः प्रतियोगितानिरूपकानुयोगिताविशेषेण वैशिष्ट्यमाभाय भूतान्तम्। अतिप्रसङ्गादिति। सप्रतियोगिकपदार्थापलापप्रसङ्गादित्यर्थः। गोबुद्धिजन्या या बुद्धिः सदृशपदप्रयोगो वा तद्विषयत्वमेव गवयस्य गोसादृश्यम्, घटबुद्धिजन्या या बुद्धिः शक्तिपदप्रयोगो वा तद्विषयत्वमेव दण्डादेर्घटशक्तत्वमित्याद्यापत्तेरिति भावः। अत्र स्वरूपभेदपक्षे संशयाद्यनुपपत्तिं दूषणान्तरमपि वक्ष्यतीति द्रष्टव्यम्। एवं कपालप्रतियोगिकभेदस्य घटानुयोगिकस्य घटात्मकतया कपालवृत्तित्वात् कपालं न कपालमितिधियः प्रमात्वापत्तिरित्यपि दूषणमाहुः। ननु कपालभेदात्मकघटत्वावच्छिन्नाधिकरणतायाः कपाले स्वीकारेऽपि कपालभेदत्वावच्छिन्नाधिकरणताया अनङ्गीकारान्नोक्तापत्तिः, गुणे विशिष्टसत्तात्मकसत्ताधिकरणताया अङ्गीकारेऽपि विशिष्टसत्तात्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतानङ्गीकारवदिति चेन्न; विशिष्टसत्तात्वेन शुद्धसत्तात्वेन च भेदो वा, अभेदो वा, भेदाभेदौ वा। नाद्यः, विशिष्टसत्ता न सत्तेति प्रतीतेः प्रमात्वापत्तेः, एवं कपालभेदो न घट इत्यस्यापि प्रमात्वापत्तौ स्वरूपभेदपक्षच्युतिः। न द्वितीयः, तथा सति विशिष्टसत्ता-

अतएवान्योन्याभावं भेदमवगाहमानं प्रत्यक्षमद्वैतश्रुतिबाधकमित्यपि निरस्तम्;

त्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतायाः सत्तात्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतायाश्च भेदस्य युक्त्या कटाक्षेणाप्यवीक्षणात् गुणो विशिष्टसत्तावानिति धियः प्रमात्वापत्तिः। एवं प्रकृतेऽपि कपालभेदत्वघटत्वाभ्यामभेदे कपालं न कपालमित्यस्याः प्रमात्वापत्तिः। न च गुणो विशिष्टसत्तावानितिधियो भ्रमत्वान्यथानुपपत्त्यैव विशिष्टसत्तात्वावच्छिन्नाधिकरणताया अतिरिक्तत्वसिद्धिः, विशिष्टशुद्धसत्तयोर्भेदेनापि तद्भ्रमत्वोपपत्तौ तदन्यथानुपपत्त्यप्रसरात्, प्रत्युत यावत उपपादकस्यार्थापत्तिविषयत्वात् विशिष्टसत्तात्वसत्तात्वाभ्याममभेदे तादृशाधिकरणतातिरिक्तताया अप्यनुपपत्तेस्ताभ्यामपि भेदस्य तयाऽवश्योपनेयत्वात्। एतेन-विशिष्टाधिकरणतायाः क्लृप्ताधिकरणस्वरूपत्वेनाप्युपपत्तौ विशिष्टातिरिक्तत्वं गौरवग्रस्तमिति-निरस्तम्; आधाराधेयभावानुपपत्त्या तस्या अधिकरणस्वरूपताया वक्तुमशक्यत्वाच्च, तद्वच्छुद्धाधिकरणताया अप्यधिकरणस्वरूपताया एव वक्तव्यत्वेन तदभिन्नाभिन्नस्येति न्यायेन विशिष्टशुद्धाधिकरणतयोरप्यभेदस्य दुर्वारत्वाच्च। रूपभेदेनैकत्राधाराधेयभावोपगमस्य भेदाभेदवादनिवेशित्वाच्च। एतेन–विशिष्टशुद्धयोरभेदेन 'गुणे गुणकर्मान्यत्वविशिष्टसत्ते'ति प्रतीतेः प्रमात्वमिति-परास्तम्; आधारत्वाधेयत्वयोस्तुल्यवित्तिवेद्यत्वेनाधेयत्वस्य विशिष्टसत्तायामिव तदाधारत्वस्यापि गुणे तयाऽवश्यावगाह्यत्वात् तद्वत् 'गुणो विशिष्टसत्तावा'नित्यस्यापि प्रमात्वापत्तेः। न चैवं विशिष्टस्यातिरेके विशिष्टसत्ता न सत्तेत्यस्याः प्रमात्वापत्तिः, एवं सति भेदस्याभेदसमानाधिकरणस्यैवोपगन्तव्यत्वेन तृतीयकल्पे विश्रान्तिः। नञा भेदस्याभेदविरुद्धस्यैव बोधनात्। अतएव–द्रव्यं विशिष्टसत्तावदिति निर्णयदशायां द्रव्यं न सत्तावदिति निर्णयवारणाय प्रतिबन्धकान्तरकल्पने, विशेषणविशेष्योभयग्राहकसामग्रीविरहेऽपि विशिष्टग्रहप्रसङ्गवारणायतदुभयग्राहकसामग्र्याः कारणतान्तरकल्पने च गौरवमिति-निरस्तम्। उक्तरीत्याऽधिकरणताभेदस्य कल्पयितुमशक्यत्वात्तत्रापि समानत्वाच्च। प्रतिबध्यप्रतिबन्धकादिभावानां विशिष्टैव विश्रान्तेरवश्यम्भावस्य निवेदितत्वाच्च। एवञ्च प्रकृतेऽपि कपालभेदत्वेन घटत्वेन च भेदाभेदयोरुपगमे स्वरूपमेव भेद इति पक्षस्यासम्भव एव, भेदस्य घटेन भेदोऽतिरिक्तोऽनतिरिक्तो वेति विकल्पेऽनवस्थात्माश्रयादिकञ्चेति भावः।

नन्वस्त्वन्योन्याभाव एव भेदः, तस्याधिकरणातिरिक्तत्वादाधाराधेयभावानुपपत्तेः, संशयाद्यनुपपत्तेः, कपालं न कपालमित्यादिधियः प्रमात्वापत्तेश्चायोगादित्यत आह अत एवेति। प्रतियोगिविशिष्टस्यानुयोगिवृत्तित्वे प्रतियोगिनोऽप्यनुयोगिधर्मत्वापत्त्याऽद्वैतापत्तिः, धर्मधर्मिणोरभेदस्याभिहितत्वात्। उपाधित्वे तु प्रतियोगिनः घटो न पट इति समानविभक्त्यन्तपदाभिलप्यधीविषयत्वादनुयोगिनैक्यापत्तिः। उक्तरीत्या भेदस्य घटपटाभ्यां स्वभावसम्बन्धस्यैव वक्तव्यत्वादन्यथानवस्थानादिति 'तदभिन्नाभिन्ने'ति न्यायेन घटपटयोरप्यैक्यापत्तिः। भेदस्य स्वाधिकरणेन भेदान्तरस्य वाच्यत्वेऽनन्तभेदमालानुभवापत्तिः। अर्थापत्तिबलादपि नानन्तभेदसाधनसम्भवोऽनन्तमन्यन्यसाधनवत्। भेदस्य स्वरूपेणैवाधिकरणभिन्नत्वे घटादेरपि तथात्वापत्तिः, आधाराधेयभावानुपपत्तिश्च। वस्तुगत्या व्यधिकरणरूपाभ्यां प्रतियोग्यनुयोगिग्रहस्य भेदप्रत्यक्षहेतुत्वे 'इदं न तदि'ति भेदभ्रमस्य प्रत्यक्षात्मकस्यानुपपत्तिः, व्यधिकरणत्वेन ज्ञातरूपाभ्यां तादृशग्रहस्य भेदप्रत्यक्षहेतुत्वेऽन्योन्याश्रयापत्तिः, व्यधिकरणत्वस्य तद्वद्भिन्नाधिकरणकत्वरूपत्वात् तेन रूपेण घटत्वपटत्वयोर्ज्ञानस्य घटो न पट इति ज्ञानं विनाऽसम्भवात्, तस्य तद्वद्वृत्तिभिन्नत्वरूपत्वेऽपि घटत्वपटत्वयो र्भेदज्ञानस्यैव कारणतापर्यवसानेन घटो न पट इत्यस्यैव स्वरूपतो घटत्वादिविषयकस्य घटत्वपटत्वयोर्भेदविषयकत्वमुपगम्य कारणतोपगमे आत्माश्रयापत्तिः। घटत्वं न

अन्योन्याभावोऽपि यस्माद्भेद एष्टव्यस्तमात्मन्येवान्तर्भावयेदुक्तयुक्तिभिः। किञ्च घटपटयोस्तद्वदन्ययोश्च तादात्म्यमन्योन्याभावस्य प्रतियोगि मन्तव्यम्, तद्यदि सर्वथा नेष्यते, तदा तद्विशिष्टस्तदुपलक्षितो वाऽन्योन्याभावोऽपि न प्रमाणेन प्रत्येतुं शक्यः; नहि शशविषाणविशिष्टस्तदुपलक्षितो वा कश्चित्प्रामाणिको भवितुमर्हति। तत्कस्य हेतोः? तस्मिंस्तद्विशिष्टरूपेऽर्थे तादृशि चोपलक्षणव्यवच्छिद्यमानात्मनि प्रमाणं निविशमानं विशेषणमपि तदीयं तदुपलक्षणमपि वा नानुल्लिखद्भवितुं प्रभवति तस्मिंश्चात्यन्तमसत्येवावलम्बने न तत्प्रामाण्यं शक्यसमर्थनम्। न च वाच्यं पटप्रतियोगिको घटमाश्रितोऽसावभा-

पटत्वमिति ज्ञानस्य कारणत्वे तु साकल्यादिघटितघटत्वत्वाद्युपस्थित्यपेक्षापत्तिः तदनुपस्थितिदशायामपि घटो न पट इति भेदप्रत्यक्षोदयेनानुभवविरोधापत्तिश्च, घटत्वत्वपटत्वत्वयोरपि भेदग्रहस्योक्तरीत्यैवापेक्षणीयत्वापत्त्याऽनवस्थापत्तिश्च। व्यधिकरणत्वस्यात्यन्ताभावघटितत्वेऽपि, घटपटभेदाभावसंशयनिश्चययोः सत्त्वे घटत्वपटत्वयोर्व्यधिकरणताग्रहस्यानुभवपराहतत्वेन भेदनिश्चयस्य तत्र हेतुतायां ध्रौव्येणान्योन्याश्रयापत्तिः। यद्व्यतिरेकसंशयनिश्चययोर्यत्प्रतिबन्धकत्वं तन्निश्चयस्य तद्धेतुतायाः प्रामाण्यवादमण्यादावुक्तत्वात्। भेदाभावज्ञानाभावत्वेन कारणतायां भेदनिश्चयत्वेन कारणतामपेक्ष्य गौरवात्, निश्चयत्वस्य केवलान्वयिप्रकरणे गदाधरोक्तरीत्या संशयत्वस्येव जातित्वमेव, नत्वेकत्रधर्मिणि विरुद्धकोटिद्वयावगाहिज्ञानान्यज्ञानत्वात्मतेति न विपरीतं गौरवम्। यद्धर्मविच्छिन्नानुयोगिताप्रतियोगिताकभेदः प्रामाणिकस्तद्धर्मविच्छिन्नप्रकारकज्ञानस्य तादृशभेदप्रत्यक्षप्रमां प्रत्येव कारणत्वं न तु प्रत्यक्षभ्रमसाधारणमिति नोक्तभेदभ्रमानुपपत्तिरित्युक्तौ तु भेदप्रत्यक्षत्वस्यानुगतप्रतीतिबलादनुगतस्याकस्मिकत्वापत्तिः, उक्तभेदभ्रमस्थले भेदस्याभावेन तत्सन्निकर्षजन्यत्वस्य भेदप्रत्यक्षत्वनियामकत्वासम्भवात्, अलौकिकसन्निकर्षस्य भेदे सत्त्वेऽपि लौकिकालौकिकसाधारणसन्निकर्षत्वस्य तार्किकैरप्यनुपगमात्, भेदे विप्रतिपद्यमानं प्रति तत्प्रामाणिकत्वोक्तयुक्तिश्चेत्याद्यापत्तिपरम्परापत्तेश्चेत्यर्थः। अधिकं तु चतुर्थे वक्ष्यते। लघुचन्द्रिकायामाचार्यैस्तु—नेत्याकारकाभावप्रत्यक्षवारणाय भेदत्वाभावत्वादिप्रकारकप्रत्यक्षत्वावच्छिन्नं प्रति किञ्चिद्धर्मावच्छिन्नविषयतानिरूपितप्रतियोगित्वविषयताकधीत्वावच्छिन्नं किञ्चिद्धर्मावच्छिन्नविषयतानिरूपितानुयोगिताविषयताकधीत्वावच्छिन्नं च कारणमुपेयम्, भेदे प्रतियोगितानिरूपकताविरहनिश्चयस्य भेदत्वादिप्रकारकप्रत्यक्षप्रतिबन्धकत्वात्तु तदभावस्य सहकारिताऽप्यनुमन्तव्यैव तथा च प्रतियोगित्वानुयोगित्वयोर्ग्रहस्य भेदबुद्धिमापेक्षस्य तत्कारणत्वमित्यादिप्रकारान्तरमन्योन्याश्रयेऽर्वाचीनं ध्येयम्। तमात्मन्येवान्तर्भावयेदिति। तत्सहित एवानुयोग्यात्मको भवेदित्यर्थः। घटपटयोरिति। सर्वाभेदमुपपादयतापि पारमार्थिकभेदासम्भवे व्यावहारिकभेदमादायैव एकपदार्थतावच्छेदकविशिष्टपर्याप्तविषयतार्थयत्वस्यापरपदार्थतावच्छेदकविशिष्टे उपपाद्यत्वाच्च द्वन्द्वप्रयोगासङ्गतिरिति भावः। तद्वत् = घटपटयोरिव। तादात्म्यमिति। प्रतियोग्यनुयोगितादात्म्यातिरिक्ते भेदीयप्रतियोगिताया निरसिष्यमाणत्वादिति भावः। तदुपलक्षित इति। इदमभ्युपेत्यवादेन, प्रतियोगिन उपलक्षणताया निरस्तत्वात्। तदुपहित इति वार्थः। प्रामाणिकः—प्रमाणसिद्धः पदार्थः। तन्निष्ठप्रकारतानिरूपितविशेष्यताकत्वं तद्विषयकत्वव्याप्यमिति भावः। तदाह तस्मिन्नित्यादिना। तस्मिन्निति तादृशीति च पदद्वयं तद्विशिष्टतदुपलक्षितयोस्तन्निष्ठप्रकारतानिरूपितविशेष्यत्वरूपैकरूप्यलाभाय। अर्थे निविशमानं = अर्थनिष्ठनिरूपकतानिरूपितविषयितावत्। प्रमाणं = ज्ञानं। अनुल्लिखत् = अविषयीकुर्वत्। तस्मिन् = घटपटतादात्म्यरूपे। अवलम्बने = विषये। तत्प्रामाण्यं = प्रतियोगिविशेषितभेदबुद्धेः प्रामाण्यम्। न शक्यसमर्थनम्। असत्ख्यातेरन्यथा-

**योऽभ्युपगम्यमानो नात्यन्तासत्प्रतियोगिकत्वादोषमावहति; तथा सति संसर्गाभावादन्योन्याभावस्य को विशेषः स्यात् ?।**

नञ्ज्ञीकारादप्रसिद्धप्रतियोगिकाभावस्याभ्युपगन्तुमशक्यत्वात्, तदुक्तं बौद्धाधिकारशिरोमणौ–"प्रमाणेनासदंशस्यानुल्लेखेऽसत्ख्यातिन्यासिद्धेः, उल्लेखे तु प्रमाणस्याप्रमाणतया असतो वा सत्त्वस्य प्रसङ्गादि"ति। अनिर्वाच्यत्वानिपक्षेऽपि घटपटतादात्म्यस्य पारमार्थिकस्य निषेधस्त्वया वक्तुमशक्यः, तस्य तत्राप्रसिद्धेः, पारमार्थिकस्य निषेद्धुमशक्यत्वाच्च। नापि व्यावहारिकस्य; घटपटयोस्तादात्म्ये व्यवहारिकत्वाभावात्। नापि प्रातिभासिकस्य; तस्य प्रतीतिं विनाऽसम्भवेन भेदग्रहात्पूर्वं नियमेन तत्प्रतीतेरपेक्षणीयत्वापातात्। न च घटे पटतादात्म्यमारोप्य निषिध्यते इति वर्धमानाद्युक्तः पक्षो यौक्तिकः; यदाह नञ्वादे शिरोमणिः–"साधीयानयं मन्त्रपाठो यद्धलाज्जलह्रदे वह्निर्नास्ती"त्यादौ शाब्दबोधेऽपि परमप्रयत्नेन तत्र वह्निप्रसक्तिरुत्पादीयते" इति। भेदलौकिकप्रत्यक्षं प्रति कथञ्चित्तादात्म्यारोपस्य हेतुतोपगमेऽपि तस्य प्रमात्वमेव स्यादुपजीव्यत्वादित्यादिकं पूर्वमुक्तमेव। अथासत्ख्यातिमुपेत्य कश्चिद्ब्रूयात्–अलीकस्यैव भेदप्रतियोगित्वमस्तु. नचैवं भेदग्रहस्याप्रमात्वं वा अलीकस्यानलीकत्वं वा स्यादिति वाच्यम्; निषेध्यतयाऽलीकावगाहित्वेऽपि प्रमात्वोपपत्तेः, अनिषेध्यतया तदवगाहन एवाप्रमात्वात्। अनिषेध्यतयाऽनवगाह्यमानत्वाच्चालीकस्य नानलीकत्वमिति; तदपेशलम्; भेदस्यानलीकत्वे तेनालीकस्य प्रतियोगिनः संसर्गानुपपत्तेः, सतोरेव संसर्गस्य सम्भवात् प्रतियोगिताश्रयत्वेऽलीकत्वव्याघाताच्च। अतएव घटो ध्वस्त इत्याद्यविद्यमानघटादिनिष्ठध्वंसप्रतियोगित्वावगाह्यनुभवोपपत्तये घटस्य सूक्ष्मरूपेण ध्वंसदशायामप्यवस्थानमावश्यकम्। *तस्माद्घटपटतादात्म्यस्य प्रामाणिकत्वं वाऽप्रामाणिकत्वं वा, उभयथाऽपि न भेदस्य* प्रामाणिकत्वम्। नच घटे घटतादात्म्यं प्रसिद्धं पटे निषिध्यते इति वाच्यम्; एवं सति 'घटतादात्म्यं पटे नास्ती'ति'प्रतीतिसाक्षिकात्यन्ताभावाद्भेदस्य पार्थक्यानुपपत्तेः। संसर्गविधया तादात्म्यनिषेधस्य भेदत्वे तु पटो न घटतादात्म्यमिति भेदेऽव्याप्त्यापत्तेः। घटतादात्म्यस्यापि तादात्म्यान्तरोपगमस्त्वनवस्थापराहतः। प्रतियोगिन एव प्रतियोगितावच्छेदकसंसर्गत्वं त्वात्माश्रयदुष्टम्। वक्तव्यं चाधिकमनुपदम्।' अत्यन्तासत्प्रतियोगिकत्वादोषं=प्रतियोग्यप्रामाणिकत्वप्रयुक्तं तद्विशेषितरूपेणाप्रामाणिकत्वम्। को विशेष इति। घटे पटो नास्तीत्यत्यन्ताभावस्यापि पटप्रतियोगिकत्वाविशेषात्। ननु प्रतियोग्यैक्यं नाभावैक्यप्रयोजकं, घटप्रतियोगिकाभावचतुष्टयस्यैक्यापातात्, अपि तु प्रतियोगितावच्छेदकस्यैक्यमेव, तच्चात्यन्ताभावे संयोगादिः, ध्वंसे पूर्वकालीनतद्व्यक्तित्वं, प्रागभावे उत्तरकालीनतद्व्यक्तित्वमन्योन्याभावे तु तादात्म्यम्, तथा च तादात्म्यावच्छिन्नप्रतियोगिताकाभावत्वं भेदत्वं तादात्म्यं चाखण्डमेव, न तु स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यो धर्मः, येनान्योन्याश्रयो विषयतानवस्था वा स्यात्। अतएव–उक्तलक्षणस्य संयोग्यत्यन्ताभावे संयोगितादात्म्यरूपसंयोगावच्छिन्नप्रतियोगिताकेऽव्याप्तिः, सम्बन्धविधया तादात्म्यस्यावच्छेदकत्वाभिधानेऽपि गुणे संयोगेन संयोगी नास्तीत्यत्यन्ताभावेऽतिव्याप्तिरिति निरस्तम्। अभावत्वमपि न भावभिन्नत्वं येनान्योन्याश्रयः स्यात्, अपि त्वखण्डमेवेति चेन्न; संयोगेन घटो नास्तीतिवत् तादात्म्येन नायं घट इत्यप्रयोगात्तादात्म्ये प्रतियोगितावच्छेदकताया अप्रामाणिकत्वस्य नञ्वादगादाधर्यादौ व्यक्तत्वात्। तस्याखण्डत्वेऽपि घटे पटतादात्म्यनास्तीत्यत्यन्ताभावेऽतिव्याप्तिवारणाय सम्बन्धविधयैवावच्छेदकताया वक्तव्यत्वेनासम्भवापत्तेश्च। नहि सम्बन्धत्वमत्यन्ताभेदे प्रामाणिकम् द्विष्ठस्यैव सम्बन्धत्वात्, विशिष्टधीमात्रस्य भेदसमानाधिकरणसंसर्गावगाहित्वात्, अतएवावच्छेदकत्वप्रतियोगित्वयोरुक्तलक्षणघटकयो र्भेदाघटितत्वेऽपि भेदव्यतिरेकग्रहस्यावच्छेद्यावच्छेदकभाव-

नहि यथा 'घटाभावः पटसंसर्गी'ति घटसंसर्गाभावं पटे समर्थयसे तथा 'घटाभावः पटात्मक' इति तत्तादात्म्याभावं पटस्य स्वीकरिष्यसि । तस्मात्तादात्म्यं संसर्गं च प्रतियोगिकोटावन्तर्भाव्यान्योन्याभावसंसर्गाभावयोर्वैलक्षण्यमभ्युपेयम्, तथा सति चात्यन्तासत्प्रतियोगिकता दुर्वारैव । न च वाच्यं 'घटे पटत्वं नास्ति', पटे च घटत्वं नास्ती'त्ये-

प्रतियोग्यनुयोगिभावग्रहप्रतिबन्धकत्वेन भेदनिश्चयस्य तन्निश्चयहेतुतायां बाधत्वे भेदनिश्चयस्योक्तभेदलक्षणनिश्चयापेक्षणीयतापत्तिः । एतेन सम्बन्धानवच्छिन्नप्रतियोगिताकाभावत्वं भेदत्वमिति निरस्तम् । ध्वंसप्रागभावीयप्रतियोगितायाः सम्बन्धानवच्छिन्नत्वे मानाभावेन तत्रातिव्याप्तेश्च । नच नित्यत्वविशेषणेन तद्वारणम्, तद्धि कालत्वव्यापकत्वं वा प्रागभावध्वंसप्रतियोगि यद्यत्तदन्यत्वं वा, आद्येऽपि व्यापकत्वं भेदगर्भं वाऽत्यन्ताभावगर्भं वा, नाद्यः, अन्योन्याश्रयापत्तेः । न द्वितीयः नित्यत्वे सति भेदभिन्नाभावत्वस्यैवात्यन्ताभावत्वरूपत्वादन्योन्याश्रयापत्तेः । संसर्गाभावत्ववदत्यन्ताभावत्वस्याप्यखण्डतया अननुभवेनाप्रामाणिकत्वात्, तस्याखण्डत्वे वा भेदत्वस्याप्यखण्डतानभ्युपगमस्य निर्बीजत्वात् । नापि द्वितीयः, भेदकूटस्य निवेश्यत्वेनासर्वज्ञदुर्ग्रहत्वापत्तेः । नहि प्रागभावप्रतियोगित्वं ध्वंसप्रतियोगित्वं च न नाना, येन सामान्यधर्मावच्छिन्नाभावनिवेशेन निस्तारः स्यात्. नवा प्रागभावत्वादिकं गन्धानाधारसमयावृत्त्यभावत्वाद्यात्मकं भेदाघटितं येनान्योन्याश्रयो न स्यात्, अनाधारशब्देनाधारभेदमविवक्षित्वाऽऽधारत्वात्यन्ताभावविवक्षणेऽप्युक्त एव दोषः । अत्यन्ताभावत्वस्य भेदघटितत्वात् । नच भेदत्वमखण्डोपाधिः, विषयतादीनामप्यखण्डोपाधीनां सत्त्वेन तद्वदावृत्ततया भेदत्वप्रत्यायनस्य प्रतीतिविशेषे एवायतमानस्य कथमन्योन्याश्रयावहत्वम्, नहि प्रतीतिविशेषमवधूय भेदत्वं पृच्छ्यते, तथाच प्रतीतिविशेषस्य विषयो निर्वक्तुं पृष्टस्तेनैव निरुच्यते इत्यहो वैदग्ध्यम्, नवा प्रतीतिनिरूपणं विषयनिरूपणे नायत्तते । किञ्च भेदत्वस्यालीकत्वं मा प्रसाङ्क्षीदिति तल्लक्षणं निरूप्यम्, लक्षणं विना वस्त्वसिद्धेः, नह्यखण्डत्वमित्येतावता लक्षणनिवृत्तिः; न च प्रतीतिविशेषविषयत्वं तत्; चक्षुराद्ययोग्यतापत्तेः, न च सकलभेदवृत्तित्वे सति भेदेतरावृत्तित्वं तत्; तत्र भेदत्वस्यानुप्रवेशात्, न चाखण्डं तत्; तत्राप्युदीरितविचारसञ्चारात् । अतएव-भेदपदवाच्यत्वं, वाच्यतासम्बन्धेन भेदपदवत्त्वं वा भेदत्वमिति निरस्तम् भेदपदमवेत्य तद्वाच्यं च किञ्चित्साधुपदत्वेनानुमाय निश्चित्य भेदपदवाच्यं प्रष्टुर्भेदपदवाच्यत्वेनैवोत्तरदानस्यानौचित्यात्, अन्यथा प्रतीतिविषययोरिव पदपदार्थयोरपि परस्परनिरूपणेऽन्योन्याश्रयापत्तेः । नहि भेदपदत्वं शक्तया भेदत्वप्रकारकप्रतीतिजनकत्वादन्यत् । भेदपदवाच्यताया एव भेदपदवाच्यतावच्छेदकत्वे आत्माश्रयापत्तेश्च, भेदत्वभेदयोः परस्परनिरूपितवृत्तितायाः आवश्यकत्वेनान्योन्याश्रयापत्तेश्च, अन्यथाऽनवस्थानाच्च । लक्षणान्तरासम्भवस्तु भेदसंसर्गाभाववैधर्म्यखण्डनप्रकरणे परतो वक्ष्यते ।

संसर्गाभावस्याधिकरणवृत्तित्वमन्योन्याभावस्य स्वधिकरणात्मकत्वमिति विशेषमाशङ्क्याह नहीति । घटाभावः = घटसंसर्गाभावः । पटसंसर्गीति = पटवृत्तिरिति प्रतीतिबलात् । घटाभावः = घटभेदः । इति = इति प्रतीतिबलात् । पटस्येति । स्वरूपमिति शेषः । अन्यथा पटात्मकत्वाभिधानविरोधात् । स्वीकरिष्यसीति । भावाधिकरणकाभावस्य भावप्रतियोगिकस्य स्वपातिरिक्ततोपगमात् घटभेदस्य पटात्मकत्वोपगमेऽपसिद्धान्तापातादुक्तदोषाद्वेति भावः । संसर्गं = तादात्म्यभिन्नसंसर्गं, वस्तुतस्तु तादात्म्ये संसर्गत्वस्याप्रामाणिकत्वोपगम एव प्राचीनानामीदृशव्यवहारबलादवसीयते । अतएव संसर्गारोपजन्यप्रतीतिविषयाभावत्वमित्यादिलक्षणेषु प्राचीनैस्तादात्म्यस्य संसर्गशब्देनैव व्यावृत्तिमभिप्रेत्य तद्भिन्नत्वं न संसर्गे विशेषणीक्रियते इति द्रष्टव्यम् । प्रतियोगिकोटावन्तर्भाव्य = प्रतियोगितया तदवच्छेदकतया वा

तावन्मात्रपर्यवसितैवान्योन्याभावस्य व्यवस्था मन्तव्येति; यतस्तथा सति घटत्वे पटत्वे च न कश्चित्तादृशो धर्मोऽभ्युपगम्यते योऽन्योऽन्यस्मिन्निषेद्धुं योग्य इति तयोस्तादात्म्यापत्तौ सत्यां घटे पटत्वं पटे च घटत्वं निषेधप्रमाणं घटत्वपटत्वशून्यं द्वयमप्यावेदयतीति वैधर्म्यस्य स्वरूपभेदस्य चासम्भवेन किं प्रतियोगिनं, किं वाऽऽलम्बनं विधाय पटघटान्योन्याभाव· प्रमाणपथमवतरेदिति । अतएव न वैधर्म्यमपि भेदमावेदयत्प्रत्यक्षमद्वैतश्रुतिबाधकमुपपद्यते । वैधर्म्येऽपि हि घटत्वपटत्वादौ वैधर्म्यमन्यदस्तीत्यभ्युपगमे वैधर्म्ये वैधर्म्यविश्रान्त्यनवस्थयोरेकमननुभवश्च कथं प्रत्युत्तरणीयः । वैधर्म्ये च वैधर्म्यास्वीकारे वैधर्म्ययोरैक्यापत्त्या कथमात्माश्रयभेदत्वेन तयोः पर्यवसानं स्यात् ।

स्वीकृत्य । इत्येतावन्मात्रपर्यवसितैव= इत्येतादृशप्रतीतिसमानविषयिकैव । व्यवस्था=प्रतीतिः । मन्तव्येति। तथाच न प्रतियोगिविशेषितरूपेण भेदस्याप्रामाणिकत्वमिति भावः। न कश्चिदिति । अन्यथाऽनवस्थाया अनुभवविरुद्धाया आपत्तेरिति भावः । घटत्वपटत्वयोः स्वरूपेणैव व्यावृत्तिं तु निरसिष्यति । यद्यपि घटो न पट इति समानविभक्त्यन्तपदाभिलप्यप्रतीतेः सप्तम्यन्तानुयोगिबोधकपदाभिलप्यप्रतीतिसमानविषयकत्वमसम्भवदुक्तिकमेव, अनुभवविरोधात्, 'पटे घटत्वं नास्ती'त्यत्र घटत्वत्वेन घटत्वस्य भानेन तेन रूपेण तदभावस्यातीन्द्रियत्वात् 'घटो न पट' इत्यत्र च घटत्वस्य स्वरूपतो भानेन तेन रूपेण घटस्य प्रत्यक्षत्वात् भेदस्यात्यन्ताभावाविशेषप्रसङ्गाच्च, तथापि स्फुटत्वादेतदुपेक्ष्य भेदाप्रमाणिकत्वमेव दूषणं स्थापयितुमाह यत इति । वैधर्म्यस्येत्यादि । घटत्वपटत्वयोस्तादात्म्यापत्तौ तयोः परस्पराभावव्याप्यत्वासम्भवेन न घटपटयोर्विरुद्धधर्मवत्त्वसम्भवः, तदसम्भवे च तयोः स्वरूपभेदस्याप्यसम्भवः, तस्य तादृशधर्मवत्त्वव्याप्यत्वात् अन्यथा स्वस्मिन्नपि स्वभेदापत्तेरिति न भेदस्य प्रामाणिकत्वमिति भावः । किं प्रतियोगिनं विधाय = किं वस्तु प्रतियोगि कृत्य । आलम्बनं = अनुयोगिनं । विधायेति । प्रतियोग्यनुयोगिभावस्य स्वरूपभेदव्याप्यत्वादिति भावः। प्रमाणपथमवतरेत् = प्रमाविषयः स्यात् । वैधर्म्यविश्रान्तीति । वैधर्म्यविश्रान्तेर्घटपटयोरभेदापादनद्वारा दोषत्वं बोध्यम् । अननुभवश्चेति । यद्यपि भावप्रत्ययान्तताबललभ्यं घटेतरत्वव्यापकभेदप्रतियोगितानवच्छेदकत्वसमानाधिकरणं घटत्वव्यापकभेदप्रतियोगितानवच्छेदकत्वं 'घटत्व'मित्यादिप्रतीतिविषयः कथञ्चित् स्यात्, तथापि नाग्रे कश्चिद्धर्मोऽनुभूयते इति भावः । यद्यपि परस्परात्यन्ताभावादौ गोत्वादौ [illegible] न दोषावहेत्याशयेन तदितरावृत्तित्वे सति तद्वृत्तित्वस्यानुभवेनापलापासम्भवादित्युक्तम् तथाप्यत्रानुभूतिकलहे साक्षिना सचेतसामेवोचिता । अनन्तवैधर्म्याणामप्रत्यक्षतया निर्विवादत्वेनार्थापत्त्यैव कल्प्यत्वात्तस्याश्चोत्थानासम्भवात्, स्वरूपेणैव व्यावृत्तेरनिर्वाच्यतया वोपगमेनोपपत्तेः, अन्यथा सत्तादावपि सत्ताद्यन्तरस्वीकारप्रसङ्गात्, अतएव किञ्चिद्धि वस्तु स्वत एव व्यावृत्तमन्यथाऽनवस्थानादिति प्राभाकरमतं शब्दमणावुक्तमित्याशयः । नच-गोरेव गोत्वभेदत्वमस्तु, अतएव प्रभाकरमते 'गोत्व'मिति बुद्धौ समवेतत्वसम्बन्धेन गोः प्रकारत्वं मण्यादौ, यत्किञ्चिद्गोव्यक्तेरेव गोत्वत्वरूपत्वं चाद्वैतसिद्ध्यादावुक्तमिति-वाच्यम् गोत्वस्य गोवृत्तित्वेन 'गौर्भिन्ने'ति भेदाश्रयत्वप्रतीतेर्गोत्वस्य गोभेदत्वे सम्भवेऽपि 'गोत्वं भिन्न'मिति भेदाश्रयत्वप्रतीतेर्गोभेदत्वमुपगम्याशक्योपपादत्वात्, समवेतत्वसम्बन्धस्य वृत्त्यनियामकत्वादिति भावः । वैधर्म्यविश्रान्ते दूषकत्वमाह वैधर्म्ये चेति । आत्माश्रयो वैधर्म्यस्य घटत्वादेराश्रयस्तस्य । भेदत्वेनेति। वैधर्म्यमेव भेद इति पक्षस्योपक्रान्तत्वात् । व्यावृत्तिधीजनकत्वेनेति वार्थः । तार्किका हि-'अन्योन्याभावसम्भवे स्वरूपवैधर्म्ययोर्भेदत्वकल्पनमन्याय्यम्, भिद्यते व्यावृत्ततया प्रत्याय्यतेऽयमनेनेति व्युत्पत्त्या धर्मि-

किञ्च, ये ते वैधर्म्ये भेदौ ते किं घटादितो भिन्ने धर्मिणि निविशेते ? किमभिन्ने ? परस्परविरुद्धयोरनयोः पृथग्भूतस्य प्रकारस्यासम्भवात्। आद्ये येन भेदेन भिन्नत्वं वैधर्म्याश्रययोर्मन्तव्यं तत्रापि पर्यनुयोग इत्यनवस्थायां पर्यवसानं स्यात्। सन्त्वनन्ता एव भेदा इति चेन्न; क्रमेण तेषामाश्रयसम्बन्धे, सावधिसत्त्वे वस्तुनि तदन्वयासङ्गतिरेव। अथ जायमानं वस्तु युगपदेव ते भेदा परिरभन्ते, तदा किंभेदविशेषिते किं भेदस्यैव स्थितिरिति किं विनिगमकं ? विशेषाभावादन्योन्यकलहं तेषां कः समाधातुमीष्टे, चरम-

वैधर्म्ययोर्भेदव्यवहारसम्भवादि'त्याहुः।

वैधर्म्ये इति। इदं स्वरूपानिरिक्तभेदमात्रस्योपलक्षणम्। घटादिप्रतियोगिको भेदः घटादिप्रतियोगिकभेदवति वा स्वसम्बन्धप्राक्क्षणावच्छेदेन तादृशभेदाभाववति वा वर्तते इति विकल्पार्थः। एतेन–भेदाभावविरोधितावच्छेदकरूपेण धर्मिणो भेदस्योपस्थितत्वेन तत्र भेदाभाववद्वृत्तित्वस्य सम्भावनाया एवासम्भवाद्द्वितीयविकल्पोऽनुचित इति–निरस्तम्; प्रथमकल्पगतबाधकानां विरहं कालभेदेन विरोधविरहं च प्रतिसन्धाय द्वितीयकल्पस्य सम्भावनारोहात्। भेदनित्यत्वस्य विप्रतिपत्तिदशायामनिश्चयात्। नच भेदस्य भिन्नाभिन्नवृत्तित्वविकल्पेन घटादेर्धर्मिणो भेदवैशिष्ट्यभङ्गस्य त्वया सम्पादनेन नित्यसमा जातिः स्यात्, "धर्मस्य तदतद्रूपविकल्पानुपपत्तितः। धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेदि"ति तल्लक्षणादिति वाच्यम्; वैतण्डिकस्य व्यवस्थापनीयाभावेन तं प्रति व्याघातकत्वाभावेन दत्तोत्तरत्वात्। प्रकारस्येति। कल्पद्वयगतदोषरहितस्येति शेषः। तेन भेदाभेदवादिमीमांसकादिमतेऽन्यत्र भेदाभेदस्य दृष्टत्वेनात्र सम्भावनया विकल्पयितुं शक्यत्वेऽपि न क्षतिः, तत्रापि वक्ष्यमाणप्राग्लोपादिदोषाणामावश्यकत्वात्, भेदाभेदघटकीभूतभेदस्याधिकरणाभेदोगमेऽपि सोऽभेदो भेदसहिष्णुरेव मीमांसकादिभिर्वाच्य "नह्यत्यन्तमभेदोऽस्ति रूपादिवदिहापि .ने"त्युक्तेरिति तद्वृत्तित्वविकल्पसम्भव इति भावः। तत्राद्ये भेदनिष्ठाधेयतानिरूपिताधारतावच्छेदकीभूतो भेदो विशेषणं वोपाधिर्वोपलक्षणं वेति कल्पत्रयम्; अत्राप्याद्ये आधेयीभूतभेदस्याधारतावच्छेदकीभूतभेदेन भेदो वाऽभेदो वेति कल्पद्वयम्; अत्राप्याद्येऽन्योन्यनिष्ठनिरूपकतानिरूपिताधारतावच्छेदकत्वमन्योन्यस्मिन् वा, तृतीयमन्तर्भाव्य वा, तृतीयस्यापि प्रथमद्वितीयान्यतरावच्छिन्नाधारतानिरूपितनिरूपकत्वं वा चतुर्थावच्छिन्नाधारतानिरूपितनिरूपकत्वं वेति कल्पचतुष्टयं; तत्र विशेषणकल्पावान्तरकल्पेषु यथायथमात्माश्रयोऽन्योन्याश्रयश्चक्रकञ्च, चरमे त्वाह आद्ये इति। येनेत्यादि। यद्भेदाभिन्नभेदवत्त्वमित्यर्थः। अनवस्थायामिति। सर्वेषामपि योग्यानुयोगिप्रतियोगिकत्वेन कदाचित्प्रत्यक्षतापत्त्या नेष्टापत्तिः कर्तुं शक्यते इति भावः। इष्टापत्तिं प्रकारान्तरेण निराकर्तुमाह क्रमेणेति। पूर्वोऽवधिः प्रागभावः, उत्तरोऽवधिर्ध्वंसः, तत्प्रतियोगि सत्त्वं = स्वरूपं यस्य तस्मिन्नित्यर्थः। अनन्तानां क्रमिकसम्बन्धस्य नित्ये एव सम्भवादनित्ये भेदाभावापत्तिः ध्वंसस्यानन्तत्वेऽपि जन्यत्वात्स्वोत्पत्तेः पूर्वं भेदानाश्रयत्वात् न भेदावच्छिन्ने ध्वंसे आद्यक्षणे कस्यचिद्वृत्तित्वसम्भवः, वस्तुतस्त्वेवं नित्येऽपि क्रमिकान्वयो न सम्भवति, भेदानां नित्यताया उपगमे यावद्वस्तुसत्त्वं तत्र वृत्तेः, नहि पूर्वं कुतश्चिदभिन्नं पश्चात्ततो भिन्नं भवतीति भावः। परिरभन्ते = आश्रयन्ते। किंविनिगमकमिति। युगपदेकत्र सम्बन्धसमवासवतोरेकतरनिष्ठाधेयतानिरूपिताधारतावच्छेदकत्वमपरतरस्मिन्नप्रामाणिकं युगपदुत्पन्नयोराधाराधेयभाववत्, अन्यथा द्वयोरेव विनिगमकाभावेन परस्पराधारतावच्छेदकत्वे परस्पराश्रयत्वस्य दुर्वारत्वात्, अतएव–यथा घटत्वावच्छिन्ने पृथिवीत्वं पृथिवीत्वावच्छिन्ने च घटत्वं वर्तते, अवच्छेदकता च स्वरूपसम्बन्धविशेषो व्यापकनिरूपितवृत्तित्वं पृथिवीत्वेऽसम्भवात्, तथा प्रकृतेऽप्येकावच्छिन्नेऽपरस्य वृत्ति-

चरमस्वीकार्येण च भेदेन प्रथमप्रथमस्वीकृतभेदोपयोगसिद्धेरग्रे धावन् पश्चाल्लुप्यमानो विस्मरणशीलश्रुतवत्, स भेदप्रवाहः किमालम्बेत। एवमेवंविधे विषयेऽन्यत्रापि—

प्राग्लोपाविनिगम्यत्वप्रमाणापगमैर्भवेत्।
अनवस्थितिमास्थातुरचिकित्स्या त्रिदोषता ॥ १९ ॥

रस्तु, अहमहमिकयाऽनन्तेषु भेदेष्वेतदवच्छिन्नेऽस्य वृत्तिरिति वक्तुमशक्यत्वेऽपि न काचित्क्षतिः; घटभेदो घटभिन्ने वर्तते इत्येतावन्मात्रस्यैव निर्वाह्यत्वादिति–निरस्तम्। विशेषणस्यैवाधारतावच्छेदकतयोपक्रान्तत्वात्परस्परविशिष्टे परस्परवृत्त्यसम्भवात्, अनन्तभेदाभ्युपगमस्य वैयर्थ्यापाताच्च, तद्भेदविशिष्ट एवायं वर्तते इत्यत्र तद्भेदस्यैतद्वृत्तौ प्रयोजकताप्रतीत्या युगपदेकत्रसम्बद्धयोरन्यतरस्यापरवृत्तिप्रयोजकताया अनुभवैकशरणेन वक्तुमशक्यत्वाच्च, व्यापकताया अपि नियामकान्तरसापेक्षत्वाच्चेति भावः। विशेषाभावात् = पूर्वापरकालवृत्तित्वरूपविशेषस्याभावात्। तेषामन्योन्यकलहं = कस्य वृत्तिः केन प्रयोज्येति विवादं। चरमेति। प्रथमप्रथमस्वीकृतभेदनिर्वाहकतयेत्यादिः। वस्तुगत्या युगपत्सम्बन्धेऽपि निर्वाह्यं प्रतीत्यैव निर्वाहकस्य कल्पनेति भावः। यद्वा चरमचरमस्वीकार्येण = निर्वाहकतया स्वीकार्येण। प्रथमप्रथमस्वीकृतेति। निर्वाह्यतया स्वीकृतेत्यर्थः। निर्वाहकत्वं निर्वाह्यत्वं च स्वरूपसम्बन्धविशेष एव। भेदोपयोगसिद्धेः = भेदाधीनस्य यथार्थस्येतरव्यावृत्तिव्यवहारस्य सिद्धेः। अग्रे धावन् = निर्वाहकभेदाविनाभूत। पश्चाल्लुप्यमानः = निर्वाह्यभेदांशे वैयर्थ्यमापद्यमानः स भेद प्रवाहः किं स्वरूपमालम्बेत, निर्वाह्यभेदानां वैयर्थ्यप्रतीतौ 'तदभ्युपगमोऽनुचितः उचितस्त्वेकस्यैव भेदस्य लाघवात् स्वपरनिर्वाहकत्वाभ्युपगम' इति बुद्ध्युदयेन तत्यागावश्यम्भाव इति नैकभेदस्य प्रवाहत्वसम्भवः। एतेन–पूर्वपूर्वभेदप्रतीत्यन्यथानुपपत्त्या कल्पितेनोत्तरोत्तरेण पूर्वपूर्वापसारणायोगः, उपजीव्यविरोधापत्तेरिति–निरस्तम्; वैयर्थ्यप्रतीत्याऽनन्तभेदकल्पनायामयुक्तत्वग्रहेण तदनभ्युपगमस्यौचित्यावर्जितत्वात्. अतएव सामान्यधर्मावच्छिन्नवत्ताप्रत्ययस्य सामान्यघटितविशेषधर्मावच्छिन्नाधिकरणताकूटादेवोपपादनसम्भवेन शुद्धसामान्यधर्मावच्छिन्ननिरूपकतानिरूपिताधिकरणता प्रतीतापि त्यज्यते तार्किकैरिति। विस्मरणशीलेन जनेन श्रुतः शास्त्रादिर्यथोत्तरोत्तरबुद्धिविषयतामासादयन्पूर्वपूर्वबुद्ध्यधीनसंस्कारविषयताञ्च स्वजन्यप्रयोजनतां नालम्बते इति दृष्टान्तार्थः। वैयर्थ्ये वैयर्थ्यान्तराभ्युपगमेऽनवस्थासत्त्वेऽपि न प्राग्लोपाविनिगमदोषाविति आशयेनाह एवं विधे इति। एकत्र धर्मिणि सजातीयानन्तधर्मप्रसङ्गो यत्र, तादृशे इत्यर्थः। यथा घटत्ववति घटत्वाभाववति वा घटत्वाभ्युपगमे। एतेन–भवदुक्तं दूषणं सदूषणे वा निर्दूषणे वेति विकल्प्य तदपि निरसनीयमिति–निरस्तम्। दूषणानामनिर्वाच्यत्वादिष्टापत्तेः। एवमपि यथा न जात्युत्तरत्वं तथा पूर्वं निवेदितम्। प्राग्लोपेत्यादि। अवश्यस्वीकार्येणोपपत्तौ तदन्यस्याभ्युपगमासम्भवः प्राग्लोपः। युगपत्सम्बद्धानां निर्वाह्यनिर्वाहकभावस्य दुरवधारणत्वमविनिगम्यत्वम्। एकस्मिन्नेव स्वपरनिर्वाहकताया अनिर्वाच्यताया वोपगमेसोपपत्तावनन्तानां कल्पनाया अप्रामाणिकत्वं प्रमाणापगमः। अभेदस्तृतीयार्थो दोषत्रयान्वयी। अन्यत्रापि भोजनादिव्यवस्थाऽतिवर्तिनोऽचिकित्स्यवातादित्रयसन्निपातपातो दृष्टः। त्रिदोषतेत्यत्र बहुव्रीहेस्तल्। अत्र प्रतीतावप्यनवस्था द्रष्टव्या, स्वरूपसम्बन्धावच्छिन्नभेदत्वावच्छिन्नप्रकारताकपटत्वावच्छिन्नविशेष्यताकबुद्धेर्भेदघटयोर्भेदग्रहाधीनत्वात, एवं तादृशभेदग्रहस्यापि भेदग्रहान्तराधीनत्वम्। तयोर्भेदव्यतिरेकग्रहे तादृशबुद्ध्यनुत्पत्तेः। यद्व्यतिरेकज्ञानत्वावच्छिन्नस्य यत्प्रतिबन्धकत्वं तन्निश्चयस्य तद्धेतुत्वात्, अतएव प्रामाण्यनिश्चयाधीनैव प्रवृत्तिरिति स्वतः प्रामाण्यवादिनः। एतेन भेदाधारतावच्छेदकीभूतभेदस्योपाधित्वोपलक्षणत्वपक्षावपि निरस्तौ। किञ्च घटभेदोपहिते घटभेद-

ष्यते मया, विशेषरूपास्तु व्यक्तिष्वेव स्वरूपशब्दो नानार्थः सन्निविशते-इत्यभिधत्से; तर्हि गतमनेनैव न्यायेन गोत्वादिसिद्धिप्रत्याशया। न च प्रतिव्यक्ति स्वरूपपदसमयग्रहोपपत्तिः। यदि च स्वरूपं भेदः स्यात्, तदा धर्मिणि दृष्टे स्वरूपं दृष्टमिति क्वचिन्न सन्देहः स्यादिति।

---

नच-वैधर्म्याभ्युपगमं विना तयोर्भेदाभ्युपगमोऽनुचितः अन्यथा स्वस्मादपि स्वभेदप्रसङ्गादिति-वाच्यम्; फलबलेन स्वतो व्यावृत्तत्वस्य वैधर्म्यान्तरमनपेक्ष्यैव स्वानुयोगिकस्वेतरप्रतियोगिकभेदधीजननयोग्यत्वरूपस्य घटत्वपटत्वयोरुपगमात्, घटो न पट इति हि धीः, नतु घटो न घट इति, येन स्वानुयोगिकस्वप्रतियोगिकभेदधीजननयोग्यत्वमपि कल्प्येतेत्याशङ्कते अथेति। स्वरूपं = स्वरूपत्वं। स्वरूपत्वस्यानुगतस्याभावे तदवच्छिन्नप्रतियोगिताकभेदमादाय वैधर्म्यानालिङ्गितस्वरूपभेदमादाय च निस्स्वरूपतापत्तिर्नेति भावः। नानार्थ इति। तद्व्यक्तित्वस्याखण्डत्वे वा तद्व्यक्तिरूपत्वे वा स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यत्वरूपासाधारण्याश्रयत्वाद्यननुगतत्वं, येनैकधर्मावच्छिन्नशक्यताकत्वेन शक्त्यैक्यं भवेत्, वस्तुतस्तु यत्किञ्चिद्भेदविशिष्टान्यत्वमादायातिप्रसङ्गभङ्गाय तादृशसम्बन्धेन भेदविशिष्टं यद्यत्तदन्यत्वविवक्षायामसर्वज्ञदुर्ग्रहत्वमेवेति न शक्यतावच्छेदकतावच्छेदकानुगमेनापि शक्त्यैक्यं शक्यसमर्थनम्. तादृशभेदवैशिष्ट्यस्यैव स्यासम्भवादिति भावः। व्यक्तिष्वेव सन्निविशते = शक्त्या व्यक्तिमात्रविषयकबोधजनकताश्रयः। एतेन तद्व्यक्तित्वस्य तद्व्यक्तिरूपत्वे एव निर्भरः सूचितः। घटस्वरूपं पटस्वरूपभिन्न्यादिप्रतीतीनां स्वरूपांशेऽनुगताकारतासत्त्वेऽपि स्वरूपत्वस्यानुगतस्यानङ्गीकारे जातिमात्रस्यानुगताकारधीमात्रजीवनस्योच्छेदप्रसङ्ग इत्याह तर्हीति। नचेति। नवेत्यर्थः। एवं तद्व्यक्तिर्न तद्व्यक्तिरिति व्यवहाराभावादपि तद्व्यक्तित्वस्यानुगतत्वं वाच्यम्, अन्यथा व्यक्तिभेदमादाय तदापत्तेः, निरुक्तयोग्यत्वरूपस्वतोव्यावृत्तत्वस्यावच्छेदकनिरूपणापत्तेः, नच-निरुक्तयोग्यत्वस्य स्वरूपानतिरेक इति तदवच्छेदकं घटत्वादिकमिति-युक्तम्; स्वस्मात्स्वभेदापत्तेः। आधाराधेयभावानुपपत्तेश्च। तादृशयोग्यतान्यादिरूपभेदमुपगम्य तदुपपादने योग्यतातिरिक्तत्वस्यानपराधित्वात्। नच-तदभिन्नत्वेनाप्रतीयमानत्वे सति प्रतीयमानत्वं वा तदभिन्नत्वप्रमाविषयत्वाभाव एव वा तद्व्यावृत्तत्वमिति-वाच्यम्; घटत्वभेदानिरुक्तौ तदभिन्नत्वस्य दुर्निरूपत्वात्, प्रतीतिघटितत्वेनाचाक्षुषत्वप्रसङ्गात्, प्रतीत्यभावकाले तद्भेदत्वाभावप्रसङ्गश्चाद्ये, सर्वाभेदवादिमते द्वितीयेऽप्यसम्भवश्च, तदभिन्नत्वप्रमाविषयत्वस्यैव सत्त्वात्, एकधर्मावच्छिन्नप्रतियोगिकभेदस्यानेकानुयोगिकत्वेन नानात्वापत्त्या भेदांशे प्रतीतीनामनुगतत्वानुपपत्तेश्चेत्यादिकमपि द्रष्टव्यम्। यदि चेति। सन्देह इति। विपर्ययस्याप्युपलक्षणम्। 'इदं तद्वा नवेति' 'इदं तदेवेति' संशयविपर्यययोरभावापत्तिः। नच घटादिस्वरूपग्रहेऽपि तद्भेदत्वाग्रहात्सा नेति वाच्यम्; तद्भेदत्वस्य घटादेः सप्रतियोगिकत्वनिरासेनाधाराधेयभावानुपपत्त्यापादनेन च निरस्तत्वात् एतेनेतरव्यावृत्तधर्मविशिष्टस्वरूप भेदस्तदज्ञानाच्च संशयादिरिति निरस्तम्; तादृशस्वरूपात्मकभेदज्ञानं विनेतरव्यावृत्तत्वेन धर्मज्ञानासम्भवेनेतरेतराश्रयात्, वस्तुगत्येतरव्यावृत्तो यो धर्मस्तद्वैशिष्ट्यविवक्षायामिदन्त्वादेरपि वस्तुगत्या तथात्वादुक्तसंशयाद्यनुपपत्तेः, घटत्वादिधर्मविवक्षायामपि 'अयंघटः स नवेति' संशयाद्यनुपपत्तेः एतद्घटत्वस्य तदितरदार्थव्यावृत्तत्वात्। यदि च तद्भेदत्वं घटादौ तद्विद्यमानत्वं तर्हि भेदस्यातिरिक्तस्य स्वीकारावश्यकत्वेन स्वरूपभेदस्याप्रामाणिकत्वमेवेति भावः। अधिकं तु चतुर्थपरिच्छेदे वक्ष्यते।

यदि चाभिन्ने भेदो निविशेत तदा याप्येका व्यक्तिः प्रतीयते घटादिः, साऽपि तेनैव भेदेनानेका स्यादित्येकाभावे नानेकमपि व्यवतिष्ठते। एतेन-न भेदावच्छिन्ने नाप्यभेदावच्छिन्ने भेदो विनिविशते किन्तूदासीने इत्यपि-निरस्तम्। अतएव च भेदो नाम स्वरूपान्योन्याभाववैधर्म्यानात्मको धर्मान्तरं पृथक्त्वापरनामकमित्यपि-परास्तम्; सो पि हि स्वाश्रये भिन्ने विनिविशेत, अभिन्ने चेत्यादियथोक्तदोषलङ्घनाजङ्घाल; एव स्यात्; स्वाश्रयेण च स्वस्मिन्नभेदमयाद्यदि स एव भेदो निविशते तदात्माश्रयः, अन्यश्चेत्तर्हि तमन्यं, तस्मिन्नप्यन्य इत्यनवस्था, क्वचिदपि गत्वा भेदभेदाश्रययोर्भेदस्यास्वीकारे च तदैक्यद्वारिका मूलपर्यन्तमेकता धावेत्।

। तदद्वैतश्रुतेस्तावद्बाधः प्रत्यक्षतः क्षतः।

घटभेदो घटाभिन्नवृत्तिरिति पक्षमपहस्तयति यदीति। अनेका स्यात् = एका न स्यात्, न स्यादेवेति यावत्। घटो यदि स्वभिन्नः स्यात् सर्वदेशकालवृत्त्यत्यन्ताभावप्रतियोगी स्यादिति भावः। एकाभावे इति। घटो यदि तादृशाभावप्रतियोगी स्यात्तदेत्यर्थः। नानेकमपि व्यवतिष्ठते = अनेकत्वाव्यवस्थापकः स्यात् स्वाधीनानेकत्वस्य सत्यत्वेन व्यवस्थापको न स्यात्, तादृशाभावप्रतियोगित्वाभाववद्विषयकप्रमितिप्रयोजको न स्यादिति यावत्। तादृशप्रतियोगित्ववद्घटनिरूप्यत्वविशिष्टानेकत्वस्यापि तादृशप्रतियोगित्वमेव ननु तदभावरूपं सत्यत्वमिति भावः। अनेका स्यादित्यनेनैकत्वाभावं वाऽऽपाद्य एकत्वं यद्येकवृत्तिधर्मावच्छेदेनैकत्वत्वावच्छिन्नसमवायसम्बन्धावच्छिन्नात्यन्ताभावप्रतियोगितावत्स्यात् सत्यत्वेनानेकत्वाव्यवस्थापकं स्यात् सर्वदेशकालवृत्त्यत्यन्ताभावप्रतियोगित्वाभाववद्विषयकप्रमितिप्रयोजकं न स्यादित्युत्तरग्रन्थेनापादनीयम्। अयं देशः कालो वा यद्येकत्वाच्च स्यादनेकत्वानपि न स्यादिति तु स्थवीयः। एतेनेति। वस्तुतो घटभेदवतोऽपि पटादेर्यदि घटभेदाभेदोदासीनत्वं तदा घटाभेदवतोऽपि तत्स्यादिति घटेऽपि घटभेदप्रसङ्गेनेत्यर्थः। उदासीने इति। उदासीनत्वं न घटभेदानवच्छिन्नत्वे सति घटाभेदानवच्छिन्नत्वम्, असम्भवात्, नापि घटभेदाभेदाभ्यामप्रतीयमानत्वम्, वस्तुगत्या घटभेदवद्वृत्तित्वप्रयुक्तदोषाणामनुद्धारात्, घटभेदवत्ताप्रतीत्यर्थं घटभेदवत्त्वेन प्रतीत्यवश्यम्भावस्याप्युक्तत्वाच्च, नापि पटत्वाद्यवच्छिन्नत्वं, वस्तुतो घटभेदवत्तामादाय दोषसत्त्वात्। तस्मादसम्भवदुक्तिकत्वमेवास्य कल्पस्येति द्रष्टव्यम्। पृथक्त्वेति विभागादेरप्युपलक्षणम्। दोषलङ्घनाजङ्घालः = दोषराहित्यायोग्यः। अत्र 'अन्योन्याभावादेव पृथक्त्वव्यवहारोपपत्तेः पृथक्त्वं नातिरिच्यते तत्प्रतीतेः सावधित्वावलम्बनत्वे मानाभावेन न सावधित्वेन हेतुना तस्याभावत्वाभावसाधनसम्भवः, घटात्पटः पृथक् इतरोऽन्यो भिन्नोऽर्थान्तरमित्यादौ तत्तच्छब्दविशेषप्रयोगे पञ्चम्यानुशासनसिद्धैवेति' पदार्थतत्त्वनिरूपणादौ शिरोमण्याद्युक्तमपि द्रष्टव्यम्। विभागे भेदव्यवहारस्तु गौण एव, अन्यथा गुणादौ संयुक्तयोश्च भेदव्यवहारानुपपत्तेः। घटाद्यभिन्नत्वे सति घटादिकप्रतियोगिकविशेषवत्त्वं घटादिभेदत्वं तु नानुगतम्, विशेषवत्त्वस्य विशेषान्तरं भेदान्तरं वा विनानुपपत्त्याऽनवस्था च स्वपरनिर्वाहकत्वे चात्माश्रयः, तादृशविशेषस्याप्रामाणिकत्वं च, अपर्यायत्वनियमनस्य भेदोपगमेनैवोपपत्तेरिति भावः। अतिरिक्तभेदपक्षेषु दोषान्तरमाह स्वाश्रयेणेति। स्वं भेदः। यदि स एव भेदो निविशते = स्वाश्रयप्रतियोगिकस्वानुयोगिकभेदो यदि स्वयमेव तदा स्थितात्माश्रयः। तदैक्येति। स्वरूपभेदस्य निरस्तत्वेन तेनानिर्वाहादिति भावः। मूलपर्यन्तमेकता धावेत् = घटपटयोरप्येकता स्यात्, भेदस्यातिरिक्तस्याभावात्। तत् = तस्मात्। प्रत्यक्षतो बाधः = भेदप्रत्यक्षाधीनोऽप्रामाण्यग्रहः। तं = अद्वैतश्रुतिविशेष्यकाप्रामाण्यप्रकारकग्रहं। अनुमानस्यागमापेक्षया दुर्बलत्वादेव मेरुः

नानुमानादि तं कर्तुं तवापि क्षमते मते ॥ २० ॥

पाषाणमयः पर्वतत्वात्, नरशिरः कपालं शुचि प्राण्यङ्गत्वात्, राजसूयं ब्राह्मणानुष्ठेयं स्वर्गसाधनत्वादित्याद्यनुमानानामागमबाध्यत्वं हेत्वाभासमणावुक्तम् । यद्यपि धर्म्यादिग्राहकत्वेनैवात्रागमस्य प्राबल्यम्, नचाद्वैतश्रुतेस्तथात्वं, तेन च न परमागमस्यैव प्राबल्यं अपितु वह्निरनुष्णः कृतकत्वात्, मनो विभु ज्ञानासमवाय्याधारत्वादित्यादौ प्रत्यक्षानुमानादेरपि, निश्चितप्रामाण्यकत्वेनैव प्राबल्यपक्षेऽपि नानुमानादित्वाद्निनैवागमापेक्षया दौर्बल्यम्, अपि तु गृहीतप्रामाण्यकत्वेनैव; तथाप्यन्यत्रागमस्य प्रत्यक्षेणेवानुमानादिना बाध्यत्वं न क्वापि क्लृप्तमित्येतावन्मात्राभिप्रायेणेदमुक्तम्; आगमैकदेशप्रतिपाद्यस्य मेर्वादेर्मन्तात्र सुवर्णमयत्वादिप्रतिपादकांशस्य चामन्ता पुनरागमस्य प्राबल्यमनुमानापेक्षयाऽव्यवस्थाप्य प्रतिपादयितुमशक्य एवेति वाऽऽशयो द्रष्टव्यः । आदिपदेन तर्को ग्राह्यः स चाप्रमाणत्वादेवागमाद्दुर्बल इति केचित् । यदिचानुमानपदेन घटः पटभिन्नो घटत्वादित्यादिभेदसाधकमनुमानं गृह्यते तदा भेदविषयकार्थापत्त्यादेरपि ग्रहणे न क्षतिः, सादृश्यस्योपमानग्राह्यत्वमते भेदस्यापि तेन ग्राह्यत्वसम्भवात्. सादृश्यस्य भेदघटितत्वात् । यदि त्वात्त्विकभेदमादाय सिद्धसाधनं मा भूदिति भेदो न साधनीयः, अपि तु संवादिव्यवहारक्षमत्वप्रमितत्वतुच्छत्वप्रातिभासिकत्वानधिकरणत्वादिना लिङ्गेनार्थापत्त्या वा भेदे प्रतीतिसाक्षिके सत्यत्वमेव, अद्वैतश्रुत्यपेक्षया च सत्यत्वसाधकानुमानस्य प्राबल्यमेवेत्युच्यते, तदा 'तदद्वैते'ति तत्पदस्योक्तपरामर्शकस्योत्तरार्द्धेऽपि हेतुतयाऽन्वयः; तथाचायमर्थः—भेदनिर्वचनखण्डनैरुक्तभेदे सत्यत्वाभावस्यैवोपनीतत्वान्न सत्यत्वसाधनसम्भवः, किञ्च भेदत्वावच्छेदेन सत्यत्वसाधनस्य प्रातिभासिकभेदे बाधेनासम्भवात् घटपटभेदादिकं विशिष्यैव धर्मीकृत्य सत्यत्वं साधनीयमिति भेदसामान्याभावबोधने प्रवृत्ता श्रुतिर्घटपटभेदातिरिक्तांशेऽगृहीतप्रामाण्यकत्वेनोक्तन्यायेन सर्वाभेदे प्रामाण्यमासाद्य भेदे सत्यताधियं प्रतिक्षेप्स्यति, नहिविशेषरूपेण भेदेषु सत्यत्वमसर्वज्ञसुग्रहम्; अतएवान्यतमत्वमपि न पक्षतावच्छेदकम्; अतएव न विमतिरपि विशेष्यतासम्बन्धेन तस्याः प्रातिभासिकभेदसाधारण्येन बाधापत्तेः, नच तस्या व्यावहारिकनिष्ठविशेष्यतासम्बन्धेन पक्षतावच्छेदकत्वम्, तथाच भेदभेदिनां सर्वेषां सत्यता सेत्स्यतीति वाच्यम्; व्यावहारिकत्वस्य ब्रह्मज्ञानेतराबाध्यत्वरूपस्य व्यवहारकालाबाध्यत्वरूपस्य वा ब्रह्मसाधारण्येन तत्र सिद्धसाधनापत्तेः, व्यावहारिकसामान्यनिष्ठा च विशेष्यता नैका, अधिष्ठानप्रमाप्रयुक्ताभावप्रतियोगित्वादिरूपबाध्यत्वस्याननुगतत्वेन तद्विरहस्यापि तथात्वात्, व्यवहारकालत्वस्याप्यव्यवस्थितत्वाच्च । एतेन व्यावहारिके ब्रह्मभिन्नत्वनिवेशोऽवच्छेदकावच्छेदेनानुमितेरुपगमेऽपि वा निरस्तः । ज्ञानमात्रस्य ब्रह्मविषयकत्वेन ब्रह्मज्ञानेतरत्वस्यैव ज्ञानेऽप्रसिद्धेश्च, निर्विशेषब्रह्मविलक्षणेऽपि विशेषसामान्यस्य मिथ्यात्वसिद्धिं विना तस्याप्रसिद्धिरेव. सविशेषनिर्विशेषसाधारणनिवेशो नूनमेव दुर्वचं चोभयसाधारणं रूपम्; निर्विशेषगतधर्माणामभावरूपतयाऽऽश्रयात्मकत्वेन सविशेषात्मकत्वस्य सविशेषनिष्ठत्वस्य वाऽनुपपत्तेः । नापि वेदान्ततात्पर्यप्रमितिजन्यज्ञानान्याबाध्यत्वं मोक्षहेतुज्ञानान्याबाध्यत्वं वा पक्षतावच्छेदकम्; भेदस्यानुयोगिप्रतियोगिगतवैधर्म्यनिरूपणं विना प्रतिपत्तुमशक्यत्वेनानुयोगिगतवैधर्म्यस्य निरूपणावश्यकत्वे तदवच्छिन्नाबाध्यत्वस्यैवावच्छेदकत्वौचित्यात्; नवा तन्निरूपणमपि सुशकम्; तात्पर्यप्रमितिश्च न शब्दैक्यमात्रेणानुगता स्यात्, नवा मोक्षपदार्थोऽपि, तथाच तात्पर्यपदार्थस्य मोक्षपदार्थस्य च विवेचने नोभयमतसाधारण्यसम्भवः पक्षतावच्छेदकस्य । एतेन प्रातिभासिकभिन्नत्वं तुच्छस्याङ्गीकारे तत्त्वानधिकरणत्वमपि पक्षतावच्छेदकमिति निरस्तम्; अनुयोगिगतवैधर्म्यस्य निरूपणापत्तेः । अतएवालक्ष्यान्यत्वघटितलक्षणमात्रं मूले निरसिष्यति । एतेन प्रातिभासिकभिन्नत्वे सति दृश्यत्वं, सत्ता-

अद्वैतागमनासीरे साधु सा धुन्वती परान्।
सेवामेवार्जयत्यर्थापत्तिपत्तिपरम्परा ॥ २१ ॥

नन्वद्वैतश्रुतयो वर्णपदविभक्तितदर्थादिभेदानुपजीव्यार्थं प्रतिपादयन्त्यः स्वोपजी-

---

दात्म्यं वा पक्षतावच्छेदकमिति निरस्तम्; दृश्यत्वस्य चिद्विषयत्वादिरूपत्वेऽननुगमः, विषयताया विषयभेदेन भिन्नत्वात्, अन्यथा घटपटाविति समूहालम्बनस्य घटपटनिष्ठविषयतया एकत्वेन भ्रमत्वापत्तेः घटावृत्तिधर्मावच्छिन्नघटनिष्ठविषयताशालित्वात्, एतेन सत्तादात्म्यस्यापि चिद्विषयत्वरूपत्वं निरस्तम्; सदध्यस्तत्वादिरूपत्वं तु सत्यत्वं साध्यं न मृष्यते। दुर्वचश्चाध्यस्तत्वं विना वृत्तिनिरूपिताकाराख्यविषयताश्चिन्निरूपितविषयतायामभ्युपेतं वैलक्षण्यम्, नवा विषयतात्वमप्येकं द्वयोः साधारणं येन तेनात्मनापि निवेशः स्यात्। स्वातिरिक्तचिदधीनस्वस्फुरणकत्वरूपं दृश्यत्वमपि स्वत्वाप्रमातत्वेन नानुगतम्; एवं प्रकारान्तरेष्वपि द्रष्टव्यमिति दिक्। उक्तहेतूनां दूषणानि त्वद्वैतसिद्ध्यादौ द्रष्टव्यानि। इदं पुनस्तत्त्वम्—आद्यस्य तृतीयस्य च व्यावहारिकसत्त्वेनैवोपपत्तौ पारमार्थिकत्वसाधनेऽप्रयोजकत्वम्, द्वितीयश्चासिद्धमेव, भेदनिर्वचनप्रतिक्षेपादिति। नासीरशब्दस्य सङ्गरार्थकत्वे—अद्वैतागमस्य भेदबोधैः सह नासीरे = बाध्यबाधकभावचिन्तायां सा = पूर्वोक्ता अर्थापत्तिपत्तिपरम्परा = तत्तद्बाधकत्वाभिमतभेदबुद्धिभिर्बाध्यत्वाभिमताद्वैतबुद्धेः स्वविषयैश्च तत्तद्बुद्धेर्द्वैतविषयकत्वावच्छेदेन निश्चितप्रामाण्यकत्वान्यथानुपपत्तिबुद्धीनां बाधकत्वाभिमतभेदबुद्धिप्रामाण्यग्रहविघटकतया सेनाविशेषात्मकपत्तिरूपतयाऽध्यवसितानां परम्परा साधु यथा स्यात्तथा परान् धुन्वती = भेदबोधविशेष्यकप्रामाण्यप्रकारकग्रहाभावप्रयोजिका सती सेवामेवार्जयति = अद्वैतबुद्धेः सर्वविषयकत्वावच्छेदेन प्रामाण्यग्रहौपयिकतामेवासादयतीत्यर्थः। नासीरशब्दस्य सेनाविशेषात्मकपत्तित्रिगुणीभूतसेनामुखार्थकत्वे तु—शुद्धान्तःकरणानां विदुषामद्वैतानुभूतिः, उक्तान्यथानुपपत्त्यात्मिका दृश्यत्वाद्यन्यथानुपपत्त्यात्मिका च युक्तिः, द्वैतमिथ्यात्वानुमितिश्चेति त्रयमेवाद्वैतागमस्य नासीरं तद्घटकीभूता चार्थापत्तिपत्तिपरम्परेति द्रष्टव्यम्।

वर्णेत्यादि। यद्यपि समुदायघटकवर्णानामानर्थक्यात्तदर्थेत्यसङ्गतम्, तदर्थेत्यस्य द्वन्द्वावयवपदविभक्तिपदार्थमात्रान्वयित्वानुपपत्तेः। वासुदेवादिवाचकाकारादेश्च पदपदेनैव ग्रहणसम्भवः, तथापि पदपदस्य शक्तिमत्परत्वे विभक्तिपदोपादानानर्थक्यात्सुप्तिङन्यतरान्तार्थकत्वा प्रकृतिमात्रस्याकारादेरिणादिधातोश्च केवलस्याणादिप्रत्ययस्य च वर्णपदेन ग्रहणसम्भवः; अद्वैतश्रुतिपदस्याद्वैतपरवेदमात्रपरत्वेनाद्वैतश्रुतिघटकत्वमपि तेषु। अथवा वर्णपदस्य पदविभक्तितदर्थादीन्यनेनैव समासो द्रष्टव्यः। आदिपदेन चाव्यवहितपूर्वापरीभावघटिताकाङ्क्षादिकं ग्राह्यम्। तथा चाद्वैतश्रुत्यधीनशाब्दबोधप्रयोजकबोधविषयत्वमेवोक्तभेदेष्वद्वैतश्रुत्युपजीव्यत्वम्; नहि प्रकृतिप्रत्ययभाववाच्यवाचकभावाकाङ्क्षादिप्रत्ययो भेदप्रत्ययमन्तरेण घटते, शब्दस्वरूपस्य पूर्वं नियतप्रतीतिकत्वेनैवालङ्कारिकाद्यभिमतशाब्दबोधविषयत्वस्य तत्रोपपत्त्या तदंशे शाब्दत्वस्य 'घटपदं शाब्दयामो'त्यनुव्यवसायविरहेणाप्रामाणिकत्वेन वाच्यत्वस्याप्रामाणिकत्वाद्वाच्यवाचकभावस्यापि भेदप्रतिपत्त्यधीनप्रतिपत्तिकत्वमेवेति भावः। स्वोपजीव्याभिः = स्वाधीनशाब्दबोधप्रयोजिकाभिः। नहि प्रत्यक्षं प्रत्यक्षमित्येतावतैव प्रबलं, येन जात्या तस्य प्राबल्यमाशङ्क्येतापि, मा भूचन्द्रे प्रादेशिकत्वादेः स्वीकारप्रसङ्गः, नवा तस्य निश्चितप्रामाण्यकत्वं, येन प्रथमोत्पत्तिके तत्रोपक्रमन्यायेन प्राबल्यशङ्काऽवकाशमासादयेत्, नवा तस्य व्यवहारेऽनवकाशता अद्वैतश्रुतेश्च सावकाशता, येनानवकाशबलीयस्त्वन्यायोऽत्र सावकाशः स्यात्; नवा शतमप्यन्धानां पश्यति, येन भेदबुद्ध्यन्तरसंवादवतो भेदप्रत्यक्षस्य 'बहूनामनुग्रहो न्याय्य' इति न्यायेनाद्वैतश्रुतिबाधकता स्यात्; नवा तेषां

व्याभिर्भेदबुद्धिभिर्न कथं बाध्यन्ताम्, उपजीवकस्योपजीव्याद् दुर्बलत्वात्। मैवम्। न वयं भेदस्य सर्वथैवासत्त्वमभ्युपगच्छामः, किन्नाम, पारमार्थिकं सत्त्वम्। अविद्याविद्यमानत्वं तु तदीयमिष्यते एव, तदेव च कार्यकारणभावोपयोगि। एतेन– 'एकमेवे''त्येवकारव्यवच्छेद्येन, 'अद्वितीयमिति''द्वितीयेन, "न नानेति" नानात्वेन, ''किञ्चने''त्यनेन बहुना विना नोपपद्यमानेन, व्याघात इत्यपि प्रत्यादिष्टम्; श्रुतिभिश्चाद्वैतार्थाभिः पारमार्थिकमद्वैतं प्रतिपाद्यते, नच पारमार्थिकमतिरपारमार्थिकधिया शक्यबाधा, मा भूच्छुक्तिरजतधिया परमार्थशुक्तिमतिबाधः। यत्र त्वग्निरनुष्ण इति बुद्धेरुष्णज्ञानोपजीवनादुष्णबोधेनानुष्णबुद्धिबाधस्तत्र द्वयोरप्यविद्याविद्यमानत्वाद्बाधो युक्तः।

ननु तत्रापि तर्ह्यनुष्णतापि पारमार्थिक्येव साध्यतामबाधनाय। मैवम्; अनुष्ण-

---

सर्वथैवानभ्युपगमोऽपि, व्यवहारे सावसरत्वात्; तस्मादुपजीव्यत्वेनैव प्राबल्यमाशङ्क्यते। यद्यप्युपजीव्यत्वेनापि प्राबल्ये मानाभावः, अगृहीताप्रामाण्यकत्वेन निश्चितप्रामाण्यकत्वेन वा प्राबल्यात्, उपजीव्यस्यापि क्वचित्प्राबल्ये तदेव प्रयोजकं, अन्यथा नेदं रजतमिति प्रमापेक्षया तत्पूर्वभाविनो रजतभ्रमस्यापि प्राबल्यं स्यात्, न च निश्चितप्रामाण्यकत्वं प्रत्यक्षस्येत्युक्तं पुरा"भेदधीमात्रस्य च द्विचन्द्रादिबोधवदन्यथाप्युपपत्तेरि"त्यत्र। तथाप्यभ्युपगमवादेन समाधत्ते न वयमिति। सर्वथैवासत्त्वं = अलीकत्वं सद्भिन्नत्वे सति कालिकसम्बन्धावच्छिन्नाधेयतानाश्रयत्वरूपम्, सद्भिन्नोऽपि घटादिस्तादृशाधेयताश्रय एव, तादृशाधेयतानाश्रयोऽपि निर्धर्मकं ब्रह्म न सद्भिन्नम्। पारमार्थिकं सत्त्वं = कालत्रयव्यापकबाधकप्रमित्यविषयत्वं। नाभ्युपगच्छाम इत्यनुषङ्गः। तदेवेति। "पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नावि"ति प्रघट्टके व्यावहारिके कारणता व्यवस्थापिता, तथाच यद्धर्मावच्छिन्नभेदविषयताकत्वेन बोधस्याद्वैतश्रुत्यर्थाज्ञानशाब्दबोधप्रयोजकता तद्धर्मातिरिक्तरूपेणापि भेदस्य बाधे उपजीव्यव्याघातोक्तेरप्रामाणिकत्वात् तद्धर्मेणैव भेदस्य बाधे तस्याः प्रामाणिकतायाः स्वीकार्यत्वात् भेदत्वस्य व्यावहारिकत्वसमानाधिकरणभेदत्वस्य वा तद्धर्मस्याबाधे तेन रूपेण भेदस्याप्यबाधेन नोपजीव्यव्याघातः एवं भेदबोधस्योपजीव्यत्वेऽपि द्रष्टव्यमिति भावः। एतेन = निषेध्यस्याविद्यकस्योपगमेन। एवकारेति। कारो बाहुलकात्। एवकारज्ञानाधीनज्ञानविषयव्यावृत्तिप्रतियोगिना सजातीयाद्यन्यतमभेदेनेत्यर्थः। इति द्वितीयेन = इत्येतज्ज्ञानाधीनज्ञानविषयव्यावृत्तिप्रतियोगिना द्वितीयत्वेन। ग्रन्थकृन्मते एतच्छ्रुत्या भेदस्यैव निषेधात्। एवमग्रेऽपि। बहुना = बहुत्वेन, सङ्ख्येयपरत्वे बहुवचनापत्तेः, वैपुल्यवाचिनश्च प्रकृतेऽनुपयोगात्। व्याघात = अद्वैतासम्भवः। चो ह्यर्थे। पारमार्थिकमतिः = अबाधितविषयकधीः। अपारमार्थिकधिया = बाधितविषयकधिया। शक्यबाधा = अप्रामाण्यप्रकारकप्रमाविशेष्यीकर्तुं शक्या। परमार्थेति। व्यावहारिकेत्यर्थः। न परं त्रिकालाबाध्यविषयकज्ञानस्यैव प्राबल्यम्, अपि तु व्यवहारकालबाध्यविषयकज्ञानापेक्षया व्यवहारकालाबाध्यविषयकज्ञानस्यापि, निश्चितव्यावहारिकप्रामाण्यकत्वादित्याशयेनाह यत्रेति। उष्णज्ञानोपजीवनात् = उष्णज्ञानस्य प्रतियोगिज्ञानविधयाऽपेक्षणात्। अविद्याविद्यमानत्वात् = आविद्यकविषयकत्वात्। अनौष्ण्यबुद्धेः पारमार्थिकविषयकत्वे हि व्यावहारिकौष्ण्यसत्त्वेऽपि तद्विषयोपपत्तेरद्वैतश्रुतिवदुपजीव्यबाध्यता न स्यात्, तस्या आविद्यकानौष्ण्यविषयकत्वे तु औष्ण्यज्ञानस्योपजीव्यस्याविद्यकविषयकत्वेऽपि निश्चितव्यावहारिकप्रामाण्यकत्वेन प्रातीतिकविषयकत्वासम्भवात् व्यावहारिकानौष्ण्यविषयकत्वमुक्तबुद्धौ सोढुमक्षमत्वात्तस्याः प्रातीतिकविषयकत्वमेव वाच्यमित्यस्यैवोपजीव्यबाध्यतेति भावः।

तत्र = अग्नौ। अबाधनाय = उपजीव्यविरोधपरिहाराय। पारमार्थिकीति किं व्यवहारकालाबाध्या

नाया; जलादिदृष्टान्तसजातीयाया· शीताद्यव्यावृत्तस्वरूपायाः प्रसाधनेऽपि विद्यमानत्वे एव विश्रामात्; तत्रैवंविधरूपतानङ्गीकारे चाद्वैतस्यैव नामान्तरकरणापत्तेः; ततस्तस्यां ज्ञेयज्ञानादिभेदावश्याभ्युपेयतया जगद्बाधयुक्तिकवलाप्रवेशासम्भवात्। अद्वैते च द्वैताश्रयस्य बाधस्य वास्तवस्यानवकाशादपारमार्थिकत्वसम्भावनापि दूरत एवापसरतीति। ननु किमद्वैतपरमार्थताभ्युपगमेन समाहितं भवति यत उपजीव्यबाधादद्वैते प्रमां श्रुतिर्जनयितुं न शक्नोतीति ब्रूमः। मैवम्; अद्वैतं हि पारमार्थिकमिदं पारमार्थिकेन भेदेन बाध्येत,

विवक्षिता, आहोस्वित् त्रिकालाबाध्या; आद्ये अनुष्णताया इति। दृष्टान्तसजातीयायाः = दृष्टान्तगतानुष्णतासजातीयायाः। साजात्यं च शीतानुष्णाशीतस्पर्शस्पर्शाभावान्यतमव्याप्यत्वेनेत्याह शीतादीति। शीतायभाववदवृत्तिस्वरूपाया इत्यर्थः। द्वितीये तत्रेति। अनुष्णतायामित्यर्थः। अद्वैतस्यैवेति। औष्ण्याभावस्याव्यावहारिकत्वे पारमार्थिकत्वमेव वाच्यम्, प्रातीतिकत्वे उपजीव्यबाध्यतापत्तेः, तथाचाध्यस्ताभावस्याधिष्ठानात्मकतोपगमात् ब्रह्मावौष्ण्याभावस्यानवच्छिन्नवृत्तिकस्य सिद्धौ तस्य प्रतियोगिसमानाधिकरणत्वेनाध्यस्तप्रतियोगिकत्वाद्ब्रह्मात्मकत्वेनेष्टापत्तिरिति परेणानुष्णताया औष्ण्यापेक्षयाधिकसत्ताकत्वं वक्तुमशक्यमेव। तदपेक्षया न्यूनसत्ताकत्वस्य तत्समसत्ताकत्वस्य वोक्तावाह तत इति। ज्ञेयज्ञानादिभेदेति। ज्ञेयेति भावप्रधानं, तथाच दृग्विषयत्वं मिथ्यात्वव्याप्यं लब्धम्, ज्ञानभेदः = ज्ञानत्वस्य "सत्यं ज्ञानमि"ति श्रुत्या ब्रह्मण्येवोपगमात्तदवच्छिन्नप्रतियोगिताकभेदाधिकरणत्वमपि मिथ्यात्वव्याप्यम्, शुद्धस्य निस्स्वरूपस्यानधिकरणत्वात्। आदिपदबलादात्मत्वावच्छिन्नप्रतियोगिताकभेदाधिकरणत्वलाभः। अथवानुष्णताया दृगतिरिक्ततत्तज्ज्ञेयज्ञानादिभेदस्याभिधानेन दृगन्यूनसत्ताकाभावप्रतियोगित्वस्य मिथ्यात्वव्याप्यस्य लाभः। यद्वा भेदशब्दस्य विशेषार्थकतया ज्ञेयज्ञानभेदः = विषयविषयिभावः आदिपदबलात्प्रतियोग्यनुयोगिभावजन्यजनकभावादेः सम्बन्धस्य लाभः, तथाच शुद्धे ब्रह्मण्युपहितात्मतादात्म्यातिरिक्तस्य भावभूतधर्मस्याभावेन समसत्त्वस्य तत्तत्सम्बन्धप्रतियोगित्वरूपस्य मिथ्यात्वव्याप्यत्वेनानुष्णतायां च सत्त्वेन तस्या मिथ्यात्वावश्यभाव इति भावः। जगद्बाधयुक्तीत्यादि। चतुर्थपरिच्छेदे वक्तव्यदिशा दृग्विषयत्वादिसम्बन्धमात्रस्यानिर्वाच्यत्वेन तदन्यथानुपपत्तिरूपा या प्रपञ्चमिथ्यात्वसाधिका युक्तिः तत्कवलाप्रवेशस्य तत्साध्यमिथ्यात्वानाक्रान्तत्वरूपस्यासम्भवादित्यर्थः। इदमुपलक्षणम्–औष्ण्याभावस्यौष्ण्यसमसत्ताकत्वोपगमे औष्ण्ये मिथ्यात्वस्य परानिष्टस्यापत्तिरित्यपि द्रष्टव्यम्, प्रतियोग्यन्यूनसत्ताकस्यैवाभावस्य मिथ्यात्वघटकताया अन्यत्र निर्णीतत्वादिति। अयम्पुनः सम्बन्धमात्रखण्डनसंक्षेपः–विषयत्वादिः सम्बन्धिभ्यां भिन्नो वाऽभिन्नो वा आद्येऽनवस्था, यथा च नेष्टापत्तिस्तथाऽसकृदावेदितमधस्तात्, द्वितीये आधाराधेयभावस्यानुभूयमानस्यापलापः रूपभेदेनापि स 'नहि दण्डयपि देवदत्तः कुण्डलिनं स्वमारोहती'ति न्यायेनासम्भवी, रूपस्य सम्बन्धगतस्यातिरिक्तस्योपगमे वा सम्बन्धस्यातिरिक्ततया किमपराद्धम्, अनवस्थायाः समानत्वात्, भेदाभेदपक्षस्तु विरोधादेवासम्भवी, एकस्यानिर्वाच्यत्वमुपगम्य तृतीयपक्षोपगमे च सम्बन्धमात्रस्यानिर्वाच्यत्वमेवेति। विषयत्वादेरनिर्वाच्यत्वेन तत्संसृष्टतया प्रपञ्चवद्ब्रह्मणोऽनिर्वाच्यत्वेऽपि शुद्धरूपेण न तथात्वं प्रपञ्चानां तु शुद्धरूपं नास्त्येव ब्रह्मातिरिक्तमित्याशयेनाह अद्वैते चेति। द्वैताश्रयस्य = संसृष्टत्वनिबन्धनस्य। वास्तवस्य = व्यावहारिकप्रमाणसिद्धस्य। तेन 'सर्वं शून्यमि'ति वदतो बाधभ्रमसत्त्वेऽपि न क्षतिः। जनयितुमिति। "न च संस्कारारूढे"त्यादिग्रन्थे विरुद्धविषयकमानान्तरसत्त्वमात्रेणाद्वैतप्रमित्यनुत्पत्तिराशङ्किता, अत्र तु विरुद्धविषयकत्वोपजीव्यत्वोभयविशिष्टमानान्तरसत्त्वेनेति ध्येयम्। विरोधिमानान्तरस्योत्पत्तिप्रतिबन्धकत्वं नास्त्येवेति प्रागु-

न त्वविद्याविद्यमानेन; तस्मादविद्याव्यवस्थितं भेदं तद्बाधं चोपजीवन्त्या न परमार्थाद्वैतबुद्धेरुपजीव्यबाधः। यदि श्रुतिजन्या भवन्त्यप्यद्वैतबुद्धिरविद्याविद्यमाना तथापि तद्विषयस्तावत्परमार्थसदेवाद्वैतम्, विरोधेन च तस्या बाध्यता, स च नास्तीति। तस्मात्—

पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः।
बाधनादुपजीव्येन बिभेति न मनागपि॥ २ ॥

श्रुतिरपि तदाह-"द्वितीयाद्वै भयं भवती"ति। इति खण्डने प्रत्यक्षादिबाधोद्धारः।

## अथाद्वैतस्वरूपनिरूपणम्।

तच्चाद्वैतं "ब्रह्मैवेदं सर्वमि"ति श्रुत्यर्थेन सहैक्यमापन्नं ब्रह्मैव स्यात्। "विज्ञानमानन्दं ब्रह्मे"ति च श्रुत्या ज्ञानानन्दात्मतया व्यवतिष्ठते। तेन यदिदमद्वैतज्ञानं श्रुत्या जनितं

कत्वेऽप्यदानीमभ्युपेत्यवादेनाह अद्वैतं हीति। यदि द्वैताभावः पारमार्थिकप्रतियोगिकः स्यादपारमार्थिकः स्यात्, समसत्ताकयोर्भावाभावयोर्विरोधादित्यर्थः। ननु ब्रह्मातिरिक्तस्य मिथ्यात्वे तद्विषयकबुद्धित्वप्रामाण्यादेरपि मिथ्यात्वेन ब्रह्मापि मिथ्यैव स्यात्. नहि शुक्तिरूप्यविषयकबुद्ध्यादेर्मिथ्यात्वे शुक्तिरूप्यं सत्यं दृष्टमित्याशङ्कते यदीति। यद्यपीत्यर्थः। शुक्तिरूप्यविषयकबुद्धेर्मिथ्यात्वे मिथ्याविषयकत्वं न प्रयोजकं, अपि तु दृश्यत्वमेव, एवं तत्प्रामाण्यादेरपि। मिथ्याविषयकत्वं त्वप्रामाण्यस्यैव प्रयोजकम्, तथाच सर्वबाधकधीविषयस्य ब्रह्मणो मिथ्यात्वासम्भवेन बाध्याधिकसत्ताकवस्तुविषयकधिय एवेतरबाधकत्वेन ब्रह्मबुद्धेर्मिथ्याविषयकत्वाभावेनाप्रामाण्याभावेऽपि दृश्यत्वेन मिथ्यात्वस्य ब्रह्मणश्च सत्यत्वस्य सम्भव इति परिहरति तथापीति। विरोधेन = विषयबाधेन। तस्याः = बुद्धेः। बाध्यता = अप्रामाण्यम्। नास्ति। अद्वैतबुद्धावित्यादिः। ब्रह्मणः शरणत्वं सर्वबाधकधीविषयत्वेन। प्रविश्य = प्रतिपाद्य। तदाह = अद्वैतं शरणीकुर्वाणस्य भयाभावमर्थादाह। द्वितीयाद्वै = मिथ्यात्वप्रकारकग्रहाविशेष्यीभूतादात्मभिन्नत्वप्रकारकग्रहविशेष्यादेव। एवञ्च तादृशविशेष्यत्वे भयप्रयोजकत्वव्यापकत्वलाभादात्मभिन्नत्वप्रकारकग्रहस्य निन्दितत्वप्रतीत्या तद्विषयस्यापि निन्दितत्वायाति, विषयस्य प्रशस्तत्वे तज्ज्ञानस्याप्राशस्त्यासम्भवात्, एवं द्वैतमिथ्यात्वग्रहे सति भयाभावेन तस्य प्राशस्त्यलाभेन तद्विषयस्य द्वैतमिथ्यात्वस्यापि प्राशस्त्यं प्रतीयते, विषयाप्राशस्त्ये ज्ञानप्राशस्त्यानुपपत्तेरित्यद्वैते एव श्रुतेस्तात्पर्यमिति भावः। इति खण्डनशारदायां प्रत्यक्षादिबाधोद्धारः।

अद्वैतं हि द्वैताभावः, तस्य ब्रह्मातिरिक्तत्वे सत्यत्वं मिथ्यात्वं वोभयथापि सर्वाद्वैतक्षतिः, भावमात्राद्वैतपक्षस्य श्रुतिस्वारस्यविरुद्धत्वादित्याशङ्क्य द्वैताभावत्वोपलक्षितब्रह्मणोऽद्वैतपदार्थतामाह तच्चेति। ब्रह्मैवेदं सर्वं = इदं सर्वं ब्रह्मैव, आविद्यकेदम्पदार्थतादात्म्योपलक्षिताधिष्ठानबोधकसमानविभक्तिकपदनिचयत्वेनात्र बाधसामानाधिकरण्यम् एवञ्च श्रुतेर्ब्रह्मातिरिक्तासहमानत्वं स्फुटमेव। सर्वपदाभावे प्रत्यक्षविषयस्यैव ब्रह्माभेदः सम्भाव्येतेत्याशयेन सर्वपदमुपात्तमिति प्रत्यक्षाविषयस्यापि द्वैताभावस्य ब्रह्माभिन्नत्वम्, द्वैतप्रतियोगिकत्वेन रूपेणाद्वैतस्याविद्यकत्वं पूर्वमुक्तमेवेति भावः। अद्वैतस्यान्येच्छानधीनेच्छाविषयत्वरूपपुरुषार्थत्वोपपत्तये आह विज्ञानमिति। ज्ञानानन्दात्मतया ननु ज्ञानानन्दाधारतया, उक्तश्रुत्यादिसिद्धस्याद्वैतस्य व्याघातात्। आनन्दस्यानावृतत्वलाभाय ज्ञानात्मतोक्तिः; तथाच 'सुखं मेऽनावृतं भवत्वि'त्यादीच्छानां सन्निष्ठावरणविषयताशून्यत्वप्रकारकसुखविशेष्यकत्वेन सुखस्य तादृशविषयताशून्यत्वेनैव पुरुषार्थतायां वक्तव्यत्वात्स्वरूपात्मकसुखस्यापि तथात्वोपपत्तिः, सिद्धे इच्छानुदयेन स्वात्मक-

तद्विज्ञानाद्वैतात्मन्येव निविशते। ननु कथं तस्य श्रुत्या जन्यत्वमुपपद्यते। सत्यमेवं स्यात्, यदि तस्य पारमार्थिकी श्रुत्या जन्यतापि स्यात्, अविद्याव्यवस्थिता तु तज्जन्यता न पारमार्थिकेनाजन्यत्वेन विरुद्ध्यते; अतएव श्रुत्येदमेकं साध्यते। यत्तु तत्र यदेकता भेदाभावो यदि त्रैकत्वसंख्या यदि वा ज्ञानात्मकत्वं यदि वाऽन्यः एवैकत्वनामा कश्चिद्भेदापरपर्यायो धर्मस्तद्रूपं बाध्यते तच्चाद्वैतव्याघातकत्वान्न सेद्धुं शक्नोति, तदा तदपि निष्पीडनमसहमानं तज्ज्ञानश्रुतिजन्यत्वेन सहैव निवर्त्तताम्, यत्तु तादृशस्याद्वैतस्य धर्म-

सुखस्य च सर्वदासिद्धत्वेन 'अहं स्याम्, सुखं वा स्या'मित्यादीच्छाया असम्भवेऽपि स्वात्मकसुखनिष्ठानावृतत्वस्यासिद्धत्वेन तद्विषयकेच्छाया सम्भवेन पुरुषार्थतायां स्वातिरिक्तत्वस्याप्रयोजकत्वादिति भावः। व्यवतिष्ठते = प्रमाविषयत्वरूपव्यवस्थाश्रयः। तेन = ब्रह्मण एव ज्ञानात्मकत्वेन ब्रह्मातिरिक्तस्याभावेन वा। ज्ञानं वृत्त्युपारूढचिदात्मकं। विज्ञानाद्वैतेत्यादि। विज्ञानाद्वैतात्मानुयोगिकाभेदप्रतियोगिताश्रय इत्यर्थः। मनोवृत्त्यादौ ज्ञानशब्दस्यावरणविरोधित्वप्रवृत्तिजनकत्वादिगुणमादायौपचारिक इति भावः। तस्य = नित्याद्वैतात्मकज्ञानस्य। यद्यपि चिद्विशिष्टवृत्तेर्ज्ञानत्वमुपगम्य तस्या ब्रह्मात्मकताभिधाने जन्यत्वं नोपपद्येत, वृत्त्युपारूढचितस्तु ज्ञानत्वे वृत्तेर्जन्यत्वप्रयुक्तमेव तत्र जन्यत्वमित्यौपचारिकत्वात्तस्या नित्यत्वेऽपि तदुपपद्यत एव. तथापि सर्वाभिन्नं ब्रह्मेति मूलकृत्सिद्धान्ते सर्वपदार्थानां स्वरूपं परमार्थं ब्रह्मैवेति घटादौ दृश्यमानापि जन्यता नित्यब्रह्माभेदं मा विरौत्सीदिति तस्याः काल्पनिकत्वेन विरोधः परिहरणीय इति सर्वपक्षसाधारणं मुख्यं समाधानमेवाह सत्यमित्यादिना। अतएव = ब्रह्मविषयकज्ञानस्य श्रुतिजन्यतोपपत्तेरेव। इदं = ब्रह्म। एकम् = अद्वैतम्। साध्यते = प्रतिपाद्यते। यत्तु तद्रूपं बोध्यते इत्यन्वयः, तत्पदार्थं भेदाभावादिकमाह तत्रेति। ज्ञानात्मेति। नचानन्दाद्यात्मकत्वेन विनिगमनाविरहः; कल्पितानन्दत्वज्ञानत्वादिधर्मैरानन्दज्ञानादेर्भेदेऽपि वस्तुन एकत्वात्, कृप्तधर्मानतिरेके एव तात्पर्येण ज्ञानत्वमानन्दत्वं सत्त्वं चैकत्वमित्यत्राप्यदोषाच्च। अभेदापरेति। अभेदस्तादात्म्यं तद्व्यक्तित्वपदाभिधेयम्। तच्च = तद्रूपं च। अद्वैतव्याघातकत्वादिति। ननु भावभूतधर्माणामधिकरणातिरिक्तत्वेनैक्यस्य ब्रह्मत्वासम्भवेऽपि भेदाभावत्वपक्षेऽदोषः अभावस्याधिकरणस्वरूपत्वेनाद्वैताव्याघातात्, नच भेदस्यैवाभावत्वेनान्योन्याश्रयः, भेदत्वस्याखण्डोपाधितया उक्तत्वात्, एवं ज्ञानत्वादिकल्पितजातेः स्वोपहितचिन्निष्ठत्वात् तत्तादात्म्यापन्नशुद्धचित्यप्येकत्वव्यवहारोपपत्तिरिति तृतीयपक्षेऽप्यदोष एवेति चेत् सत्यम्, अतएव "अभावानतिरेकस्वीकारादेव चाद्वैताव्याघात इति" पुरोदीरितम्, तथापि परमार्थतो विचारासहत्वादेव तत्पक्षेऽप्यद्वैतस्याद्वैतासहत्वमधुनोच्यते, नहि भेदाभावत्वोपलक्षितत्वमपि शुद्धचिति वक्तुं शक्यं नवा ज्ञानत्वोपहितताद्वात्म्योपलक्षितत्वमपि, तस्यापि धर्मत्वात्, तस्याप्युपलक्षणत्वेऽनवस्थानात्, स्वरूपमात्रत्वे स्वं न स्वीयमित्यनुभवविरोधात्, अतएव तद्वृत्तिधर्मानाधारत्वोपलक्षितस्वरूपस्यैकत्वमप्ययुक्तम्, नवा रूपभेदेनाधाराधेयभावः प्रामाणिक इत्युक्तमित्यभेदे आधाराधेयभावानुपपत्तिरपि। निष्पीडनं = युक्तिः। तज्ज्ञानश्रुतिजन्यत्वेन = अद्वैतज्ञाननिष्ठेन श्रुतिजन्यत्वेन। यथा जन्यतायाः अपारमार्थिकत्वमुक्तं तथा धर्मान्तरस्यापि द्वैतस्याद्वैतस्य वा ब्रह्मातिरिक्तस्य तथात्वमेव, नह्येतावता सिद्धसाधनमर्थान्तरं वा परैर्वक्तुं शक्यम्, तैर्ब्रह्मातिरिक्तस्य परमार्थताङ्गीकारादिति भावः। निवर्त्तताम् = अनवच्छिन्नवृत्तिकात्यन्ताभावप्रतियोगित्वमालम्बताम्। तादृशात्यन्ताभावस्यापि ब्रह्मात्मकतया वक्तुमशक्यत्वात्का गतिरिति तु नाशङ्कनीयम्, अद्वैतश्रुतिबलादेव तस्य ब्रह्मरूपत्वात्, 'द्वैताभाववद्ब्रह्मे'त्यादिधियामाधाराधेयभावांशे भ्रमत्वेन तदुपपादनासम्भवेऽपि क्षत्यभावात्, नहि ब्रह्मवादिना तदतिरिक्तमुपपादनीयम्, नवा श्रौतबोधस्यापि

स्य धर्मितया प्रमितं तन्मात्रमबाधादधिगतं परमार्थतो व्यवतिष्ठताम्; नहि परमार्थशुक्ती रजततया प्रतीयते यदा, तदा बाधात्तत्र रजतत्वे व्यावर्तमाने धर्मिव्यक्तिरपि तदपराधान्निवर्तते । इति खण्डनेऽद्वैतस्वरूपनिरूपणम् ।

## अथ मुमुक्षूपदेशः ।

सेयमद्वैतबुद्धिर्न तर्कशतमवतार्य प्राज्ञैरपनेया, यदाह श्रुतिः-"नैषा तर्केण मतिरापनेये"ति; तस्मात्-

धीधना ! बाधनायाऽस्यास्तदा प्रज्ञां प्रयच्छथ ।
क्षेप्तुं चिन्तामणिं पाणिलब्धमब्धौ यदीच्छथ ॥ २४ ॥

सेयमद्वैतदृष्टिरिष्टार्थापि, यदाहुः-"स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्",

तस्मात्—

ईश्वरानुग्रहादेषा पुंसामद्वैतवासना ।
महाभयकृतत्राणा द्वित्राणां यदि जायते ॥ २५ ॥

तस्मात्—

आपाततो यदिदमद्वयवादिनीनामद्वैतमाकलितमर्थतया श्रुतीनाम् ।
तत्स्वप्रकाशपरमार्थचिदेव भूत्वा निष्पीडितादहह निर्वहते विचारात् ॥२६॥

तदिदमेताभिरात्ममतसिद्धसद्युक्तिलक्षणोपपन्नाभिर्युक्तिभिरुपनीयमानमद्वैतमविद्याविलासलालसोऽपि श्रद्धातु तावद्भवान्, तदनु चानयैवोपनिषदर्थश्रद्धयाऽध्यात्मं जिज्ञा-

ब्रह्मातिरिक्तांशे तात्त्विकप्रमात्वम्, एवञ्च प्रमाणवज्ञाननाशजनकसामग्र्यधिकरणक्षणस्य प्रतियोग्यधिकरणकालपूर्वत्वाभावनियमो यथा सर्वैरूप्यते तथा चरमे मनः परिणामे स्वपरिणाम्यज्ञानतत्प्रयुक्तद्वयाधिकरणकालपूर्वत्वाभावनियम एव श्रुत्यन्यथानुपपत्त्या तत्प्रामाण्यवादिभिर्वक्तव्य इति भावः । अधिकं तु "यः साक्षात्कुरुते समाधिदिव"ति चरमपद्यशारदायां वक्ष्यते । अबाधादिति । अबाधिततयेत्यर्थः परमार्थेति । व्यावहारिकेत्यर्थः। तदपराधात् = आरोपितबाधात् , संसृष्टरूपेण तु शुक्तेरिव ब्रह्मणोऽपि बाधो न क्षतिकर इति भावः । इति खण्डनशारदायामद्वैतस्वरूपनिरूपणम् ।

अपनेया एव आपनेया । अस्य धर्मस्य = अद्वैतचिन्तनस्य, द्वौ वा त्रयो वा द्वित्राः, बहुव्रीहौ संख्येयेति डच् । आपातत आकलितम् = पूर्वं पदपदार्थविभागज्ञतयैवोत्पन्नेन भ्रमत्वज्ञानास्कन्दितेन ज्ञानेन विषयीकृतम् । चिदेव भूत्वा = चिदात्मनैव । निष्पीडिताद्विचारात् = मननिदिध्यासनसहकृतात् श्रवणात्। निर्वहते = स्वोपादानाज्ञाननिवर्तनक्षमभ्रमत्वज्ञानानास्कन्दितापरोक्षमनोवृत्तिविषयताश्रयः भ्रमत्वज्ञानानास्कन्दितापरोक्षवृत्तेरेवाज्ञाननिवर्तकत्वम्; ननु परोक्षायाः, अपरोक्षत्वेऽपि भ्रमत्वज्ञानास्कन्दितायाः वा, स्वोपादाननिवृत्तिजनकत्वं च वृत्तेस्तन्तुनाशनपटसंयोगस्य स्वोपादानपटनिवृत्तिजनकत्ववदुपपद्यते एव, तस्याः स्वोपादाननिवृत्तिरूपत्वमेव वा, पूर्वोक्तनियमोपगमे तु न कस्यचिच्चोद्यस्यावसरोऽस्तीति भावः । अहहेति स्वानुभवसिद्धत्वसूचनाय । ब्रह्मणोऽप्रमेयत्वेन श्रुत्यर्थत्वाभिधानं तस्याविद्यादशायामापातत एव, युक्तिपूर्वकविचारेण तु मानमेयभावव्यवहारस्याप्रामाणिकत्वात् स्वप्रकाशतयैव तत्सिद्धिरित्यपि स्यादर्थः । आत्ममेति । तार्किकेत्यर्थः । अध्यात्मं परमार्थतत्त्वं = प्रत्यगात्मानं । जिज्ञासमानः =

समानः परमार्थतत्त्वं क्रमाद्वृत्तिव्यावृत्तचेताः स्वप्रकाशसाक्षिकं मात्त्विकसातिशायि स्वात्मनैव साक्षात्करिष्यति । यथा च परिहृतचापलमात्मतत्त्वामृतसरसि निमज्ज्य रज्यति निरायासमेव मानसं तथाऽस्मकथयं नैवध्वचरितस्य परमपुरुषस्तुतौ सर्गे इत्येषा दिक् । इति खण्डने मुमुक्षूपदेशः ।

अथ खण्डनयुक्तीनां कथात्रयेऽप्युपयोगः ।

'अभीष्टसिद्धावपि खण्डनानामखण्डि गन्धामिव नैवमाज्ञा ।
तत्तानि कस्मान्न यथाभिलाषं सैद्धान्तिकेऽप्यध्वनि योजयध्वम् ॥ २७ ॥

तदेतादृशीषु सर्वास्वपि दर्शनस्थितिषु काममस्माकीनाः खण्डनयुक्तयः प्रगल्भन्ते ।

मीमांसमानः । वृत्तिव्यावृत्तचेताः = अनात्माकारवृत्तिविधुरीकृतचेताः यदाहुः— अनात्मादर्शनेनैव परात्मानमुपास्महे" । स्वप्रकाशसाक्षिकमिति । सविषयिकाया एव वृत्तेः साक्षिवेद्यत्वात्तद्वस्त्वेकतया तद्विषयस्यापि साक्षिवेद्यत्वमिति भावः । स्वप्रकाशचिदतिरिक्ताप्राह्यमिति यावत् । मात्त्विकसातिशायि = अपकर्षानाश्रयानश्वरमकमद्वैतं । स्वात्मनैव = स्वस्थेनैव चेतसा, अनात्माकारवृत्तिशून्यचेतसेति यावत् । लौकिकानन्दसाक्षात्कारापेक्षणीयबाह्यविषयमनपेक्ष्यैवेति यावत् । साक्षात्कारस्यावरणविषयतासामान्यशून्यत्वम् । निमज्ज्य रज्यति = आत्माकारातिरिक्तवृत्तिशून्यत्वावधिनालौकिकानन्दाकारनिर्विकल्पकवृत्त्याश्रयः । तादृशवृत्तिदशायामप्यनात्माकारवृत्तिशून्यत्वलाभाय निरायासमेवेति । सर्गे इति । जना हि केचिच्छुष्कचेतसः, अपरे पुनर्दुर्लभ्यधर्मविशेषालिङ्गितचेतसः, तेष्वपि ये प्राग्भवसमर्जितपुण्यपरिपाकेनावाहततरविषयेषु चेतःसञ्चारासहिष्णवो "भक्त्यर्थं कल्पितं द्वैतमद्वैतादपि सुन्दर"मिति सुमतिदुग्धिता जगदाराध्यदेवचरणामलकमलालिमौलयो "नयनं गलदश्रुधारया वदनं गद्गदरुद्धया गिरा । पुलकैर्निचितं वपुः कदा तव नामग्रहणे भविष्यती"ति वासनैकनिकेतनचेतनाः, ते भगवच्चारुचरितचिन्तनैकतानतायामेव लोकोत्तरचमत्कारकारिविगलितवेद्यान्तरसंस्पर्शपरिपूर्णानन्दानुभूतिभाजः । शुष्कचेतसस्तु कथमपि भगवदनुग्रहेण द्रुतचेतस्त्वमासाद्य स्मृत्यन्तरेण वाऽनात्मप्रविलापनप्रभञ्जनायमनादिनेति भावः दिगर्थस्तु ज्ञानस्यैव निवृत्त्यर्थं लोकस्य प्रवृत्तिः अत एव शशशृङ्गगगनतमोनाशोद्देश्यिका न कस्यापि प्रवृत्तिः, तस्यालीकस्य ज्ञानाभावात्; तथा घटाज्ञानस्य ज्ञातत्वे एव तन्निवृत्त्यर्थं प्रवृत्तिरुपपद्येतेति तज्ज्ञानस्य प्रमात्मकस्य विरुद्धत्वेनासम्भवात् तद्विलक्षणत्वमेव वाच्यमिति तदेव नित्यं ज्ञानं सुखात्मकं, साक्षिपदास्पदं सर्वप्रपञ्चभासकतया मोक्षमार्गैरुपास्यमित्यादिराकरेष्ववगन्तव्य इति ।

परमात्मबुद्धिमखिले सखले सजडे तनोपि जडमानस नो ।
जडदर्शनेन जडता जनिता भवितानुतापविनतिर्विकटा ॥

इति खण्डनशारदायां मुमुक्षूपदेशः ।

विजिगीषोः स्वानभीष्टमतमात्रबाधौपयिकत्वं खण्डनयुक्तीनामाह—अभीष्टसिद्धावपीति । एवमभीष्टस्य = तार्किकादिमतबाधस्य सिद्ध्युद्देशेनास्माभिरभ्यूहितानामपि खण्डनानामित्यर्थः । यद्वा खण्डनैः परमतबाधद्वारा स्वाभीष्टस्याद्वैतस्य एवं = उक्तरीत्या सिद्धावपि तेषामाज्ञा = सर्वदर्शनाभिमतपदार्थबाधकता राज्ञामिवाज्ञा न निराकृता । तत् = तस्मात् । सैद्धान्तिकेऽप्यध्वनि = अद्वैताभिमतप्रक्रियायामपि । ब्रह्मणस्तु साक्षित्वादेव बाधासम्भव इत्युक्तमेवेति भावः । एतादृशीषु = प्रमाणाद्युपाश्रयासु । स्थितिषु = प्रक्रियासु । आस्माकीनाः = अस्माभिरभ्यूहिताः । प्रगल्भन्ते = बाध-

यासामीश्वरपरवशां विश्वव्यवस्थामनास्थाय निरसनमशक्यं, तासामेवावतारणार्थमयं प्रावादुकप्रवादोपन्यासः। तथाहि-यदि शून्यवादानिर्वचनीयपक्षयोराश्रयणं, तदा तावद्-मूषां निराबाधैव सार्वपथीनता। यदि तु प्रमाणादिसत्ताभ्युपगन्तृमतावलम्बनं, तदापि लक्षणखण्डनयुक्तीनां लक्षणविशेषखण्डने, लक्ष्यखण्डनयुक्तीनां च तद्विषयप्रमाणादिवि-शेषखण्डने, प्रत्येकं तात्पर्यम्। न च सौत्रादिलक्षणखण्डनेऽपसिद्धान्तापत्तिः, तादृश्याः सूत्रादिव्याख्यायाः खण्ड्यमानत्वात्। न च वाच्यं-लक्षणविशेषवस्तुव्यवस्थापकप्रमाण-विशेषसूत्रादिव्याख्याविशेषखण्डनपरत्वेन लक्षणान्तरं, प्रमाणान्तरं, व्याख्यान्तरं च, वाच्यं प्रसज्येत भवतोऽपीति; वितण्डाकथामालम्ब्य खण्डनानां वक्तव्यत्वात्. तत्र च व्यावृत्य स्वपक्षनिर्वाहं प्रति पर्यनुयोगानवकाशात्। एवञ्च सति वादिदर्शनमाश्रित्यापि खण्डनप्रयोगो निर्बाध एव, एकदेशिवत्प्रत्यवस्थातुं शक्यत्वात्। वैयाकरणानामिव च

कतावच्छेदकरूपत्वस्य। बाधकत्वज्ञाभावज्ञापकत्वं तदेकदेशेऽभावे सप्तम्यर्थप्रतियोगित्वस्यान्वयः। ईश्वरपरवशां = ब्रह्मगतेश्वरत्वप्रयुक्तां ईश्वरत्वञ्च मायासम्बन्ध इति विश्वस्थितेर्मायिकत्वमनभ्युपगम्य खण्डनयुक्तीनां निरासासम्भवः, तस्य मायिकत्वोपगमे तु युक्तीनामपि विश्वान्तःपातित्वान्मायिकत्वा-वश्यम्भावादधिष्ठानप्रमानिवर्त्यत्वरूपनिरासस्य सम्भव इति भावः। अवतारणार्थं = निरूपणबीजप्रदर्श-नार्थम्। अयं = प्राक्कृतः प्रावादुकस्य माध्यमिकादेः प्रावादः शून्यत्वादिविषयकस्तदुपन्यासः। ननु कथं शून्यत्वाद्वैतवादयोः प्रदर्शनस्य खण्डनयुक्त्यवतरणत्वन्तत्राह—तथाहीति। शून्यवादः सर्वा-निर्वचनीयवादः। अनिर्वचनीयपक्षः विज्ञानातिरिक्तानिर्वचनीयवादः। सार्वपथीनता = सर्वाभावज्ञाप-कत्वरूपा सर्वपथव्यापिता। उक्तवादद्वये समर्थनीयस्य कस्यचिदभावात्, ब्रह्मणः स्वतः सिद्धत्वात्, सर्वमतखण्डनेनैव शून्यत्वसिद्धिसम्भवाच्च तादृशवादिनोर्वितण्डायामुत्तमाधिकारित्वात्। लक्षणवि-शेषेति। अबाधितानधिगतार्थविषयकत्वादिरूपप्रमादिलक्षणेषु नैयायिकैः, व्यधिकरणप्रकारावच्छिन्न-विषयताऽनिरूपकत्वादिप्रमादिलक्षणेषु च मीमांसकैः खण्डनयुक्तय उपयोक्तव्या इत्यर्थः। खण्डने इति तात्पर्यमिति परेणान्वयः। लक्ष्यखण्डनेति। सच्चेन्न बाध्येत, असच्चेन्न प्रत्यक्षादिविषयतामालम्बेते-त्यादीनां, 'नान्यापरया प्रमामात्रात्ते तेऽर्थाः स्वक्रियोचिताः। तद्वियस्तद्दुरीकारे स्वाश्रयं कश्चिदस्तु'॥ इत्यादीनां च युक्तीनामित्यर्थः। अमूषां च तार्किकाद्यभिमतस्यापि बाधकत्वेऽपि वितण्डायामुद्भावनं न दोषावहम्। ज्ञाने सामान्ये च प्रत्यासत्तित्वस्य, अनुभवत्वे संशयत्वनिश्चयत्वयोश्च जातित्वस्य, स्मृतौ प्रमुष्टतत्ताकत्वस्य, सविकल्पे निर्विकल्पकपूर्वकत्वस्य, अनुमितौ ज्ञायमानकरणकत्वस्य, उपमाने प्रमा-णान्तरत्वस्य, अपसिद्धान्ते दूषणत्वस्य, प्राचीनाभिमततर्कतद्दूषणविभागस्य, स्वरूपाद्यात्मकभेदस्य, शून्यत्वपरप्रकाश्यत्वयोः परमार्थसति कारणत्वस्य, एवमादीनामन्यादृशस्य च खण्डनमत्रैवान्तर्भावनीयम्। तत्तद्विशिष्टलक्ष्यखण्डनपर्यवसायित्वात्। प्रमाणादीत्यादिना स्वानभिमतलक्ष्यादिकं ग्राह्यम्। प्रत्येक-मिति। उक्तरीत्या विशिष्य, न तु शून्यवादादाविव लक्ष्यलक्षणसामान्यस्य खण्डने इत्यर्थः। विशेषान्त-रस्याऽभावबोधनरूपखण्डनैकदेशेऽभावे प्रतियोगितयाऽन्वयः। भवतः = खण्डनिकस्य। तत्र चेति। पर्यनुयोगानवकाशादित्यन्वयः। व्यावृत्य = खण्डनानन्तरम्। एवं च सति = वितण्डायां स्वपक्षनिर्वाहं प्रति पर्यनुयोगानवकाशे च सति। वैतण्डिकं प्रति तथा पर्यनुयोगे स्वपर्यनुयोज्यानुयोगेन एव निग्रह इति भावः। एकदेशिनोंऽशविशेषे प्रत्यवतिष्ठमानस्य तत्रांशे मतभेदोऽन्यस्मिन्नैक्यमितो मतैक्ये खण्डनोपयोग-प्रतिपादनायानुरूपं दृष्टान्तमाह—वैयाकरणानामिति। शब्देति। अविप्रतिपन्नस्वरूपेत्यादिः। तेन

शब्दसिद्धिप्रश्नस्य परकीयतत्त्वज्ञाननिरूपणार्थं समानपक्षस्थित्यापि पर्यनुयोगसांव्यवहारिकतायाः सम्भवात्। वस्तुस्थितिं कुर्वाणेन च विचारकेणावश्यमेता युक्तय उद्धरणीयाः अन्यथा वस्तुस्थितेरशक्यत्वादिति वादेऽपि प्रयोगः सम्भवत्येव खण्डनयुक्तीनाम्। जल्पस्त्वेका कथा न सम्भवत्येवासामयिकी, वितण्डाद्वयशरीरत्वात्; अन्यथा जल्पद्वयेनापि किमित्येका कथा न कल्प्यते? अवोचाम च जल्पविचारप्रस्तावे विस्तरेणैतदिति। जल्पकथयापि चाभिधाने स्वपक्षे व्यावृत्त्य सदोषस्यापि प्रमाणतयाऽभिधानं कृत्वा तद्दोषोद्भावनकारी काममपि खण्डनयुक्तिमवताय्य बाधनीय इति जल्पेऽपि नात्यन्तमनवकाशाः खण्डनयुक्तयः। इति खण्डनखण्डखाद्ये खण्डनयुक्तीनां कथात्रयेऽप्युपयोगः।

---

निर्जरादिशब्देषु वैयाकरणानां मतैक्यविरहेऽपि न क्षतिः। निरूपणार्थं = प्रतिपत्त्यर्थम्। समानपक्षस्थित्यापि = मतैक्येऽपि। वादेऽपि खण्डनोपयोगमाह—वस्तुस्थितिमिति। तत्त्वनिर्णयमित्यर्थः। उद्धरणीयाः = निरसनीयतया निरासकतया चोपयोज्याः। अन्यथा = विरोधिकोटिसाधकयुक्तीनां युक्त्यन्तरैरनिरासे। युक्तिभिरेतादृशीभिः किन्नाम यस्य शक्यनिरासमिति तत्त्वबुभुत्सुशङ्काया अनिर्वाच्यताया एव तत्त्वस्य निर्णयेन दूरीकरणीयेति भावः। वितण्डायामेकेनैव दूष्यते जल्पे त्वेकेन स्थापनं परेण च दूषणं ततः तेन स्थापनं प्रथमेन च दूषणमिति परमतदूषणदशायां द्वयोरेव वैतण्डिकत्वमित्याशयेनाह—वितण्डाद्वयेति। अथ जल्पस्योभयपक्षस्थापनावत्त्वेन वितण्डातो भेदः, अन्यथैकेन स्थापितस्य परेण दूषणे एव जल्पः समाप्तिमियात्, न तु तदनन्तरं परोऽपि स्वपक्षं स्थापयेदित्यत आह—असामयिकीति। समयविशेषबन्धानधीनप्रवृत्तिकेत्यर्थः। वितण्डायाः परपक्षहननमात्रामर्त्यात्तदनुकूलशक्तिज्ञापनस्य तयोपपत्तावपि स्वपक्षरक्षणपरपक्षहननोभयानुकूलशक्तिविशेषज्ञापनस्य वितण्डाद्वयात्मकजल्पाधीनत्वात् समयबन्धेन वादिनोस्तत्र प्रवृत्तेर्न परपक्षदूषणमात्रेण तत्समाप्तिरित्यर्थः। अन्यथा = कथाद्वयस्य संहत्य कथान्तरत्वोपगमे। कल्प्यते इति। यथा स्वैकपक्षरक्षणपरैकपक्षहननशक्तिजिज्ञासायामेको जल्पः, तथा स्वपक्षद्वयरक्षणपरपक्षद्वयहननशक्तिजिज्ञासाया अपीष्टसाधनताज्ञानाधीनाया अवश्यवारणत्वेन तत्सत्त्वे जल्पद्वयं मिलित्वा कथान्तरतामापद्येत तच्च पक्षद्वयस्यैकेन नैरन्तर्येण स्थापने, परेण च ततो नैरन्तर्येण तद्दूषणे वा, एकस्य पक्षस्यैकेन स्थापने ततः परेण तद्दूषणे इति क्रमेण वेत्यन्यदेतदिति भावः। वादेऽपि क्रमेण स्थापनदूषणयोर्द्वाभ्यां क्रियमाणत्वाद्वितण्डात्वं तु नापादनीयं, तस्य तत्त्वनिर्णयमात्रफलकत्वेन तेनैव पार्थक्यादित्याशयेनाह—अवोचामेति। ईश्वराभिसन्धाविति शेष इत्याहुः। जल्पस्यातिरेकाभ्युपगमे तस्य स्थापनासहितत्वेन तत्र खण्डनयुक्तिभिः परमतखण्डने स्वपक्षनिर्वाहार्थं पर्यनुयोगस्य सावकाशत्वेन तासामुपयोगो न सम्भवतीति प्रकारान्तरेण तमाह—जल्पकथयेति। व्यावृत्त्य = परपक्षखण्डनानन्तरं, स्वपक्षे प्रमाणतयेत्यन्वयः। स्वपक्षविषयकप्रमितिकरणतयेत्यर्थः। अभिधानं च सदोषत्वेन जानतो वाऽजानतो वेत्यन्यदेतत्। नचैवमधर्मोत्पत्तिभयम्; तदपेक्षया धर्मस्याधिक्योत्पत्तेः, परप्रतारकैर्दुर्जनैः सहैवेदृशकथायाः शिष्टैरुपदिष्टत्वात्, तदुक्तं "दुःशिक्षितकुतर्कांशलेशवाचालिताननाः। शक्याः किमन्यथा जेतुं वितण्डाटोपमण्डिताः॥ गतानुगतिको लोकः कुमार्गं तत्प्रतारितः। मा गादिति च्छलादीनि प्राह कारुणिको मुनि"रिति। इति खण्डनशारदायां खण्डनयुक्तीनां कथात्रयेऽप्युपयोगः।

समाप्तोऽयं खण्डनावतरणभागः।

❀ ॐ ❀

# अथ लक्षणसामान्यखण्डनम्

कीदृश्यः पुनस्ताः ? उच्यन्ते; तथाहि–लक्षणाधीना तावल्लक्ष्यव्यवस्थितिः लक्षणानि चानुपपन्नानि, ज्ञाताधिकरणादिलक्षणनिरूपणद्वारेण चक्रकाद्यापत्तेः । इति लक्षणसामान्यखण्डनम् ।

मूलाधारामनाधारामाधाराधेयचेतनाम् ।
चेत्यचक्रपरां शान्तां तां परां समुपास्महे ॥

ताः = खण्डनयुक्तयः । लक्षणाधीना = लक्षणज्ञानजन्या । लक्ष्यव्यवस्थितिः = लक्ष्यस्य स्वेतरव्यावृत्तत्वेन प्रमितिः । लक्षणनिरूपणद्वारेणैव लक्ष्याणां परस्परव्यावृत्तेः प्रमापणीयत्वेन तन्निरासोपयोगितया द्वारासम्भवमेवाह लक्षणानीति अलक्षिते प्रमाणोपन्यासानवकाशात् लक्षणनिरूपणे प्रमाणेनापि लक्ष्यसाधनासम्भवः, प्रमाणमपि च लक्षणाधीनव्यवस्थितिकमेव, यदाहुः–"मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणा"दिति । तथाच लक्षणखण्डनयुक्तिभिः प्रपञ्चानामभावस्य, व्यवहार्यत्वादिना चासद्विलक्षणत्वस्य समर्पणे सदसद्विलक्षणत्वादिरूपमिथ्यात्वस्य तेषु पर्यवसानमिति भावः । अनुपपन्नानि = अप्रमितानि । अप्रमितत्वसाधकं बाधकमाह ज्ञातेति । आदिपदेन तत्तल्लक्ष्यनिष्ठव्यावृत्तिप्रतियोगी ग्राह्यः । ज्ञातेनाधिकरणादिना लक्षणनिरूपणं चक्रकाद्यापादकम्, तथाहि–ज्ञातलक्षणं प्रति लक्षणप्रतिपादनस्य निष्फलत्वात्, अज्ञातलक्षणं च प्रति लक्षणवाक्यस्याप्रतिपादकत्वात् "नच सर्वे व्यामूढा येन प्रतिपाद्यप्रतिपादकव्यवस्था न स्या"दिति निबन्धोक्तदिशा वस्तुतो लक्षणं जानानोऽपि लक्ष्यविशेषलक्षणत्वेनाजानानो लक्षणवाक्यप्रतिपाद्य इति तार्किकमतम्; तदयुक्तम्, लक्षणवाक्यप्रतिपाद्यस्य लक्षणाधिकरणानभिज्ञत्वे आश्रयासिद्धेर्लक्षणस्यानभिधानीयत्वं मा प्रसाङ्क्षीदिति तदभिज्ञस्यैव लक्षणवाक्यप्रतिपाद्यताया वक्तव्यत्वात् तदभिज्ञानस्य च व्यावृत्तत्वाव्यावृत्तत्वाभ्यामक्षोदक्षमत्वात्, व्यावृत्तत्वेन लक्ष्यस्य पूर्वं ज्ञातत्वे हि लक्षणाभिधानवैयर्थ्यं तावत्स्फुटमेव, तादृशज्ञानस्यापि लक्षणाभिधानपूर्वकत्वे त्वभिधानानवस्थापि प्रसक्तैव, तस्य प्रमाणान्तरमूलकत्वेऽपि वस्त्वनवस्था, लक्षणस्यापि लक्षणान्तराधीनव्यावृत्तिकत्वात्, असम्भवदुक्तिकं हि क्वचिदपि स्वरूपस्यैव लक्षणत्वं, अस्येदं लक्षणमिति भेदाधीनव्यवहारानुपपादकत्वात्, रूपभेदोपगमे तु तादृशरूपविशिष्टयोरत्यन्ताभेदे कथमोक्तदोषः, भेदाभेदे वा कथमनिर्वाच्यवादः, अत्यन्तभेदे वा कथमनवस्था, नचेष्टव्यैव सा, यतोऽनुभूतिपथातिवर्तिनीमनन्तरूपमालां न संख्यावानुपेतुमुत्सहेत, अन्यथाऽनवस्थाया जातिबाधकता बाध्येत, यथा चार्थापत्तिरपि नात्र सावसरा, तथा बहुशः प्रतिविहितमधस्तात्, युक्ता चानवस्थात्वेनैव दूषकता, अन्यथा क्वचिद्वस्त्वनवस्थाया अपि दूषकत्वोपगमेन ज्ञानानवस्थात्वस्य दूषकतावच्छेदकताया वक्तुमशक्यत्वेन रूपान्तरस्य चानुगतस्याभावेन यत्र यत्रानवस्थायां प्रामाणिकानां दूषकत्वव्यवहारस्तस्या एव दूषकत्वस्योक्तौ पुरुषगतप्रामाणिकत्वस्य तत्तद्दर्शनभेदेनाव्यवस्थितत्वादनवस्थाया दूषकत्वमव्यवस्थितमेव स्यात, एवं च सति ज्ञानानवस्थापि, लक्षणमात्रस्योत्तरोत्तरापेक्षया लक्ष्यत्वेन व्यावृत्तत्वेन तत्तज्ज्ञानानामपेक्षणीयत्वात, व्यवधानलग्नज्ञानधारायामपि दूषकता तार्किकसम्मतैव, अतएव तर्कमणिरहस्ये मथुरानाथैः "नहि कदाचिदन्तराविच्छेद एवानवस्थापरिहारः, किन्त्वात्यन्तिकविच्छेदे एवेति सकलसम्प्रदायसिद्धमि"त्युक्तम्, अनवस्थात्वमेव

दूषकतावच्छेदकमिति तदाशयः। एतदाशयमूलैव च "अनवस्थाश्रयो दोषाः सत्तां निघ्नन्ति वस्तुन" इति मूलकृदुक्तिः। एतेनाव्यावृत्ततया लक्ष्यज्ञानापेक्षापक्षोऽपि विक्षिप्तः; लक्ष्यस्याव्यावृत्ततया ज्ञाने लक्षणस्यापि लक्ष्येतरसाधारण्येन ज्ञानाल्लक्षणाभिधानवैफल्यापत्तेः नहि पृथिवीं जलाव्यावृत्तां बुध्यमानो गन्धवतीं सेत्युच्यमानो गन्धं न जलवृत्तितया प्रतिपद्येत। नच-प्रत्यक्षादिना जलादौ गन्धाभावं निश्चिन्वानो 'गन्धवती पृथिवी'ति वाक्याज्जलादिव्यावृत्तां तामधिगच्छति, तदुक्तम्-"लक्षणरूपविशेषदर्शनाभावात्प्राक् धर्मिज्ञानस्य व्यामुग्धत्वेऽपि तत्सहकृतधर्मिज्ञानस्यान्यथात्व"मिति; गन्धवत्त्वावच्छेदेन च न पृथिवीत्वमेव विद्ध्मो येन गन्धाभाववत्यपि पृथिवीत्वप्रतिपत्तिसम्भवेन निश्चितगन्धाभावे जलादौ पृथिवीत्वबुद्धिं नासौ त्यजेत् किन्तु पृथिवीत्वावच्छेदेन गन्धमपीति गन्धे व्यापकताया अपि प्रतीतौ गन्धाभाववति पृथिवीत्वमवगन्तुं नासौ प्रभवतीति-वाच्यम्; गन्धे जलादिगतधर्माभेदग्रहे जलाद्यवृत्तित्वग्रहस्यासम्भवेन तदर्थं गन्धे तत्तदितरभेदग्रहस्यावश्यकत्वेन तस्य च लक्षणान्तरं विनाऽसम्भवेनोत्तरीत्यैवानवस्थानामापत्तेः,प्रवाहस्य प्रथात्मकत्वे तु चक्रकम्, अन्यथा त्वन्योन्याश्रयः,एवं च लक्ष्यव्यावर्तकत्वे तद्व्यवहारे वा लक्षणाभिधानस्योपायताया एवानुपपत्तेः 'उपायस्योपायान्तराद्दूषकत्व"मिति न्यायानवतारेण प्रमाणान्तरेण जलादौ गन्धाभावस्येव तेनैव गन्धवत्त्वेव पृथिवीत्वस्यापि निश्चयसम्भवेन लक्षणाभिधानं विफलमेव, को हि मन्दो गन्धस्यावृत्तित्वग्रहाभावे, गन्धं, पृथिवीं, जलादौ गन्धाभावं च, प्रतिपद्यमानो गन्धवती पृथिवीति प्रत्येतुं न पारयेत्, तादृशप्रतीतिसामग्र्या वृत्तत्वात्। एतेन-लक्षणमितरव्यावृत्तमवगच्छन्नपि तल्लक्ष्यव्यावर्तकतया यो न जानाति तं प्रति तस्य विपक्षव्यावर्तकत्वं बोध्यते इति-निरस्तम्।

एवं पृथिव्यामितरभेदसाधने तत्प्रतियोगिजलादेरधिगमो यद्यव्यावृत्ततया तदा पृथिव्यपि तस्मात् व्यावृत्ततया शक्याधिगमेति पुरोदीरितदोषोन्मेषः, यदि व्यावृत्ततया, तदा पृथिव्या इतरव्यावृत्तत्वाधिगमं विना जलादेरपि तादृशाधिगमोऽसम्भवीत्यन्योन्याश्रयः व्यवस्थापितं च पूर्वं भेदग्रहायत्तस्यानुयोगिप्रतियोगिभावग्रहस्य भेदग्रहकारणत्वम्; तृतीयादेर्भेदग्रहस्यान्तर्भावने तु चक्रकादिकमिति।

ज्ञानाधिकरणादीतिपाठे तु प्रयोजनमादिना ग्राह्यम्, लक्षणानां ज्ञानाधिकरणप्रयोजनत्रयस्य लक्षणं = स्वरूपं तन्निरूपणद्वारेण यथासम्भवं चक्रकाद्यापत्ते; तत्राधिकरणस्य स्वरूपं व्यावृत्तत्वेन गृहीतं वाऽव्यावृत्तत्वेन गृहीतं वेतिविकल्प्य निरस्तमेव; प्रयोजनस्य स्वरूपं व्यवहारो वेतरव्यावृत्तिज्ञानं वा, उभयथा लक्ष्यलक्षणयोरितरव्यावृत्तत्वेन प्रतीतिं विना तदसम्भवात्पूर्वोक्तखण्डनसञ्चारः; वक्ष्यति च व्यवहारस्य प्रयोजनत्वासम्भवं प्रत्यक्षखण्डने। लक्षणज्ञानस्य स्वरूपं प्रमात्वं वाऽप्रमात्वं वा, द्वितीये तत्फलस्यापि याथार्थ्यासम्भवः, आद्ये प्रमात्वस्य दुरवधारणत्वमित्याशयेन प्रथमं प्रमात्वमेव निरसिष्यति. लक्ष्येतरावृत्तित्वेन लक्षणज्ञानस्य प्रमात्वे एव च लक्ष्ये इतरव्यावृत्तिग्रहस्य प्रमात्वसमर्थनं स्यात्, तथालक्षणज्ञानस्यैव तु पूर्वोक्तदिशा चक्रकाद्यापत्त्या प्रमात्वासम्भव इति भावः।

आदिपदेन च लक्षणमात्रेऽतिव्याप्त्यादिप्रकाराः सूचिताः, तथाहि-गन्धस्य तत्समवायस्य वा लक्षणत्वे तस्य कालिकेनानित्यमात्रवृत्तित्वादतिव्याप्तिः, समवायेन गन्धवत्त्वस्य समवायसम्बन्धावच्छिन्नगन्धत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतारूपस्य लक्षणत्वेऽपि तथैव, यथाहि घटसंयोगस्य भूतले वृत्तावेव संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वं तत्रोपेयते, तथा गन्धसमवायस्य जलादौ कथमपि वृत्तौ समवायसम्बन्धावच्छिन्नगन्धत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वमपि तत्र किमिति न स्यात् यदि च गन्धसमवायस्य स्वरूपसम्बन्धेनाधिकरणे एव तादृशाधिकरणतोपगमस्तदापि स्वरूपसम्बन्धस्यानतिरेकात् कालिकेन तस्य जलादौ वृत्तौ कथं

# अथ प्रमात्वखण्डनप्रकरणम्

## तत्त्वपदार्थखण्डनम् ।

तेषु तावत्तत्त्वानुभूतिः प्रमेत्ययुक्तम्, तत्त्वशब्दार्थस्य निर्वक्तुमशक्यत्वात्; तस्य

---

नोदितदिशा दोषः, तादृशाधिकरणत्वस्यापि कालिकेन जलादौ वृत्तेश्च, तादृशाधिकरणतात्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वस्य प्रवेशे च तस्यापि कालिकेनालक्ष्यवृत्तित्वात् दोष एवेति तस्यापि स्वरूपसम्बन्धावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वं प्रवेशनीयमित्यनवस्थाचामुण्डोदरप्रवेशमपास्य न निस्तारः। एवं लक्ष्यपरस्वपदघटितलक्षणवाक्यस्थलेऽपि स्वपदेनालक्ष्यमादाय प्रसञ्जनीयम्। कालिकस्वरूपसम्बन्धादीनां वैलक्षण्यस्य प्रतीतिवैलक्षण्यकृतस्यैव वक्तव्यत्वेनान्योन्याश्रयाच्च सम्बन्धविशेषनिवेशानामकिञ्चित्करत्वं द्रष्टव्यम्। किञ्च गन्धवत्त्वं न गन्धत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वं, सामान्यघटितविशेषधर्मावच्छिन्ननिरूपकतानिरूपिताधिकरणतयैव सामान्यधर्मावच्छिन्नवत्ताप्रतीत्युपपत्तेः शुद्धसामान्यधर्मावच्छिन्ननिरूपकतानिरूपिताधिकरणताया मानाभावाल्लिङ्गितत्वादिति व्यक्तं व्युत्पत्तिवादसिद्धान्तलक्षणादौ। अन्यथा तादृशाधिकरणतायास्तत्रानन्ताधिकरणतात्वादिधर्माणां सम्बन्धस्य च कल्पनापत्त्या गौरवात्। अतएव विशेषाभावकूटेनैवालङ्कर्मीणत्वात्सामान्याभावो नातिरिच्यते इति प्रामाणिकाः। नापि गन्धत्वघटितधर्मावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वं तत्, तादृशधर्माणामसङ्ख्येयत्वात् सकलतदवच्छिन्नसमवायसम्बन्धावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वाप्रसिद्धेः। नापि तत्तद्गन्धत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वम्, चालनीन्यायेनाव्याप्तेः। रीतिश्चैषा खाण्डनिकैः प्रत्येकमिलितविकल्पानुपपत्तिरिति निगद्यते। एवं समवायेन गन्धवत्त्वस्य वैज्ञानिकस्यातिप्रसक्तत्वात् वास्तवस्यैव निवेशनीयत्वात् वास्तवत्वनिर्णयस्य च तत्र तद्वत्त्वज्ञानीयप्रमात्वनिर्णयाधीनत्वात् प्रमात्वस्य च तत्र तद्वत्त्वनिर्णयाधीननिर्णयकत्वाल्लक्षणमात्रेऽन्योन्याश्रयो द्रष्टव्यः। एवं सर्वत्रैव लक्षणेन केवलव्यतिरेकिणेतरभेदसाधने व्यतिरेकव्याप्तावुपाधिसन्देहः, यथा पृथिवी स्वेतरभिन्ना गन्धवत्त्वादित्यत्र 'यत्रेतरभेदाभावस्तत्र गन्धाभाव' इति व्यतिरेकव्याप्तीयसाध्यव्यापकीभूतस्य पाकजरूपाभावस्य स्वाभाववत्पक्षवृत्तित्वेन सन्दिग्धेतरभेदाभावव्यापकत्वेनानिश्चितस्य सन्दिग्धोपाधित्वसम्भवः, यथा च तर्कोऽपि नात्रावतरीतुं क्षमस्तथाऽनुमानोपमानवेलायां वक्ष्यते। एवं सर्वत्रैव लक्षणे लक्ष्यवृत्तित्वाभावः शक्यसाधनः, यथा गन्धः पृथिव्यवृत्तिर्गुणत्वात् शैत्यवत् रूपादेः पक्षसमत्वान्न व्यभिचारः, चन्द्रभेदप्रत्यक्षवत्पृथिव्यां गन्धप्रत्यक्षस्याप्रामाण्यशङ्काकलङ्कितत्वेन प्रमात्वखण्डनस्यावतारणीयत्वेन च न बाधः, अतएव पृथिवी गन्धाभाववती द्रव्यत्वात् जलादिवदितिरीतिरपि क्षोदक्षमा, नच पृथिव्यन्यत्वगन्धसमवायिकारणत्वाभावयोरुपाधित्वम् उक्तहेतुभ्यामेव तयोरपि पक्षे साधनीयत्वेन साधनाव्यापकत्वस्याशक्यनिश्चयत्वात्, साध्योपाध्योर्व्याप्त्यावुक्तरीत्यैवोपाधिसन्देहाच्चेति दिक्। इति लक्षणसामान्यखण्डनम्।

---

स्मृतिहेतोः प्रमाणान्तरतापत्तिभिया प्रमात्वस्य स्मृतिव्यावृत्तत्वमेवोपगमादित्याशयेनानुभूतिरिति। अनुभूतित्वं च विशेषणज्ञानजन्यतावच्छेदकतया सिद्धमनुमित्यादिसाधारणं जातिरूपं स्मृतिभिन्नज्ञानत्वं वोभयथापि स्मृतिव्यावृत्तमेवेति भावः। प्रमा = प्रमापदार्थः। तत्त्वं यदि प्रमितापरपर्यायं विषयतया निविष्टं तदाऽऽत्माश्रयः, यदि च याथार्थ्यापरपर्यायं विषयिणि विशेषणं तदा याथार्थ्यखण्डने प्रतिविधास्यते इत्याशयेन प्रकारान्तरमाक्षिपति तस्य भाव इति। तद्भेदव्यापकभेदप्रतियोगितावच्छेदकत्वे सति तद्वि-

भावो हि तत्त्वमुच्यते, प्रकृतं च तच्छब्दार्थः, नचात्र प्रकृतं किञ्चिदस्ति यत्तच्छब्देन परामृश्येत। अथानुभूत्या स्वसम्बन्धिविषयस्याक्षेपाद्बुद्धिस्थः कार्यते, स तच्छब्देन परामृश्यते, वक्तृश्रोतृबुद्धिस्थतायामेव प्रकरणपदार्थविश्रामात्, तेन यस्यार्थस्य यो भावस्तत्तस्य तत्त्वमुच्यते इति; न, अरजतादेरपि रजताद्यात्मनाऽनुभूतिविषयतासम्भवादसत्यार्थानुभूत्यव्यवच्छेदात्। भवितुरतत्त्वशब्दार्थत्वप्रसङ्गेन धर्म्यंशे विशिष्टे च प्रमाया अप्रमात्वापातात्। अथोच्यते-अवयवार्थचिन्तया दूषणाभिधानमिदं त्यज्यतां, यतोऽयं तत्त्व-

इभेदप्रतियोगितानवच्छेदकं धर्म इत्यर्थः। प्रकृतं = बुद्धिस्थं। प्रकृतमिति। नियामकविशेषनिरपेक्षितोपस्थितिकं प्रकृतमित्यर्थः। परामृश्येत = उपस्थाप्येत। ज्ञानस्य स्वविषयनिरूप्यत्वमेव स्वविषयोपस्थितिनियामकमित्याह अथेति। आक्षेपात् = विषयनिरूप्यत्वान्यथानुपपत्त्या। बुद्धिस्थः = बुद्धिविषयः। कार्यते इति। क्रियते तु जनेन। वक्तृश्रोतृबुद्धीति। यद्यपि वक्तुस्तात्पर्यस्यैव शाब्दधीहेतुत्वात् सामान्यतो वक्तृबुद्धिस्थत्वमेव प्रकृतत्वं तदादिशक्यतावच्छेदकं सहकारिविशेषाच्च पदार्थविशेषलाभ इति न तदाद्यधीनोपस्थित्या विशेषधर्मप्रकारकसंशयनिवृत्त्यनुपपत्तिः। तथाप्यभिलापजन्यप्रतीतितुल्यत्वादभिलप्यमानप्रतीतेः श्रोतृपदमुपात्तम्। प्रकरणपदार्थः प्रकृतत्वं तस्य विश्रामात् = अभेदरूपपर्यवसानात्। शक्यतावच्छेदकस्य शाब्दविषयत्वनियमेन वक्तृबुद्धिस्थत्वस्य शक्यतावच्छेदकत्वे शाब्दविषयतापत्तिपरिहारार्थं वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मस्य तदादिशक्यतावच्छेदकत्वमिति निष्कृष्टमतादरेऽपि शक्यस्य बुद्धिस्थत्वमक्षतमेवेति भावः। रजताद्यात्मना = रजतत्वादिना। अव्यवच्छेदादिति। भ्रमे भासमानस्यापि रजतत्वस्य निरुक्तरजतभावत्वाक्षतेरिति भावः। ननु तदीयभावनिष्ठविषयतानिरूपितनिष्ठविषयताकानुभूतेस्तद्भावविषयकत्वावच्छेदेन प्रमात्वं वाच्यं, भ्रमीया रजतत्वनिष्ठप्रकारता तु न रजतत्वाश्रयनिष्ठविशेष्यतानिरूपितेत्यव्यवच्छेदाद भवितुरिति। भावविशिष्टस्य विशेष्यमात्रस्य चेत्यर्थः। अतत्त्वशब्दार्थत्वप्रसङ्गेन = स्वनिष्ठभावत्वासम्भवेन। धर्म्यंशे = विशेष्यविषयकत्वावच्छेदेन। विशिष्टे = विशिष्टविषयकत्वावच्छेदेन। विशिष्टज्ञातिरिक्तमिति भावः। प्रमायाः = प्रमात्वेन व्यवह्रियमाणज्ञानस्य। अप्रमात्वापातात् = अप्रमात्वव्यवहारविषयतापातात्। तत्प्रकारकज्ञानस्यैव तत्प्रमात्वव्यवहारो ननु तद्विशेष्यकज्ञानस्येति तु न युक्तं, "सर्वं ज्ञानं धर्मिण्यभ्रान्त"मित्यादिव्यवहारदर्शनात्। ननु निरुक्तानुभूतेस्तद्भावांशे इव तदंशेऽपि प्रमात्वं वक्तव्यं, एवं भावनिष्ठवृत्तितावच्छेदकसम्बन्धविशेषं निवेश्य तदंशेऽपि प्रमात्वमिति न तदंशेऽव्याप्तिरिति चेत्तथापि निर्विकल्पकाव्याप्तेः, घटवद्भूतलमिति प्रतीतेर्भूतलघटयोर्वैशिष्ट्यांशे घटनिष्ठप्रकारतानिरूपितभूतलनिष्ठविषयताकत्वावच्छेदेन चाप्रमात्वापत्तेश्च, घटस्य निरुक्तभावत्वानाश्रयत्वात्। अथ भावत्वमविवक्षितं तदीयतत्सम्बन्धानुयोगिनि तदीयत्वेन तत्सम्बन्धावगाह्यनुभवत्वं तत्तत्सम्बन्धांशे प्रमात्वमिति चेन्न; गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति समवायसंसर्गकज्ञानस्य प्रमात्वापत्तेः। नच तद्धर्मावच्छिन्नप्रतियोगिताकतत्सम्बन्धानुयोगिनि तद्धर्मावच्छिन्नप्रतियोगिताकत्वेन तत्सम्बन्धावगाह्यनुभवत्वं प्रमात्वमिति वाच्यम्, स्वरूपतो घटत्वविषयकस्य 'अयं घट' इति ज्ञानस्य घटत्वसम्बन्धांशे प्रमात्वाभावापत्तेः; अनवच्छिन्नप्रतियोगिताकसम्बन्धांशे प्रमात्वान्तरोक्त्यननुगमः, एवमननुगततत्तद्घटितत्वेनापि सः, तस्या अनुगतत्वे पूर्वतत्पदेन गृह्यमाणस्यैवोत्तरतत्पदेन ग्रहणे नियामकाभावेनातिप्रसङ्गात्। नच लक्ष्यस्याप्यननुगतत्वेनाननुगमो न दोष इति वाच्यम्, घटप्रमा पटप्रमेत्यादिप्रतीतिव्यवहाराणां प्रमात्वांशेऽनुगतत्वस्यैवानुभवेन लक्ष्याननुगमस्यासम्भवदुक्तिकत्वात्, अन्यथा प्रमात्वस्य जातित्वाशङ्काया उत्थानस्यैवासम्भवेन, सम्भवे वा तदननुगमाभिधानेनैव तन्निरास-

शब्दः स्वरूपमात्रवचन इति; एतदप्ययुक्तम्, स्वरूपत्वस्य जातेरुपाधेर्वा स्वात्मनि वृत्त्यवृत्तिभ्यामनुपपत्तेः स्वरूपशब्दार्थस्यैकस्यासम्भवेन प्रतिविषयव्यावृत्त्या लक्षणस्याव्यापकत्वापातात्; कथं च 'तत्त्वे'ति विपर्यासादेर्निरासः. तथाहि-शुक्तौ यो रजतत्वप्रत्ययः सोऽपि स्वरूपबुद्धिर्भवत्येव, नहि धर्मी वा रजतत्वं वा न स्वरूपं, नापि तयोः प्रतिभासमानः सम्बन्धो न स्वरूपमिति युक्तं, समवायो हि तयोः सम्बन्धः प्रतिभाति, स च स्वरूपमेव ।

सत्यं समवाय स्वरूपं,स एव तु शुक्तिव्यक्तौ रजतत्वस्य नास्तीति चेन्मैवम्; तत्र नास्तित्वेऽपि स्वरूपताया अव्यावृत्तेः. नहि गेहे देवदत्तो नास्तीति स्वरूपं न स्यात् । न स्वरूपमात्रं तत्त्वमुच्यते. किन्तु यद्देशकालसम्बन्धि यत्स्वरूपं प्रतीतं तस्य तद्देशकाल-

स्यौचित्येन प्रकारान्तरेण तन्निरासस्य तार्किकाणामुन्मत्तप्रलापत्वापत्तेः । अन्यत्रापि तत्तल्लक्षणेषु शिरोमण्यादीनामव्याप्त्यभिधानस्यासाङ्गत्यापत्तेश्च, सर्वत्रानुगमस्यैव सरलसरणित्वात् । एवमपि वा सर्वेषां प्रमात्वानां प्रातिस्विकरूपेण लक्षणाशक्तेरसिद्धिरेव । प्रमापदसमयग्रहानुपपत्तिश्च । तस्माच्चालनीन्यायेनाव्याप्तिर्दुर्वारैव । एतेन-तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकताशाल्यनुभवस्तत्प्रमा, तद्वत्ता प्रकारिता च प्रमात्वनियामकसम्बन्धेन तद्वत्ता च तन्निरूपितसम्बन्धिता, नतु तन्निरूपिताधारतामात्रं तेन वृत्त्यनियामकसम्बन्धेन प्रमायां नाव्याप्तिरिति-निरस्तम् गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इत्यत्र प्रमात्ववारणाय तत्सम्बन्धेन तद्धर्मावच्छिन्नतन्निरूपितसम्बन्धितावति तत्सम्बन्धेन तद्धर्मविशिष्टतत्प्रकारकानुभवत्वस्य विवक्षायामयं घट इत्यादौ घटत्वादिप्रमायामव्याप्त्यापत्तेः । तद्धर्मावच्छिन्नत्वानवच्छिन्नत्वोभयाभावस्य प्रकारतायां निवेशेऽप्यनुपदं वक्ष्यमाणदिशा पाकरक्ते श्यामोऽयमिति धियः प्रमात्वापत्तेः । तत्सम्बन्धित्वादेर्वैकालिकस्य निवेशेऽतिप्रसङ्गेन वास्तवस्यैव निवेशनीयत्वात् तस्य च तत्प्रतीतेः प्रमात्वनिर्णयं विना निर्णेतुमशक्यत्वादन्योन्याश्रयत्वेति । स्वरूपत्वस्य जातित्वे समवायेनैव तस्य वृत्तिमत्ताया वाच्यत्वात् सामान्यादेर्निःस्वरूपत्वापातादाहोपाधेर्वेति अखण्डोपाधेरित्यर्थः । स्ववृत्तित्वे आत्माश्रयः, नच केवलान्वयित्वोपगमे तदन्यथानुपपत्त्यैवात्माश्रयो न दोष इति वाच्यम्, आत्माश्रयापत्त्यैव न केवलान्वयित्वोपगमसम्भवः, स्वभिन्नत्वे स्ववृत्तित्वव्याप्यत्वस्यान्यत्र क्लृप्तत्वात, प्रमेयत्वादावपि प्रमेयत्वान्तरस्यैव वृत्तेः । न च प्रतियोगिसमानाधिकरणाभावप्रतियोगितानवच्छेदकधर्मत्वस्यैव केवलान्वयित्वरूपत्वात् प्रमेयत्वत्वं तादृशधर्ममादायैव प्रमेयत्वादेः केवलान्वयित्वमिति-वाच्यम्, सकलप्रमेयवृत्तित्वादिघटितस्य प्रमेयत्वत्वस्याप्यननुगतत्वादखण्डोपाधित्वेऽपि स्वनिष्ठप्रमेयत्वेऽपि तद्वृत्तेरावश्यकत्वेनान्योन्याश्रयात्तादृशधर्मतायास्तत्रासम्भवात, प्रमात्वस्यानुगन्तुमशक्यत्वात । स्वरूपत्वस्य स्वावृत्तित्वे तु स्वरूपत्वविषयकप्रमायामव्याप्तिरिति भावः । अव्यापकत्वेति । लक्ष्यमात्रसाधारण्याभावेत्यर्थः। तत्त्वेतीति । इतिपदं लुप्ततृतीयान्तम् । आदिना संशयो ग्राह्यः ।

रजतत्वस्य नास्ति = रजतत्वप्रतियोगिकत्वविशिष्टो नास्ति, तेन समवायस्यैकत्वपक्षेऽपि नासङ्गतिः । नन्वसद्विषयकान्यानुभवत्वमेव तत्त्वानुभवत्वम्, तत्त्वस्य सत्त्वात्मकत्वात, भ्रमे तु संसर्गस्यालीकस्यैव भानाङ्गीकारात्तद्व्यावृत्तिः, सर्वांशे प्रमाया एव लक्ष्यत्वाच्चान्यान्तस्यैव वैयर्थ्यमिति चेन्न; सदसतोरुपरागासम्भवेनालीकसंसर्गस्य भ्रमे भानासम्भवात् । सम्बन्धि = सम्बन्धितया । तस्येति । तत्सम्बन्धिदेशकालयोस्तद्वत्ताद्यनुभवस्य तदंशे प्रमात्वमित्यर्थः । प्रतीतिमात्रस्य देशकालविषयत्वमस्त्येव, अयं घट इत्यादौ घटादेरेव स्वनादाल्यापन्नदेशत्वात्, "न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते"

सम्बन्धि स्वरूपं तत्त्वमुच्यते इति; मैवम्; देशकालसम्बन्धांशे प्रमाया अप्रमात्वापातात्। तयोः स्वरूपमेव तत्त्वशब्दार्थ इति चेन्न, तत्त्वशब्दस्यानेकार्थत्वेन लक्षणाव्यापकतापत्तेः। अथैवं ब्रूषे—यद्यथाभूतं प्रतीयते तत्तथा परमार्थतो व्यवस्थितं तत्त्वमुच्यते। नैतदपि युक्तम्; यद्यथाभूतं प्रतीयते तद्यदि प्रतीतिसमयमपहाय कालान्तरे तथाभूतं स्यात् तदाप्येवं तत्त्वं स्यादेवेति भाविपाकजरागः कुम्भः श्यामतादशायामपि रक्तपित्तिना रक्ततयोपलभ्यमानस्तत्त्वं स्यादिति तद्बुद्धेः प्रमात्वापातः। 'यदा तदे'ति विशेषणप्रक्षेपणे च कालविशिष्टताप्रतीतेरप्रमात्वापातः, नहि कालवैशिष्ट्येऽपि कालान्तरसम्बन्धः सम्भवी। अन्योपा-

---

इत्यभियुक्तोक्तेश्च, अन्यथा तत्कालीनज्ञानेन तत्कालीनप्रवृत्तिर्न स्यादिति भावः। देशेति। यद्यपि वृत्त्यनियामकसम्बन्धेन प्रमायामव्याप्तिव्युदासाय सम्बन्धित्वमाधाराऽनाधारसाधारणं विवक्षणीयमिति परमाण्वादेरनधिकरणकस्यापि प्रमायां नाव्याप्तिः, तथापि सम्बन्धमात्रस्य भेदनान्तरीयकत्वादभेदे सम्बन्धिताया अभावादुक्तानुभवस्य देशकालानुयोगिकसम्बन्धप्रतियोग्यंशे प्रमात्वोक्तौ देशरूपानुयोग्यंशे प्रमात्वासम्भवः, एवं च देशात्मकाधारानवगाहिप्रमायामव्याप्तिरपि, रूपभेदेनैकसम्बन्धप्रतियोगित्वानुयोगित्वयोरेकत्रोपगमेऽपि कालरूपानुयोग्यंशे प्रमात्वासम्भव एव। अथ निरुक्तानुभवत्वं स्वविषयसम्बन्धप्रतियोग्यंशे इव तदनुयोग्यंशेऽपि प्रमात्वमिति चेत्तथापि गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इत्यत्रातिव्याप्तिरित्यादिपूर्वोक्तमनुसन्धेयम्। लक्षणेति। चालनीन्यायेनेत्यादिः। तत्तद्घटितत्वेनाप्यव्यापकत्वं द्रष्टव्यम्। तत्सम्बन्धितावति तदवगाह्यनुभवत्वं तत्प्रमात्वं, नच संयोगसम्बन्धावच्छिन्नघटसम्बन्धितावति समवायावच्छिन्नघटविषयताकानुभवेऽतिव्याप्तिः, उभयत्रैव सम्बन्धविशेषस्यैव निवेशनीयत्वात्, घटे घटत्वमित्यत्राव्याप्तिवारणाय तद्वतीति नोक्तम्, सम्बन्धिता तु स्वरूपसम्बन्धविशेष इत्याशयेन देशकालावपहायाशङ्कते अथैवमिति। परमार्थतो वस्तुतः। व्यवस्थितं = सम्बद्धं। एवं = निरुक्तं। प्रमात्वापात इति। नचेष्टापत्तिः, कदाचित्तत्र रक्ततासत्त्वादिति वाच्यम्; प्रतीतिमात्रस्य स्वाधिकरणसमयावच्छिन्नवस्तुविषयकत्वात् श्यामतादशायां 'अयं घटो रक्त' इति बुद्धेः प्रमात्वस्य वक्तुमशक्यत्वात् अतएव प्रत्यक्षमणौ सविकल्पकवादे—"प्रतीतेः समयविशेषविषयत्वनियमात्, अतएव पाकरक्ते 'श्यामोऽय' मितिधियोऽयथार्थत्वव्यवहारो लौकिकानां श्यामत्वस्य वर्तमानत्वेनावगमात्। एतेन—श्यामत्वधीस्तत्र यथार्थैव, घटे कदाचित्तत्सत्त्वात्, 'इदानीमयं श्याम' इति प्रतीतेराकार एव नेत्यपास्तम्; अतएवातीतानागतवह्न्यगोचरत्वे विद्यमानधूमेन 'पर्वते वह्नि'रित्यनुमितेर्वर्तमानवह्निविषयत्वादिदानीं वह्निनिश्चयेन वह्न्यर्थिप्रवृत्तिः, अन्यथेदानीं तत्सन्देहे प्रवृत्तिर्न स्यात्, 'यदा धूमस्तदा वह्नि'रिति व्याप्तावपि तदज्ञानदशायां प्रवृत्तेरन्यथानुपपत्ते"रित्युक्तम्। तत्सम्बन्धितावद्विशेष्यकत्वावच्छिन्नतत्सम्बन्धितावच्छेदककालावच्छिन्नतदवगाहिताकानुभवत्वं तत्प्रमात्वं तथाच नोक्तदोष इत्याशङ्क्याह यदेत्यादि। यदा यद्यथाभूतं प्रतीयते तदा तत्तथा परमार्थतो व्यवस्थितं तत्त्वमित्युक्तावित्यर्थः। कालवैशिष्ट्येऽपीत्यपिना कालउपादेयः। कालान्तरेति। कालेत्यर्थः। उक्तलक्षणे तत्पदेन कालस्य धर्तुमशक्यत्वात्तदंशे प्रमात्वव्यवहारो न स्यात्, नच कालः स्वयमेव स्वसम्बन्धितावच्छेदकः, तथात्वे स्वाधारताया अपि स्वस्मिन्नावश्यकत्वेनात्माश्रयात्। तदुक्तं प्रत्यक्षमणावभाववादे—"नच तत्समयविशेषे तत्समयविशेषयोगः, अभेदे सम्बन्धानुपपत्तावाधाराधेयभावाभावा"दिति। एवं च घटाभावे घटो नास्तीत्यादावप्यनिर्वाच्यतैव गतिरिति भावः। अन्योपाध्यवच्छिन्न इति। क्रियाप्रचयात्मकेन तत्तत्कालमात्रवृत्तिपदार्थविशेषेण चोपाधिनाऽवच्छिन्नो महाकाल एव अहरादिव्यवहारभाक्, तथाभूत एव च स 'इदानीं घटोऽस्ती'त्यादिप्रतीति-

ऽयवच्छिन्नः सोऽन्योपाध्यवच्छिन्नेन सम्भन्त्स्यतीति चेत्; तर्हि दण्ड्यपि देवदत्तः कुण्डलिनं स्वमारोदयत्येव। उपाधिभेदेऽप्युपधेयस्यैकत्वानिवृत्तेर्नैवमिति चेत्तुल्यम्। एतेन कारणं तत्त्वमिति निरस्तम्; सर्वस्य तथात्वे प्रमित्यभावेनात्माश्रयेण च प्रतिक्षणविशिष्ट-

---

विषयः, उपाधेरेव प्रहरादिरूपतोक्तिस्त्वौपचारिकीति भावः। दण्ड्यपि देवदत्तः = दण्डी देवदत्तोऽपि। तथा च दिनस्य प्रहर इत्यादि प्रतीतिर्नोपपद्यते अपि तु तस्या अनुपपन्नत्वमेव प्रदर्श्यते इति भावः। उक्तप्रतीतिरुपाध्योरेव सम्बन्धमवगाहते नतु काले कालस्येत्यपि केचित्। लक्षणे उपाधिरूपकालं निवेश्यैव कालांशेऽप्रमात्वं परिहरणीयमिति तु न वाच्यम्; उपाधिमहाकालयोरनुगतकालत्वस्याभावेन कालिकसम्बन्धावच्छिन्नाधारत्वस्य च कालत्वनिरूप्यत्वेन महाकालवैशिष्ट्यावगाहिधियोऽप्रमात्वापातादिति। एतेन घटाभावे घटो नास्तीत्यादावपि रूपभेदेनाधाराधेयभावो निरस्तः। तुल्यमिति। क्रियाप्रचयाद्यात्मकोपाधिभेदेऽपि कालस्योपहितस्यैकत्वमेवेति भावः। उक्तलक्षणे नित्यविषयकप्रमाया नित्यांशेऽव्याप्तिरपि द्रष्टव्या, तत्सम्बन्धितावच्छेदककालाप्रसिद्धेः। अथ तत्सम्बन्धितानवच्छेदककालानवच्छिन्नत्वमेव निवेश्यम्, तथाच नेयमव्याप्तिः, नापि कालांशे, नापि श्यामतादशायां रक्तताप्रतीतावतिव्याप्तिः, भावितत्कालवृत्तौ घटे तत्कालावृत्तितादशायां तत्कालवृत्तिर्घटोऽयमिति प्रतीतेस्तु यद्यप्रमात्वं तदा तत्कालसम्बन्धितानवच्छेदकातत्कालावच्छिन्नतत्कालविषयताकत्वमेवेति नातिव्याप्तिरिति चेन्न, नित्यसम्बन्धितावच्छेदकत्वस्य कालेऽप्रसिद्धौ तद्विरहस्यापि प्रसिद्ध्यसम्भवात्, नच देशे एव तत्प्रसिद्धिः, देशकालसाधारणावच्छेदकताया असम्भवात्, व्याप्यवृत्तिनित्यसम्बन्धितावच्छेदकत्वस्य देशेऽप्यप्रसिद्धेश्च, गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इत्यादावतिव्याप्त्यादिपूर्वोक्तदोषाच्चेति भावः। एतेनेति। वक्ष्यमाणेनेत्यर्थः। कारणत्वस्य नियतपूर्वकालवृत्तित्वघटितत्वेन काले तदसम्भवेन कालप्रमाया अनुपपत्तिप्रसङ्गेनेति तु नार्थः कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकावच्छिन्नत्वघटितस्य स्वरूपसम्बन्धविशेषादिरूपस्य वा कारणत्वस्य काले निराबाधत्वात्। कारणं तत्त्वमिति। यद्यपीदमशक्यशङ्कम्, अन्यथाख्यातिमते प्रायो भ्रममात्रसङ्ग्राहकत्वात्, धर्म्यंशे प्रमात्वमादायेष्टापत्तौ त्वनुभवत्वमात्रस्य लक्षणत्वसम्भवात्। अख्यातिमतेऽपि प्रमात्वस्यानुभवत्वनियतत्वात्। असत्ख्यातिवादिमते चालीकविषयकविकल्पव्यावर्तकत्वसम्भवेऽपि भ्रमोपसङ्ग्राहकत्वात् शून्यवादौ सांवृतार्थक्रियाकारित्वस्य तन्मतसिद्धत्वात्। बौद्धमतप्रवेशापत्त्यभिधानस्यासाङ्गत्यापत्तेश्च। अतएव न योगाचारादिमतेऽपीदं लक्षणम्, अर्थक्रियाकारित्वस्य तन्मते पारमार्थिकत्वनियतत्वेन तद्विशिष्टविषयकानुभवस्य प्रमात्वेऽपि वक्ष्यमाणापत्त्यसङ्गतेः। इदन्तातिरिक्तांशेऽर्थक्रियाकारिविषयकत्वेनातिव्याप्तिरपि। रजते इदन्ताया एव तन्मतेऽलीकत्वात्। तथापि भ्रमविशेष्यातिरिक्तस्यालीकता, अत एव तस्य नार्थक्रियाकारिता, अपि तु तज्ज्ञानस्यैव, घटादिप्रपञ्चश्च चिरस्थायीत्युपेयुषामर्वाचीनानां मते लक्षणमिदं शक्यशङ्कमेव, तथा सति बौद्धमतापादनस्यापि सङ्गतेः। न चाधिष्ठानस्यार्थक्रियाकारिणो भ्रान्तिगोचरत्वेनातिव्याप्तिः कारणसामान्यातिरिक्तविषयकानुभवत्वस्य लक्षणत्वात्। **वस्तुतस्तु** लक्षणस्यैवंरूपताविवक्षायां प्राचीनान्यथाख्यातिमतेऽपि लक्षणमिदं सम्भाव्यते एव, तन्मते संसर्गस्य भ्रमविषयस्यालीकतोपगमेन भ्रममात्रस्य कारणातिरिक्तविषयकत्वात्, नव्यान्यथाख्यातिमते पुनर्भ्रमत्वस्य व्यधिकरणप्रकारकत्वेनैवोपगमात् संसर्गस्य संसर्ग्यतिरेकोपगम इत्यन्यदेतत्। तथात्वे = कारणत्वे। प्रमित्यभावेनेति। तार्किकैस्तावत्पारिमण्डल्यादेरकारणत्वमुपेयते एव, अन्यस्याप्यनित्यस्यान्ततः स्वध्वंसकारणत्वसम्भवेऽपि नित्यमात्रस्य कारणत्वमनिश्चितमेव, योगिज्ञानस्य विषयाजन्यत्वात्। अव्याप्तिसन्देहेनापि लक्षणासिद्धेरिति भावः। योगिज्ञानस्य

विश्वावश्यकारणत्वोपगमे दुरपवादार्थक्रियाकारित्वस्वरूपसत्त्वलक्षणाङ्गीकारिजिनचरण-शरणप्रवेशविडम्बनापादिदोषग्रासेन चेति । इति तत्त्वपदार्थखण्डनम् ।

## अथानुभवत्वस्य जातित्वखण्डनम् ।

किञ्चेदमनुभूतित्वं नाम ? ज्ञानत्वावान्तरजातिभेदो वा, स्मृतिव्यतिरिक्तज्ञानत्वं वा स्मृतिलक्षणरहितज्ञानत्वं वा, तदविदूरप्राक्कालोत्पत्तिनियतासाधारणकारणकबुद्धित्वं

वर्तमानविषयजन्यत्वमुपेत्याप्याह—आत्माश्रयेण चेति । कारणत्वे कारणत्वोपगमे आत्माश्रयः, तदनुपगमे तु घटकारणं दण्ड इति ज्ञानं प्रमा न स्यात् कारणातिरिक्तकारणताविषयकत्वात् । न च कारणत्वं कारणत्वात्स्वमेवेति नात्माश्रयो नाप्यप्रमात्वमिति वाच्यम्, अनुगतप्रतीतिव्यवहारबलात्तस्यैकस्यैवोपगन्तव्यत्वादन्यथा जातिमात्रोच्छेदापत्तेः, सङ्केतग्रहानुपपत्तेश्च । न च कारणताया नानात्वेऽपि कारणत्वत्वेनाखण्डोपाधिनानुगतप्रतीत्याद्युपपत्तिरिति वाच्यम्; पटकारणं घटकारणमित्यादौ कारणत्वस्य स्वरूपत एव भानेन कारणत्वत्वेनानुगतप्रतीत्याद्यनुपपत्तेः । न च कारणताया एकत्वे दण्डनिष्ठकारणता न पटनिरूपिता दण्डत्वावच्छिन्नकारणता न चक्रत्वावच्छिन्नेत्यादिप्रतीत्यनुपपत्तिरिति कार्यभेदेन कारणतावच्छेदकभेदेन च तद्भेद आवश्यक इति वाच्यम्; वैतण्डिकं प्रत्येवं वक्तुमनौचित्यात् , तस्या एकत्वेपि दण्डवृत्तित्वविशिष्टत्वेन पटानिरूपितत्वस्य, दण्डत्वावच्छिन्नत्वेन चक्रत्वानवच्छिन्नत्वस्योपपत्तेश्चेति भावः । अभ्युपेत्यवादेनाह-प्रतिक्षणेति । अयम्भाव, कारणत्वं स्वरूपयोग्यत्वं वा विवक्षितं फलोपधायकत्वं वा, आद्यस्य कारणतावच्छेदकधर्मवत्त्वरूपत्वेन यत्किञ्चिद्धर्मवत्त्वोक्तावननुगमः, यावत्तद्धर्मवत्त्वोक्तावसम्भव इति प्रत्येकमिलितविकल्पानुपपत्तिः, सदसतोः संसर्गस्याप्रामाणिकत्वेनासत्संसर्गभानस्यासम्भवेन स्वरूपयोग्यत्वविशिष्टेतराविषयकत्वेन भ्रमेऽतिव्याप्तिश्च, द्वितीयस्य तु स्वाव्यवहितपूर्वक्षणवृत्तित्वसम्बन्धेन फलवत्तारूपत्वेन तदभावकालीनधियः प्रमात्वव्यवहारानुपपत्तिः । तादृशफलवत्त्वस्योपलक्षणताया उपलक्ष्यतावच्छेदकाननुगमेनासम्भवदुक्तिकत्वात् । एवञ्च तत्तत्क्षणावच्छिन्नवस्तुविषयकबोधस्य प्रमात्वव्यवहारोपपत्तये प्रतिक्षणविशिष्टस्य विश्वस्यावश्यं कारणताया उपगमे दुरपवादस्य = अनिवार्यस्यार्थक्रियाकारित्वस्वरूपसत्त्वलक्षणाङ्गीकारिबौद्धचरणशरणप्रवेशात्मकविलासस्यापादकेनापसिद्धान्ताख्यदोषेण ग्रासः । अर्थक्रियाकारित्वरूपसत्त्वोपगमस्तु तार्किकस्यासम्भवी, क्षणिकत्वप्रसङ्गात् तादृशसत्त्वव्यापकयोः क्रमयौगपद्ययोः स्थिरे प्रसङ्गविपर्ययाभ्यामसम्भवेन तादृशसत्त्वस्याप्यसम्भवात्तदुपपत्तये क्षणिकत्वोपगमध्रौव्यात्, अर्थक्रियाकारित्वं हि फलोपधायकत्वमेव, न च स्थिरे तत्सर्वदा दृश्यते इत्यसत्त्वापत्तिमुदासाय पूर्वपूर्वक्षणस्यैवोत्तरोत्तरक्षणहेतुतोपेया स्यात्, क्षणस्तु घटादेर्नातिरिच्यते "उत्पादानन्तरास्थायि स्वरूपं यच्च वस्तुनः । तदुच्यते क्षणः सोऽस्ति यस्य तत्क्षणिकं मतमि"ति सौगतोक्तेः । एवं च क्षणिकत्वे युगपदेव स्वोत्पाद्योत्पादनसम्भवः, स्थिरत्वे तु युगपदेव सर्वकरणे स्वध्वंसोऽपि कुतः स्यादिति स्थिरत्वव्याघातः, क्रमेण करणं तु प्रतिक्षणं स्वोत्तरस्वसजातीयोपधानं विना न निर्वहति, करणे विलम्बितक्रमस्तु मध्यक्षणेष्वसत्त्वप्रसञ्जकः । तस्मादुक्तार्थक्रियाकारित्वमेव सत्त्वमिति भावः । कारणताननुगमपक्षे तु कारणताविशेषस्यैव निवेश्यत्वेन न सर्वोपसङ्ग्रह इत्यपि द्रष्टव्यम् । इति तत्त्वपदार्थखण्डनम् ।

ज्ञानत्वेति । ज्ञानत्वभिन्नस्तद्व्याप्यो जातिविशेष इत्यर्थः । संशयत्वस्मृतित्वादेर्जातित्वपक्षे तद्व्यावृत्तिफलं विशेषपदम् । स्मृतिलक्षणमिदन्तानवगाहित्वे सति तत्तावगाहिज्ञानत्वम्, स्मरामीति प्रतीतिसिद्धजातिविशेषो वा । प्रमुष्टतत्ताकत्वं तु न स्मृतेरिति वक्ष्यति । तदविदूरेति । तत्पदेन लिलक्षयिषिता

वा, न तावदाद्यः, तथाहि—अनुभूतित्वं नाम जातिरेकाऽभ्युपगम्येति कुतः ? । अनुभवामीति प्रत्ययानुगमवशादिति चेन्न; माघमासीयनिशावसाने सितासितसरित्सम्भेदस्नायिनः सत्यपि शब्दबलाद्भाविस्वकीयस्वर्गसुखसम्प्रत्यये 'सुखमनुभवामी'ति प्रतीत्यनुदयात्, प्रत्युत शीतसम्भेदसम्भूतवेदनासंवेदनादेव, परस्त्रियं सम्भुञ्जानस्यास्तिककामुकस्य शब्दाधीने सत्यपि भाविनरकगमनानुभवनीययातनाधिगमे 'दुःखमनुभवामी'ति मतेरनुत्पत्तेः, प्रत्युत 'अमन्दमानन्दं संविदन् साम्प्रतमस्मी'ति प्रत्ययात् । यदि तु शब्दोपदर्शितव्याप्तिजमनुमानमनुभव एव स्यात् तर्हि सुखं दुःखं चानुभवामीति तयोः प्रत्ययः स्यात् ।

---

व्यक्तिः । अव्यवहितत्वमदूरत्वं क्षणद्वयसाधारणम्, उत्पत्त्या नियतं नियतोत्पत्तिकमिति यावत्, कदाचित्संस्कारोत्पत्त्यव्यवहितोत्तरक्षणे स्मृतेः सम्भवादिति तत्पदम् । नन्वेवमपि तादृशस्मृतिव्यक्तेरुपग्रह एव; ज्ञानत्वव्याप्ययज्जात्यवच्छेदेन स्वाश्रयाव्यवहितप्राक्क्षणावच्छिन्नोत्पत्तिकयत्किञ्चिदसाधारणकारणकत्वं तत्तज्जातिमत्त्वे तात्पर्यात्, सा च प्रत्यक्षत्वादिका, तादृशकारणं च व्याप्तिज्ञानादिकं सन्निकर्षश्च । शब्दप्रत्यक्षे च शब्दः श्रोत्रमनःसन्निकर्षो वा तथाभूत एव । एका = प्रत्यक्षादिमितिचतुष्टयसाधारणी । प्रत्ययानुगमः = प्रत्ययस्य प्रत्यक्षादिमितिचतुष्टयसाधारण्यम् । साक्षात्त्वमेवानुभवत्वं नत्वनुमित्यादिसाधारणं, अनुभवामीत्यनुव्यवसायस्य प्रत्यक्षे एवोत्पत्तेः, अनुमित्यादौ काचित्कस्यानुभवत्वव्यवहारस्य स्मृत्यन्यज्ञानत्वेनाप्युपपत्तेः, तथाचानुमित्यादावनुभूतित्वजातिघटितप्रमात्वस्याव्याप्तिः, अनुभूतित्वस्यानुमित्यादावभ्युपगमे वाऽनुमित्याद्यात्मकस्य सुखादिनिश्चयस्य सत्वेऽप्यनुभवामीति प्रत्ययापत्तिरित्येतत्सर्वमाह माघेति । स्वीकृतञ्चैतत्सर्वं शिरोमण्यादिभिः पदार्थतत्त्वनिरूपणादाविति द्रष्टव्यम् । एवञ्च तत्र सुखमनुभवामीत्यनुव्यवसाये इष्टापत्तिकरणं मौढ्यमेव । सितासितसरित्सम्भेदः = प्रयागः । शब्दबलात् = "सितासिते सरिते यत्र सङ्गते तत्राप्लुतासो दिवमुत्पतन्ती"तिशास्त्रप्रामाण्यग्रहात् । सम्प्रत्ययान्वय्यधीनत्वं पञ्चम्यर्थः । अतिक्लेशसाध्यादृष्टफलककर्मानुष्ठानाधीनभाविसुखविषयकानुमितेः शास्त्रप्रामाण्यग्रहं विनाऽनुपपत्तेः, तत्र प्रवृत्तेरपि तदधीनतायाः सर्वसम्प्रतिपन्नत्वात् । अत्र स्वर्गशब्दोऽग्रे नरकशब्दश्च न प्रीतिविशेषदुःखविशेषपरौ, सुखयातनापदयोर्वैयर्थ्यापत्तेः अपि तु लोकविशेषपरौ । शीतेति । शीतजलसम्पर्कजन्यदुःखानुभवस्यैवानुव्यवसायादित्यर्थः । आस्तिककामुकस्येति । "अगम्यां न गच्छेत," "परपत्नीं समारुह्य नारकी स्यान्न संशय" इत्यादिशास्त्रेऽप्रामाण्यग्रहरहितत्वे सति तीव्ररागवत इत्यर्थः । भावीतियातनान्वयि । अधिगमे इति । यदाह कश्चित्—"वेदशास्त्रपुराणानि सत्यानि यदि भामिनि । आवयोः सङ्गमो नूनं कुम्भीपाके भविष्यति" ॥ इति । व्याप्तिजमिति । प्रयागस्नायित्वे भाविसुखनिरूपितव्याप्तेः परदारागामित्वे भाविदुःखनिरूपितव्याप्तेश्च ग्रहेण जन्यमित्यर्थः । अनुमानम् = अनुमितिः । तयोः = उक्तपुरुषयोः । स्यादिति । कदाचिदपीत्यादिः । एतेन—सुखमनुमिनोमीत्यनुमितित्वोल्लेख्यनुव्यवसायसामग्र्या प्रतिबन्धात् अनुभवत्वोल्लेख्यनुव्यवसायाभाव इति—परास्तम्; सर्वदाऽनुमितित्वोल्लेख्यनुव्यवसायसामग्र्या नियन्तुमशक्यत्वात् । निर्विकल्पकस्यानुभवत्वेऽपि तत्रानुगतमतिभङ्गो न दर्शितः, निर्विकल्पकविषयतानां निरूप्यनिरूपकभावानापन्नत्वात्तदापन्नत्वेनैव विषयतावगाह्यनुव्यवसायविषयत्वस्य निर्विकल्पकेऽसम्भवात् । अनुभवार्थम् = अनुभवत्वविशिष्टम् । अनुरुध्य = प्रतीत्य, तथा च साक्षात्त्वानुभवत्वाभेदग्रहनिबन्धन एवानुमितावनुभवामीतिप्रत्ययव्यवहारविरह इत्यर्थः । विमर्शकस्य तु तौ = तादृशप्रत्ययव्यवहारौ शब्दजानुमानापेक्षौ = शब्दोपदर्शितव्याप्तिग्रहजन्यानुमितिविषयौ स्यातामेव । तर्हि = सार्वजनीनानुभवत्वप्रत्ययव्यवहारयोः प्रत्यक्षे एवोपगमे । अनु-

अथ मन्यसे—साक्षात्कारमनुभवार्थमनुरुद्ध्य तयोर्नैवमधिगमव्यवहारौ, शब्दजानुमानापेक्षौ तु विमर्शकस्य स्यातामेव ताविति; तर्हि साक्षात्कारिणि ज्ञानेऽनुभवप्रत्ययव्यवहारौ साक्षात्वनिबन्धनाविति तत्रानुभवत्वजातिकल्पनायां न प्रयोजनप्रमाणे इत्यनुभूत्यर्थभेदालक्षणाननुगमो दोषः। अथ स्मृतिव्यावृत्तेन रूपेण यः प्रत्यक्षादिष्वनुभव इत्यनुगतावगमः स साक्षात्कारित्वादनुपपन्नः, ततश्च साक्षात्कार्यसाक्षात्कारिविशेषेषु साधारणमनुभूतित्वमन्यदेष्टव्यमित्युच्यते; तदपि न युक्तम्, पदार्थान्तरव्यावृत्तेन रूपेण यस्तदितरेष्वनुगतप्रत्ययस्तद्व्यवहारो वा तत्र तदेव रूपं निमित्तं न तु जातिः काचित्तदनुरोधात्कल्प्यते तथा सत्यनक्षपदार्थेभ्यो घटादिभ्यो व्यावृत्तेन रूपेण विभीतकादिषु साम्यावगमादक्षत्वादिजातिकल्पना प्रसज्येत।

---

भवेति। अनुभवत्वप्रकारकेत्यर्थः। अनुभवत्वजातीति। साक्षात्वभिन्नेत्यादिः। साक्षात्वस्य प्रत्यक्षज्ञाने क्लृप्तत्वादिति भावः। वस्तुतस्तु विमर्शकस्याप्यनुमित्यादावनुभवामीतिप्रतीतिरप्रामाणिकीति न तद्बलात्प्रत्यक्षादिसाधारणी जातिरिति साक्षात्वरूपानुभवत्वनिवेशेऽनुमित्याद्यसङ्ग्रहः, तद्व्यावृत्तस्य निवेशे च प्रत्यक्षासङ्ग्रह इत्याहानुभूत्यर्थभेदादिति। अनुभवामीत्यनुव्यवसायबलात्प्रत्यक्षादिसाधारणजात्यसिद्धावपि तत्साधारणानुभवव्यवहारबलात्तत्साधारणजातिः सेत्स्यतीत्याशङ्कते अथेति। स्मृतिव्यावृत्तेन रूपेणावगमः = स्मृत्यन्यज्ञानत्वसमनियतविषयताको व्यवहारः। तादृशज्ञानत्वावच्छिन्नप्रत्यक्षादिनिष्ठविषयताकत्वार्थकत्वे तु जातिकल्पनोद्देतुमेव नालम्। साक्षात्कारित्वात् = साक्षात्कारित्वं विपर्यीकृत्य। स्मृत्यन्यज्ञानत्वेनैव प्रत्यक्षादौ सर्वत्रानुभवव्यवहारनिर्वाहेऽतिरिक्तजातिकल्पनायां न मानमिति परिहरति पदार्थान्तरेति। तदा पदार्थान्तरं परान्नष्टव्यम्। तदेव = स्मृत्यन्यज्ञातत्वादिकं निमित्तं = विषयतावच्छेदकम्। असति बाधके इति शेषः। "अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके। रुद्राक्षेन्द्राक्षयोः सर्पे विभीतकतरावपि। चक्रे कर्षे पुमान् क्लीबं तुल्ये सौवर्चलेन्द्रिये" इति मेदिन्यभिधानादक्षशब्दो नानार्थ इत्यनक्षपदार्थघटादिभिन्नत्वेन रूपेणाक्षपदार्थानां साम्येऽपि तत्सर्वसाधारणी काचिज्जातिर्नेष्यते, अनन्यथासिद्धसाधकाभावात्, अन्यथैकशक्यतावच्छेदकसम्भवेनाक्षपदस्य नानार्थत्वमेव भज्येत, नचानक्षभिन्नत्वेनानुगतव्यवहारोपगमे तद्घटकतयाऽक्षत्वं विभीतकादिसाधारणमभ्युपगन्तव्यं स्यादिति वाच्यम्; अक्षपदवाच्यत्वस्यैव वाच्यतावच्छेदकभेदभिन्नस्य कथञ्चिद्वाच्यत्वत्वेनानुगतस्य तद्घटकत्वात्। अक्ष इति विधिमुखप्रत्ययोपपत्तिरप्येवमेव। पट इत्यादिव्यवहारस्यापटव्यावृत्तत्वादिसमनियतविषयताकत्वेऽपि विधिमुखप्रत्ययस्य निषेधेनानिर्वाहात् व्यावृत्तिग्रहस्य विशिष्टबुद्धिफलत्वेऽपि तद्विषयताया व्यावृत्तत्वाप्रामाणिकत्वात्, पटादिपदस्यैकशक्यतावच्छेदककत्वेन पटादिपदवाच्यत्वापेक्षया लाघवेनाखण्डस्य पटत्वस्यैवानुगतव्यवहारनियामकस्य तादृशव्यावृत्तत्वघटकत्वाच्च न पटत्वादेरप्यसिद्धिराशङ्क्येति भावः। यद्वा-अनुभव इत्यनुगतव्यवहारस्य स्मृत्यन्यज्ञानत्वावच्छिन्नप्रत्यक्षादिनिष्ठविषयताकत्वात् साक्षात्वाभेदस्यानुभूतित्वेऽसम्भवात् तद्भिन्नमेवानुभूतित्वं वाच्यमिति शङ्कार्थः। तद्भिन्नमनुभूतित्वं स्मृत्यन्यज्ञानत्वं वा विवक्षितम्, चतुष्टयसाधारणी जातिर्वा, आद्ये चतुष्टयसाधारणजातिनिरसनस्य प्रकृतस्य निर्वाहादिष्टापत्तिः। द्वितीयेऽन्यविषयकज्ञानस्यापरत्र प्रमाणत्वासम्भवः, अन्यथाऽनक्षपदार्थव्यावृत्तत्वावच्छिन्नविषयकज्ञानस्याक्षत्वजातौ प्रमाणत्वप्रसङ्ग इति समाधानार्थः। यदि चाक्षत्वस्य जातित्वे तेजस्त्वादिना साङ्कर्यं बाधकमपि, तदा प्रकृतेऽपि साङ्कर्यं वक्ष्यति। ननु विशेषणज्ञानजन्यतावच्छेदकतयाऽनुभूतित्वं चतुष्टयसाधारणी जातिः सिध्यतु, अन्यथा विशेषणज्ञानासत्त्वेऽनुमित्यापत्तेरिति चेन्न; विशेषणज्ञानासत्त्वे परामर्शस्यैवाभावेनापत्त्य

इतोऽपि नानुभूतित्वं नाम स्मृतिव्यावृत्ता जातिः; तथाहि-'घटः स एवाय'मिति तावत्प्रत्यभिज्ञा जायते, सा किं स्मृत्यनुभवरूपं ज्ञानद्वयम्; एकमेव वा विज्ञानमंशे स्मृतिरंशे चानुभवः; उत स्मृतिरेव; आहोस्विदनुभव एवः आद्ये य एव प्रत्यभिज्ञायां प्रागवस्था-

योगात्। नच पृथिव्यामितरभेद इत्यप्रसिद्धसाध्यकानुमित्युत्पादकाले साध्यविशेषणकानुमित्यापत्तिवारणाय विशेषणधीजन्यतावच्छेदकस्यानुमितिसाधारण्यमावश्यकमिति वाच्यम्; पृथिवीतरभिन्नेति साध्यविशेषणकानुमितेर्विशिष्टवैशिष्ट्यविषयकत्वेन विशेषणतावच्छेदकप्रकारकज्ञानजन्यत्वेन तेन विनाऽसम्भवात्। नच विशेषणतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकतयाऽनुमित्यादिसाधारणजातिसिद्धिरिति वाच्यम्; साध्यतावच्छेदकविशिष्टवैशिष्ट्यविषयकानुमितिं प्रत्यन्वयिपरामर्शस्यैव कारणत्वेन तद्विरहेणाप्रसिद्धसाध्यकस्थले तादृशानुमित्यनुत्पत्तेस्तत्साधारणस्य विशेषणतावच्छेदकप्रकारकजन्यतावच्छेदकस्याकल्पनीयत्वात्, प्रत्यक्षानुमितिसाधारणकार्यकारणभावस्यैकस्य द्वयोर्वा कल्पनेऽपि च तेषां शाब्दोपमितिसाधारण्ये मानाभावेन चतुष्टयसाधारणजातिसिद्ध्यसम्भव एव। वस्तुतस्तु-अन्यविशेषणज्ञानेनापरविशिष्टबुद्धिवारणाय, अन्यविशेषणतावच्छेदकज्ञानेनापरविशिष्टवैशिष्ट्यधीवारणाय च विशिष्यैव कार्यकारणोपगमध्रौव्येण सामान्यकार्यकारणभावस्याप्रामाणिकत्वेन न तद्बलात्प्रमामात्रानुगतजातिसिद्धिसम्भावनापीति शिवम्।

यद्यपि विरुद्धसंस्थानव्यङ्ग्यनुरगत्वविहगत्वादेर्विरुद्धसामग्रीप्रयोज्यनीलत्वपीतत्वादेश्च जाते सङ्करो नेष्यते, प्रमाणे सति तु सङ्कीर्णजातिरुपेयते एव, यथा शुक्लपीतादिसाधारणमुद्भूतत्वम्, तज्जातिसमानाधिकरणतदभावसमानाधिकरणजातेस्तज्जातिव्याप्यत्वमितिनियमस्याप्रयोजकत्वादिति बौद्धाधिकारशिरोमणिगादाधर्यादावुक्तम्, एवं जातेरांशिकत्वमपि सति प्रमाणे स्वीक्रियते एव. अतएव अयं स्थाणुर्नवेत्यादौ धर्मिविषयकत्वावच्छिन्नकोटिविषयकत्वावच्छेदेन वृत्तिमतः संशयत्वस्य जातित्वं केवलान्वयिगादाधर्यामुक्तम्। एवञ्चानुभवत्वस्येदन्ताविषयकत्वावच्छेदेन स्मृतित्वस्य च तत्ताविषयकत्वावच्छेदेन प्रत्यभिज्ञायामुपगमे आंशिकत्वं परस्पराभावसमानाधिकरणयोरनुभवत्वस्मृतित्वयोरेकत्र वर्तमानतया साङ्कर्यं च प्राप्तमपि नानुभवत्वस्य जातितायां बाधकतामालम्बेत, तथापि प्राचीनैः साङ्कर्यांशिकत्वयोर्जातिबाधकताया उपगतत्वात्तन्मतानुसारेणानुभवत्वे तं आख्यातुमाह इतोऽपीति। ज्ञानद्वयमिति। संस्कारेन्द्रियरूपसामग्रीभेदात् पारोक्ष्यापरोक्ष्यलक्षणविरुद्धधर्माध्यासाच्च प्रत्यभिज्ञा नैकं ज्ञानम्, अपि तु तत्तेदन्तादिविशिष्टविषयकं ज्ञानद्वयमेव भेदाग्रहसहकृतं विशिष्टव्यवहारनिदानमिति भावः। अंशे = तत्ताविशिष्टविषयकत्वावच्छेदेन। अंशे = इदन्ताविशिष्टविषयकत्वावच्छेदेन। प्रत्यभिज्ञायामेकत्वस्य तत्ताविशिष्टेदन्ताविशिष्टयोरभेदविषयकत्वस्य चानुभविकत्वाज्ज्ञानद्वयात्मकताया असम्भवदुक्तिकत्वात् पारोक्ष्यापरोक्ष्ययोश्चावच्छेदकभेदेन व्यवस्थासम्भवात् इन्द्रियसम्प्रयोगसंस्कारयोः सम्भूयकारित्वेन सामग्रीभेदाभावाच्च प्रत्यभिज्ञाया एकत्वमेव, अन्यथा स्थैर्यमात्रोच्छेदप्रसङ्ग इति भावः। स्मृतिरेवेति। यदीन्द्रियजन्यत्वेनानुभवत्वं प्रत्यभिज्ञायास्तार्किकैरुपेयते तदा संस्कारजन्यत्वेन स्मृतित्वमेव किन्न स्यादित्यभिमानः। अनुभव एवेति। संस्कारस्य निर्व्यापारत्वेन करणताया असम्भवात् तत्सहकृतेन्द्रियस्यैव सन्निकर्षव्यापारकस्य प्रत्यभिज्ञायां करणत्वात्, 'अनुभवामी'त्यनुव्यवसायाच्च, अनुभवत्वस्य जातित्वेनांशिकत्वस्यासम्भवाच्च प्रत्यभिज्ञाया अनुभवत्वमेवेति केचित्तार्किकाः। तत्तास्मृतिजन्यमेव प्रत्यभिज्ञानं नतु संस्कारजन्यम्, अन्यथा पूर्वानुभवस्यैव संस्काररूपव्यापारद्वारा करणत्वेन प्रत्यभिज्ञाया ज्ञानकरणकत्वापत्त्या परोक्षता स्यात्, अनुमादौ ज्ञानकरणकत्वस्य परोक्षतानैयत्यावधारणात्, तत्तास्मृतिस्तु कारणमपि निर्व्यापारत्वान्न करणमिति नोक्तदोष इत्यपरे तार्किकाः। सर्वथाऽप्यनुभव एव तन्मते प्रत्यभिज्ञानमिति।

विशिष्टादिदन्ताविशिष्टस्याभेदः प्रकाशते स न स्मृतावन्तर्भावयितुं शक्यः अननुभूतचरत्वेन संस्कारानुपनेयत्वात्। अतएव न तृतीयः। नाप्यनुभवेऽन्तर्भावयितुमसौ शक्यः, प्रत्यभिज्ञानकालेऽनुभवेन प्रागवस्थाया असंवेदनात्; संवेदने वा अनुभव एवेति शेषपक्षेऽन्तर्भावः स्यात् सचाग्रे दूषयिष्यते। अतएव न द्वितीयः। प्रागवस्थाविशिष्टाभिन्नत्वांशेऽनुभवत्वस्वीकारश्चेत् प्रागवस्थावैशिष्ट्यमप्यनुभवविषये एव निविष्टमिति चरमपक्षे प्रवेशः। अथ प्रागवस्थाविशिष्टादभिन्नः' इत्ययमर्थोऽप्यनेकांशः, तत्र 'प्रागवस्थाविशिष्टः' इत्यंशे स्मृतित्वम्, 'अभिन्नः' इत्यंशे चानुभवत्वमित्युच्यते; एवं तर्हि 'प्रागवस्थाविशिष्टः सः, इदन्ताविशिष्टोऽभिन्नश्चायमि'ति स्मृत्यनुभूतिभ्यामावेदितं भवति, प्रागवस्थाविशिष्टाश्रयतया त्वभेदः केनापि न प्रकाशित इति 'य एव प्रागवस्थाविशिष्टः स एवायमि'ति प्रत्यभिज्ञायाः शरीरं न स्यात्। अथानुभवेन योऽसावनुभूयमानधर्म्याश्रयतयाऽभेदो बोधितः स कोट्यन्तरमनालम्ब्य न पर्यवस्यतीति केनचित्खलु कस्यचिद्भेदो भवति, ततः स्मृत्यंशोपनीतमेव सन्निधानात्कोट्यन्तरं प्रागवस्थाविशिष्टरूपमालम्बते इत्यभेदस्य प्रागवस्थाविशिष्टाश्रयतया सिद्धिरिति। तदेतत्तुच्छतरम्; कोट्यन्तरमालम्बते इति किं कोट्य-

---

प्रागवस्था = अतीतसमयसम्बन्धस्तच्छब्देनोल्लिख्यमानः। इदन्ता = वर्तमानसमयसम्बन्धः। प्रत्यभिज्ञायां प्रकाशते = प्रत्यभिज्ञानिरूपितविषयताश्रयः। यद्यपि ज्ञानद्वयवादिनं प्रति नैतद्वक्तुं युक्तम्, तथाप्यनुभवानुरोधेनेदमुक्तम्। स्मृतौ = स्मृतिविषये। संस्कारानुपनेयत्वात् = संस्काराविषयत्वात्। उक्ताभेदप्रतियोगितावच्छेदकविशिष्टस्यैव संस्कारविषयत्वं, नत्वनुयोगितावच्छेदकविशिष्टस्येत्यर्थः। अनुभवे = अनुभवविषये। असौ = निरुक्ताभेदः। असंवेदनादिति। संस्कारे ज्ञाने वा ऽन्यासक्तित्वस्य निरसिष्यमाणत्वादिति भावः। तदभ्युपगमेनाह संवेदने वेति। स्यादिति। प्रागवस्थायां हि स्मृतेरवकाशः, सा चानुभवेनैव गोचरीकृतेति भावः अतएव = आंशिकस्मृतित्वानुभवत्वाभ्यामपि विशिष्टेन निरुक्ताभेदावगाहनासम्भवादेव। ज्ञानप्रत्यासत्त्याऽनुभवस्य तादृशाभेदावगाहितामुपेत्याह प्रागवस्थाविशिष्टेति। चरमपक्षे प्रवेशं धारयितुमाह अथेति। इत्ययमंशोऽप्यनेकांशः = इत्येतद्विषयकत्वावच्छेदेन प्रत्यभिज्ञायां न स्मृतित्वमात्रं नाप्यनुभवत्वमात्रम्। अभिन्न इति। प्रागवस्थाविशिष्टादितिपञ्चम्योल्लिखिता प्रतियोगिता तु संसर्गत्वादनुपस्थितापि स्यादनुभवविषयः, एवमभेदानुयोगित्वयोरपि संसर्गतयाऽनुभवविषयता, संसर्गांशे सन्निकर्षस्याहेतुत्वादिति भावः। एवमिति। स एवायं घट इत्यत्र स इत्यंशेन प्रागवस्थाविशिष्टः, अयमित्यंशेन चेदन्ताविशिष्टोऽभिन्न इति स्मृत्यनुभूतिभ्यामांशिकाभ्यामावेदितं भवतीति योजना। तेन स इत्यस्यायमित्यस्य च प्रागवस्थाविशिष्टेदन्ताविशिष्टार्थकत्वेऽपि नासङ्गतिः, नवोपरितनग्रन्थासङ्गतिः। प्रतियोगितावच्छेदकविशिष्टस्यानुभवाविषयत्वेऽभेदस्य किञ्चिद्धर्मावच्छिन्नप्रतियोगिताकत्वेन तद्विषयत्वानुपपत्तेः, न चेष्टापत्तिः, प्रत्यभिज्ञाभिलापविरोधादित्याशयः। विशिष्टाश्रयतया = विशिष्टप्रतियोगिकतया। धर्म्याश्रयतया = धर्म्यनुयोगिकतया। कोट्यन्तरमनालम्ब्य = कञ्चित्प्रतियोगिनं विना, इति = यतो न पर्यवस्यति = सम्भवति। उपनीतं = विषयीकृतं सन्निधानात् = स्वविषयकज्ञानविषयत्वात्। स्वं = अभेदः। कोट्यन्तरं प्रागवस्थाविशिष्टरूपं = प्रागवस्थाविशिष्टात्मकं कोट्यन्तरम्। सिद्धिरिति। यद्यप्येवं प्रत्यभिज्ञोत्तरं ज्ञानान्तरमेवाभेदविषयकं स्यात्, तच्चानुपलम्भबाधितम्, प्रत्यभिज्ञा च पूर्वं निष्प्रतियोगिकतया भेदं विषयीकृत्य पुनः सप्रतियोगिकतया तं विषयीकर्तुमक्षमा, विरम्यव्यापाराभावात्, पूर्वमेव तस्यास्तत्ताविशिष्टप्रतियोगिकाभेदविषयकत्वोपगमे चानुभवांशस्य तत्तावि-

न्तराश्रितो भवति ? उत कोऽप्यन्तराश्रिततया ज्ञायते इति । नाद्यः; अभेदस्येदानीं प्रागवस्थाविशिष्टधर्म्याश्रयेणोत्पत्तौ पूर्वं प्रागवस्थाविशिष्टेदन्ताविशिष्टयोर्भेदः स्यात् । द्वितीये तु यदेव कोऽप्यन्तराश्रिततया इदन्तावच्छिन्नधर्म्यभेदस्य ज्ञानं तत्स्मृतौ नान्तर्भावयितुं शक्यं नाप्यनुभवांशे इत्युक्त एव दोषः ।

किञ्च, यदा प्रत्यभिज्ञानं स इत्यंशे स्मृतिः, अयमित्यंशे चानुभव इत्येकं ज्ञानमभ्युपेयते तदा धर्मिणमादायापि स्मृत्यनुभवसङ्करो दुर्वारः । तथाहि संस्कारेण तत्तामात्रं वोपनीयते तत्ताविशिष्टो वा धर्मी । आद्ये 'स' इति प्रत्यभिज्ञाया शरीरं न स्यात्, तत्तायाः केवलायाः संस्कारेणोपनीतत्वात् । नापि द्वितीयः, तथा सति 'अय'मित्यनुभवांशेऽपि धर्मिप्रकाशो वक्तव्य एव. अन्यथेदन्तामात्रप्रकाशे 'अय'मिति तच्छरीरं न स्यात् । एवञ्च संस्कारस्य चेन्द्रियस्य च धर्मिप्रतीतिहेतोरुभयस्योपनिपाते किं विशेष्यांशे भिन्नाभ्यां ज्ञानाभ्यामुत्पत्तव्यम् ? उत कारणद्वयसम्भेदादभेदमात्रभाजा ज्ञानेन ? । प्रथमे प्रत्यभिज्ञानस्यैकज्ञानव्यक्तिताभ्युपगमव्याघातः, भेदपक्षोक्तदूषणापातश्च । द्वितीये धर्म्यंशे प्रत्यभिज्ञायां स्मृतित्वमप्यनुभवत्वमपीत्यनुभूतिस्मरणसङ्कर इति विषयव्यवस्थयापि नियमो भग्नः ।

अथोच्यते माभूद्विषयोपाधिभेदाद्व्यवस्थानमुपाध्यन्तरात्तु भविष्यति, तद्यथा

---

शिष्टविषयकत्वं दुर्वारमिति चरमपक्षे प्रवेशस्तथाप्यापातत एवेयमाशङ्केति द्रष्टव्यम् । भवति = उत्पद्यते । तत्स्मृतौ नान्तर्भावयितुं शक्यम् = तस्यांशिकस्मृतिरूपत्वं वक्तुमशक्यम् । एवमांशिकानुभवरूपत्वमपि । एवं प्रत्यभिज्ञाया अभेदविषयकत्वासम्भवे स्थैर्यमात्रोच्छेदोऽपि द्रष्टव्यः, साङ्कर्यञ्चात्र पक्षे स्पष्टमेवेत्यनुभूतित्वं न जातिः । गुणे जात्यनङ्गीकारेऽपि स्मृत्यन्यज्ञानत्वरूपत्वस्यानुभूतित्वस्य निरसिष्यमाणत्वेनाखण्डोपाधितैव वाच्या, युक्तेस्तौल्यात्तु साङ्कर्यस्य तद्बाधकत्वमपि, अतएव "साङ्कर्यमुपाध्योरपि दोषाय यदि तदा तत्राप्याश्रयभेदप्रसङ्ग" इति खण्डनोक्तिर्मञ्जूषायामुद्धृता, सा चेदानीन्तनपुस्तके नोपलभ्यते इत्यन्यदेतत् ।

ननु तदभावसमानाधिकरणस्य तत्समानाधिकरणात्यन्ताभावप्रतियोगिनस्तत्सामानाधिकरण्यमात्रं न जातितां विरुणद्धि, अपि तु तदवच्छेदकावच्छिन्नतदधिकरणनिरूपितवृत्तित्वमेव, तथाच नानुभूतित्वस्य जातित्वे बाधकमित्याशङ्क्य धर्मिविषयकत्वावच्छेदेनैव प्रत्यभिज्ञायां स्मृतित्वानुभूतित्वे उपपादयति— किञ्चेति । स इत्यंशे = तत्ताविशिष्टविषयकत्वावच्छेदेन । एवमग्रेऽपि । इत्येकं = इत्येवमेकं । धर्मिणमादाय = धर्मिविषयकत्वावच्छेदेन । स्मृत्यनुभवेति भावप्रधानम्, एवमग्रेऽपि । उपनीयते = उपस्थाप्यते । तथा सतीत्यादेरनुभूतित्वनिष्ठायाः प्रत्यभिज्ञानिष्ठाधिकरणतानिरूपितनिरूपकताया अवच्छेदकमिदन्ताविशिष्टत्मकधर्मिविषयकत्वमेव न त्विदन्तामात्रविषयकत्वमिति तात्पर्यार्थः प्रत्यभिज्ञायामनुभवांशेऽपि = अनुभवत्वावच्छेदकावच्छेदेनापि 'अय'मिति धर्मिप्रकाश इदन्ताविशिष्टविषयकत्वरूप एव वक्तव्य इति योजनया लब्धव्यः । उपनिपाते = समवधाने । सम्भेदात् = समवधानात् । अभेदस्य प्रत्यभिज्ञानाविषयत्वप्रसङ्गो भेदपक्षोक्तदूषणम् । विषयव्यवस्थयापि नियमः = अन्यान्यविषयकत्वावच्छेदेनैवानुभूतित्वस्मृतित्वयोः सामानाधिकरण्यमिति नियमोऽपि । अपिना वैयधिकरण्यनियमः । न चेष्टापत्तिः, विरुद्धधर्मद्वयस्यैकत्रैकावच्छेदेन वृत्त्यभ्युपगमे विरोधमात्रस्य दत्तजलाञ्जलितापत्तेरिति भावः ।

नच—तत्तावैशिष्ट्यावच्छिन्नविषयतानिरूपकत्वावच्छेदेन स्मृतित्वं, इदन्तावैशिष्ट्यावच्छिन्नवि-

संस्कारजत्वमादाय स्मृतित्वव्यवस्थितिरिन्द्रियसन्निकर्षजत्वमादाय चानुभवत्वव्यवस्थानमिति विरोधपरिहारोऽस्तु; न, प्रमात्वसामान्यानङ्गीकारे प्रमारूपताया विषयव्यवस्थित्यैवोपगमेनोपाध्यन्तरोपन्यासेऽपि स्मृतित्वानुभूतित्वयोरेकस्मिन्नेव धर्मिण्यर्थे निवेशात्

षयतानिरूपकत्वावच्छेदेन चानुभवत्वमिति न साङ्कर्यं, तादृशनिरूपकतयोर्भेदेनैकावच्छेदेन सामानाधिकरण्यविरहादिति–वाच्यम्, तत्तेदन्ताविशिष्टयोरभेदस्य प्रत्यभिज्ञाविषयत्वोपगमे विशेषणयोरपि विधेयान्वयितयाऽभेदप्रसङ्गात्. तस्य च बाधात्, तत्तेदन्तोपहितत्वेनाप्यैक्यासम्भवाच्च तदुपलक्षितयोरैक्यभानस्य प्रत्यभिज्ञायां वक्तव्यत्वात्, तत्तादिवैशिष्ट्यावच्छिन्नविषयताकत्वस्य तत्रासम्भवेन तदवच्छेदेन स्मृतित्वादेर्वृत्तेरशक्यवचनत्वात्, उपलक्षितधर्मिमात्रभानमुपगम्य स्मृतित्वाद्युपगमे एकावच्छेदेन सामानाधिकरण्यापत्तेरावश्यकत्वात् । स्मृत्यनात्मकनिर्विकल्पकप्रत्यभिज्ञाऽभ्युपगमवादे तु चित्त्वेवानुभवत्वस्य स्वीकारेण तस्य प्रमामात्रसाधारण्यविरहेणैव तद्घटितलक्षणस्याव्याप्तत्वेन साङ्कर्याभावेऽपि क्षत्यभावात्, स्मृतिव्यावृत्तयेऽज्ञाताज्ञाततावच्छेदकान्यतरविषयकत्वेनैव तन्मते प्रमात्वस्य घटितत्वादिति । किञ्च तत्तेदन्तावैशिष्ट्यावच्छिन्नयोर्विषययोरभेदे तादृशविषयतानिरूपकत्वयोरपि भेदे मानाभावः, तयोर्भेदे तु प्रत्यभिज्ञायास्तयोरभेदावगाहिन्या भ्रमत्वप्रसङ्गः भेदाभेदे त्वनिर्वचनीयवादस्तदवस्थं च साङ्कर्यमिति । ननु प्रत्यभिज्ञायां स्मृतित्वादेरवच्छेदकं न तत्तद्विषयकत्वं येन धर्मिविषयकत्वावच्छेदेनोभयसत्त्वे साङ्कर्यं स्यात्, अपि तु संस्कारजत्वादिकमेव, तत्र तु तत्ताविशिष्टविषयकत्वादिकमवच्छेदकमिति नातिप्रसङ्ग इति देशयति **अथोच्यते** इत्यादिना । विषयोपाधिभेदात् = तत्ताविशिष्टविषयकत्वेदन्ताविशिष्टविषयकत्वरूपावच्छेदकभेदात् । व्यवस्थानं = भिन्नावच्छेदेन वृत्तिमत्तानियमो मा भूत् = मा निर्वहतु । अत्र निर्वाहे पञ्चम्यर्थाधीनत्वस्यान्वयः । उपाध्यन्तरात् = अवच्छेदकान्तरात् भविष्यति = निर्वाहमेष्यति । संस्कारजत्वमादाय स्मृतित्वव्यवस्थितिः = संस्कारत्वावच्छिन्नकारणताकत्वावच्छेदेनैव स्मृतित्वस्य वृत्तिः । एवमग्रेऽपि । विरोधपरिहारः = स्मृतित्वानुभूतित्वयोरेकावच्छेदेन वृत्त्यनुपपत्तिपरिहारः । मुख्यविशेष्यांशे ज्ञानानां प्रमात्वस्य नियमेन व्यवहारात्, तस्य मुख्यविशेष्यकत्वावच्छेदेन वृत्तेरवश्यं वक्तव्यत्वात् तद्घटकानुभूतित्वस्याप्युक्तावच्छेदेन वृत्तिरुपगन्तव्यैव, एवं स्मृतेर्यथार्थत्वेऽपि प्रागधिगतविषयकत्वावच्छेदेन प्रमात्वाभावस्य व्यवहारात् स्मृतित्वस्याप्युक्तावच्छेदेन वृत्तिरुपेया, अन्यथा 'प्रत्यभिज्ञायां तत्तावैशिष्ट्यांशे स्मृतित्वमिदन्तावैशिष्ट्यांशे चानुभवत्व'मिति भवदीयानां व्यवहारो व्याहन्येत, तथाच तदवस्थं साङ्कर्यमित्याशयेन परिहरति–**प्रमात्वे**त्यादिना । चाक्षुषत्वादेर्विषयिताविशेषरूपत्वपक्षे तेन सह प्रमात्वजातेः साङ्कर्यस्यावक्तव्यत्वेऽपि विशेषणज्ञानजन्यतावच्छेदकतया लाघवात् जात्यात्मकतया सिद्धेन साक्षात्करोमीति धीसाक्षिकलौकिकविषयिताव्यावृत्तेन प्रत्यक्षत्वेन साङ्कर्यं वक्तुं शक्यते, सप्रकारकत्वघटितप्रमात्वस्य गुणजन्यत्वनियतस्य निर्विकल्पके ईश्वरप्रत्यक्षे चावृत्तेः, प्रत्यक्षत्वस्य चानुमित्यादिप्रमायामवृत्तेरिति प्रमात्वस्य न जातित्वं, धर्म्यांशे वृत्तिमत्तया अव्याप्यवृत्तित्वाच्चेति भावः । प्रमारूपतायाः = प्रमात्वस्य । विषयव्यवस्थित्यैव = विशेष्यवृत्तिप्रकारकत्वेनैव । उपगमेन = उपगन्तव्यत्वेन स्मृतित्वानुभूतित्वयोरुपाध्यन्तरोपन्यासेऽपि = संस्कारजत्वाद्यवच्छेदकोपन्यासेऽपि । प्रमात्वाप्रमात्वयोरेकस्मिन्नेव धर्मिण्यर्थे निवेशात् = प्रमात्वस्येदन्तावैशिष्ट्यावच्छिन्नधर्मिविषयकत्वावच्छेदेन प्रमात्वाभावस्य च तत्तावैशिष्ट्यावच्छिन्नधर्मिविषयकत्वावच्छेदेन वर्तमानत्वात् स्मृतित्वानुभूतित्वयोरप्येकविषयनैव = अन्यान्यावच्छेदेन वृत्तिमत्त्वनियमो नेति प्रस्तुतसाङ्कर्यं तादवस्थ्यम् । अप्रमात्वशब्देन भ्रमत्वं तु नात्र ग्राह्यम्, तत्तावैशिष्ट्यावच्छिन्नधर्मिविषयकत्वावच्छेदेनापि यथार्थस्य सत्त्वात् । प्रमात्वाप्रमात्वयोरेका-

प्रमात्वाप्रमात्वयोरेकविषयतैव । किञ्च ज्ञानविकल्पानामध्यात्मं भावाभावसंवेदनात् स्मृतित्वानुभूतित्वयोर्द्वयोरपि प्रत्यभिज्ञायां स्वतः प्रतिभासेन विषयनिरूपणव्यवस्थित्यनङ्गीकारे स्मृतित्वादेरिदन्तायामपि स्मृत्यवगमप्रसङ्गात् । यदि च संस्कारजत्वमेव स्मृतित्वं तदा तस्यैव विरोधेऽभिधीयमाने स एव विरोधसामञ्जस्यायोपाधिरुपन्यस्यते इति नान्यस्य चेतसि निविशते । अथान्यत्स्मृतित्वं नाम, तदाप्यनुपपत्तिः, तथाहि-संस्कारजत्वं

वच्छेदेन वृत्तिमत्त्वरूपैकविषयतायां स्मृतित्वानुभूतित्वयोरेकधर्मिविषयकत्वावच्छिन्नवृत्तिमत्त्वस्योपष्टम्भकत्वं तु न युक्तम्, स्मृतित्वानुभूतित्वयोरेकधर्मिविषयकत्वावच्छिन्नवृत्तिमत्त्वस्य पूर्ववादिना त्यक्तत्वात् । अनुभवानुरोधेन तदभ्युपगमापादने तु तावतैव स्मृतित्वानुभूतित्वयोः साङ्कर्यस्य प्रकृतस्य निर्वाहेण तत्परित्यज्य प्रमात्वाप्रमात्वयोरेकविषयतापादनस्यायुक्तत्वात् । 'तदधीने तत्रैवार्थे प्रमात्वाप्रमात्वापाते सा तेऽस्त्वि'ति भावप्रत्ययैकवाच्यतादुराग्रहे तु निवेशात् = निवेशस्यानुभवानुरोधिनाऽऽदरणीयत्वात् प्रमात्वाप्रमात्वयोः = प्रमात्वाप्रमात्वयोरपीत्यनुकर्षेणैव व्याख्यानं द्रष्टव्यम् । यद्यपि प्रमात्वस्य जातित्वाभ्युपगमेऽपि धर्म्यंशे प्रमात्वं प्रकारांशे च भ्रमत्वमिति व्यवहारात् प्रत्यभिज्ञायामपि तत्तावैशिष्ट्यावच्छिन्नविषयकत्वेदन्तावैशिष्ट्यावच्छिन्नविषयकत्वरूपावच्छेदकाभ्यां प्रमात्वतदभावयोर्व्यवहारस्योपपादनीयत्वान्नाभिन्नैकविषयता तयोरक्षतैव, तथापि जातेर्व्याप्यवृत्तितानियमोपगन्तॄणां प्राचां प्रमात्वस्यावच्छिन्नवृत्तिकत्वादपि जातित्वमनभ्युपगन्तव्यमेवेति भावेन प्रमात्वसामान्यानङ्गीकारे इत्युक्तम् । स्मृतित्वाद्याधारतावच्छेदकत्वं संस्कारजत्वादावभ्युपेत्योक्तम्, इदानीं तदेव नेत्याशयेनाह-किञ्चेति । "ज्ञानविकल्पानां भावाभावसंवेदनादध्यात्म"मिति" न्यायदर्शनपञ्चमाध्यायस्थसूत्रम्, ज्ञानविकल्पानां = ज्ञानतद्विशेषानुभवत्वादीनां भावाभावयोरध्यात्मं संवेदनात् = बहिरिन्द्रियाजन्यज्ञानविषयत्वात्, तच्च ज्ञानं मानसं वा साक्षिरूपं वेत्यन्यदेतत् । प्रत्यभिज्ञायां स्वतः प्रतिभासेन = संस्कारजत्वादिप्रतीतिं विनैव प्रत्यभिज्ञाविषयकज्ञानविषयत्वेन स्मृतित्वादेर्विषयनिरूपणव्यवस्थित्यनङ्गीकारे = विषयेण निरूपणं यस्यास्तादृशव्यवस्थित्यनङ्गीकारे, तत्तद्विषयकत्वावच्छेदेन ज्ञायमानतानभ्युपगमे इति यावत् इदन्ताविषयकत्वावच्छेदेनापि स्मृतित्वानुभवप्रसङ्गात्, एवं तत्ताविषयकत्वावच्छेदेनानुभवत्वानुभवप्रसङ्गोऽपि, तार्किकवरवयेष्टापत्तेः कर्तुमशक्यत्वात् । तथाच तत्तद्विषयकत्वावच्छेदेन स्मृतित्वादेर्ज्ञायमानताऽभ्युपगमस्यावश्यकत्वे वृत्तिरपि स्मृतित्वादेस्तथैवाभ्युपगन्तव्या, अनुभवानुरोधात् । संस्कारजत्वादेरपि वृत्तेस्तत्तद्विषयकत्वावच्छेदेनाभ्युपगमनीयत्वे चावश्यकत्वात् प्रथमोपस्थितत्वाच्च स्मृतित्वादेरपि वृत्तेस्तथैवौचित्याच्चेति भावः । स्मृतित्वस्य संस्कारजत्वावच्छेदेन वृत्त्यभ्युपगमे आत्माश्रयान्योन्याश्रयावत्याह-यदीति । संस्कारजत्वोपस्थितिमन्तरेणापि स्मरामीत्यनुभवसत्त्वात् संस्कारजत्वमेव स्मृतित्वमिति पक्षस्यायुक्ततां सूचयितुं यदीति । संस्कारजत्वं संस्कारत्वावच्छिन्नकारणताकत्वं तेन संस्कारध्वंसे नातिव्याप्तिः, तत्र प्रतियोगित्वेनैव संस्कारस्य जनकत्वात् । इन्द्रियसन्निकर्षत्वावच्छिन्नकारणताकत्वमेवानुभवत्वमितिपक्षस्तु न शङ्कितः, अनुभवत्वस्यानुमित्यादिसाधारणताभ्युपगन्तृपक्षनिरासस्यैव प्रस्तुतत्वात् । तस्य = स्मृतित्वस्य । विरोधे = अनुभूतित्वेन सहैकावच्छेदेन सामानाधिकरण्यानुपपत्तौ । उपाधिः = अवच्छेदकः । अन्यस्य = प्रतिवादिनः । न निविशते = युक्तत्वप्रकारकज्ञानविषयताश्रयो न, स्वावच्छेदेन स्ववृत्तावात्माश्रयात्, जन्यतायाः स्वावच्छिन्नत्वपर्यवसानेनावच्छेदकग्रहाधीनग्रहविषयत्वेन च ज्ञप्तावप्यात्माश्रयाच्च, स्मृतित्वावच्छेदकतया स्मृतित्वस्याभिधानेऽपि तदवच्छेदकजिज्ञासाया अशान्तेस्तस्यानुत्तरत्वाच्चेति भावः । अन्यत् = जातिविशेष उपाधिर्वाऽखण्डः ।

संस्कारादनन्तरं नियमेन भावः, नियतत्वं च नानाव्यक्तिगमेकं रूपं ग्राहकमक्रोडीकृत्या सम्भवीति स्मृतित्वेनैव संस्कारजत्वं वक्तव्यम्, तथा च संस्कारजत्वव्यवस्थितौ स्मृतित्वमुपाधिः, स्मृतित्वव्यवस्थितौ संस्कारजत्वमित्यन्योन्याश्रयः। तस्मात्स्मृत्यनुभवसङ्करो दुर्वार एव।

अपि च, स्मृत्यनुभवयोर्ये कारणसामग्र्यौ ते प्रत्यभिज्ञायां मन्तव्ये न वा ?। नचेत्कथमंशतोऽपि स्मृतित्वमनुभवत्वं च प्रत्यभिज्ञानस्य ?। एवमेव तथात्वेऽतिप्रसङ्गात् स्मृत्यनुभूत्योः स एव सङ्करः। प्रथमे तु पृथगेव कार्योत्पत्तिप्रसङ्गः, प्रत्येकं स्वस्वकार्ये समर्थत्वात्, सामग्रीभेदस्य कार्यभेदहेतुत्वेनावधारितत्वात्। अथ यत्र ते पृथग्जायेते तत्र पृथगेव कार्यं, प्रत्यभिज्ञायां तु तयोर्युगपज्ज्ञातत्वेन सम्भूयजननात् कथञ्चित्कार्योत्पत्तिः। यद्यपि घटपटादिसामग्र्योर्नैवं दृश्यते तथापि तद्विलक्षणस्वभावत्वादनयोरीदृशत्वमुपपद्यते; नह्येकस्य यादृक् पदार्थस्य स्वभावः, तादृगन्यस्यापि सर्वस्य भवति जगद्वैचित्र्यभङ्गप्रसङ्गादिति; नैतदस्ति, यत्र हि मिलितत्वं तयोस्तत्र किं परस्परसहकारित्वमनयोरेष्टव्यं ? न वा ?; नचेत्, परस्परमेलनलक्षणविशेषोऽनुपयोगी कार्यजननं प्रति, मिथः सहकारिभावविरहेणाप्रयोजकत्वात्; ततश्चाविशेषात् पृथगेव कार्यं प्रसज्येत। अथ परस्पर-

संस्कारादिति। संस्कारनिष्ठान्यथासिद्ध्यनिरूपकत्वे सति संस्कारत्वावच्छिन्नव्याप्यत्वं संस्कारजत्वम्। व्याप्तेश्चावच्छिन्नत्वनियमात् तदवच्छेदकं स्मृतित्वमेव वक्तव्यम्, प्रातिस्विकरूपेण व्याप्तेर्दुर्ग्रहत्वात्। तादृशव्याप्यत्वं च स्वाव्यवहितप्राक्क्षणावच्छेदेन संस्कारत्वावच्छिन्नव्यापकताकत्वमिति सूचनायानन्तरपदम्। संस्काराव्यवहितोत्तरक्षणत्वव्याप्यं संस्कारत्वावच्छिन्नान्यथासिद्ध्यनिरूपकस्य यद्रूपावच्छिन्नस्याद्यक्षणत्वं तद्रूपावच्छिन्नत्वं वाऽक्षरार्थः। तद्रूपं च स्मृतित्वमेवेति भावः। अत्र कल्पे भावः = आद्यक्षणसम्बन्धः। ग्राहकं = नानाव्यक्तिमद्ग्राहकं, अनुगतमिति यावत्। अक्रोडीकृत्य = अनवच्छेदकीकृत्य स्मृतित्वेनैवेति तृतीयार्थोऽवच्छिन्नत्वम्। संस्कारजत्वव्यवस्थितौ = संस्कारजत्वग्रहमित्यपेक्षणीयज्ञानकमवच्छेदकं स्मृतित्वं, जन्यताग्रहस्यावच्छेदकग्रहं विनाऽसम्भवात्, संस्कारजत्वस्य स्मृतित्वव्यञ्जकतोपगमे तु प्रत्यभिज्ञायां स्मृतित्वग्रहार्थं तद्ग्रहस्याप्यपेक्षणीयतेत्यन्योन्याश्रयः। वृत्तौ तु न सः, उपाधितयाऽवच्छेदकताया वक्तुं शक्यत्वात्, परस्परावच्छिन्नत्वस्य परस्परव्यापकतायामेव पर्यवसानात्, विशेषणतया चावच्छेदकताविरहेऽपि क्षत्यभावादिति। भेदप्रस्तावोक्तदिशोपाधित्वेऽपि वा परस्परापेक्षत्वं समर्थनीयम्। स्मृत्यनुभवेति। स्मृतित्वानुभवत्वेत्यर्थः।

एवमेव तथात्वे = स्मृतित्वादिप्रयोजकसामग्र्यभावेऽपि स्मृतित्वाद्युपगमे। अतिप्रसङ्गात् = ज्ञानमात्रे स्मृतित्वानुभूतित्वयोरवच्छेदकभेदं विनैव प्रसङ्गात्। हेतुत्वेन = व्याप्यत्वेन। यथा युगपन्नानाज्ञानसामग्रीसमवधाने तार्किकैः समूहालम्बनमेकं ज्ञानमुपेयते ज्ञानयौगपद्यस्यानङ्गीकारात्, यथा वा तुल्यबलविरुद्धोभयसामग्रीभ्यामेकमेव संशयात्मकं ज्ञानं, तथा प्रकृतेऽपि सामग्रीद्वयस्य यौगपद्ये प्रत्यभिज्ञानमेकमेव स्यादिति शङ्कते अथेति। पृथगेव कार्यं = कार्यद्वयमेव। कथञ्चितेति। तत्तत्सामग्रीप्रयोज्यधर्मद्वयावच्छिन्नेत्यर्थः। यादृक् स्वभाव इत्यन्वयः। मिलितत्वं = एकक्षणावच्छेदेन सामानाधिकरण्यम्। परस्परसहकारित्वं = परस्परप्रयोज्यप्रयोजकत्वं। अप्रयोजकत्वात् = एककार्यजननौपयिकरूपासमानाधिकरणत्वात्। परस्परमेलनस्य तादृशसहकारित्वसमानाधिकरणस्यैव कार्यजननौपयिकत्वादिति भावः। अनुभवांशेऽपि संस्कारस्य व्यापारः = संस्कारस्य अनुभवत्वावच्छिन्नप्रत्यभिज्ञां प्रत्यपि जनकत्वं

सहकारित्वं तयोरिष्यते, तदानुभवांशेऽपि संस्कारस्य व्यापारः, स्मरणांशेऽप्यक्षस्येति नियामकत्वाभिमतयोस्तयोरुभयांशे साधारण्यात् स्मृत्यंशेऽप्यनुभूतिरनुभूत्यंशेऽपि स्मरणमिति सुव्यक्तलेपायितं प्रत्यभिज्ञायामनुभूतित्वस्मृतित्वसङ्करेणेति।

नाप्यनुभव एवेति पक्षः, तथा सति तत्तावच्छिन्नस्याभेदाश्रयतायां न संस्कारो नेन्द्रियसन्निकर्षश्चेति तदविषयत्वापातः। न च संस्कारद्वारा प्रत्यासत्त्या सम्बद्धविशेषणतया तद्ग्रहः; क्वचित् 'सोऽयं नवे'ति तर्हि संशयो न स्यात्। दोषविशेषात्तत्र तत्प्रकाशो न सम्बद्धविशेषणत्वादिति चेत्; विनापि संस्कारं दोषवशात्तदापत्तेः। वस्तुप्रकाशिनि च दोषत्वस्याचार्युक्तस्य निरुक्तेः। क्वापि तस्यावस्तुप्रकाशित्वाद्दोषत्वे कथमक्षादेरपि

प्रत्यभिज्ञानिष्ठानुभवत्वस्यापि प्रयोजकत्वमिति यावत्। एवमक्षस्यापि प्रत्यभिज्ञानिष्ठस्मरणत्वप्रयोजकत्वम्। **नियामकत्वेति।** स्मरणत्वानुभवत्वप्रयोजकत्वेत्यर्थः। तयोः = संस्कारेन्द्रिययोः। उभयांशे साधारण्यात् = उभयत्वावच्छिन्नप्रयोजकत्वात्। स्मृत्यंशे = यदवच्छेदेन स्मृतित्वं तदवच्छेदेन। अनुभूतिः = अनुभूतित्वम्। अनुभूत्यंशे = यदवच्छेदेनानुभवत्वं तदवच्छेदेन। स्मरणं = स्मरणत्वम्। **सुव्यक्तेति।** पूर्वं धर्मिविषयकत्वावच्छेदेनैव साङ्कर्यमिदानीं तु तत्तादिविषयकत्वावच्छेदेनापीत्याशयेन सोऽप्रयोगः। यदि तु सन्निकर्षविधया संस्कारस्योपसर्जनीभावः प्राधान्यञ्चाक्षस्येत्येकैव सामग्री, तदाऽक्षानुसारेणैव प्रत्यभिज्ञाया व्यवस्थाप्यत्वादनुभवत्वमेवेति चतुर्थकल्पेऽन्तर्भाव इति भावः।

अभेदाश्रयतायां = अभेदाश्रयताविषयकत्वे। नेन्द्रियसन्निकर्षश्च = नापीन्द्रियसन्निकर्षः, प्रयोजक इति शेषः। तदविषयत्वापातः = तत्तेदन्तावच्छिन्नाभेदस्य प्रत्यभिज्ञानाविषयत्वापातः। अभेदस्य सम्बन्धत्वेनानुपस्थितस्यापि भानमनुभवे तदैव स्याद्यदि तत्प्रतियोगितावच्छेदकीभवत्तत्ताऽनुभवविषयतामासादयेदिति भावः। संस्कारद्वारा = संस्कारघटितया। प्राचीनमते संस्कारस्याप्युपनायकत्वादिदम्। नव्यमते तु तस्यानुपनायकतयोपनयानुरोधेन स्मृतेरेव कल्पनात् तद्घटितैव प्रत्यासत्तिरित्यन्यत्। **सम्बद्धेति।** स्वसंयुक्तमनःसंयुक्तात्मसमवेतेत्यर्थः, तादृशश्च संस्कार इति तद्विशेषणतैव तत्तायामिन्द्रियस्यालौकिकप्रत्यक्षतानिर्वाहकः सन्निकर्ष इत्यर्थः। तद्ग्रहः = तत्ताग्रहः। **न स्यादिति।** निश्चयजनिकाया उक्तप्रत्यासत्तेस्तत्तायां सत्त्वादिति भावः। तत्र = उक्तसंशये। तत्प्रकाशः = तत्ताविशिष्टाभेदभानम्। **न सम्बद्धविशेषणत्वादिति।** संशयीयतत्ताविषयकत्वस्य नोक्तसंस्कारघटितप्रत्यासत्तिप्रयोज्यत्वम्, अपि तु दोषप्रयोज्यत्वमेवेति भावः। तदापत्तेः = तत्ताविशिष्टाभेदसंशयापत्तेः। अत्र—यथा नवीनैर्भ्रमीयलौकिकविषयताया रजतं साक्षात्करोमीत्यनुभवसाक्षिकायाः दोषमात्रप्रयोज्यत्वमुच्यते, ननूपनयप्रयोज्यत्वम्, तत्प्रयोज्यविषयताया अलौकिकत्वात्, तथा संशयीयतत्ताविषयतायाः साक्षात्करोमीत्यनुभवसाक्षिकत्वाभावेन सम्भवदुक्तिकालौकिकताकत्वेन दोषमात्रप्रयोज्यत्वं पूर्ववादिना न वक्तुमुचितम्, अपि तु दोषसहकृतोक्तसंस्कारघटितप्रत्यासत्तिप्रयोज्यत्वमेव, तादृशप्रत्यासत्त्यभावेऽपि च मतान्तरे भ्रमे इव संशयेऽपि संस्कारस्यापेक्षणीयत्वमेव, अन्यथा कोटिद्वयोपस्थित्यसम्भवेन संशयाभावापत्तेरिति नेदं दूषणमित्याशङ्क्याह **वस्तुप्रकाशिनीति।** इमामेवाशङ्कां स्वयमेव "एतेन संस्कारः सहकारिमात्र"मित्यादिग्रन्थेनानुवदिष्यति। इदन्तु द्रष्टव्यम्—तत्ताविशिष्टांशे 'साक्षात्करोमी'तिवद'नुभवामी'तिधियोऽप्यभावेन 'स्मरामी'तिधियश्च सत्त्वेन तदंशेऽनुभवत्वोक्तिरयुक्तैव, तस्मादस्तु प्रत्यभिज्ञायास्तत्ताविशिष्टांशे स्मृतित्वमस्तु वा निरन्तरोत्पन्नाभिज्ञाद्वयादेव सोऽयमित्याद्यभिलापः, प्रत्यभिज्ञानं तु तत्ताद्यनवगाह्येव निर्विकल्पकमभेदमात्रविषयकमभिज्ञाद्वयानन्तरभावीति मतम्, तार्किकमतं त्वनुपपन्नमेवेति। संशयस्य सदर्थ-

तत्र स्यात्, विशिष्टत्वेन तथात्वस्य प्रकृतेऽप्यपरिहारः। नहि विनैव कुतोऽपि विशेषादस्या वस्तुप्रकाशिता, सत्यप्यर्थे दोषादवस्तुन एव प्रकाशे संशयात्प्रेक्षावत्प्रवृत्त्यादेरसम्भवापत्तेः। वस्तुविषयत्वेऽपि दोषादनिश्चयतेति चेन्न; वस्तुनस्तस्यासङ्कीर्णत्वात्तस्य प्रकाशे

विषयकत्वमस्ति नवा, आद्ये सदर्थविषयकज्ञानस्य प्रामाण्यनियमात् तज्जनकस्य दोषत्वं वक्तुमशक्यम्, अन्यथाक्षादेरपि दोषतापत्तेरित्याह वस्तुप्रकाशितेति । सदर्थविषयकज्ञानजनके इत्यर्थः । ननु सन्मात्रविषयकज्ञानस्यैव प्रमात्वं, नचान्यथाख्यातिमते भ्रमेऽतिव्याप्तिः, तत्रालीकस्य संसर्गस्यापि भानात्, संसर्गासत्तां विना व्यधिकरणप्रकारकत्वस्याप्यसम्भवात्, सम्बन्धसम्बन्धिनोरैक्यस्य 'स्वं न स्वीय'मित्यनुभवविरोधेन पराहतत्वात् तथाच संशयेऽप्येकतरकोटेः क्वचित्कोटिद्वयस्यैव वाऽलीक एव संसर्गो भासते इति संशयजनकस्य दोषतोपपत्तिरित्यत आह स्यादिति । संसर्गांशे इत्यर्थः । तस्य = तिमिरादेः ।'स्यादिति । संशयजनकत्वस्य तत्राप्यविशिष्टत्वादिति भावः । नन्वसज्ज्ञानासाधारणकारणतावच्छेदकशक्तिविशेषविशिष्टत्वेनैव नयनादेरवस्तुप्रकाशिता, शक्तिश्च सा दोषाद्याहिता न तु सहजेत्यन्यदेतत्, दोषाणां तु स्वरूपेणैवावस्तुप्रकाशिता, सैव च दोषत्वव्यवहारनियामिकेति न नयनादावतिप्रसङ्ग इत्यत आह विशिष्टत्वेनेति । उक्तशक्तिविशेषविशिष्टत्वेनेत्यर्थः । तथात्वस्य = अवस्तुप्रकाशित्वस्य । प्रकृतेऽपि = तिमिरादावपि । विनैव कुतोऽपि विशेषात् = उक्तशक्तिरूपविशेषं विना । अस्य = तिमिरादेः । शक्तिवादे सर्वस्यापि शक्तिविशेषविशिष्टत्वेनैव जनकत्वात्, तिमिरादेरपि नयनादिवद्दोषत्वासम्भव इत्यर्थः । नच तादृगसहजशक्तिविशिष्टत्वमेव दोषत्वम् तिमिरादेः स्वविषयकप्रमाद्यनाधायकत्वप्रसङ्गात् । एतेनासज्ज्ञानासाधारणकारणतावच्छेदकरूपवत्त्वं दोषत्वम्, असज्ज्ञानानभ्युपगमे चाप्रमात्वमेव कार्यतावच्छेदकमिति परास्तम्, तादृशरूपस्यानुगतस्याभावात्, क्वचिद्दोषस्याप्यपरत्र गुणत्वात् । तदुक्तं प्रामाण्यवादमणौ-"नच जात्यैव कश्चिद्दोषोऽस्ती"ति । एतेन-यथार्थज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकरूपवत्त्वं दोषत्वम्, नच-यथार्थज्ञानप्रतिबन्धकेष्वेव न दोषत्वव्यवहारः, दोषविषयकज्ञानस्याप्रमात्वापत्तिश्चेति-वाच्यम्; घटत्वप्रद्विशेष्यकघटत्वविरुद्धप्रकारकज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकरूपवत्त्वस्य तादृशज्ञानस्थलीयदोषत्वेऽननुगमस्यैव विवक्षास्पदत्वादिति-निरस्तम् तादृशज्ञानव्यक्तीनामपि नानात्वेन तत्तदेकरूपावच्छिन्नदोषाणामप्रसिद्धेः । तादृशरूपाणां नानात्वे तु प्रत्येकमिलितविकल्पानुपपत्तेः । नचैवमननुगमे तत्तत्क्षणसम्बन्धानामेव प्रतिबन्धकताऽस्तु तावतैव प्रकृतसंशयोपपत्तेरिति वाच्यम्; एवं हि सर्वत्रैव तेषामेव प्रतिबन्धकताया वक्तुं शक्यत्वेन प्रतिबन्धकान्तरविलोपापातात्, दोषसमवधानं विना तेषामपि प्रतिबन्धकताया असम्भवदुक्तिकत्वाच्चेति दोषत्वस्य दुर्विवेकत्वमेवेति भावः । संशयस्य सदर्थविषयकत्वाभावपक्षमाशङ्क्याह सत्यपीति । अवस्तुनः = अलीकस्य, तस्य हि सत्त्वेन न भानम्, भाने वा सद्विषयकत्वमावर्जितम्, संशयादपि च सकम्पप्रवृत्त्यादिकं कृष्यादौ सर्वसम्प्रतिपन्नमेवेति भावः । अनिश्चयतेति । अत्र निश्चयत्वं यदि विषयिताविशेषो जातिविशेषो वा निश्चिनोमीतिप्रत्ययसाक्षिकस्तदा तस्य सन्देहसामान्येऽसत्त्वात् 'निश्चयत्वस्याप्रत्यूहत्वादेवे'त्यग्रिमग्रन्थासङ्गतिः । निश्चयत्वस्य संशयान्यज्ञानत्वरूपत्वे तु संशयत्वे एवानिश्चयत्वस्य पर्यवसानेन तस्य सन्देह्मीतिधीसाक्षिकविषयिताविशेषजातिविशेषान्यतरात्मकत्वेऽग्रिमग्रन्थस्यालग्नकतैव, तादृशधियः संशयेऽनपलपनीयत्वादिति तस्यैकधर्मिकविरुद्धानेकप्रकारकज्ञानत्वात्मकत्वेनैवेति तदवच्छिन्नजन्यतानिरूपितजनकत्वमेव दोषत्वमिति भावः । एतादृशसंशयत्वं नैकैककोट्यंशे, अपि तु विरुद्धोभयारोपमात्मसन्निध्यामारोपद्वयस्य प्रसक्तत्वेऽपि ज्ञानकरण-

तदेव संशयैककोटौ प्रकाशितमिति कुतस्तदनिश्चयता । निश्चयार्थस्य च संशयकोटावखण्डने संशये तदभावाधिकग्राहित्वेऽपि निश्चयत्वस्याप्रत्यूहत्वादेव । अभावनिश्चयः कोट्यन्तरं केवलमधिकं स्यात् ।

---

मेकदैकमेव ज्ञानमर्जयतीति नियमेन तुल्यबलविरुद्धोभयारोपसामग्रीसंवलनस्योभयविपयकारोपहेतुतोपेयते इति कोटिद्वयारोपमेकमादायैव निरुक्तानेकप्रकारकज्ञानत्वमिति नीलघटत्वादिवन् संशयत्वस्यार्थसमाजग्रस्तत्वेन कार्यतानवच्छेदकत्वान्न तदवच्छिन्नजन्यताकजनकत्वं दोषत्वमित्यभिप्रायेणाह **वस्तुन इति । असङ्कीर्णत्वादिति ।** धर्मिणोऽन्यतरकोटेर्वा वस्तुनः संशयीयकोटिद्वयासम्बन्धित्वादित्यर्थः । **तदेवेति ।** संशयमात्रस्य भावाभावकोटिकत्वात् स्थाणुर्वा पुरुषो वेत्यस्यापि स्थाणुत्वपुरुषत्वाभावाद्यकोटिचतुष्कावगाहित्वात् संशयैककोट्यंशे एकात्मना वस्तुनो भानसम्भवादिति भावः । वस्तुनः सङ्कीर्णत्वे तु कदाचिदनेकात्मनाऽपि भानसम्भवात् नैककोट्यंशे एकात्मनैव भाननियम इत्युपष्टम्भसङ्गतिः । संशयैककोटौ = संशयैकतरकोट्यंशे, संशयैकतरकोटिविषयकत्वावच्छेदेनेति यावत् । प्रकाशितम् = विषयताश्रयः । **तदनिश्चयतेति ।** एकैककोट्यंशे इत्यादिः । अनिश्चयता = निरुक्तानेकप्रकारकज्ञानत्वम् । उक्तं स्फोरयितुमेव विरोधिकोटिभासकसामग्रीसत्त्वे कथमेकतरकोट्यंशे निश्चयत्वमित्याशङ्कायामाह **निश्चयार्थस्येति ।** यद्विषयकत्वावच्छेदेन निरुक्तज्ञानत्वाभावस्तस्येत्यर्थः, भावाभावान्यतरात्मककोटेरिति यावत् । **संशयकोटावखण्डने इति ।** संशयकोट्यन्तरभानाविरोधिभानकत्वे इत्यर्थः । कोट्यन्तरभासकसामग्र्या बलवत्त्वविरहेणापरकोटिभानाप्रतिबन्धकत्वादिति भावः । अथवा संशयकोटाविषयस्य ग्राहित्वेऽपीत्यनेनान्वयः, संशयैककोट्यंशे इत्यर्थः । संशये इत्येतत्समभिव्याहारेणाखण्डनेइत्यस्य चोक्तार्थकत्वम् । **तदभावेति ।** संशयस्य भावाभावकोटिविषयकत्वे द्वयोरेव परस्पराभावरूपत्वेन तदभावाधिकेत्यनेन कोट्यन्तरलाभः । भावद्वयमात्रकोटिकसंशयस्य प्रामाणिकत्वपक्षे त्वस्योपलक्षणत्वं द्रष्टव्यम्, उक्तसंशयत्वस्य जन्यतानवच्छेदकतायास्तावतापि निर्वाहात् । निश्चयत्वस्य = उक्तसंशयत्वाभावस्य । अभावनिश्चयः = निश्चीयमानोऽभावः, निश्चयत्वावच्छिन्नविषयितानिरूपितविषयताश्रयोऽभाव इति यावत् । अत्रैकस्मिन् विशेष्येऽविरलोत्पन्नविरुद्धकोटिविषयकनिश्चयद्वयमेव संशयात्मकतया प्रभाकरमतवदभिप्रेतमिति तु न भ्रमितव्यम्, ग्रन्थास्वरसात्, "संशये तदभावाधिकग्राहित्वेऽपी"त्यनेन स्फुटं विरोधाच, तुल्यन्यायेन समूहालम्बनस्याप्युच्छेदे द्वित्वादिप्रत्यक्षताविलोपापाताच्चेति । नचैकत्वेऽपि संशयस्य निश्चयत्वोक्तेरसामञ्जस्यं, विरोधविषयकत्वेनैव संशयत्वावश्यम्भावात्, अन्यथा समुच्चयतोऽविशेषापत्तेरिति वाच्यम्; मूलावच्छिन्नो वृक्षः कपिसंयोगी न वेत्यादिसंशयस्याप्येकावच्छेदकावच्छेदेन भावाभावोभयवत्तावगाहिनः सत्त्वेन विरोधविषयकत्वेन संशयसमुच्चयवैलक्षण्योपपादनासम्भवात्, अतएव "क्वचिद्विरोधभानस्यापि तत्सामग्र्यधीनत्वा"दिति शिरोमण्युक्तौ क्वचिदित्यस्य सङ्गतिः, विरोधभानापेक्षणीयस्याव्याप्यवृत्तित्वज्ञानाभावविरोधोपस्थित्यादेरसार्वत्रिकत्वात्, संसर्गतया च विरोधभानस्याप्रामाणिकत्वात् । अथास्तु सन्देह्मीतिप्रतीतिसाक्षिको मानसत्वव्याप्यो जातिविशेषः संशयत्वम्, तच्च पक्षधरमिश्रादिमतेऽव्याप्यवृत्ति वा, अन्यमते व्याप्यवृत्ति कोटिविषयतामात्रनिरूपकत्वावच्छेदकञ्चेत्यन्यदेतत् । अस्तु वा कोटिताख्यविलक्षणविषयतानिरूपकत्वमेव संशयत्वं, तथाच नञर्थसमाजग्रस्ततया असम्भवदुक्तिकत्वेन तदवच्छिन्नजन्यताकजनकतया प्रकृते दोषतोपपत्तिरित्याशयेनाशङ्कते **जातिरिति ।** विषयताविशेषनिरूपकत्वस्याप्युपलक्षणमिदम् । तत्प्रयोजकः = तदवच्छिन्नजन्यतानिरूपितजनकताश्रयः ।

जातिः संशयत्वं तत्प्रयोजकश्च दोष इति चेत्, 'इदं तद्वा नवे'ति संशयकोट्यर्थनिर्देशसमन्वयेन वाशब्दप्रतीतिव्यवहारयोरभावापत्तेः। प्रतीत्या सह वाकारार्थसम्बन्धे 'प्रत्येमि नवे'ति तदापत्तेः। वाकारार्थस्य प्रतीतिगतत्वेऽपि निश्चयत्ववत् 'स्थाणुमानय पुरुषं चे'ति स्थाणुपुरुषगतपाक्षिकलोकव्यवहारानुपपत्तेः। तस्माद्वाकारार्थस्य ज्ञानधर्मत्वे साक्षात्कारित्वादिवद्विषयानन्वयापत्तिरेवेति। न च प्रत्यासत्तौ सत्यामपि प्रत्यासत्त्यपुरस्कारान्मनसा न ग्रहणं तत्र दोषवशादित्यस्तु। दोषे सत्यपि वस्तुनः संस्कारेण,

ज्ञानगतो जातिविशेषो विषयिताविशेषो वा विषयगतविशेषमपास्य न स्यात्. तथाच तस्यावश्यकल्पनीयत्वे तेनैवोपपत्तौ ज्ञानगतविशेषकल्पना न प्रामाणिकी; अथ विषयगतो विशेषो यदि वाकारार्थः, तदा स न विरोधः, तस्य संशयविषयताया अनियमात्, नापि विषयताविशेषः, अनुव्यवसाये एव तद्भानेन 'इदं तद्वा नवे'ति सन्देहाकारानुपपत्तेः; नापि विकल्पः, तस्य विषयताविशेषरूपत्वे उदीरितदोषात्; व्रीहिभिर्यजेत यवैर्वेत्यादिनिश्चयस्थलेऽपि तद्दर्शनाच्च, अन्यादृशस्यापि संशये भानार्हस्य तस्य दुर्वचत्वाच्च, तस्मात्सन्देहीत्यनुभवोपपत्तये जातिविशेषस्य विषयताविशेषस्यैव वा कल्पनं युक्तमिति चेदेवं तर्हि समुच्चयात्संशयस्य विषयप्रयुक्तविशेषाभावे संशये वाकारार्थभानं न स्यात् स्याच्च संशयगततयैव संशयविषयकप्रतीतौ भानमिति प्राहेदं तद्वा न वेत्यादिना। संशयकोट्यर्थकशब्दसामानाधिकरण्येनेति तृतीयान्तार्थः। तदापत्तेः = प्रतीतिव्यवहारयोरापत्तेः। निश्चयत्ववत्प्रतीतिगतत्वेऽपीत्यन्वयः। विषयानन्वयापत्तिः = विषयनिष्ठतया प्रतीत्यनापत्तिः, साक्षात्कृत इत्यादौ तु साक्षात्कारित्वस्य न विषयनिष्ठतया प्रतीतिः, अपि तु साक्षात्कारविषयत्वस्यैवेति भावः। इदमुपलक्षणम्-विषयतागतविशेषस्य दुर्वचत्वमपि द्रष्टव्यम्, तस्याखण्डोपाधित्वे स्वरूपसम्बन्धविशेषत्वे वा प्रतीतिविशेषसाक्षिकत्वेनैव निरूपणीयत्वेनान्योन्याश्रयस्य एवं न स्वीयमित्यनुभवबाधस्य, सम्बन्धानवस्थानस्य चापत्तेरनिर्वाच्यत्वावश्यम्भावात्। एतेन कोटिद्वयप्रकारितयोरवच्छेद्यावच्छेदकभावोपगमस्य संशये समुच्चयवैलक्षण्यायावश्यकत्वात प्रकारितावच्छिन्नप्रकारितानिरूपकत्वमेव तत्र विशेष इति निरस्तम्; न तावत्तादृशविशेषस्य सन्देहीतिप्रतीतौ भानम्, अवच्छेद्यावच्छेदकभावस्यानुभविकत्वे भावाभावोभयकोटिनिष्ठप्रकारतानिरूपितविशेष्यताया ऐक्यकल्पनादिना समुच्चयवैलक्षण्योपपादनस्यान्येषामनवकाशापत्तेः। अपि तु संशयसमुच्चयवैलक्षण्यान्यथानुपपत्त्या तादृशविशेषस्य कल्पनैव, नचावश्यकल्पनीयस्योपपादकस्य सद्भावेऽन्यथानुपपत्तिरुदयमासदयितुमीष्टे, यदा च कल्प्यमानोऽपि तादृशविशेषो नानिर्वाच्यतामतिक्रमितुं प्रभुः, तदा वैलक्षण्यस्यैवानिर्वाच्यतयैवोपपादनं युक्तिमत्, लाघवात्; विशेषं परिकल्प्य तदीयानिर्वाच्यताकल्पने गौरवात्। अतएव कोटिद्वयप्रकारतानिरूपितविशेष्यतयोरवच्छेद्यावच्छेदकभावः संशये, न तु समुच्चये इत्यप्ययुक्तम्, घटतद्भाववद्भूतलमित्यत्र द्वन्द्वानुपपत्तिप्रसङ्गाच्च, एकवाक्यतायै तत्र विशेष्यतयोरवच्छेद्यावच्छेदकभावस्यावश्यकत्वात्। यत्तु-विरुद्धोभयप्रकारतैकविशेष्यताकज्ञानत्वमेव संशयत्वम्, समुच्चये प्रकारताभेदेन विशेष्यताया भेदेऽपि संशयेऽतथात्वादिति; तदसत्। निरूपकभेदस्य निरूप्यभेदप्रयोजकत्वे संशयेऽपि विशेष्यताभेदावश्यम्भावात् अन्यथा तु समुच्चयेऽपि तदसम्भवात्, अर्थापत्तेश्चोक्तदिशैवानुदयात् अनुभवस्य च भेदाभेदयोर्मौनित्वात्। अत्रन्यूनाधिकधर्मावच्छिन्नयोर्विशेष्यतयोरैक्यस्यासम्भवेन शुद्धपर्वतत्वावच्छेदेनाभावप्रकारकस्य नीलपर्वतत्वादिविशिष्टे व्याप्यवत्तावगाहिनः संशयस्य निरुक्तसंशयलक्षणानाक्रान्तत्वेनानुमित्याधायकत्वप्रसङ्ग इत्यपि वदन्ति। एवं विषयतायां विशेषस्य दुर्निर्वचत्वे संशयत्वस्य जातिनापि न मानालिङ्गिता, 'व्यञ्जकोपाधिनियता च जातिरिष्यते' इत्यभिधास्यमानत्वात्, उक्त-

संस्कारस्यात्मना, तस्य मनसा, तस्य च ग्राह्येन्द्रियेण प्रत्यासत्त्यपेक्षणे एव तदर्थप्रकाशनियमोपपत्तेः कः प्रत्यासत्त्यपुरस्कारस्त्वन्मते स्यात्। यदि तु संस्कारप्रत्यासत्तिमनपेक्ष्य तथा सन्दिह्येत तदाऽननुभूय प्रस्मृत्य वा तथा सन्दिह्येत।

वस्तुतस्तु, मनसा संस्काराग्राहिणा, चक्षुरादिना चात्माग्राहिणा तादृशप्रत्यासत्त्या ग्रहणानुपपत्तेः। नियमेन तदिन्द्रियाग्राह्याश्रयकप्रतियोगिकेतरस्य ग्रहणे स्वग्राह्यसम्बद्ध-

रीत्यैवान्योन्याश्रयाच्चेति। दोषवशात्प्रत्यासत्त्यपुरस्कारादित्यन्वयः। अपुरस्कारः = अभिभवः, फलोपधानप्रतिबन्ध इति यावत्। न ग्रहणं = न तत्ताविशिष्टाभेदनिश्चयः। तत्तोपनयनमेव संस्कारघटितप्रत्यासत्तेः फलं, तदुपधानं च निराबाधमेव, अन्यथा सोऽयं नवेति सन्देहाकारानुपपत्तेः, अत एवेदन्त्वविशिष्टेनापि न नयनप्रत्यासत्तिप्रतिबन्धः, अभेदस्तु संसर्गतयाऽनुपनीतोऽपि भातुमलं संसर्गांशे सन्निकर्षानपेक्षणादिति न निरुक्तस्य प्रत्यासत्त्यपुरस्कारस्य सम्भव इत्याह **दोषे इति**। प्रत्यासत्त्यपेक्षणे एव = अप्रतिबद्धप्रत्यासत्तिसत्त्वे एव। **तदर्थेति**। तत्ताविशिष्टार्थेत्यर्थः। प्रत्यासत्त्यपुरस्काराङ्गीकारे बाधकमाह **यदि त्विति**। संस्कारप्रत्यासत्तिमनपेक्ष्य = अप्रतिबद्धसंस्कारप्रत्यासत्तिं विनैव। अननुभवस्थले विशेष्याभावप्रयुक्तो विशिष्टाभावः। विस्मृतिस्थले तु विशेषणाभावप्रयुक्तो विशिष्टाभावः। प्रस्मृत्य = विस्मृत्य। संस्कारघटितप्रत्यासत्त्यभिभवस्य संस्काराभिभवे एव पर्यवसानमिति भावः।

एतावता संस्कारघटितविशेषणतायाः प्रत्यासत्तित्वमभ्युपेत्य संशयानुपपत्तिरभ्यधायि, इदानीं तु तदेव नेत्याह **वस्तुत इत्यादिना**। स एवाहमित्याभ्यन्तरप्रत्यभिज्ञाभिप्रायेण **मनसेति**। संस्काराग्राहिणा = संस्कारग्रहणायोग्येन। स एवायं घट इति बाह्यप्रत्यभिज्ञाभिप्रायेण **चक्षुरादिनेति**। **आत्माग्राहिणेति**। यद्यपि संस्कारग्रहणायोग्यत्वाभिधानमेव प्रकृतोपयोगि तदिन्द्रियसम्बद्धविशेषणतात्वविशिष्टप्रत्यासत्तित्वस्य तदिन्द्रियग्राह्यनिरूपितत्वव्याप्यत्वात्, मनोनयनादिग्राह्यत्वस्य संस्कारेऽसद्भावे मनोनयनादिसम्बद्धसंस्कारविशेषणतायां तद्ग्राह्यनिरूपितत्वाभावप्रयुक्तस्य तादृशप्रत्यासत्तित्वाभावस्य विशेष्याभावनिबन्धनस्याक्षतेः। न च नयनादिसम्बद्धात्मविशेषणतयापि न तत्तादेर्ग्रह इत्यनुशयानस्येयमुक्तिरिति वाच्यम्, तथासति नायनत्वादेराभ्यन्तरप्रत्यभिज्ञायां निषेधस्य पर्यवसानेन सिद्धसाधनापत्तेः, घटः स एवायमिति प्रकृतबाह्यप्रत्यभिज्ञाने तत्ताविशिष्टाभेदविषयकत्वाभावस्यानभिधानापत्तेश्च। तथापि सुखादिप्रत्यक्षस्यात्मविषयकत्वनियमदर्शनात् नायनादिग्रहस्यात्मविषयकत्वाभावे संस्कारविषयकत्वस्य सुतरामसम्भव इत्यभिप्रायेणात्माग्राहित्वाभिधानम्। तादृशप्रत्यासत्त्या = स्वसंयुक्तसमवेतसंस्कारविशेषणतया स्वसंयुक्तसंयुक्तसमवेतसंस्कारविशेषणतया च। संस्कारविशेषणतायां प्रत्यक्षौपयिकप्रत्यासत्तित्वस्य विरहमापन्ने प्रवृत्तस्य तस्यां तद्विवक्षाया असम्भवात्। स्वग्राह्यसम्बद्धविशेषणतायाः ग्रहणे प्रत्यासत्तित्वनियमात् = तत्तदिन्द्रियग्राह्याभिन्नतत्तदिन्द्रियसम्बद्धनिरूपितविशेषणताया एव तत्तदिन्द्रियजप्रत्यक्षौपयिकप्रत्यासत्तित्वात्। तथा च तत्तदिन्द्रियसम्बद्धविशेषणतात्वविशिष्टं तत्तदिन्द्रियजन्यप्रत्यक्षौपयिकप्रत्यासत्तित्वं तत्तदिन्द्रियग्राह्यनिरूपितत्वव्याप्यमित्यर्थः। नन्वेवं कुसुमे सौरभाभावस्य गुडे तिक्तत्वाभावस्य गगने शब्दाभावस्य महति वायावुद्भूतरूपाभावस्य च प्रत्यक्षं न स्यात्, घ्राणादिसम्बद्धविशेषणतया हि तद्ग्रहणं सा च न घ्राणादिग्राह्यनिरूपिता, कुसुमादेर्घ्राणादिग्राह्यत्वाभावात्, न च सौरभाभावः कुसुमवृत्तिः कुसुमवृत्तित्वेनानुपलभ्यमानयोग्यप्रतियोगिकत्वादित्याद्यनुमानेन तद्ग्रहणमिति वाच्यम्; योग्यानुपलब्धिसत्त्वेनेन्द्रियेण तद्ग्रहणे बाधकाभावादित्याशङ्क्य यद्यत्स्वग्राहकेन्द्रियग्रहणायोग्याश्रयकं यथा सौरभादि, तत्तत्प्रतियोगिकेतरविषयकत्वं व्याप्यदलप्रविष्टप्रत्यक्षे विशेषयितुं पृथग-

विशेषणतायाः प्रत्यासत्तित्वनियमात्। अन्यथाऽऽप्यपरमाण्वादौ पृथिवीत्वादेरन्यग्राह्यतया निरस्तस्वरूपायोग्यत्वस्याभावो दृगादिभिर्गृह्येत। नहीन्द्रियविहारदेशेषु निष-

न्तम्। नियमेनेति तु ग्रहणायोग्यत्वस्याग्राह्यपदेनलाभार्थं तद्विशेषणम्, अन्यथा कदाचिन्नयनादिग्रहणाविषयभूतलादिवृत्तिप्रतियोगिकत्वस्यैव घटाभावादौ सत्त्वेन तादृशप्रतियोगिकेतरविषयकत्वविशेषणमप्रसिद्धमेव स्यादिति व्याप्यासिद्धिप्रसङ्गः। नियमेनेत्यतद्बलाद्ग्रहणायोग्यत्वलाभे तु घटादिर्नस्वग्राहकेन्द्रियग्रहणायोग्याश्रयक इति तादृशप्रतियोगिकेतरविषयकत्वं तदभावप्रत्यक्षे निराबाधम्। अथैवमपि रूपस्य स्वग्राहकेन्द्रियग्रहणायोग्याश्रयकत्वाभावेन वायौ तदभावप्रत्यक्षस्य परमाणौ महत्त्वाभावप्रत्यक्षस्य चानुपपत्तिर्नसमाहिता, नचाश्रयपदेन स्वप्रकारकारोपविशेष्यो विवक्षाक्षमः, आरोपस्याभावबुद्धिपूर्वं नियमेनासद्भावात्। तदुक्तं नञर्थवादगादाधर्याम्–"प्रत्यक्षएव प्रतियोग्यारोपस्य हेतुत्वमप्रामाणिकं कुतः शाब्दबोधे तद्धेतुत्व"मिति। तादृशारोपविषयतायोग्यत्वं स्ववच्छेदकमनिरूप्याशक्यनिवेशमिति चेत्तादृशविशेषणस्योपलक्षणतया निवेशे क्षत्यभावात्। व्यभिचारस्यान्ततस्तत्तद्विषयकत्वस्य प्रत्यक्षे विशेषणेनापि वारणसम्भवाच्च। अग्राह्यत्वं ग्रहणयोग्यत्वं तच्च क्वचिन्महत्त्वावच्छिन्नत्वमेवेति वायावुद्भूतरूपाभावप्रत्यक्षोपपत्तिः, क्वचिच्चोद्भूतरूपावच्छिन्नत्वमेवेति परमाणौ महत्त्वाभावप्रत्यक्षोपपत्तिः, क्वचिच्च महत्त्वोद्भूतरूपोभयावच्छिन्नत्वमेवेति न वायौ पिशाचभेदप्रत्यक्षापत्तिरित्यपि वदन्ति। नन्वेवं व्यभिचारवारणेऽप्यप्रयोजकत्वं दुर्वारमेवेतिचेत्तत्राह अन्यथेति। आप्यपरमाण्वादावभावो दृगादिभिर्गृह्येतेत्यन्वयः। निरस्तेति। तथाचात्यन्ताभावप्रत्यक्षापेक्षणीयस्य योग्यप्रतियोगिकत्वस्यासद्भावमादाय नापत्तिवारणोपपत्तिः। यदिचान्योन्याभावसंसर्गाभावोभयस्थलीयानुपलम्भगतं तत्तद्व्याप्येतरतदीयत्किञ्चिदुपलम्भकारणकूटसमवधानमेव योग्यत्वं तदा तदपि पृथिवीत्वाद्यनुपलम्भेऽक्षतमेव। नच पृथिवीत्वप्रत्यक्षं प्रति स्वाश्रयसमवायेन महत्त्वस्य कारणत्वं तस्य चासत्त्वमत्रेति वाच्यम्; एवं सति महति जलेऽपि पृथिवीत्वाभावप्रत्यक्षं न स्यात्, घटादिकमादाय तत्र महत्त्वोपपादनं तु प्रकृतेऽपि समं, पृथिवीत्वाश्रयगतमहत्त्वस्य पृथिवीत्वव्याप्यत्वात्तदितरोपलम्भकसमवधानं तत्रेति यदि तदापि तत्प्रकृते समानमेव। सम्बन्धिसाक्षात्कारस्य सम्बन्धसाक्षात्कारजनकत्वेन संयोगाभावस्य प्रत्यक्षानुपपत्तेश्च, तत्सत्त्वे संयोगिनां घटादेरसत्त्वेन तत्साक्षात्कारस्याप्यसम्भवात्। अतएव प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वमेव योग्यत्वमिति नवीनाः। नच परमाणौ पृथिवीत्वोपलम्भप्रसङ्गासम्भवेनैतादृशयोग्यत्वविशिष्टानुपलम्भविरहादेव प्रकृतापत्तिर्वारणीयेति साम्प्रतम्; आरोपस्याभावबुद्धिहेतुताया निरस्तत्वेन तद्योग्यत्वस्यैव निवेशनीयत्वात् निरुक्तोपलम्भकारणकूटवत्त्वस्य तदवच्छेदकत्वे पुरोदीरितदोषोन्मेषात्। किञ्च घटादौ पिशाचत्वाभावप्रत्यक्षं तावत्तार्किकैरुपेयते तत्र च प्रतियोगिसत्त्वेत्याद्युक्तयोग्यत्वं न सम्भवति प्रतियोगितद्व्याप्यातिरिक्तप्रत्यक्षकारणकूटावच्छिन्नस्यैव प्रतियोगिसत्त्वस्य प्रसञ्जकत्वात् पिशाचत्वप्रत्यक्षस्य चाप्रसिद्धत्वात्, किन्तु तदधिकरणीयत्वप्रसञ्जितप्रतियोगिकत्वमेव पिशाचत्वानुपलम्भे योग्यत्वं, परमाण्वादौ महत्त्वाभावप्रत्यक्षोपपत्तये च प्रतियोगिसत्त्वेत्यादियोग्यत्वमप्यावश्यकमिति गुरुतरयोग्यानुलब्धिद्वयघटितकार्यकारणभावद्वयकल्पनामपेक्ष्य लाघवादभावप्रत्यक्षे क्लृप्तकारणताकविशेषणतायामेव ग्राह्यनिरूपितत्वं निवेशयितुमुचितम्। परमाण्वादौ महत्त्वाभावप्रत्यक्षार्थं मया प्रतियोगिसत्त्वेत्यादियोग्यतायाः कल्पनीयत्वेऽपि योग्यताद्वयवादिनस्तव गौरवं स्फुटमेव। नच–तदधिकरणीयत्वेत्यादियोग्यता न मयापि कल्पनीया, योग्यप्रतियोगिकाभावप्रत्यक्षे एव प्रतियोगिसत्त्वेत्यादियोग्यताया हेतुत्वेन तां विनापि पिशाचत्वाभावप्रत्यक्षोपपत्तेरिति वाच्यम्; परमाण्वादौ महत्त्वाभावप्रत्यक्षस्य मयाप्यन्यथोपपादितत्वेन प्रति-

रमाणुकत्वनियमो युक्ताभ्युपगमः। शब्दाभावप्रत्यक्षतादृशविनये श्रोत्रेन्द्रियविशेषणता सप्तमः सन्निकर्षः, ननु तत्र सम्बद्धविशेषणतेत्यतोऽपि न व्यभिचारः।

नचात्मसंयुक्तमनः प्रति पूर्वानुभूतार्थात्मप्रत्यासत्तिरेव संस्कार इति तदतीन्द्रियत्वं न दोषाय, प्रत्यासत्तेरतीन्द्रियाया इन्द्रियार्थसन्निकर्षस्योपगमादिति स्वीकृते निस्तारः;

---

योगिसन्निकर्षादियोग्यत्वस्यापि मयाऽकल्पनसम्भवात्। एवं सत्ययोग्याधिकरणे पिशाचत्वाभावप्रत्यक्षापादानस्याशक्यसमाधित्वापत्तेश्च, ग्राह्यसम्बद्धविशेषणतायाः प्रत्यासत्तितोपगमे च सिद्धं नः समीहितम्। एतेन—विशुद्धमातापितृयोनिजत्वादिव्यञ्जकधीविरहकाले ब्राह्मणत्वाद्यभावग्रहप्रसङ्गः, ग्राह्यसम्बद्धविशेषणतायाः सत्वादिति योग्यानुपलब्धेः कारणत्वमावश्यकमिति—निरस्तम्; तस्याः कारणतोपगमेऽपि तादृशविशेषणताया उक्तरीत्या आवश्यकत्वात्, ग्राह्यत्वस्य योग्यतारूपस्याननुगमे च ब्राह्मणत्वाद्यभावप्रत्यक्षं प्रति व्यञ्जकविशेषावच्छिन्नत्वरूपयोग्यत्वविशिष्टसम्बद्धविशेषणतायाः प्रत्यासत्तित्वसम्भवाच्चेति भावः। नन्वाप्यपरमाणुगतपृथिवीत्वाभावस्येन्द्रियसम्बद्धविशेषणताविरहादेवाप्रत्यक्षतोपपत्तिरिति ग्राह्यत्वविवक्षा नादरणीयेत्यत आह नहीति। इन्द्रियविहारदेशेषु = इन्द्रियसम्बद्धदेशेषु। युक्ताभ्युपगमः = युक्तोऽभ्युपगमो यस्य सः। पद्यन्तस्य गगने शब्दाभावप्रत्यक्षस्थले व्यभिचारवारणार्थमेव नोपादानमपितु स्थलान्तरे व्यभिचारवारणार्थं, शब्दाभावप्रत्यक्षस्थले निविष्टविशेषणान्तरेणैव व्यभिचाराप्रसक्तेरित्याह शब्दाभावेति। चक्षुषि पृथिवीत्वाभावप्रत्यक्षस्य शङ्कैव नोदियादित्याशयेन श्रोत्रेति। सप्तम इति। सम्बद्धविशेषणतानाममकत्वे एव तात्पर्यं, विशेषणतात्वेनैकीकृत्य तु षष्ठत्वव्यवहारेऽपि न क्षतिः। ननु सम्बद्धेति। नहि संयोगादिना श्रोत्रसम्बद्धे शब्दाभावो विशेषणमपि तु श्रोत्र एव, सम्बद्धत्वस्य तादात्म्यासाधारण्येनाननुगतस्य निविष्टत्वादिति व्यक्तं कुसुमाञ्जलिप्रकाशादौ। यद्यपि स्मृतेरुपनायकत्वमते तस्या मनोग्राह्यत्वेनाभ्यन्तरप्रत्यभिज्ञोपपादनं सम्भवति, तथापि तस्या नयनाद्यग्राह्यत्वेन बाह्यप्रत्यभिज्ञाने ग्राह्यसम्बद्धविशेषणताया असम्भव एव, नच तत्रापि घटादौ नयनादिना ग्राह्ये सम्बद्धे च विशेषणतया तत्ता भासतामिति वाच्यम्; एवं सति तत्र स्मृतेरनुपनायकतापातात्। विशेषणताया वर्तमानत्वनियतत्वेनैतत्कालावच्छिन्ने घटे पूर्वकालावच्छिन्नत्वस्योपलक्षणतासम्भवेऽपि विशेषणताया असम्भवाच्च, अन्यथा विशेषणस्य समानकालीनत्वसंसर्गेण विधेयान्वयित्वात् पूर्वकालस्येदानीं सत्त्वापत्तेः। अतएव स्मृतावपि तत्ताया न विशेषणतासम्भवः, विषयताया अतीतादिसम्बद्धत्वेऽपि विशेषणतानुपपादकत्वात्। वस्तुतस्तु प्रत्यक्षखण्डनादौ वक्ष्यमाणं युक्त्यन्तरमेवोपनयसन्निकर्षबाधकमनुसन्धेयम्। नच समवायाभावयोरेव विशेषणतया ग्रहणमित्यनुपपन्नोऽयं विचार इति वाच्यम्; इन्द्रियसम्बद्धविशेषणतयैव तत्ताभानस्य सविकल्पकवादे मया युक्तत्वात् अतएवोपनयसन्निकर्षस्य विशेषणतायामन्तर्भावः परिशुद्धिप्रकाशेऽभिहितः।

नचेति। निस्तार इत्यन्वयः। आत्मसंयुक्तमनः प्रतीति। आत्मसंयुक्तमनोनिरूपितेत्यर्थः। तथाच मनःसंयुक्तसमवेतसंस्कारः प्रत्यासत्तिः। मनःसंयुक्तत्वादिरूपत्वाभिधानं तु बाह्याभ्यन्तरप्रत्यभिज्ञासाधारण्यानुरोधेन, नयनादिसंयुक्तादिरूपप्रत्यासत्तेराभ्यन्तरप्रत्यभिज्ञासाधारण्यासम्भवात्, मनःसंयुक्तत्वादेश्च तत्राप्यनुप्रवेशात्। अन्यथा प्रत्यासत्तिषट्ककल्पनापातेन गौरवप्रसङ्गात्, निष्प्रयोजनत्वाच्च, लौकिकविषयतानियतचाक्षुषत्वादेरलौकिकविषयताशालिन्यनुपपादनीयत्वादिति भावः। अर्थेति बाह्यप्रत्यभिज्ञाभिप्रायेण। आत्मेत्याभ्यन्तरप्रत्यभिज्ञाभिप्रायेण। अथवा पूर्वानुभूतोऽर्थ आत्मानात्मरूपः, तस्यात्मनश्च प्रत्यासत्तिरित्यर्थः। संस्कारस्यार्थविषयकत्वादात्मसमवेतत्वाच्च निरुक्तप्रत्यासत्ति-

तथासति 'स' इत्यंशे चक्षुरादेः प्रत्यासत्त्यभावात्प्रत्यभिज्ञाया अचाक्षुषत्वापातात् । 'अय' मित्यंशो दृगादिना, तदंशस्तु मनसा गृह्यतां तदेतदभेदस्तु केनेत्युक्तमप्यावर्तते इति। एतेन-संस्कारः सहकारिमात्रमिन्द्रियस्यातिप्रसङ्गनिवारकः प्रत्यभिज्ञायां, तदर्थ इन्द्रियेणासन्निकृष्ट एवोल्लिख्यते विभ्रमार्थवत्, सन्निकृष्टग्राहिता चेन्द्रियस्य सन्निकर्षसहकार्यवश्यम्भावमात्रं, तच्चेदमंशसन्निकर्षादेव स्यात्, नतु सर्वग्राह्यसन्निकर्षसहकारिता-इत्यपि निरस्तम्; सोऽयं नवेति संशयाभावापातेनैवेति । 'तद्द्वारा'मित्यादिस्मृतिरपि चैवमनुभवः स्यात्, मनस आत्मसंयोगसंघट्टनाद्यर्थात्मसन्निकर्षात्संस्काराज्जायमानायास्तस्या इन्द्रियार्थसन्निकर्षजत्वादेव; मनसाऽऽत्मसंयोगादात्मसमवायेन प्रत्यक्षीक्रियमाणैर्ज्ञानादिभिः स्मर्यमाणस्यार्थस्याविशेषादिति ।

लाभः । प्रत्यासत्तिरेवेति । ननु सम्बन्धविशेषणताप्रत्यासत्तिघटको येनोदीरितस्यासिरुपरुध्येतेत्यर्थः। संस्कारस्य प्रत्यासत्तित्वं च विषयतासम्बन्धेन । संस्कार इति । उद्बुद्धसंस्कारबलादेव तत्ताया विशिष्टधीविषयत्वोपपत्तौ मध्ये स्मृतिकल्पनायां प्रमाणाभावादिति भावः । निस्तारः = प्रत्यभिज्ञोपपत्तिः । प्रत्यासत्त्यभावादिति । लौकिकेत्यादिः । अलौकिकप्रत्यासत्तेः सम्भवेऽपि तस्याश्चाक्षुषत्वाद्यनुपपादकत्वादिति भावः । अचाक्षुषत्वापातात् = अचाक्षुषत्वाद्यापातात् । नन्विदन्ताविशिष्टांशे एव चाक्षुषत्वं तत्ताविशिष्टांशे तु लौकिकविषयतानियतचाक्षुषत्वादिकं नेष्टमेवेत्यत आह **अयमित्यंश इति** । तदंशः = तत्ताविशिष्टांशः । तदेतदभेदः = तत्तावच्छिन्नेनेदन्तावच्छिन्नस्याभेदः केनेति । तत्तेदन्तावच्छिन्नाविषयकस्य तादृशाभेदविषयकत्वासम्भवात्, न च चाक्षुषाद्यंशान्य मानसांशस्य च तत्तेदन्तावच्छिन्नविषयकत्वासम्भवे प्रत्यभिज्ञायास्तन्नसम्भवतीति भावः । कथञ्चित्प्रत्यभिज्ञायास्तत्सम्भवे तु सोऽयं नवेति संशयानुपपत्तिरत्र पक्षेऽपि द्रष्टव्या। **इन्द्रियस्येति** । आभ्यन्तरप्रत्यभिज्ञास्थले इदन्ताविशिष्टसन्निकृष्टस्य मनसः बाह्यप्रत्यभिज्ञास्थले च तादृशस्य नयनादेरित्यर्थः । **अतिप्रसङ्गेति** । संस्कारं विनापि प्रत्यभिज्ञानापत्तीत्यर्थः । तदर्थः = तत्ताविशिष्टार्थः । **विभ्रमार्थवदिति** । अन्यथाख्यातिमते रजतं न लौकिकसन्निकर्षसम्भवः, अलौकिकसन्निकर्षस्तु सम्भवन्नपि रजतं साक्षात्करोमीति प्रतीत्यनुपपादक इति भावः । **नतु सर्वेति** । अतएव "सादृश्यस्योभयवृत्तिधर्मस्य किञ्चिद्विशेष्यसन्निकर्षात्प्रत्यक्षेण भानं यावद्विशेष्यसन्निकर्षस्याप्रयोजकत्वा"दित्युपमानमणौ "यत्किञ्चिद्विषयसन्निकर्षजन्यतयैव प्रत्यक्षत्वनिर्वाहा" दिति परामर्शगादाधर्याञ्चोक्तमिति भावः । **पातेनैवेति** । उद्बुद्धसंस्कारसहकृतेन्द्रियादिसत्त्वेन निश्चयस्यैवोत्पत्तुं युक्तत्वात् दोषवद्दुर्विवेकताया अभिहितत्वादभिधास्यमानत्वाच्चेति भावः । अयमेवात्र दोष इति परकीयश्रद्धामनुरुध्यापि संस्कारस्य मनः प्रत्यासत्तित्वे तद्घटकत्वे च दोषान्तरमाह तद्द्वारमिति । एतेनेत्यादिपक्षे तु नायं दोषः, तत्ताविशिष्टेन सन्निकर्षासम्भवात्, आत्मनिष्ठतत्ताविषयकसंस्कारोद्बोधे तु मनःसन्निकृष्टात्मविषयकप्रत्यभिज्ञानस्यैवोत्पत्तेः । मनस इत्यस्य संयोगेऽन्वयः । मनःसंयुक्तात्मसमवेतसंस्कारादित्यर्थः । **मनसेत्यादि** । मनः संयुक्तात्मसमवायेनेत्यर्थः । **अविशेषादिति** । मनःसन्निकर्षस्य संस्कारघटितत्वेन स्मृतेरनुभवत्वाभावे तु प्रत्यभिज्ञाया अपि तन्न स्यात् । ननु संस्कारत्वावच्छिन्नकारणताकत्वेनैव स्मृतित्वं, प्रत्यभिज्ञायास्तु न तथात्वमपि तु तत्तास्मृतिजन्यत्वमिति चेत् उद्बुद्धसंस्कारवशादेव प्रत्यभिज्ञायास्तत्ताविषयकत्वोपपत्तेर्मध्ये स्मृतिकल्पनायां प्रमाणाभावात्, प्राचीनैः सर्वैरनुभवस्य तथैव निर्णीतत्वात् । नचैवमनुभवस्य संस्कारद्वारा प्रत्यभिज्ञाकरणत्वे तस्या ज्ञानकरणकज्ञानत्वेन परोक्षतापत्तिरिति देश्यम्, नहि ज्ञानाकरणकज्ञानत्वं प्रत्यक्षत्वमपि तु जातिरित्यस्य

एतेन-तत्तावच्छिन्नप्रतियोगिकान्योन्याभावविरहः स्वरूपाभेदो वाऽयं भातीत्यपि-निरस्तम्; अन्योन्याभावव्यतिरेकोऽन्योन्यमेव तत्तेदन्तोपाध्यवच्छिन्नयोः स्यात् नच तन्मिलितमेकेन सुग्रहम्। एवं स्वरूपाभेदेऽपि तयोरैक्यं तदनवगाहिना दुरवगममेव। संस्कारोपनीते च विषये यदि ज्ञानमनुभवः स्यात्, स्मृतिरपि कुतो नानुभूतिः? । अथ न संस्काराधीनत्वमात्रेण स्मृतित्वं, किन्त्वनुभवकारणासम्पृक्तसंस्कारजत्वेन. ततश्चाधि-कार्थाक्षसन्निकर्षापेक्षं प्रत्यभिज्ञानमनुभव एव भवति. नतु स्मृतिरिति चेन्न; संस्कारा-सम्पृक्तानुभवकारणजत्वेनानुभवत्वं भवति, प्रत्यभिज्ञानं तु संस्कारसहितानुभवकारण-जं स्मृतिरेवेति वैपरीत्यं किन्न स्यात् ? । 'अन्यत्र न स्मृतिरनुभवकारणसम्पृक्तसंस्कार-जन्ये'ति तु 'नान्यत्रानुभवोऽपि संस्कारसम्पृक्तार्थेन्द्रियसम्प्रयोगजन्य' इति साम्यादेवा-बाधकम्। तदेवं विनिगमनायां प्रमाणाभावात्, स्वयं कल्पितव्यवस्थावैपरीत्येनापि कल्पनासम्भवात्, प्रत्यभिज्ञानमुभयकारणसम्भवात् स्मृतिश्चानुभवश्चेति मन्तव्यम्। तथाच स्मृतित्वाभुक्तमनुभवत्वं जातिरस्तीति प्रत्याशा निरवकाशा। नच विषयांशे स्मृति-त्वानुभवत्वयोर्व्यवस्था कर्तुं शक्यते; तन्निरासस्य निवेदितत्वात्। ततश्च तदेव ज्ञानं तस्मिन्नेवांशे स्मृतिश्चानुभवश्चेत्यापतितेऽपि यदि न विरोधबुद्धिर्भवतस्तदा तदधीने

वक्ष्यमाणत्वात्, पूर्वं च प्रत्यभिज्ञास्थले साक्षात्करोमीतिधीसत्त्वे प्रत्यक्षत्वमेव, ज्ञानकरणकज्ञानत्वस्य परो-क्षत्वेऽप्रयोजकत्वात्। अन्यथा तस्यानुमितित्वं वा शाब्दत्वं वोपमितित्वं वा प्रत्येव प्रयोजकत्वं किमिति न रोचयेः।

अन्योन्याभावविरहः = अन्योन्याभावात्मकभेदस्य विरहः, स्वरूपाभेदः=स्वरूपात्मकभेदस्य विरहः इदन्तावच्छिन्ने संस्कारेन्द्रियाभ्यां भाति, तादृशविरहद्वयस्यैव तत्तेदन्तावच्छिन्नात्मकतया ताभ्यां सम्भूय तद्विषयकज्ञानोत्पादनसम्भवादिति भावः। अन्योन्यमेवेति। भेदाभावाधिकरणे तादात्म्यातिरिक्तसं-सर्गेण प्रतियोगितावच्छेदकव्यवहारवत्तादात्म्येन प्रतियोगिनोऽपि व्यवहारात्प्रतियोगिरूपत्वं भेदाभावस्य सम्भवद्युक्तिकमिति भावः। एकेन = संस्कारेणेन्द्रियेण वा। सम्भूयकारित्वं तु साङ्कर्यस्य सुवचत्वेपत्वा-भिधानेन प्राङ्निरस्तम्। संस्कारत्वावच्छिन्नकारणताकत्वेन प्रत्यभिज्ञानस्य स्मृतित्वमापादयति संस्का-रेति। ज्ञानान्वेषि विपरीतं समन्वयार्थः। अर्थाक्षसन्निकर्षाजन्यत्वे सति संस्कारत्वावच्छिन्नजन्यत्वस्यैव स्मृतित्वसमव्याप्यत्वाद्विशेष्यमात्रस्य तत्साधने सोपाधिकत्वमित्याह अर्थेति। अनुभवकारणं = अर्थाक्ष-सन्निकर्षादि। प्रत्यभिज्ञानेऽनुभवत्वस्य सम्प्रतिपन्नत्वे हि स्मृतित्वव्यापकमर्थाक्षसन्निकर्षाजन्यत्वघटितं स्यादपि, तत्र तस्य विप्रतिपन्नत्वे तु संस्कारत्वावच्छिन्नाजन्यत्वे सत्यर्थाक्षसन्निकर्षव्यासिज्ञानाजन्यत्वम-जन्यत्वस्यैवानुभवत्वप्रयोजकत्वकल्पनसम्भवेन प्रत्यभिज्ञाने नुभवत्वं कुतो नापसार्यतामित्याह संस्का-रेति। इति त्वबाधकमित्यन्वयः। विनिगमनायां = अनुभवत्वस्मृतित्वान्यतरस्य प्रत्यभिज्ञायां निर्णये। स्वयं कल्पितेति। अथेत्यादिनाशङ्कितेत्यर्थः। कल्पनेति। संस्कारसम्पृक्तेत्याद्युक्तकल्पनेत्यर्थः। प्रत्य-भिज्ञानं मन्तव्यमित्यन्वयः। उभयकारणेति। अनुभवत्वस्मृतित्वोभयप्रयोजकेत्यर्थः। विषयांशे = तत्तद्विषयकत्वरूपावच्छेदकभेदेन। व्यवस्था = सामानाधिकरण्योपपादनं। निवेदितत्वादिति। "किञ्च यदा च प्रत्यभिज्ञानं स इत्यंशे स्मृति"रित्यादिग्रन्थे इति शेषः। तत्र हि धर्मिविषयकत्वावच्छेदेन प्रत्य-भिज्ञायां स्मृतित्वानुभूतित्वयोः सामानाधिकरण्यमुक्तं तदेव स्मारयन्नाह ततश्चेति। तस्मिन्नेवांशे = एकधर्मिविषयकत्वावच्छेदेन। विरोधबुद्धिः = अनुपपन्नत्वग्रहः। ज्ञाताज्ञातविषयकत्वावच्छिन्नयोः स्मृ-

तत्रैवार्थे प्रमात्वाप्रमात्वापाते सा तेऽस्तु । एतेन विरोधापत्त्याऽनुभवत्वस्वीकारे बाधकेन स्मृतिव्यावृत्तमनुभवत्वं नामानुगतं साक्षात्कारिज्ञानानुमित्यादिसाधारणमनुभवबलादेव व्यवस्थापनीयमिति प्रतीतिकलहोऽपि निरस्तः । ननु चानुभव एव शरणमिह, प्रत्यभिज्ञाने ह्यनुभवत्वमेवानुभूयते नतु स्मृतित्वं, तेन संस्कारजत्वेऽपीन्द्रियार्थसन्निकर्षाधिकापेक्षयाऽनुभवत्वमेवेति विनिगमनायामपीदमेव प्रमाणम् । अन्यथा प्रत्यभिज्ञानेऽनुभवप्रत्ययो न स्यादिति प्रतीतिकलहेन प्रत्यवस्थेयमिति । न; इदन्तातत्तावभासयोरनुभवस्मरणभागयोः सत्त्वेनानुभवस्यैकपक्षेऽसाधारणीकृत्य प्रमाणयितुमिहाशक्यत्वात् । एतेन स्मृत्यनुभवसङ्करप्रसङ्गेनानुभूतिपदव्यवच्छेद्यं परिप्लुतं मन्तव्यम् । न च वाच्यं प्रत्यभिज्ञानं व्यवच्छेद्यं माभूत्, स्मृत्यन्तरन्तु भविष्यतीति; तस्याप्यनुभूतित्वेन भवनाऽवश्यं स्वीकर्तव्यत्वात्, तथाहि—'घटस्तत्रासी'दित्यादिस्मृतौ पूर्वकालविशिष्टो घटः स्फुरति, नचासौ पूर्वमनुभूता भूतता, या संस्कारेणोपनीयेत, प्रत्युत पूर्वं वर्तमानताया एवानुभूत्या ग्रहणम् ।

---

तित्वानुभवत्वयोरेकावच्छिन्नवृत्तिमत्त्वस्यानुपपन्नत्वादुक्तं यदीति । तदधीने = स्मृतित्वानुभवत्वयोरेकावच्छिन्नवृत्तिप्रयुक्ते प्रमात्वाप्रमात्वापाते इत्यन्वयः । तत्रैवार्थे = स्मृतित्वानुभवत्वीयवृत्त्यवच्छेदकावच्छेदेन । सा = विरोधबुद्धिः । स्मृतित्वस्याप्रमात्वनियतत्वात् स्मृतित्वाप्रमात्वयोरेकावच्छिन्नवृत्तिकत्वं द्रष्टव्यम् । यद्यप्यनुगतमतेर्जातिविषयकत्वनियमस्तथाप्यसति बाधके, नचात्र बाधकासत्त्वं, साङ्कर्यस्यैव बाधकस्य सत्त्वात्, तथाचानुगतमतिसत्त्वेऽपि नानुभवत्वं जातिरित्युपसंहरति एतेनेत्यादिना । स्मृतित्वानुभवत्वयोरेकावच्छिन्नवृत्त्यापत्तिरूपबाधकेनेत्यर्थः । अनुभवत्वस्वीकारे = अनुभवत्वस्य जातित्वास्वीकारे । प्रतीतिकलहः = अनुगतमतिविरोधः । अनुभवत्वमेवेति । तथाच न साङ्कर्यमिति भावः । इदमेव = अनुभवत्वानुभव एव । इदन्तातत्तावभासयोः = इदन्तातत्ताविशिष्टविषयितयोः । अनुभवस्मरणभागयोः = अनुभवत्वस्मरणत्वव्याप्ययोः । प्रत्यभिज्ञानस्यानुभवत्वस्मृतित्वोभयाश्रयतोपपादनं प्रमालक्षणखण्डनेन सङ्गमयन्नाह एतेनेति । प्रत्यभिज्ञानस्य परमते प्रमात्वेऽपि निर्दिष्टदिशा तत्र स्मृतित्वावच्छेदकभावाद्व्यवच्छेद्यान्तःपातः सम्भाव्यते, तथाप्यनुभवत्वस्यापि तत्र सत्त्वेन न तद्व्यवच्छेद इति भावः । भूतता = अनुभूतिविषयत्किञ्चिद्धर्मस्यातीतत्वात्मिका तत्ता, तद्वैशिष्ट्यं चाननुभूतमेव । वर्तमानताया इति । इदन्ताया इत्यर्थः । तथाचेदन्तैव स्वविषयकसंस्कारबलात्तत्तात्मना स्मृतौ भातीति तत्तांशे तस्या भ्रमत्वमेवेति भावः । इदानीं = स्मृत्यव्यवहितपूर्वक्षणे । पूर्वताग्रहणसामग्र्यासम्भेदात् = निरुक्ततत्ताविषयकत्वावच्छेदेनानुभवत्वप्रयोजकसामग्रीसंवलनात् । विशिष्टावगमोऽपीत्यनेनैकज्ञानत्वं स्वीकुर्वता प्रभाकरमतव्यवच्छेदः कृतः, तन्मते प्रत्यभिज्ञानस्यागृहीतासंसर्गकज्ञानद्वयात्मकत्वात् । अथैवं तत्तायाः संस्कारानुपनेयत्वे प्रत्यभिज्ञाने स्मृतित्वाभिधानं प्राचीनं विरुध्यते इति चेत्तत्तांशे स्मृतित्वाभावेऽपि धर्म्यंशे संस्कारजन्यत्वेनैव प्रत्यभिज्ञानस्य तदंशे स्मृतित्वोपपत्तेः, नहि धर्मिणोऽपि पूर्वमननुभवः । तत्ताभानं तु प्रत्यभिज्ञाने संयुक्तविशेषणतया प्रत्यासत्त्या स्मृतौ चेन्द्रियसम्बद्धसंस्कारविशेषणविशेषणतयेति भावः । अत्रेदन्तत्वम्—अनुभवविषयीभूतः पदार्थ एव स्मृतिविषय इति वह्न्यादिरेव तत्ता, वह्नित्वादिकमेव तत्तात्वं, तच्छब्दप्रयोगस्तु संस्कारजत्वप्रयुक्तः, सोऽपि चानियतः, प्रयोगेच्छाविरहे तदप्रयोगात्, आसीद्घट इत्यत्र तच्छब्दानुल्लेखेऽपि तत्ताभानाच्चेति मतं तावदयुक्तं, स वह्निरिति सहप्रयोगानुपपादनात् । अत एवातीतानुभवविषयत्वमतीतधर्मवैशिष्ट्यं वा तत्तेति मतमप्ययुक्तम्, अतीतानुभवविषयः स इत्यादिव्यवहारानुपपत्तेः, तादृशविषयतात्वतत्तात्वयोर्भेदमादाय तदुपपादनस्य च तयोस्तत्राभानेनानुपपत्तेः, तत्ताव-

तस्मादिदानीं पूर्वताग्रहणसामग्रीसम्भेदात् 'सोऽयमिति' प्रत्यभिज्ञानवद्विशिष्टावगमोऽप्यसौ स्मृत्यनुभवात्मक एवाभ्युपगन्तव्यः।

एतेनानुभवसामग्रीसहितः संस्कारोऽनुभवकारणमिति पक्षे एवमाशङ्किते इदमपि दूषणं द्रष्टव्यम्; तथा सति स्मृत्युच्छेदापत्तेः।

## अथानुभवत्वस्य जातित्वखण्डने

## प्रमुष्टतत्ताकस्मृतिखण्डनम्।

नच तदस्ति स्मरणं यत्र सा न प्रकाशते ततश्च व्यवच्छेद्यानुपपत्तिः। यदपि कैश्चिदुच्यते–"दोषवशात्प्रमुष्टतत्तांशं स्मरणं भवती"ति तदपि नोपपन्नम्, तदीयस्मरणत्वे प्रमाणाभावात्। नचानुभवसामग्र्यभावात्पारिशेष्येण स्मृतित्वम्; इन्द्रियार्थसन्निकर्षव्यावृत्त्याऽनुभवसामग्र्यभावात् पारिशेष्येणानुमित्यादेरपि स्मृतित्वापत्ते। सर्वानुभवसामग्र्यभावादिति चेत्, कथं पुनस्तत्तांशशून्यरजतादिज्ञानहेतुसामग्री नानुभवसामग्रीत्यवधारितमायुष्मता। पञ्चप्रमाणीकारणसामग्र्यसम्भवादिति चेन्न, चतुष्प्रमाणीजनकसामग्र्यसम्भवात्पञ्चमी प्रमा किन्न पारिशेष्यात्स्मरणं त्वया व्यवास्थापि ?। कुत्र च प्रतिपन्नं पञ्चप्रमाणीकारणसामग्र्यभावे जायमान ज्ञानं स्मृतिर्भवतीति ?; घटस्तत्रासीदित्यादिज्ञानानामनुभवत्वोपन्यासस्य कृतत्वात्। अथ मन्यसे प्रत्यक्षादिकारणसामग्र्यनुपपत्त्या रजतमात्रस्य च पूर्वमनुभूतत्वेन तद्विषयकसंस्कारसम्भवात् संस्कारस्यैव हेतुताङ्गीक्रियते

'स्यातिरिक्तत्वे वा स्मृतेस्तदवच्छिन्नविषयताकत्वेन कथमनधिगतगोचरत्वम्, तत्ताया अतिरिक्तत्वेन वा किमपराद्धम्, अतएव नातीतसमयसम्बन्धोऽपि तत्ता, स आसीदिति व्यवहारानुपपत्ते, अनागतविषयकानुमित्याद्यधीनस्मृतेस्तत्ताविषयकत्वानापत्तेश्च, अतएव नातीतत्वमपि सा, नापि पूर्वानुभवध्वंस', तस्य घटादाववृत्ते, नहि विषयतासम्बन्धावच्छिन्नप्रतियोगिताकोऽपि स तत्र, ध्वंसीयप्रतियोगितायाः सम्बन्धावच्छिन्नत्वे मानाभावात्। किन्त्वखण्डोपाधिरेव स चानुभूत एव स्मृतिगोचर एवञ्च फलबलादेव तत्तांशे स्मृते संस्कारसीमालङ्घित्वमिति। ज्ञानसामान्यस्य स्वोत्पत्तिक्षणावच्छिन्नार्थविषयकत्वमते तु स्मृतेरनुभूतविषयकत्वं स्फुटमेव, यदाहु —"न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते" इति।

इदमपि = स्मृत्युच्छेदापत्तिरूपमपि। प्रमुष्टतत्ताकस्मृतेरनुभवत्वासम्भवेनानुभूतिपदव्यवच्छेद्यत्वमाशङ्क्याह नचेति। सा = तत्ता। कैश्चित् = अख्यातिवादिभि। दोषवशात् = तत्ताविषयकसंस्कारोद्बोधाभावप्रयोजकवशात्, प्रमुष्टतत्तांशं = अविषयीकृततत्ताकम्। अयम्भाव' = शुक्तिविशेष्यकरजतत्वप्रकारकेच्छादिजनकज्ञानस्य शुक्तिविशेष्यकस्य न रजतत्वप्रकारकत्वं रजतत्वप्रकारकस्य च न शुक्तिविशेष्यकत्वम्, शुक्तौ रजतत्वस्यावर्तमानत्वात् हट्टस्थरजतस्य चासन्निकर्षात्, अलौकिकसन्निकर्षस्य चाप्रामाणिकत्वात्, अन्यथा प्रत्यक्षखण्डने वक्ष्यमाणाल्याऽनुमितिमात्रोच्छेदापत्ते प्रत्यभिज्ञाने तत्तेदन्ताविशिष्टयोरभेदेन संस्कारेन्द्रिययो' समानविषयकतया सम्भूयकारित्वोपपत्तावपि प्रकृते शुक्तिरजतयोर्भेदेन तदसम्भवाच्च, दोषस्याजनकतया तद्बलादसन्निकृष्टमपि भासतामित्यस्यापि वक्तुमशक्यत्वाच्च, तस्माद नायत्यान्यत्राद्दष्टमपि स्मृतेस्तत्ताविषयकत्वं व्यधिकरणप्रकारकेच्छाजनकज्ञानस्य पारिशेष्येण स्मृतित्वमासेदुषो मन्तव्यमेव, एवं शुक्तिविशेष्यके रजतत्वप्रकारकज्ञानत्वस्याप्रामाणिकत्वे च निरुक्तेच्छाधीनप्रवृत्तिप्रत्यपि क्लृप्तनियतपूर्ववृत्तिताकयोरभावाप्रतियोगित्वेनोपस्थितरजतपुरोवर्तिज्ञानयोरेवागृहीतासंसर्गयोर्हेतु

न त्वन्यत् कारणत्वेन कल्प्यते, इन्द्रियार्थसन्निकर्षासम्भवे जायमानस्य त्वनुमानादेर-ननुभूतविषयत्वेन तस्मादुत्पत्तिसम्भव इति तत्कारणं लिङ्गादिकमङ्गीक्रियते ततः प्रमाणा-न्तरासहकृतसंस्कारजत्वं तद्व्यङ्ग्यो वा जातिविशेष एव स्मृतित्वमिति; मैवम्; तत्र कार-णत्वं किमिति नास्त्येव, येन संस्कारजत्वं व्यवस्थाप्यते। तेनार्थेन सह तदाऽस्य सन्निकर्षाभावादसन्निकृष्टस्य च तस्य ज्ञानजनकत्वेऽतिप्रसङ्गान्नेन्द्रियजत्वं तस्येति चेन्न; संस्कारस्यापि केवलस्य तज्जननेऽतिप्रसङ्गतादवस्थ्यात्। सहचरितधर्मदर्शना-दिना सहकारिणा युक्तस्य संस्कारस्य तज्जनने नास्त्यतिप्रसङ्ग इति चेत्; तेनैव सह-कारिणा सहितस्येन्द्रियस्यापि तज्ज्ञानजननेऽतिप्रसङ्गाभावात्। अननुभूतेऽपि तर्हि प्रसङ्ग इति चेन्न; तत्रापि तद्धर्मतानधिगते तद्धर्मवत्यधिगते तस्य संस्कारवतः स्मृत्या-पत्त्या समाधिसाम्यात्। लुप्ततत्साहचर्यदर्शनजसंस्कारस्यापि तथा सति सहचरितरज-

त्वं कल्पनीयं, अनन्यथासिद्धत्वमात्रकल्पनेन लाघवाच्च, शुक्तिविशेष्यकरजतत्वप्रकारकज्ञानस्य कल्पनेऽ-नन्यथासिद्धत्वनियतपूर्ववर्त्तित्वयोः कल्पनापत्त्या गौरवस्य स्पष्टत्वादिति। यत्किञ्चिदनुभवसामग्र्यभाव-विवक्षायामाह इन्द्रियेति। पञ्चप्रमाणीति समाहारे। प्राभाकरमतेऽभावस्य भावानतिरेकादनुपलब्धि-प्रमाणानङ्गीकारादुक्तं पञ्चेति। प्रमाणबलादनुभवत्वेन सिद्ध्यतोऽपि क्लृप्तानुभवानन्तर्भावेन स्मृतित्वोपग-मेऽतिप्रसङ्गमाह चतुष्प्रमाणीति। संस्कारस्यैवेति। रजतं पश्यामीत्यनुभवस्तु दर्शनविषयत्वा-संसर्गाग्रहादेवोपपाद्य इति भावः। अननुभूतेति। नहि पक्षधर्मताबललभ्यसाध्यसिद्धिरप्यनुमानाङ्ग-मिति भावः। तस्मात् = संस्कारात्। लिङ्गादिकमिति ज्ञायमानलिङ्गादेः कारणतामते। अन्यथा तु लिङ्ग-परामर्शादिकमित्यर्थः। "ज्ञातसम्बन्धनियमस्यैकदेशस्य दर्शनात्। एकदेशान्तरे बुद्धिरनुमानमबाधिते" इति वदता प्राभाकरेण शालिकनाथेनापि लिङ्गदर्शनस्यैव कारणताभिधानात्। नैयायिकमतेन प्रत्यभिज्ञा-व्यवच्छेत्तुं प्रमाणान्तरासहकृतेत्युक्तम्, अन्यथा मीमांसकनये ज्ञानद्वयस्यागृहीतासंसर्गकस्यांशिक-स्मृतित्ववतो वैकस्य ज्ञानस्य प्रत्यभिज्ञात्वे तदसङ्गतेः। संस्कारजत्वं = संस्कारत्वावच्छिन्नजनकताकत्वम्। जातिविशेष इति। सम्भवाभिप्रायेणेदम्, अन्यथा जातेः संस्थानव्यङ्ग्यत्वनियमोपगन्तृप्राभाकरमते गुणे जात्यनभ्युपगमेनासङ्गतेः। जातिलौकिकप्रत्यक्षजनकप्रत्यक्षविषयस्यैव जातिव्यञ्जकत्वे च संस्कार-जत्वस्य व्यञ्जकत्वासम्भवेनाप्यसङ्गतिः। अखण्डोपाधित्वाभिधानं तु युज्यते। स्मृतित्वमिति। रजत-ज्ञानमध्यासितुं क्षममिति शेषः। येन = भ्रमस्य कारणत्वासम्भवेन। तज्जनने = स्मृतिजनने। अतिप्रसङ्ग अनुद्बुद्धस्यापि संस्कारस्य स्मृत्युपधायकतापातः। सहचरितेति। वस्तुगत्या रजतत्वतदभावसहचरि-तेत्यर्थः। विपरीतकोट्यनुपस्थितिकालीनसाधारणधर्मदर्शनस्य संशायकत्वाभावादिति भावः। आदिनाऽ-दृष्टचिन्तादिकं न्यायदर्शनगतप्रणिधानसूत्रोक्तं ग्राह्यम्। तेनैवेति। पुरोवर्त्तिसन्निकर्षेणैव साधारणधर्मदर्श-नस्य संस्कारोद्बोधकस्य सम्भव इति भावः। तर्हि = संस्कारानपेक्षायाम्। अननुभूतेऽपि रजतादौ प्रसङ्गः = भ्रमप्रसङ्गः, असन्निकृष्टे इत्यादिः। तेन पुराननुभूतस्यापि सन्निकृष्टत्वे पुरोवर्त्तिवस्त्वन्तरेण कदाचित्ता-दात्म्यभ्रमविषयत्वसम्भवेऽपि न क्षतिः। तद्धर्मतानधिगते = रजतसादृश्यप्रकारकज्ञानाविषये। तद्धर्म-वति = वस्तुतो रजतसदृशे शुक्त्यादौ चाकचक्यादिमत्तयाधिगते सतीत्यर्थः। तथाच वस्तुतः सहचरित-धर्मदर्शनमप्यक्षतमेव। तस्य संस्कारेति। रजतविषयकसंस्कारेत्यर्थः। समाधिसाम्यादिति। रजतसादृश्यप्रकारकज्ञानाव्यवहितोत्तरजायमानरजतविषयकस्मृतिं प्रति तादृशज्ञानस्य कारणत्वं स्वीकु-र्वतोऽक्तापत्तिसमाधानं तादृशज्ञानाव्यवहितोत्तरजायमानरजतविषयकप्रत्यक्षं प्रति तादृशज्ञानस्य कारणता

तावद्रजतप्रतीतिप्रसङ्ग इति चेन्न; तवापि मते तादृशस्य रजतादिसंस्कारवतो रजतादिस्मृतिप्रसङ्गसाम्यात्। तस्माद्यतस्ते कालव्यवधानादितः संस्कारलोपस्तदनुपनिपातस्यापि हेतुत्वोपगमेऽनतिप्रसङ्गात्। तदेवं –

तत्सदृक्प्रत्यभिज्ञानं यत्ते संस्कारबोधकम्।
सहकारि तदेवास्तामत्रस्यातिप्रसक्तिनुत्॥ २८॥

तत्सदृशप्रत्यभिज्ञानं तु स्मर्तव्यस्मरणपूर्वकमित्येतदपि सममेव।

स्वं कृत्य ननुभू विषयकभ्रमापत्तिसमाधानसममित्यर्थः। **लुप्तेति** लुप्तो विनष्टो रजतसादृश्यदर्शनजन्यसंस्कारो यस्य, तस्येत्यर्थः। तथासति = विसंवादिप्रवृत्तिजनकज्ञानस्य संस्काराजन्यत्वे सति। उक्तक्रमेण रजतसादृश्यप्रकारकज्ञानस्य हेतुतोपगमे इति तु नार्थः। तादृशज्ञानस्य सादृश्यदर्शनजसंस्कारलोपेऽसम्भवात्। **सहचरितेति**। पुरोवर्तिसदृशेत्यर्थः। अतएव "संयोगो विप्रयोगश्च साहचर्यं विरोधिते"त्यत्र साहचर्यं सादृश्यमिति व्याचक्षते। तादृशस्य = लुप्तरजतसादृश्यविषयकसंस्कारस्य। **रजतादिसंस्कारेति**। चाकचक्यविषयकरजतादिविषयकसंस्कारेत्यर्थः। रजतसादृश्यविषयकसंस्कारविलोपे चाकचक्यप्रकारकरजतसंस्कारासम्भवात्। तेन पुरोवर्तिनि चाकचक्यवत्तयाऽधिगते तेन रूपेण रजतविषयकसंस्कारवतः स्मृतेरिष्टत्वेऽपि न क्षतिः। **साम्यादिति**। रजतसादृश्यसंस्कारस्य सहचरितधर्मदर्शने रजतसंस्कारोद्बोधकनौपयिकस्यासद्भावेऽपि सहचरितधर्मदर्शनसहकृतरजतसंस्कारस्य रजतस्मृतिहेतुत्वेन त्वयाभ्युपगतस्य सद्भावादिति भावः। व्यवधानादित इत्यादिना रोगादिरुपादेयः। व्यवधानपदं च व्यवधानविशेषपरम्। तदनुपनिपातस्यापि = तदभावस्यापि। अथ संस्कारनिवर्तकानां तदुद्बोधकानाञ्चाननुगमात्तावदनन्तकार्यकारणभावकल्पनप्रसङ्गाद्गौरवम्, मम तूद्बुद्धसंस्कारस्यैव स्मृतिहेतुताकल्पनेन लाघवं सादृश्यसंस्कारनिवर्तकविरहस्याप्युद्बोधेनैवोपक्षयादिति चेन्न; उद्बुद्धत्वस्य प्रतीतिविशेषसाक्षिकजात्यविशेषरूपत्वे विषयविषयिणोः परस्पराधीनवैलक्षण्यकल्पनेन ज्ञप्तावन्योन्याश्रयात्। स्मृतिजनकत्वरूपत्वे स्मृतिजनकत्वेन स्मृतिजनकत्वपर्यवसानेनात्माश्रयात्, अनुद्बुद्धेऽपि स्वरूपयोग्यत्वरूपजनकत्वसत्त्वाच्च, स्मृतिविशिष्टत्वस्य जनकतात्मकत्वविवक्षणे च स्मृतेः पुरा तद्विशिष्टसंस्कारस्य तदुत्पादनियामकस्य विरहेण तदनुत्पत्त्यापत्तेः। उद्बुद्धत्वस्य स्मृतिसामग्रीसमवहितत्वरूपत्वे तु संस्कारस्याप्युद्बोधान्तःपातः, उद्बोधकानामपि चैवं सति सामग्र्यन्तःपातस्य वक्तव्यतया तेषामननुगमेन कार्यकारणभावानन्त्यस्य तवापि प्रसङ्गः, सामग्र्या एकविशिष्टापरेत्यादिरूपतया विशेष्यविशेषणभावे विनिगमनाविरहेण च स प्रसङ्गः। अन्यादृशं चोद्बुद्धत्वं दुर्भणमेवेति भावः। तत्सदृक्प्रत्यभिज्ञानं = तत्सदृशमिदमिति विशिष्टज्ञानं, एतच्चादृष्टादिरूपोद्बोधकान्तरस्याप्युपलक्षणम्। बोधकम् = उद्बोधकम्। **सहकारीति**। उद्बोधकानामननुगमाद्व्यभिचारस्त्वव्यवहितोत्तरत्वनिवेशेनैव वारणीय इति भावः। ननूक्तविशिष्टज्ञानस्य सादृश्यप्रतियोग्यात्मकविशेषणज्ञानजन्यत्वेन चक्रकप्रसङ्गः रजतस्मृतिर्हि संस्कारोद्बोधमपेक्षते, स च रजतसादृश्यज्ञानं तच्च रजतस्मृतिमिति, तत्राह **तत्सदृशेति**। **सममेवेति**। त्वयापि सादृश्यज्ञानस्य विशिष्टज्ञानतया विशेषणज्ञानजन्यतायाः अवश्योपेयत्वाच्चक्रकप्रसङ्गसाम्यात्, विशेषणज्ञानहेतोरेव विशिष्टबुद्धौ विशेषणभाननियामकत्वं चेदेतदपि सममेव। फलीभूतज्ञानादन्यैव सादृश्यज्ञानजनयित्री स्मृतिरिति चेदेतदपि सममेव, संस्कारोद्बोधस्य सादृश्यज्ञानैकनियतत्वाभावेनानवस्थापरिहरणमपि सममेव; यदि तु स्मृतेरव्यवहितप्राक्क्षणे तादृशप्रत्यभिज्ञानमनपेक्ष्यम्, तज्जनकीभूतसंस्कारेणैव सहचरितधर्मदर्शनसहितेन निर्वाहात् तदा सोऽयमिति प्रत्यभिज्ञायामिवेन्द्रियसहका-

तदपि कथं कल्प्यते । प्रत्यभिज्ञाने एव संस्कारस्य सदृशदर्शनादि सहकारि कल्पितं नत्विन्द्रियस्येति चेन्न; प्रत्यभिज्ञाने संस्कारेन्द्रिययोर्द्वयोरपि कारणत्वात् सदृशदर्शनादि सहकृतत्वदर्शनाविशेषात् । अत्र सदृशदर्शनसहकारित्वे संस्कारसहकारित्वस्यापि प्रसङ्गः प्रत्यभिज्ञानवदिति चेन्न; तथा सति तद्वदेव तत्तोल्लेखापत्तेः; सदृशदर्शनादिसहकृतत्वेन च तत्तांशप्रसञ्जने संस्कारजत्वस्योपाधित्वम् । न च सदृशदर्शनसहकारित्वेव

यस्मात् । अथैवं रजतनिर्विकल्पकं रजतसंयोगं विनापि स्यात्, तस्य रजतविशेष्यकत्वाभावादिति चेदत्र तार्किकाः—भ्रान्तिसिद्ध्यन्यथानुपपत्त्यैव निर्विकल्पकविषयताविशेष्यतान्यतरसम्बन्धेन रजतविशिष्टप्रत्यक्षत्वस्यैव कार्यतावच्छेदकत्वोपगमात्, सम्बन्धांशेऽननुगमस्य चादोषत्वात् । घटज्ञानात्पटविशिष्टज्ञानवारणाय विशिष्टधियं प्रति विशेषणज्ञानकारणताया विशिष्यैव विश्रान्ततया निर्विकल्पकस्याप्रामाणिकत्वाच्चेति वदन्ति । रजतविषयकप्रत्यक्षत्वस्यैव कार्यतावच्छेदकत्वोपगमे तु प्राभाकरविजयाय वेदान्तिन एवोक्तरीत्या प्रभविष्णव इत्यवधेयम् । दोषाणां प्रत्यासत्तित्वाभिधानञ्चेदं तार्किकमतेनैव, अनिर्वाच्योत्पत्तिवादे तु लाघवेन रजतत्वादिनैव दोषत्वावच्छिन्नजनकतानिरूपितजन्यताया अवच्छिन्नत्वोपगमात् रजतभ्रमत्वादिना तस्या अनवच्छिन्नत्वात्, विषयं प्रति चेन्द्रियस्याकारणतया तत्प्रत्यासत्तिताया दोषेष्वसम्भवदुक्तिकत्वादिति । एवमुक्तमतद्वयवदनुपदं संस्कारस्य स्मृतेर्वाप्रत्यासत्तित्वमित्यभिधास्यमानं मतद्वयमपि तार्किकाणामेव द्रष्टव्यम् । ननु दोषाणां भ्रमीयलौकिकविषयतानियामकत्वसम्भवेऽपि प्रत्यासत्तित्वासम्भव एव, नहि संयोगेन घटसन्निकृष्टमिन्द्रियमितिधीवत् दोषेण घटसन्निकृष्टमिन्द्रियमितिधीरुन्मेषमासादयतीत्यतः प्रथममेव पक्षं समर्थयते किञ्चेति । प्रमाणान्तरासहकृतस्य = प्रमाणासहकृतस्य । संस्कारस्याप्रमाणत्वादन्तरपदासङ्गतेः । प्रत्यभिज्ञायां संस्कारप्रमाणयोः सम्भूयकारित्वस्यैव दर्शनात् स्मृतिमात्रस्य प्रमाणविनिर्मुक्तसंस्कारजन्यत्वं न स्यात्, अन्यत्रादर्शनस्याप्रयोजकत्वं तु मयाऽपि सुवचमित्याशयः । प्रत्यभिज्ञाने एव = स्मृतौ संस्कारजन्यज्ञानत्वेन प्रमाणजन्यत्वापादनोदाहरणे एव । संस्कारस्य = संस्कारस्यैव । सदृशदर्शनादि = तत्कालैतत्कालावच्छिन्नयोरनुगतधर्मदर्शनादि । नत्विति । इन्द्रियस्योद्बोधकविधया सदृशदर्शनाद्यपेक्षणासम्भवादिति भावः । तथाच यदुदाहरणीकृत्य स्मृतौ प्रमाणजत्वमापाद्यते तदेवोदाहरणीकृत्य स्मृतिविशेषे सदृशदर्शनापेक्षज्ञानत्वेन संस्कारजत्वमप्यापाद्यमिति प्रतिबन्दिः । सदृशदर्शनानपेक्षस्मृतेरप्युद्बोधकान्तरसापेक्षत्वेन तदपेक्षज्ञानत्वेन प्रत्यभिज्ञाविशेषमुदाहरणीकृत्य संस्कारजत्वमापाद्यमिति भावः । उद्बोधकविधयैव सदृशदर्शनाद्यपेक्षेति नियमे प्रमाणाभावमभिप्रेत्याह प्रत्यभिज्ञाने इति । निरुक्तं रजतज्ञानं यदि सदृशदर्शनापेक्षज्ञानं स्यादिन्द्रियजन्यं स्यात्प्रत्यभिज्ञावदित्येव किन्नापाद्यतामिति भावः । तर्हि विनिगमकाभावात् 'उक्तज्ञानं यदि सदृशदर्शनापेक्षज्ञानं स्यात् संस्कारेन्द्रियोभयजन्यं स्यात् प्रत्यभिज्ञानव'दित्यस्तु, तावतापि प्रमुष्टतत्ताकस्मृतेः सेत्स्यमानत्वात्, संस्कारजन्यज्ञानत्वेन स्मृतित्वाङ्गीकारादिति दर्शयति अत्रेति । निरुक्तरजतज्ञाने इत्यर्थः । सदृशदर्शनसहकारित्वे = सदृशदर्शनसहकृतजत्वे, सदृशदर्शनजन्ये इति यावत् । संस्कारसहकारित्वस्य = संस्कारसहकृतेन्द्रियजत्वस्य, संस्कारेन्द्रियोभयजन्यत्वस्येति यावत् । इन्द्रियजत्वमेवापाद्यमित्यत्र विनिगमनामाचष्टे तथासतीति । संस्कारजत्वोपगमे इत्यर्थः । इन्द्रियजत्वोपगमेऽपि 'उक्तज्ञानं यदि सदृशदर्शनापेक्षज्ञानं स्यात् तत्ताविषयकं स्यात् प्रत्यभिज्ञानविशेषव' दित्यापादनस्य सावसरतया तत्ताविषयकत्वापत्तिर्नेन्द्रियजन्यत्वे विनिगमकभावमालम्बितुमीष्टे इति "यत्रोभयोस्समो दोषः परिहारोऽपि वा समः" इति न्यायस्यैवावकाश इत्याशङ्क्याह सदृशदर्शनादिसहकृतत्वेनेति । सदृशदर्शनाद्यन्यतमोद्बोधकापेक्षज्ञानत्वेनेत्यर्थः ।

तत्ताप्रयोजिकेति त्यज्यतां, न संस्कार इति युक्तम्; सदृशदर्शनं परित्यज्य संस्कारे सत्यप्यतथाबोधात्। तथापि सदर्थे प्राप्यकारित्वमिन्द्रियस्य दृष्टं न हातुं शक्यमिति चेन्नः उक्तमत्र यथेन्द्रियस्य प्राप्तिसहकृतस्य ज्ञापकत्वं दृष्टं तथैव संस्कारस्यापि प्रमाणान्तरसहकृतस्य ज्ञापकत्वमुपलब्धमिति तदपि हातुं न युक्तमिति संस्कारस्यापि चेन्द्रियप्रत्यासत्तित्वस्वीकारेण तद्विरहासिद्धेः। तत्तांशमोषकल्पनं च स्वतन्त्रसंस्कारजत्वपक्षे एव यावदधिकम्। कुतश्चायं तत्तांशमोष इति विचारमधिकरोति, पूर्वं वर्तमानादिकालविशेषविशिष्टस्य रजतादेरेकस्मिन्ननुभवे प्रकाशिततया तज्जन्येन संस्कारेणापि तथैवोपनेतुम्-

---

तत्तांशप्रसञ्जने = तत्ताविषयकत्वप्रसञ्जने। ननु तत्तदुद्बोधकापेक्षतत्तत्प्रत्यभिज्ञायां तत्ताविषयकत्वं प्रति संस्कारस्यैव प्रयोजकत्वं ननु तत्तदुद्बोधकस्येत्यत्र विनिगमकस्याभावात् प्रत्युत तत्तदुद्बोधकमन्तरेण संस्कारस्याकिञ्चित्करत्वात् तस्यैव तत्ताविषयकत्वप्रयोजकताया मन्तुमौचित्यात् प्रकृतज्ञाने संस्कारजत्वसत्त्वेऽपि तत्तदुद्बोधकानपेक्षितोपगमेनैव तत्ताविषयकत्वाघटनायास्तत्र सम्भवदुक्तिकत्वात् साधनव्यापकत्वेन न संस्कारजत्वस्योपाधितासम्भव इत्याशङ्कां निराकुरुते नत्वेति। सदृशदर्शनसहकारितैव = सदृशदर्शनाद्यन्यतमापेक्षज्ञानत्वमेव। तत्ताप्रयोजिका = तत्ताविषयकत्वसमनियता। न संस्कारः = न संस्कारजत्वं। त्यज्यतामित्यनुषङ्गः। सदृशदर्शनं = तत्तदुद्बोधकं। उद्बुद्धसंस्कारस्यैव स्मृत्युपधायकत्वादित्यादिः। अतथाबोधात् = तत्ताविषयकबोधस्य प्रकृतरजतबोधस्य चाभावात्। तथा च संस्कारजन्यत्वादिनाप्युद्बोधकस्यावश्यमपेक्षणीयत्वात् तत्त्यागासम्भवात्तस्य तत्ताविषयकत्वसमनैयत्यस्यावर्जनीयत्वादन्यथा प्रकृतज्ञाने तत्ताविषयकत्वस्य दुर्वारत्वादिति परिशेषादतिप्रसङ्गभङ्गाय संस्कारस्मृत्योः समानविषयकत्वेन कार्यकारणभावस्यावश्यकत्वाच्च स्मृतिविषयतां प्रति संस्कारविषयताया एव प्रयोजकत्वेन संस्कारजज्ञानत्वस्यैव तत्ताविषयकत्वसमनैयत्यमिति तत्ताविषयकत्वविरहिणि प्रकृतज्ञाने संस्कारजत्वस्यासम्भवान्न तस्योपाधित्वासम्भवः, न वा प्रकृतज्ञानस्य स्मृतित्वसिद्धिरिति भावः। प्रत्यासत्त्यन्तरं वक्तुमुक्ते एव शङ्कासमाधाने अनुवदति तथापीत्यादिना। सदर्थे = प्रकृतज्ञानसमानकालिके। एतच्च प्रत्यभिज्ञायां तत्तांशे व्यभिचारं परिहर्तुम्, परन्त्वेवमपि नामांशे व्यभिचारस्यापरिहाराद्वीतिरुक्तेर्वादर्तव्यापादनस्येति। संस्कारस्यापीति। संस्कारस्य स्मृतेर्वेत्यर्थः। चकारस्य तद्विरहासिद्धेरित्यन्वयः। तदा प्रत्यासत्तिपरामर्शः। सम्बद्धविशेषणतैव प्रत्यासत्तिर्न तु प्राप्यसम्बद्धविशेषणता, आप्यपरमाणौ पृथिवीत्वाभावप्रत्यक्षस्य प्रतियोगिसत्त्वप्रसञ्जनेत्यादियोग्यताविशिष्टानुपलम्भाभावेनैव वारणसम्भवादित्याशयः। तत्त्वं तु निवेदितमेव। न च संस्कारस्य रजतविशेष्यकत्वादिन्द्रियेण शुक्तिविशेष्यकप्रत्यक्षजनकेन कथं सम्भूयकारिता, प्रत्यभिज्ञायां संस्कारस्य स्वसमानविशेष्यकप्रत्यक्षजनकेन्द्रियेणैव सम्भूयकारित्वदर्शनादिति देश्यम् समान विशेष्यकत्वाभावेऽपि फलबलेन समानविषयकत्वेनैव सम्भूयकारित्वकल्पने बाधकाभावादित्याशयात्। तत्तांशमोषकल्पनं = तत्ताविषयकत्वाभावकल्पनं। स्वतन्त्रसंस्कारजत्वपक्षे = निरुक्तरजतत्वप्रकारकज्ञानस्याक्षानपेक्षसंस्कारजत्वे, स्मृतित्वपक्षे इति यावत्। तेन प्रत्यभिज्ञायामक्षापेक्षसंस्कारजन्यायामपि तत्ताविषयकत्वदर्शनेनात्र तदभावकल्पनेन साम्येऽपि नासङ्गतिः। अननुभूयमानस्मृतित्वकल्पने एव तावद्गौरवम्, तत्परिकल्प्य तत्ताविषयकत्वाभावकल्पने तु महद्गौरवमिति सूचनाय यावत्पदम्। स्मृतेरन्यत्र तत्ताविषयिकाया एव दृष्टत्वात्। प्रत्यक्षत्वं तु तत्रानुभविकम्, तत्ताविषयकत्वानियतं चेति मम न गौरवमिति भावः। विचारमधिकरोति = विचारार्हम्। वर्तमानादीति। अतीतानागतविषयकानुमित्यधीनस्मृतेरपि सद्भावादादिपदम्। अनुभूतिविषयस्यैव कालादेस्तत्तात्वमिति

चितत्वात्, प्रत्यभिज्ञायां तथैव फलदर्शनात्। दोषवशात्तत्तांशमोष इति चेन्न; विषयसम्बन्धस्य स्वभावत्वेन संस्कारे तदलोपात्। दोषात्स्मृतौ तथेति चेत्; कः पुनरसौ दोषः? यस्माद्भ्रान्त्युत्पत्तिः परेषामिति चेत्, तर्हि 'तद्रजताविशिष्टमिदं रजत'मित्यत्र, 'सैव रजतव्यक्तिरिय'मित्यत्र वा, 'पुनस्तदेवं रजतमुपस्थित'मितीह वा, सामान्यत एव रजतस्य तदापि परामृष्टस्य भ्रान्तौ तत्तांशमोषः स्यात्, दोषस्य विद्यमानत्वात्। अन्यथा 'इदं रजत'मित्यंशेऽपि तस्मिन् ज्ञाने तत्तांशमोषो न स्यादित्यास्तामियं प्रसक्तानुप्रसक्तिः। इत्यनुभवत्वस्य जातित्वखण्डने प्रमुष्टतत्ताकस्मृतिखण्डनम्।

नच प्रत्यभिज्ञा नाम स्मरणानुभवाभ्यामन्य एव प्रकार इति वाच्यम्; अननुभवत्वेनाप्रमात्वापातात्। नचैवमेवास्त्विति वाच्यम्; अक्षणिकत्ववादिना स्थिरसिद्धौ प्रमात्वेनोपन्यस्तत्वात्, ईदृशप्रसिद्धलक्ष्यत्यागेन च लक्षणोपपादनेऽनियमः प्रसज्येतेति।

---

मतेनेदम्, अतातानुभवविषयत्वं तत्ता, तच्चानुभवस्य स्वप्रकाशतया तद्विषय इति प्रभाकरमतेऽपि संस्कारस्य तद्विषयकस्य तदुपनायकत्वध्रौव्यमेव। तत्तांशे स्मृतेरज्ञाततज्ज्ञापकत्वमते तु नायं विचारः, प्रमोषवादिना तदनङ्गीकारादिति। विषयसम्बन्धस्य = सविषयकत्वस्य। स्वभावत्वेन = संस्कारत्वव्यापकत्वेन। तदलोपात् = तत्ताविषयकत्वाभावासम्भवात्, अनुपेक्षात्मकनिश्चयेन स्वीययावद्विषयविषयकसंस्कारस्योत्पाद्यत्वादिति भावः। तथा = तत्ताविषयकत्वाभावः। परेषां = भ्रान्त्यभ्युपगन्तॄणां, प्रमोषवादिना तदनभ्युपगमात्। विपरीतव्यवहारजनकज्ञानत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदको धर्मो दोषत्वं तद्वत्त्वं च प्रमोषकस्येत्यर्थः, तेनेन्द्रियादेरदोषस्य भ्रान्त्युत्पादकत्वेऽपि नासङ्गतिः। अविशिष्टं = अविलक्षणम्। उपस्थितम् = पुरोवर्ति जातम्। सामान्यत इति। पुरोवर्तितादात्म्येन प्रतीयमानरजताविलक्षणरूपेणेत्यर्थः। तद्विलक्षणरूपेण प्रतीतावुक्तभ्रमाणामसम्भवात्। तदा = तच्छब्देन परामृष्टस्यापि। अविरुद्धत्वप्रदर्शनाय तत्ताविषयकत्वाभावस्य। इत्यंशेऽपि = इत्याद्यंशेऽपि, तस्मिन् ज्ञाने = उक्तज्ञानेषु। तत्तांशमोषो न स्यादिति परमते, स्वमते तु भ्रमत्वं न स्यादिति द्रष्टव्यम्। आद्योऽवैलक्षण्यस्य भ्रमः, द्वितीयोऽभेदस्य, तृतीयः पुरोवृत्तितायाः इति विशेषमादायैवानेकविधभ्रमोदाहरणम्, दोषस्य तत्ताविषयकत्वाभावप्रयोजकतायामन्वयव्यभिचारस्यैकेनैव प्रतीत्युपपत्तेरिति। दोषत्वस्यानुगतत्वे पित्तादिनिष्ठतदवच्छिन्नजनकतानिरूपितजन्यतावच्छेदकता न विपरीतव्यवहारजनकज्ञानत्वेऽभ्युपगन्तुमुचिता अपि तु भ्रमत्वे एव लाघवात्, भ्रमत्वस्य जातिविशेषरूपताभ्युपगमे तु नितरामिति तादृशजन्यजनकभावबलादपि भ्रमात्मकज्ञानसिद्धिः। नच—व्यवहारगतं वैपरीत्यं न तदभाववति तत्प्रकारकत्वं वाच्यम्, अपि त्वनुगतव्यवहारबलादनुगतमेवेति तदवच्छिन्नैवोक्तजन्यतेति—वक्तव्यम्; त्वन्मते दोषस्य कारणताया अनङ्गीकृतत्वेन दोषसमवहितज्ञानस्यैव विपरीतव्यवहारजनकत्वेन च यथार्थव्यवहारस्थले ज्ञानस्यैव कारणतायाः क्लृप्तत्वेन च व्यवहारगतधर्मेण दोषत्वावच्छिन्नजनकतानिरूपितजन्यताया अवच्छिन्नत्वासम्भवात्, व्यवहारे वैपरीत्याभ्युपगमे ज्ञानगतवैपरीत्येऽकारणकत्वप्रद्वेषानौचित्याच्चेत्यभिप्रेत्याह इत्यास्तामिति। प्रमात्वखण्डनप्रसक्तं प्रत्यभिज्ञाखण्डनं तदनुप्रसक्तिश्च प्रमुष्टतत्ताकस्मृतिखण्डनस्येत्यर्थः। इति शारदायामनुभूतित्वस्य जातित्वखण्डने स्मृतेः प्रमुष्टतत्ताकत्वखण्डनम्।

'स्मरणानुभवाभ्या'मित्युक्त्या निरस्तं प्रकारचतुष्टयमेव सङ्गृहीतम्। प्रमात्वेनेति। "कुतः पुनः स्थिरसिद्धिः? प्रत्यभिज्ञानात्" "पूर्वापरकालीनाभेदावगाहिप्रत्यक्षमेव स्थैर्ये प्रमाण"मिति बौद्धाधिकारदीधित्यादावभिहितत्वादिति भावः। अनियमः = सर्वत्रैव सङ्ग्रहीतुमशक्यलक्ष्याणामलक्ष्यत्वोपगमः।

तस्माज्ज्ञानिवाचिनोऽनुभवपदस्य स्मृतितो व्यवच्छेदार्थमुपादानमिति सर्वथाऽनुपपन्नमिति। इति खण्डनखण्डखाद्येऽनुभवत्वस्य जातित्वखण्डनम्।

## अथ स्मृत्यन्यत्वखण्डनम्।

नापि स्मृत्यन्यत्वमनुभवार्थः, नापि स्मृतिलक्षणरहितत्वम्, उक्तक्रमेण स्मृत्यनुभूतिसङ्करस्य दर्शितत्वेन व्यवच्छेदकत्वानुपपत्तेः। इतोऽपि न स्मृत्यन्यत्वमनुभवार्थः, तथाहि—स्मृत्यन्यत्वं यत्किञ्चित्स्मरणान्यता वा, सर्वस्मृतिव्यक्त्यन्यता वा, स्मृतित्वरहितत्वं वा, अभिप्रेतम्। प्रथमे तु स्मृत्यन्तरव्यतिरेकात्स्मृत्यन्तरमप्यनुभूतिः स्यात्, नहि यतो व्यतिरिक्ता स्मरणव्यक्त्यन्तरादेका स्मृतिव्यक्तिस्तत्स्मरणमेव न भवति येन तदन्यत्वं न स्मृत्यन्यत्वं स्यात्। नापि द्वितीयः, मदीयादिस्मृतिव्यक्तिभ्यो हि भवता कथङ्कारं व्यतिरिक्तत्वमवधारणीयं प्रमायाः ?, तासां भवता प्रत्येतुमशक्यत्वात्। तथाहि-न तावत्परकीयज्ञाने परस्यास्मादृशोऽध्यक्षसम्भवः; नाप्यनुमानार्थापत्ती, लिङ्गानुपपद्यमानयोः सर्वथार्वाग्दृशा प्रत्येतुमशक्यत्वात्; नापि शब्दः, सर्वत्र तस्यासम्भवात्। उपमानाद्यसम्भवोऽपि स्फुट एव, ततः कथं सर्वाभ्यः स्मृतिव्यक्तिभ्यो व्यतिरेको निरूप्यः प्रमाया इत्यवबोधादसिद्धिर्लक्षणस्य। न च वाच्यं स्मृतित्वेन सर्वाः स्मृतिव्यक्तयः सर्व-

तस्मात् = अनुभूतित्वस्य जातित्वासम्भवात्। जातिवाचिनः = ज्ञानत्वव्याप्यजातिविशेषावच्छिन्नशक्यताकस्य। इति खण्डनशारदायामनुभूतित्वस्य जातित्वखण्डनम्।

स्मृत्यन्यत्वं = स्मृत्यन्यज्ञानत्वम्। रहितत्वं = रहितज्ञानत्वम्। सङ्करपदमभेदपरं, तथा च स्मृतेरज्ञातज्ञापकात्मकत्वस्येत्यर्थः, स्मृत्यनुभूतिपदं वा भावपरम्। व्यवच्छेदकत्वानुपपत्तेरिति। स्मृतिमात्रस्य तत्तांशेऽज्ञातज्ञापकत्वस्थितौ यदि प्रमालक्षणलक्ष्यत्वं तदा तत्र स्मृत्यन्यत्वस्मृतिलक्षणरहितत्वविरहेणाव्याप्तिः, अव्याप्यवृत्तिभेदात्यन्ताभावयोस्तत्राभ्युपगमे तु व्यर्थमनुभूतिपदम्, भ्रमभिन्नज्ञानमात्रस्यैव लक्ष्यत्वेन तत्त्वविषयकज्ञानत्वस्यैव लक्षणतौचित्यात्। यदि तु तस्य न प्रमालक्षणलक्ष्यता, न वा तत्र स्मृत्यन्यत्वादिकं तदाप्याह इतोऽपीति। सर्वेति। सर्वस्मृतिव्यक्तिप्रतियोगिकभेदकूटवत्त्वमित्यर्थः। तत्तत्स्मृतिप्रतियोगिककतिपयभेदकूटाधिकरणत्वात्स्मृतिविशेषस्यापीत्यतः सर्वेति। सर्वस्मृतीनामपि स्मृतित्वमात्रावच्छिन्नप्रतियोगिताकभेदस्य तादृशभेदसमुदायस्य वा स्मृतिर्नेति प्रतीतिविषयस्य विशिष्टवैशिष्ट्यबोधमर्यादामनतिशयानस्य स्मृतित्वप्रकारकधीजननीकबोधविषयतामासेदुषः सुप्रतिपदत्वेनोपरितनखण्डनासाङ्गत्यमित्यतो व्यक्तिपदं भेदाय तत्तद्विशेषधर्मावच्छिन्नप्रतियोगिताकत्वं समर्पयितुम्। 'अस्मादृशः' 'अर्वाग्दृशा' इति सर्वज्ञं व्यवच्छेत्तुम्। ननु स्मृतित्वमात्रावच्छिन्नप्रतियोगिताकभेद एव विवक्षणीयः, न च तदभावबोधे तज्ज्ञानहेतुतायां तादृशभेदबोधस्यापि यावत्प्रतियोगिज्ञानाधीनत्वेनोक्तखण्डनं सावकाशमिति वाच्यम्; तादृशभेदबोधार्थं यावत्प्रतियोगिज्ञानस्य स्मृतित्वेनैवापेक्षणीयत्वात्तस्य च सामान्यलक्षणप्रत्यासत्त्या सौलभ्यादिति प्राचीनमतमनुसरन्तीं शङ्कां निराचष्टे नचेति। एकं प्रमेयं प्रत्यक्षयतः = प्रमेयवदितिज्ञानवतः। सार्वज्ञ्यं = सर्वसंशयविरोधिज्ञानम्। अस्मच्चेतसि विपरिवर्तते = अस्मदीयमानसबोधविषयः, तादृशसार्वज्ञ्यवतः 'परकीयज्ञानविषयो घटो नवे'ति संशयो न स्यादिति यावत्, तादृशसंशयं प्रति घटत्वप्रकारकनिश्चयस्यैव विरोधित्वात् 'प्रमेयव'दिति ज्ञाने च प्रमेयत्वेन रूपेण घटत्वस्य मतुपोल्लिख्यमानघटानुयोगिकवैशिष्ट्यप्रतियोगितया भासमानत्वेन भासमानवैशिष्ट्यीयभासमानप्रतियोगितात्मकप्रकारतायास्तत्राक्षतत्वेन तादृशज्ञानस्यापि घटत्वप्रकारताकनिश्चयत्वेनोक्तसंशयवि-

कालसर्वपुरुषसम्बन्धिन्यः स्वात्मीयां स्मृतिव्यक्तिं प्रत्यक्षयता प्रत्यक्षादेवावगम्यन्ते सामान्यलक्षणयेन्द्रियप्रत्यासत्त्या व्याप्तिग्रहणकाले इव व्याप्यव्यापकव्यक्तय इति; दृष्टान्तदार्ष्टान्तिकयोर्दोषग्रस्तत्वात्, तथा सत्येकं प्रमेयं प्रत्यक्षयतः प्रमेयत्वसामान्यप्रत्यासत्त्या विश्वमेव प्रत्यक्षं स्यात्, एवमभ्युपगच्छतश्च श्रद्दधीमहि ते सार्वज्ञ्यमिदं यदि जानासि किमस्मच्चेतसि विपरिवर्तत इति ।

---

रोधितायाः सम्भवात् । एवं सामान्यज्ञानस्य प्रत्यासत्तित्वे तदनन्तरं 'इमामेव व्यक्तिं जानामि, न त्वन्या'मित्यनुभवविरोधमपि वदन्ति । व्याप्तिग्रहादिकं त्वन्यथैवोपपद्यते इत्यन्यत्र निरूपितम् । अधिकं त्वनुमानखण्डनशारदायां वक्ष्यते । ननु प्रतियोगिविशेषिताभावज्ञानं प्रति यावत्प्रतियोगिज्ञानत्वेन हेतुतायां गौरवेण मानाभावेन च प्रतियोगितावच्छेदकप्रकारकज्ञानस्यैव हेतुतया न स्मृतिसामान्यान्योन्याभावप्रतीत्यसम्भव इति चेन्न; स्मृतिसामान्यान्योन्याभावस्य दुर्वचत्वात्, तथाहि—अनाहार्याप्रामाण्यज्ञानानास्कन्दितयादृशभेदत्वावच्छिन्नप्रकारताकनिश्चयत्वमभेदसम्बन्धावच्छिन्नस्मृतित्वावच्छिन्नप्रकारताकानाहार्यबुद्धित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्ति तादृशभेदत्वावच्छिन्नाश्रयत्वं स्मृतिभिन्नत्वम्, अभेदस्य सम्बन्धत्वाभ्युपगमे सम्बन्धानवच्छिन्नत्वमेव प्रकारतायामुपादेयमिति तावदयुक्तम्; अप्रामाण्यग्रहस्याप्रामाण्यग्रहास्कन्दितस्याकिञ्चित्करत्वेन तत्राप्यप्रामाण्यग्रहानास्कन्दितत्वस्य निवेश्यतया तद्घटकीभूताप्रामाण्यग्रहस्याप्यप्रामाण्यग्रहास्कन्दितस्याकिञ्चित्करतया तत्राप्यप्रामाण्यग्रहानास्कन्दितत्वस्य निवेशेऽनवस्थानात् । स्मृतिभेदनिश्चये सत्यपि यद्यदप्रामाण्यज्ञानव्यक्तिसत्त्वे स्मृत्यभेदबुद्धिर्न प्रतिबध्यते तत्तद्व्यक्तिविरहकूटविशिष्टत्वनिवेशे तादृशव्यक्तीनामानन्त्यादसर्वज्ञदुर्ग्रहत्वप्रसङ्गात् । अनाहार्यत्वस्याहार्येऽपि यत्किञ्चिदाहार्यभेदादिकमादाय सत्त्वेन तादृशनिश्चयत्वस्य प्रतिबन्धकत्वातिरिक्तवृत्तित्वाच्च । तत्तदिच्छाविरहकूटवैशिष्ट्यनिवेशे चेच्छाव्यक्तीनामानन्त्येनासर्वज्ञदुर्ज्ञेयत्वमेव । प्रकारतायामिच्छाप्रयोज्यत्वाभावनिवेशेऽपि विशेषोभयाभावादिकमादाय दोष एव । इच्छाप्रयोज्यत्वत्वातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकत्वोक्तावपि प्रतियोगितायां तादृशधर्मावच्छिन्नत्वघटोभयाभावं, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकं 'इच्छाप्रयोज्यत्वत्वेन घटो नास्ती'त्यभावञ्चादाय दोषतादवस्थ्यमेव । अथेच्छाप्रयोज्यत्वत्वगतैकत्ववृत्तिप्रतियोगिताकाभाववत्त्वं विवक्षणीयम्, प्रतियोगितायामेकत्ववृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्वनिरूपकानुयोगितानिरूपितनिरूपकतानवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभ्याम् । घटत्वेनेच्छाप्रयोज्यत्वाभाववारणायाद्यः सम्बन्धः । इच्छाप्रयोज्यत्वत्वेन घटाभाववारणाय द्वितीय इति चेन्न; इच्छाप्रयोज्यत्वत्वघटत्वाभ्यामिच्छाप्रयोज्यत्वाभावमिच्छाप्रयोज्यत्वत्वेनेच्छाप्रयोज्यत्वघटोभयाभावञ्चादाय तथापि दोषात्, इच्छाप्रयोज्यत्वत्ववृत्तित्वविशिष्टावच्छेदकत्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वस्येच्छाप्रयोज्यत्वत्वगतैकत्वे निराबाधत्वात् ।

नचोक्तसम्बन्धद्वयघटिका पर्याप्तिरवच्छेदकतात्वावच्छिन्नप्रतियोगिताका, इच्छाप्रयोज्यत्वत्ववृत्तित्वविशिष्टावच्छेदकताप्रतियोगिका पर्याप्तिस्तु न तथा, अपितु तादृशवृत्तित्वावच्छिन्नप्रतियोगिताकैव, लाघवादिति वाच्यम्; एवं सति 'तादृशवृत्तित्वविशिष्टावच्छेदकतावदिच्छाप्रयोज्यत्वत्व'मिति प्रतीत्या पर्याप्तिसंसर्गावच्छिन्नवृत्तितायाः वृत्तित्वावच्छिन्नाया एवावगाह्यत्वेनात्माश्रयस्य दुर्वारत्वात् । अतएव—अयं ब्राह्मण एतद्ब्राह्मणवृत्तित्वविशिष्टब्राह्मणत्ववान् एतद्ब्राह्मणवृत्तित्वविशिष्टपदार्थत्ववानित्यादिप्रतीतिविषयीभूतवृत्तिता वृत्तितावच्छिन्नैवेति—निरस्तम् । नचाद्यसम्बन्धे निरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकतायाः अनिरूपिका निरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठाव-

च्छेदकतायाश्च निरूपिका प्रतियोगिता प्रवेश्या, एवं द्वितीयसम्बन्धेऽपि निरूपकतानिष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकताया अनिरूपिका निरूपितत्वसम्बन्धावच्छिन्ननिरूपकतानिष्ठावच्छेदकतायाश्च निरूपिका प्रतियोगिता निवेश्या, तथा चोक्ताभावद्वयमादाय न दोषः, इच्छाप्रयोज्यत्वत्ववृत्तित्वविशिष्टावच्छेदकतात्वावच्छिन्नप्रतियोगितायां उक्तावच्छेदकताभिन्नतादृशवृत्तित्ववैशिष्ट्यनिष्ठावच्छेदकतानिरूपकत्वादिति साम्प्रतम्; तादृशप्रतियोगितायामपि तादृशवृत्तित्ववैशिष्ट्यनिष्ठावच्छेदकतानिरूपकत्वघटोभयाभावमादाय निरुक्तानिरूपकत्वस्य सम्पादनीयत्वात्, निरूपकत्वाभावस्य निरूपकत्वत्वेतरधर्मानवच्छिन्नप्रतियोगिताकाभावत्वेन विवक्षणेऽपि तादृशधर्मावच्छिन्नत्वघटोभयाभावं प्रतियोगितायामादाय निरूपकत्वघटत्वेन घटाभावादिकमादायातिप्रसङ्ग एवेति तत्तद्वारकविशेषणानां प्रक्षेपस्यावश्यकत्वे निर्दुष्टलक्षणस्य पुरुषायुषैरपि ज्ञातुमशक्यत्वमेव । नचानाहार्यबुद्धित्वस्थानेऽनुमितित्वमेव प्रवेश्यम्, आहार्यज्ञानस्य प्रत्यक्षात्मकत्वनियतत्वादिति वदितुं युक्तम्; अत्यन्तासत्यपीति न्यायेन शाब्दस्याप्याहार्यत्वोपगमेनाहार्यज्ञानस्य प्रत्यक्षात्मकत्वनियतेरप्रामाणिकत्वात्, कथमपि भवदीयश्रद्धामनुरुध्यानुमितेरनाहार्यत्वनियमोपगमेऽपि तादृशप्रतिबन्धकतानतिरिक्तवृत्तित्वस्योभयाभावादिकमादाय तत्स्मृतिभेदनिश्चयत्वे सम्पादनीयत्वेन तत्स्मृतिभेदस्य सङ्ग्रहप्रसङ्गात्, एवं व्यापकत्वस्यापि तद्भिन्नभेदप्रतियोगितावच्छेदकत्वाभावरूपत्वेन तादृशावच्छेदकत्वघटोभयाभावादिकमादाय तत्स्मृतिभेदनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतायामक्षतत्वेनापि तत्स्मृतिभेदसङ्ग्रहस्य दुर्वारतैव । तत्तद्वारकविशेषणपरम्पराप्रक्षेपे च समुदितलक्षणस्यासर्वज्ञदुर्ज्ञेयतैव ।

एतेन—यादृशभेदत्वावच्छिन्नप्रकारतात्वव्यापकं किञ्चिद्रूपावच्छिन्नविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नस्मृतित्वावच्छिन्नप्रकारताकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वं तादृशभेदत्वविशिष्टाश्रयत्वम्, उभयभेदादिप्रकारतायाः प्रतिबन्धकतानवच्छेदकत्वेन नातिप्रसङ्गः प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वविवक्षणाच्च न 'घटभेदवान् स्मृतिभेदवान् घटभेदवानय'मिति ज्ञानविशिष्टज्ञानप्रतिबन्धकतामादाय प्रसङ्ग इति—निरस्तम्; उक्तरीत्या व्यापकताया अतिप्रसक्तया तत्स्मृतिभेदस्य दुर्वारत्वात् । अतएव—स्मृतित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वं स्मृत्यन्यत्वमिति—निरस्तम्, स्मृतिप्रतियोगिकभेदत्रयात्मककूटस्य स्मृतावपि सद्भावात् स्मृतित्वावच्छिन्नप्रतियोगिताकभेदत्वव्यापककूटत्वावच्छिन्नाधिकरणतानिवेशेऽपि स्मृतिप्रतियोगिकभेदत्रयकूटत्वस्याप्युक्तरीत्या स्मृतित्वावच्छिन्नप्रतियोगिताकभेदत्वव्यापकत्वेनोक्तदोषतादवस्थ्यात्, कूटत्वस्यासर्वज्ञदुर्ग्रहत्वाच्च । एतेन—स्मृतित्वगतैकत्ववृत्तिप्रतियोगिताकभेदवत्त्वं स्मृतिभिन्नत्वम्, प्रतियोगितायामेकत्ववृत्तित्वञ्च निरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकतानिरूपकावच्छेदकतात्वनिष्ठावच्छेदकतानिरूपकप्रतियोगितानिरूपकपर्याप्त्यनुयोगितावच्छेदकत्व स्वनिरूपकानुयोगितानिरूपितनिरूपकतानिष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकावच्छेदकतात्वनिष्ठावच्छेदकतानिरूपकप्रतियोगितानिरूपकपर्याप्त्यनुयोगितावच्छेदकत्वाभ्यामिति, परम्पराणां संसर्गताया अप्रामाणिकत्वे तु प्रकारमुद्रयैव निवेश आद्रियतामिति—निरस्तम्; व्यधिकरणप्रकरणे जगदीशोक्तदिशा पक्षधरमिश्रमतमनुसृत्य व्यधिकरणधर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदोपगमे घटत्वेन स्मृतित्वेन स्मृतिर्नेति भेदस्य दुर्वारत्वात्, नच साक्षात्परम्परासाधारणस्य स्वावच्छेदकत्वस्य संसर्गो विवक्षणीयतया तादृशभेदीयप्रतियोगिताया उक्तसम्बन्धेन घटत्वस्मृतित्वगतद्वित्वे एव सत्त्वेन न तत्सङ्ग्रह इति वाच्यम्; साक्षात्परम्परासाधारणावच्छेदकतायां प्रमाणस्य दुर्निरूपत्वात्, स्मृतित्ववृत्तित्वविशिष्टावच्छेदकतामादाय दोषस्य तथापि तादवस्थ्याच्च, इच्छाप्रयोज्यत्वाभावखण्डनन्यायेन च

घटत्वस्मृतित्वाभ्यां स्मृतिर्नेति भेदस्य निवारणायेतरवारकपर्याप्तिनिवेशस्यावश्यकत्वेन लक्षणापर्यवसानस्यासर्वज्ञदुर्ज्ञेयतायाश्चापत्तेश्च । रीतिरचैषाऽभावघटितपरिष्कारमात्रे द्रष्टव्या । न च लक्षणापर्यवसानमेष्टव्यमेव बीजाङ्कुरपरम्पराऽपर्यवसानमिवेति वक्तुं युज्यते, दृष्टान्तवैषम्यात्, बीजाङ्कुरयोः कार्यकारणभावस्याध्यक्षसिद्धतया तत्र कारणपरम्पराक्षेपस्य प्रामाणिकत्वात्, एकेनापरजनने स्वकारणपरम्परानन्त्यानपेक्षणेन च तत्रानवस्थाया आभासत्वात् । प्रकृते तु प्रत्यक्षानुमानादेर्विविच्य प्रदर्शयितुमशक्यत्वेन प्रमाणापगमस्यानाभासत्वप्रयोजकस्य सद्भावेन लक्षणस्य दुष्टस्य लक्ष्यव्यवस्थापकत्वासम्भवेन चानवस्थाया अनाभासत्वध्रौव्यात् ।

एतच्च सर्वमभ्युपेत्यवादेन, वस्तुतस्त्वीदृशपरिष्काराणां शङ्कैव नोत्थातुमीष्टे, आगोपालाङ्गनं जायमानस्य स्मृतिभेदादिप्रत्ययस्यावच्छेदकतादिघटितार्थविषयकत्वस्य केनापि वक्तुमशक्यत्वात् । अतएव शब्दमणौ शब्दसाधुत्वविचारप्रस्तावे 'यत्प्रयोगार्हत्वं तत्त्व'मित्याशङ्क्य यज्ज्ञानेऽपि साधुत्वव्यवहारादित्यभिधाय तल्लक्षणं निराकृतम् । नचैतादृशलक्षणनिरूपणस्य व्यवहारौपयिकत्वाभावेऽपि व्यावृत्तिप्रतीत्यौपयिकत्वं स्यादेव ; स्यादेव यदीदृशलक्षणमजानानो व्यावृत्तिं न प्रतीयादेव । नचोपायस्योपायान्तरादूषकत्वम्, व्यभिचारस्याव्यवहितोत्तरत्वनिवेशेनैव सुपरिहरत्वादिति वक्तव्यम्; तद्विषयकप्रतीत्यविषयस्य तदनात्मकतया पर्यवसानभूमिमनास्कन्दमानस्य च विपक्षव्यावृत्तिप्रमितेरप्रामाणिकतयोपायताया दुरधिगमत्वात्, व्यवहारौपयिकस्य रूपान्तरस्य वक्तव्यत्वापाताच्च ।

अथ तादात्म्यसम्बन्धेन स्मृतित्वविशिष्टप्रतियोगिताकभेदवत्त्वं स्मृतिभिन्नत्वम्, भेदवत्ता च स्वरूपसम्बन्धेन, तेन कालिकसम्बन्धमादाय न दोषः, सामान्याभावीयप्रतियोगितायाः प्रतियोगितावच्छेदकानतिरेकः, अभावान्तरीयप्रतियोगितायाश्च तदतिरेक इत्यन्यत्र द्रष्टव्यम्, नचैकत्रावच्छेद्यावच्छेदकभावासम्भवः, विशिष्टशुद्धयोर्भेदमुपेत्य तस्योपपादनीयत्वात्, तथा सति शुद्धस्यावच्छेदकताया अभावनिरूपितत्वविशिष्टस्य चावच्छेद्यताया सम्भवदुक्तिकत्वादिति । अत्र केचित्—विशिष्टशुद्धयोस्तत्तदधिकरणतयोश्चातिरिक्तत्वापेक्षयाऽधिकरणताया एवातिरिक्तत्वं युक्तं लाघवादिति । तच्चिन्त्यम्, विशिष्टशुद्धयोरभेदे तत्तन्निष्ठनिरूपकतानिरूपिताधिकरणतयोरप्यभेदस्यापाद्यत्वात्, अन्यत्र तथा दृष्टत्वात् । विशिष्टशुद्धयोर्भेदादेव हि तत्क्षणवृत्तित्वविशिष्टघटविषयकबोधस्य शुद्धघटविषयकबोधाद्वैलक्षण्यं विषयवैलक्षण्यकृतमेवोपपद्यते । यत्तु विषयतावच्छेदकस्यापि वैशिष्ट्यस्य विषयत्वेन विषयवैलक्षण्यकृतवैलक्षण्यस्य ममापि सम्भव इति, तन्न; वैशिष्ट्यविषयकविश्रृङ्खलप्रतीतितोऽपि विशिष्टविषयकप्रतीतेर्वैलक्षण्यात् । यत्तु—सामान्याभावीयप्रतियोगित्वस्यावच्छेदकात्मकत्वे संयोगेन घटाभावीयप्रतियोगित्वं समवायेन घटाभावीयप्रतियोगित्वभिन्नमिति सकलानुभवसिद्धव्यवहारविलोप इति; तदपि न, तादृशानुभवस्य सकलानुभवसिद्धताया अर्वाग्दृशा वक्तुमनौचित्यात्, पुरुषविशेषस्य तादृशानुभवस्य तदीयव्युत्पत्तिमनुसरतो वस्त्वसाधकत्वात् । अथैवं संयोगेन घटो नास्तीति प्रतीतिसाक्षिकाभावात्समवायेन घटो नास्तीति प्रतीतिसाक्षिकाभावस्य वैलक्षण्यं न स्यात् घटस्वरूपैकप्रतियोगिताकत्वादिति चेन्न; एकस्या एव प्रतियोगितायाः संयोगत्वावच्छिन्नसंसर्गतात्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्त्वेन समवायत्वावच्छिन्नसंसर्गतात्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्त्वेन च भेदसम्भवादिति ।

अत्रेदं वक्तव्यम्—भेदस्तावन्निराकृतोऽस्माभिः, यथा च स्वरूपसम्बन्धेन भेदवत्ताविवक्षापि लक्षणापर्यवसानमतिप्रसक्तिं वा नातिक्रामति तथा निवेदितं लक्षणसामान्यखण्डनप्रस्तावे । विशिष्टशुद्धयोश्चात्यन्तभेदो वा भेदाभेदो वा, आद्येऽवच्छेद्यावच्छेदकयोर्भेदेन न प्रतियोगितानतिरेकः, द्वितीये तु

नापि तृतीयः, स्मृतित्वरहितत्वं हि स्मृतित्वाभाववत्त्वं वा स्यात् ? स्मृतित्वप्रतियोगिकमाश्रयस्य स्वरूपं वा ! तज्ज्ञानं वा ?; न तावदाद्यः, तथाहि–स्मृतित्वान्योन्याभावोऽपि स्मृतित्वाभावो भवत्येव, तद्वत्त्वं स्मृतिष्वप्यस्ति, ततश्च स्मृतेरपि तथात्वापत्तिः, तद्व्यवच्छेदाद्विशेषणवैयर्थ्यं च, विना विशेष्यमिच्छादावपि प्रसङ्गात्। स्मृतित्वस्य संसर्गाभावस्तत्र विवक्षित इति चेन्न; तथाहि 'स्मृतित्वस्य संसर्गाभाव' इति किमुच्यते ?, किं स्मृतित्वस्य संसर्गाभावः ? उत संसर्गविशिष्टस्य स्मृतित्वस्य ? अथान्यदेव वा किञ्चिदनया वाग्भङ्ग्या विवक्षितम् ? । आद्ये स्मृतित्वसंसर्गस्यान्योन्याभावः स्मृतावस्तीति स एव प्रसङ्गः, नहि स्मृतित्वसंसर्गः स्मृतिः। अत एव न द्वितीयोऽपि, नहि संसर्गविशिष्टं यत्स्मृतित्वं तदेव स्मृतिव्यक्तिः, ततश्च संसर्गविशिष्टस्मृतित्वेन सह स्मृतिव्यक्तेरन्योन्याभावमादायोक्तदोषाऽनिवृत्तिः। एवं तत्रतत्रापि संसर्गविशेषणप्रक्षेपे दोषानिवृत्तिरेव, अनवस्थायां वा पर्यवसानं विशेषणप्रक्षेपपरम्परायाः। न च वाच्यं स्मृतित्वसंसर्गस्य न संसर्गान्तरेण सम्बन्धित्वं किन्तु स्वभावत एव तस्कुतः परम्परागवेषणं कार्यमिति।

विरोधेनैकतरस्य कल्पितत्वोपगमावश्यम्भावेऽनिर्वाच्यवादो वा शून्यवादो वा। एवं तादृशानिरूप्यताश्रयविशिष्टरूपयोर्भेदाभेदेऽपि द्रष्टव्यमिति। अत्र अतिप्रसङ्गाद्यनापादकस्य धर्मितावच्छेदकस्याज्ञाने प्रतियोगितायां तदवच्छेदकताज्ञानासम्भवः, स्मृतिसामान्याभावीयप्रतियोगितात्वस्यातिप्रसङ्गाद्यनापादकत्वेऽपि स्मृतिसामान्याभावज्ञानं विना तज्ज्ञानानुपपत्तिः प्रकारान्तरेण तादृशाभावज्ञाने तु तेनैव परिष्कारोऽपि कर्तुमुचितः आवश्यकत्वादित्यपि वदन्ति। अपि च स्मृतिसामान्याभावस्य प्रतियोगितायां उक्तरीत्याऽवच्छेदकानात्मकत्वे यदि यत्किञ्चित्प्रतियोगिस्वरूपत्वं तदा यत्किञ्चिद्विशेषवत्यपि सामान्याभावधियः प्रमात्वापत्तिः, यावत्प्रतियोगिस्वरूपत्वे तु सामान्याभावबोधे यावत्प्रतियोगिविषयकत्वस्य मानानालिङ्गितत्वापत्तिः। उभयथाप्याधाराधेयभावासङ्गतिश्च, घटाभावे घटो नास्तीत्यादावपि दोषत्वादेवाश्रयस्यानवस्थाया वा, रूपभेदेनाप्यध्याराधेयभावस्य बहुशो निरस्तत्वात्, प्रतियोगितात्वस्यातिरिक्तस्योपगमे वा प्रतियोगितातिरिक्तताविद्वेषस्यानौचित्यात्। यदि च प्रतियोगितायाः अतिरिक्तत्वं तदापि तस्या अव्यासज्यवृत्तित्वे यत्किञ्चिद्विशेषवत्यपि सामान्याभावबोधस्य प्रमात्वापत्तिः, व्यासज्यवृत्तित्वे यावदाश्रयप्रत्यक्षं विना तत्प्रत्यक्षासम्भवः, कथञ्चित्सम्भवे वा तदवच्छेदकत्वस्य स्वरूपसम्बन्धात्मकताया उक्तयुक्त्याऽसम्भवेनाखण्डोपाधित्ववादस्य चानिर्वाच्यवादप्रसञ्जकत्वेनानतिरिक्तवृत्तिस्वरूपत्वमेव वाच्यम्, तस्य चोभयाभावादिसाधारणस्य सामान्ये सद्भावेन यत्किञ्चिद्विशेषवत्यपि सामान्याभावप्रतीतेःप्रमात्वापत्तिः, पर्याप्त्यादिनिवेशे चापर्यवसानमेवेत्यलं पल्लवैरिति।

तज्ज्ञानं = आश्रयमात्रविषयकं ज्ञानम्, अन्तिमकल्पद्वयं प्रभाकरमतानुसारि, यदाह शालिकनाथः–"दृश्ये प्रतियोगिनि या तदेकविषया बुद्धिः सा तदभावो व्यपदिश्यते" इति। तथात्वापत्तिः = अनुभूतित्वापत्तिः। विशेषणं स्मृतित्वाभाववज्ज्ञानत्वरूपानुभूतित्वघटकस्मृतित्वाभाववत्त्वम्। ननु ज्ञानुभूतित्वस्यैव वैयर्थ्यं कुतो नोच्यते इत्यत आह विनेति। विशेष्यं = ज्ञानत्वम्। संसर्गाभाव इति। अत्यन्ताभावस्य सदातनत्वविशिष्टसंसर्गाभावरूपत्वादिति भावः। संसर्गस्येति। संसर्गाभावशब्दस्य संसर्गप्रतियोगिकाभावार्थकत्वे संसर्गावच्छिन्नप्रतियोगिताकत्वेन प्रकृतेऽत्यन्ताभावसङ्ग्रहेऽप्यन्यध्वंसादिसाधारण्यं न स्यादिति तु नाशङ्कनीयम्; ध्वंससमये तत्पूर्वकालस्य प्रागभावसमये च तदुत्तरकालस्याभावेन तयोरेव तयोः प्रतियोगितावच्छेदकसंसर्गत्वेन चोपपत्तेः, संसर्गाभावस्य भेदभिन्नाभावत्व-

स्मृतित्वसंसर्गस्यान्योन्याभावमादाय कृतस्य प्रसङ्गस्य परिहर्तुं तदानीं सुतरामशक्यत्वात्, संसर्गान्तरविशेषणवचनस्याधिकार्थापर्यवसायित्वात्।

किञ्च तदुभयस्वरूपातिरेकं तत्संसर्गस्यामन्यमानेन स्मृतित्वसंसर्गः स्मृतित्वधर्मिस्वरूपं चेत्येतयोः संसर्गात्मकत्वे व्यवस्थाप्यमानेऽनुभूतौ कथं तादृशस्य संसर्गस्य निषेधः? किमनुभूतेः स्वरूपं नास्ति? उत स्मृतित्वसंसर्गस्य?, ततः कस्य निषेधः? अर्थान्तरभूतस्य च संसर्गस्य निषेधे स्मृतावपि प्रसङ्गस्तदवस्थः, स्मृतौ तस्यार्थान्तरभूतस्य भवताऽनभ्युपगमात्। स्वरूपमेव तयोः सम्बन्ध इति हि तत्र भवतोऽभ्युपगमः। अथोच्यते—अनुभूतिस्मृतित्वसंसर्गयोः स्वरूपसम्भवेऽपि न परस्परसम्बद्धबुद्धिजनकत्वं तयोः, तादृक्त्वं च यत्र तयोस्तत्र सम्बन्धात्मकत्वं स्वरूपयोरुच्यते इति; मैवम्, विशेषोपसङ्ग्राहकासिद्धौ तस्याप्यनुपपत्तेः। उपसङ्ग्राहकान्तरोक्तौ तत्सम्बन्धेऽपि प्रसङ्गेनापरापरोपसङ्ग्राहकगवेषणायामनवस्थापातात्; एतावतापि चानुभूतिस्वरूपे कस्य निषेधो वर्णितः स्यात्। 'स्मृतित्वसंसर्गानुभूती सम्बद्धे' इत्येवंरूपबुद्धिजनकत्व-

रूपत्वेऽपि च भेदघटोभयाभावादिकमादाय स्मृतावतिप्रसङ्गोऽस्त्येव, पर्याप्त्यादिनिवेशस्य प्रतिविहितत्वात्। तस्य प्रकृते तादात्म्यातिरिक्तसम्बन्धावच्छिन्नप्रतियोगिताकत्वरूपताविवक्षायामपि तादात्म्येऽपि तादात्म्यातिरेकस्योभयाभावादिकमादाय सत्त्वाद्दोषतादवस्थ्यम्। अत्यन्ताभावत्वस्याखण्डत्वोपगमेऽपि स्मृतित्वघटोभयाभावादिकमादायातिप्रसङ्गो बोध्यः।

तदुभयेति। स्मृतित्वसमवायः स्मृतित्वधर्मी चेत्युभयेत्यर्थः। तत्संसर्गस्य = स्मृतित्वसमवायप्रतियोगिकसंसर्गस्य। एतयोरिति। विनिगमकाभावेन सम्बन्धिद्वयात्मकत्वमेव समवायप्रतियोगिकसंसर्गस्येत्याशयः। अनुभूतेरिति। स्मृतित्वेनापाद्यमानाया इति शेषः। अतएव स्मृतिस्वरूपञ्चेत्यनुक्त्वा स्मृतित्वधर्मिस्वरूपं चेत्युक्तम्। भवतेति। सम्बन्धानवस्थापत्तिभीरुणेत्यर्थः। सम्बन्धान्तरमन्तरेण विशिष्टबुद्धिजनकत्वं स्वरूपसम्बन्धत्वं ननु स्वरूपत्वमात्रं येन यत्र क्वचन स्यादित्याशयेनाशङ्कते अथेति। उपधानस्य भ्रममादायातिव्यापकत्वेन प्रमात्वविवक्षणेऽप्यव्यापकत्वेन च जनकतापदेनाविवक्षणीयत्वायोग्यतायाश्च तदवच्छेदकं विना सर्वत्र दुर्ग्रहत्वात्रोक्तस्वरूपसम्बन्धत्वं युक्तमित्याह विशेषोपसङ्ग्राहकेति। उक्तजनकताश्रययावद्व्यक्त्यनुगमकरूपेत्यर्थः। तस्य = उक्तजनकत्वस्य। अनुपपत्तेः = लक्ष्यमात्रसाधारण्यानुपपत्तेः। स्मृतित्वसमवायविशिष्टधीत्वावच्छिन्नजन्यतानिरूपितजनकतानतिरिक्तवृत्त्यपि स्मृतित्वप्रतियोगिकसमवायत्वं स्मृतित्वं च न समवायस्मृत्युभयसाधारणम्, उभयत्वमन्यतरत्वं वा तदुभयसाधारणमपि नोक्तजनकतावच्छेदकम्, नवैकभेदविशिष्टापरभेदवद्भेदात्मकमन्यतरत्वमुभयाभावादिकमादायानतिप्रसक्तम्, न च तदखण्डम्; अननुभवात्, धूमलिङ्गकालोकलिङ्गकपरामर्शयोर्व्यभिचारवारणाय जन्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशस्य तार्किकाणामसाङ्गत्यापत्तेश्च। ननूक्तजनकतावच्छेदकधर्मवत्त्वमेव लक्षणमुचितम्, प्रत्येकं स्मृतित्वादिकमादाय तत्समन्वयात्, कथमन्यथोभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वादेः सव्यभिचारादिलक्षणता मण्यादावुक्ता सङ्गच्छेतेति चेत्तत्रापि प्रत्येकमिलितविकल्पानुपपत्तेः सावसरत्वात्। अभ्युपेत्याप्याह उपसङ्ग्राहकेति। अन्तरपदं सम्पातायातम्। समवायत्वान्यतरत्वादेः स्वरूपसम्बन्धेन वृत्तिमत्त्वात् स्मृतित्वस्य समवायेन वृत्तावपि तस्य स्वरूपसम्बन्धेनैव वृत्तेः, विशिष्टधीजनकतावच्छेदकरूपान्तराणां वक्तव्यत्वाज्जनकताया अवच्छिन्नत्वनियमात् तेषामपि च स्वरूपेणैव वृत्तेर्वक्तव्यत्वादननुभूयमानधर्ममालोपगमापत्तिः। एवं जनकतायाम-

स्येति चेन्न, भ्रान्त्यात्मिकाया ईदृशबुद्धेर्जनकत्वस्य वारयितुमशक्यत्वात्। यथार्थाया इति चेत्, ईदृशबुद्धेर्यथार्थाया यदि सत्त्वमभ्युपैषि तदानुभूतौ स्मृतित्वप्रसङ्गः, अथ नाभ्युपैषि, किं प्रति तस्या जनकत्वाभावो निरूप्यः ?। अथात्यन्तासतीमेतादृशबुद्धिं प्रति जनकत्वाभावावधारणमनुभूतेरभ्युपैषि तदा स्मृतावपि प्रसङ्गः, यावत्यस्तद्बुद्धयस्तत्र जायन्ते तदधिकां तादृशबुद्धिमत्यन्तासतीं प्रत्यजनकत्वस्य स्मृतावपि सम्भवात्। सर्वामेव तादृशबुद्धिं प्रत्यजनकत्वमनुभूतेर्नत्वेवं स्मृतेरिति चेन्न; सर्वनद्व्यक्तिप्रमित्यसम्भवात्। किञ्च 'सर्वा'मिति कोऽर्थः ? किमसतीं सर्वाम् ? उत सतीम् ? उत सतीमसतीं चेत्युभयीं प्रत्यजनकत्वम् ? आद्ये द्वितीये च स्मृतावपि तदजनकत्वमस्त्येव, नहि 'स्मृतित्वसंसर्गस्मृती सम्बद्धे' इति यावत्यः स्मृतिव्यक्तिषु बुद्धय उत्पद्यन्ते ताः प्रति प्रत्येकं स्मृतिव्यक्तिषु जनकत्वमस्ति। काञ्चित्सत्यां सतीं प्रति च तदजनकत्वं प्रागेव दूषितम्। तृतीये च नानुभूतावपि तदजनकत्वं, सत्यासत्यतादृशबुद्धेर्भयेनाभावेन च सतीमसतीं प्रत्यजनकत्वस्यासम्भवादिति।

वच्छेदतायाः स्मृतित्वादावनवच्छेदकतायाश्च स्वरूपेणैव सम्बद्धत्वात्तत्राप्यपर्यवसानमवमेयम्। भ्रान्तीति। स्मृतित्वानुभूतित्वयोर्विरोधानुपस्थितिदशायामित्यादिः। बुद्धेर्जनकत्वस्य = बुद्धिनिरूपितजनकत्वस्य। प्रसङ्ग इति। इदमुपलक्षणमाश्रयस्यापि, प्रमात्वलक्षणे प्रमात्वप्रवेशात्। एतेन-सम्बन्धान्तरमन्तरेण स्मृतित्वसंसर्गवैशिष्ट्यप्रमितिजनकत्वाभाववज्ज्ञानत्वमेवानुभवत्वम्, तादृशप्रमितिश्च विशेष्यतया स्मृतौ प्रसिद्धैवेति नाप्रसिद्धप्रतियोगिकत्वमिति-निरस्तम्, एवं न स्वीयमित्यनुभवबाधेन, स्वरूपस्य सम्बन्धताया बहुशोऽपहसितत्वाच, तादृशजनकत्वघटोभयाभावादिकमादाय स्मृतावतिप्रसङ्गेनोदीरितरीतेरत्रापि सावसरत्वाच्चेति। किं प्रतीति। किन्निरूपितजनकत्वस्याभावोऽनुभूतौ प्रत्येतव्यः, 'वस्तुनः प्रतियोगिते'ति वदद्भिरप्रसिद्धप्रतियोगिकाभावानभ्युपगमात्। तदभ्युपगमवादिमतेऽप्याह अथेति। तद्बुद्धयः = स्मृतित्वसंसर्गवैशिष्ट्यबुद्धयः। तत्र = स्मृतौ। तादृशबुद्धिं = उक्तवैशिष्ट्यबुद्धिं। सर्वेति। प्रतियोगिधीनियामकसामग्र्या एवाभावबुद्धौ प्रतियोगिभाननियामकत्वमितिमते स्वर्वादृशस्तादृशसामग्र्यसम्भव एव द्रष्टव्यः। ननु सम्बन्धान्तरमन्तरेण तादृशबुद्धित्वव्यापकजन्यतानिरूपित जनकताविवक्षायां नायं दोषः, साधारणकारणेष्वतिव्याप्तिवारणाय तु जन्यतायां तादृशबुद्धित्वावच्छिन्नत्वमप्युच्यतामित्यतआह किञ्चेति। असतीं = अलीकामनुभूतिविशेष्यकतादृशवैशिष्ट्यप्रमाम्। तथाचासत्तादृशधीत्वव्यापकत्वं विवक्षितं किमिति विकल्पार्थः। एवमग्रेऽपि। सतीं = अनलीकां स्मृतिविशेष्यकतादृशवैशिष्ट्यप्रमाम्। अपीति। अप्रसिद्धप्रतियोगिकाभावमभ्युपेत्यासज्जनकत्वाभावो यथाऽनुभूतौ वाच्यः, तथा स्मृतावपीत्यर्थः। नन्वाद्यपक्षे एवं सम्भवेऽपि द्वितीये कथमित्यतआह नहीति। स्मृतिव्यक्तिषु = स्मृतिव्यक्तिविशेष्यिकाः। न यावत्सत्स्मृतित्वसंसर्गवैशिष्ट्यधीजनकत्वं विवक्षितं नवा सत्तादृशधीत्वव्यापकजन्यताकजनकत्वं येनासम्भवः सम्भवेत्, अपितु सत्तादृशधीत्वावच्छिन्नजन्यताकजनकत्वमेवेत्यत आह काञ्चिदिति। प्रमात्मिकाऽपि तादृशधीः सती, तत्त्वावच्छिन्नजनकता चानुभूतावपीत्यतः सत्यामिति। प्रमामित्यर्थः। तदजनकत्वं = अनुभूतेरजनकत्वम्। प्रागेवेति। "ईदृशबुद्धेर्यथार्थाया" इत्यादिनेत्यर्थः। नच स्मृतिविशेष्यिकैव तादृशधीः प्रमा, तत्त्वावच्छिन्नजनकत्वाभावश्चानुभूतौ सुलभ इति देश्यम्; दत्तोत्तरत्वात्। अपिशब्दोऽप्रसिद्धप्रतियोगिकाभावानभ्युपगन्तृपक्षे. स्मृतिं दृष्टान्तीकर्तुम्, सदसदुभयनिरूपितजनकत्वाप्रसिद्धेः। अभावेन चेत्यन्तेन सिद्ध्यसिद्धिव्याघातः 'असम्भ-

स्यादेतत् स्मृतित्वस्यान्योन्याभावत्वमादाय याऽतिप्रसक्तिर्दर्शिता सा नोपपद्यते, भेदाभेदवादिमते स्मृतित्वभेदाभेदस्य स्मृत्या सहाभ्युपगमात्, ययोर्भेदाभेदस्तयोस्तत्रान्योन्याभावानभ्युपगमात्। न; कथं ह्यवधार्यं स्मृतित्वस्य भेदाभेदः स्मृत्या, नानुभूत्येति? ।

वा'दित्यग्रहेतुरुक्तः । भ्रमप्रमात्मिकयोस्तादृशबुद्ध्योः सत्त्वे प्रमां प्रति स्मृतेरिव भ्रमं प्रत्यनुभूतेरपि जनकत्वं ध्रुवम्, उभे प्रति तु नोभयोरपि जनकत्वम् । तयोरसत्त्वे तु तन्निरूपितजनकत्वाप्रसिद्ध्यैवाभावोऽप्रसिद्धः, मतान्तरे चानुभूताविव स्मृतावपि स तुल्य इत्यर्थः । सत्या इति पृथक् पदं वा षष्ठ्यन्तम्, विद्यमानाया इत्यर्थः ।

भेदाभेदवादिमते इति । भेदाभेदवादोऽयं मीमांसकादिसम्मत एकावच्छेदेनेति केचित्, अन्यथाऽवच्छेदकभेदेन तार्किकैरपि तदभ्युपगमेन सिद्धसाधनापत्तेः, द्रव्यत्वघटत्वाभ्यां भेदसत्त्वेऽपि घटः कलश इति सामानाधिकरण्यबुद्ध्यनुत्पत्तेस्तदुपपादकत्वस्य भेदाभेदवादेऽसम्भवापत्तेश्चेति । प्रतीयमानरूपयोरेवान्यतररूपेण भेदस्यापरतररूपेण चाभेदस्य सामानाधिकरण्यप्रयोजकत्वोपगमे घटः कलश' इति सामानाधिकरण्यधियो नापत्तिः, रूपद्वयाप्रतीतेः । नापि सिद्धसाधनम्, अवच्छेदकभेदेनावच्छेद्यभेदस्य तार्किकसम्मतत्वे मूलशाखावच्छिन्नवृक्षयोर्भेदेन संयोगतदभावयोः सामानाधिकरण्यस्यैवाभावेन तयोरव्याप्यवृत्तितोपगमस्यासङ्गतत्वापत्तेः । अतएव नीलो घट इत्यादावुद्देश्यतावच्छेदकविधेयतावच्छेदकभेदादेव सामानाधिकरण्यमुच्यते तैः, नतूद्देश्यतावच्छेदकविधेयतावच्छेदकरूपाभ्यामुद्देश्यविधेयभेदात् । व्याप्तिपूर्वपक्षप्रकरणे "मूले वृक्षः कपिसंयोगवान्नेत्यबाधितप्रतीतेस्तदन्योन्याभावस्यापि तत्र सत्त्वात्, नचैवं भेदाभेदः, अवच्छेदकभेदेन तत्सत्त्वाभ्युपगा"दिति मणिकारोक्तिस्त्वभ्युपेत्यवादः, परमताभिप्रायेण वा, प्राचीनलक्षणखण्डनस्य परमतानुसारिणोऽप्यनुवादसम्भवात्, अतएव सिद्धान्ते विशेषव्याप्तिग्रन्थेऽव्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्याव्याप्यवृत्तित्वं मणौ नाङ्गीकृतम्, दीधितिकारैः पुनरव्याप्यवृत्तिमद्भेदस्यैवाऽव्याप्यवृत्तित्वं समर्थितमित्यन्यदेतत्, तस्मादवच्छेदकभेदेनैव भेदाभेदवादः, सति चैवं "कार्यात्मना तु नानात्वमभेदः कारणात्मना", "भेदाभेदयोर्हाटकत्वकटकत्वावच्छेदकभेदेन वृत्तिरभ्युपगम्यते", इति भामतीपरिमलादिस्वरसोऽपि । अन्यथा क्लिष्टकल्पनापत्तेः । अतएव "नह्यत्यन्तमभेदोऽस्ति रूपादिवदिहापि नः । धर्मयोर्भेद इष्टो हि धर्म्यभेदेऽपि नः स्थितं" इति प्रघट्टके श्लोकवार्तिके "*भावाभावयोरपि स्वरूपेण भेदो धर्मिरूपेण चाभेद*" इति न्यायरत्नाकरेऽप्युक्तम् तेन च दृष्टान्तीभूतरूपादावपि भेदाभेदाववच्छेदकभेदेनैव सूचितौ, रूपादिदार्ष्टान्तिकस्थानीयाभावस्थले वार्तिकेऽपि च "स्वरूपपररूपाभ्यां नित्यं सदसदात्मके" इति तृतीयाऽवच्छिन्नार्थिका प्रयुक्तेति तु मन्तव्यम् । भेदाभेदः = भेदसमानाधिकरणोऽभेदः । तत्र = भेदाभेदवादिमते । अन्योन्याभावानभ्युपगमात् = तादात्म्यविरोधिभेदानभ्युपगमात्, तादृशभेदस्यैव नञाभिलापो नतु तादात्म्यसहिष्णोरपि भेदस्य, अतएव घटत्वोपहिते द्रव्यत्वोपहितभेदसद्भावेऽपि घटो द्रव्यं नेति धीर्न प्रमेति लघुचन्द्रिकादावुक्तम् । एवं च स्मृतित्वं न स्मृतिरितिप्रतीतिमादाय स्मृतित्वाभाववत्त्वं न स्मृतौ सङ्गन्तुमुचितमिति भावः । नानुभूत्येति। अभेदस्य भेदाक्षेपकत्वं भेदस्य वाऽभेदाक्षेपकत्वमित्यत्र विनिगमनानुपलम्भात् स्मृतित्वभेदस्यानुभूतौ सत्त्वे तदभेदोऽपि किन्न स्यादिति स्मृताविवानुभूतावपि स्मृतित्वाभावो न स्यादिति भावः । न ममोऽभेदो भेदं भेदो वाऽभेदमाक्षिपतीति, अपि तु स्मृतिः स्मृतित्वप्रतियोगिकभेदाभेदवती समानविभक्त्यन्तनामद्वयाभिलप्यस्मृतित्वप्रकारकप्रमीयविशेष्यत्वादिति, संयोगेन तद्घटस्तद्घटवानितिधियः प्रमात्ववारणाय विशिष्टधीमात्रे विशेष्ये विशेषणस्य भेदसमानाधिकरणः सम्बन्धो विषयतया कल्प्यते इत्यादेरन्यत्र

अनुभूत्या सह तद्विशिष्टप्रमाया अभावादिति चेन्न; किं सत्या वा, किमसत्या वेत्यादिविकल्पदोषात्। प्रागभावप्रतियोगिन्या इति चेन्न; अनुभूतौ तादृश्याः स्वीकारेणानुभूतेस्तथात्वापातात्। स्मृतिस्मृतित्वयोरन्योन्याभावाभावश्चान्योन्याभावात्माऽनुभूतावपि तुल्यः, नहि स्मृतित्वान्योन्याभावोऽनुभूतिरित्युक्तमायतने। इति स्मृत्यन्यत्वखण्डनम्।

## अथ भेदसंसर्गाभावयोर्भेदखण्डनम्।

अथ मा भूद्भेदाभेदमादाय परिहारस्तथापि 'इदं तत्र भवति' 'इह तत्रास्ती'ति प्रतीतिसाक्षिक एवान्योन्याभावसंसर्गाभावयोर्भेद इति चेन्न; प्रतियोगिरूपोपाध्यवैचित्र्यादभावे जात्यादिभेदानभ्युपगमाच्चानयोर्भेदबुद्धिरेव प्रामाण्यमनश्नुवाना कूटसाक्षि-

विस्तर इति नाश्रयोजकत्वम्, नचानुभूतावुक्तविशेष्यत्वं येन सा तादृशभेदाभेदवती स्यादित्याशङ्कते अनुभूत्येति। तद्विशिष्टप्रमायाः = उक्तहेतुघटकप्रमायाः। अनुभूतिविशेष्यिकायास्तादृशप्रमाया विरहे यदुच्यते तदा सिद्धसिद्धिव्याघातमाह किमिति। न चानुभूतौ विशेष्यतासम्बन्धेन तादृशप्रमायास्तादृशप्रमीयविशेष्यताया वा निषेधे नायं दोष इति देश्यम्; एवं सति तादृशप्रमीयविशेष्यत्वाभावव ज्ञानत्वस्यैव प्रमालक्षणघटकतापर्यवसानेनात्माश्रयापत्तेः। उभयाभावादिकमादाय स्मृतावपि तादृशविशेष्यत्वाभावसत्त्वाच्च, तद्वारणप्रकाराणां पूर्वं वारणात्। विशिष्टप्रमयैव भेदाभेदसाधनेऽन्योन्याश्रयाच्च। प्रतियोगिन्या इति। तादृशप्रमाया अनुभूतावभावादित्यनुषज्यते। स्वीकारेणेति। विशेष्यतासम्बन्धेन स्वीकारप्रसङ्गेनेत्यर्थः। अनुत्पत्स्यमानस्य प्रागभावप्रतियोगितायां मानाभावेन तादृशप्रमाया अनुभूतिविशेष्यिकायाः प्रागभावप्रतियोगित्वोपगमेऽनुभूतावपि स्मृतित्वभेदाभेदौ दुर्वारौ, दुःखप्रागभावस्य मोक्षत्ववादस्त्वयुक्त एव केषाञ्चित्तार्किकाणाम्, तस्य प्रतियोगिजनकत्वापत्तेरिति व्यक्तं मणौ. अन्यथाऽत्यन्ताभावस्यैव नामान्तरं तत्स्यादिति भावः। ययोर्भेदाभेदस्तयोरन्योन्याभावस्याभावः पूर्ववादिनोक्तः, तस्याप्यतिप्रसञ्जकत्वमाह स्मृतीति। अन्योन्याभावात्यन्ताभावविवक्षायामपि व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिकताकाभावमादायातिप्रसङ्गः, तदनवच्छिन्नप्रतियोगिताकत्वोक्तावप्यन्योन्याभावत्वेन घटाभावादिकं तदवच्छिन्नत्वघटोभयाभावादिकञ्चादायातिप्रसङ्ग इत्यादिकमुक्तदिशाऽवमेयम्। इति खण्डनशारदायां स्मृत्यन्यत्वखण्डनम्।

भेद इति। नञः समानविभक्तिकपदोपस्थापितयोर्धर्मिप्रतियोगिनोर्भेदबोधकत्वस्य विभिन्नविभक्त्यन्तपदोपस्थापितयोश्च तयोरेकत्रापरसंसर्गाभावबोधकत्वस्य सर्वसम्प्रतिपन्नत्वात् 'स्मृतित्वं नानुभूता'विति प्रतीतिसिद्धाभावविवक्षायां भेदमादायातिप्रसङ्गो दुरुद्धरत्व इति भावः। तादृशप्रतीत्योर्विषयगतवैधर्म्यस्य दुर्निरूपत्वे प्रमा वस्त्वासम्भवदुक्तिकत्वेन न वस्तुसाधकत्वम्. अन्यथा प्रतीतिविषयवैलक्षण्ययोः परस्पराश्रितत्वापत्तेरित्याशयेनाह प्रतियोगीति। प्रतियोगितद्रूपात्मकोपाधीत्यर्थः। घटो न पटो घटे न पट इत्यभावयोर्न प्रतियोगिभेदो न वा प्रतियोगितावच्छेदकधर्मभेद इति कथमभावयोरपि भेदः। नन्वेकघटप्रतियोगिकाभावचतुष्टयस्यैक्यप्रसङ्गान्न प्रतियोगिभेदस्योक्तात्यन्ताभावभेदयोरैक्यप्रसङ्गादेव च न प्रतियोगितावच्छेदकधर्मभेदस्याभावभेदनियामकत्वमुच्यते इति प्रकृते उक्तोपाध्यवैचित्र्यमकिञ्चित्करमित्यत आह जात्यादिभेदानभ्युपगमाच्चेति। एवं ह्यभावभेदनियामकत्वं जातिभेदस्य वा, प्रतियोगितावच्छेदकरूपसंसर्गान्यतरभेदस्य वा, अखण्डधर्मभेदस्य वा प्रतियोगिताभेदस्य वा स्यात्. नाद्यः, अभावे जात्यनभ्युपगमात्, न द्वितीयः, तादात्म्यसंयोगाद्यात्मकसंसर्गभेदेन भेदात्यन्ताभावयोर्भेदोपपत्तावपि तद्घटत्वावच्छिन्नप्रतियोगिताकप्रागभावध्वंसयोर्भेदानुपपत्तेः, पूर्वापरकालीनत्वादेः ध्वंसादिप्रतियोगि-

णीति तदनादरणात् । नच स्वप्रतियोगिसमानकालसमानाधिकरणोऽभावोऽन्योन्याभावः,

तावच्छेदकताया मानाभावेन भवदीयैः शिरोमण्यादिभिः सामान्याभावग्रन्थेऽनभ्युपगमात् । न च ध्वंसप्रागभावयोरस्तु यथा तथा, भेदात्यन्ताभावयोस्तु भेदः प्रकृतोपयुक्त उक्तरीत्या सम्भवत्येवेति वाच्यम्; तादात्म्येन नायं घट इत्यप्रयोगेन मानाभावेन च तादात्म्ये भेदीयप्रतियोगितावच्छेदकताया नव्यादादौ गदाधरादिभिरनभ्युपगमात् । नापि भेदत्वात्यन्ताभावस्वरूपाखण्डधर्मभेदात्तयोर्भेदः, क्लृप्ता- तिरिक्तस्यापसिद्धान्तापातेनानभ्युपगमात् । तस्य प्रतीतिवैलक्षण्याधीनवैलक्षण्यस्यैव वक्तव्यत्वेनान्यो- न्याश्रयाच्च । अथास्तु प्रतियोगिताभेदादेव भेदः, तद्भेदश्च संसर्गावच्छिन्नत्वतदनवच्छिन्नत्वरूपविरुद्धधर्मा- ध्यासादेव, यद्यपि गुणो न संयोगीत्यादौ संयोगरूपसंसर्गावच्छिन्नत्वं भेदीयप्रतियोगितायामपि, तथापि विवक्षणीयं संसर्गविधयाऽनवच्छिन्नत्वमक्षतमेव, एवञ्च भेदोऽत्यन्ताभावभेदः संसर्गानवच्छिन्नप्रतियोगि- ताकत्वेन शशशृङ्गवदनुमानमिति चेन्न; भेदात्यन्ताभावयोर्भेदासिद्धावत्यन्ताभावप्रतियोगितायामपि संसर्गाव- च्छिन्नप्रतियोगिकात्यन्ताभावस्य संसर्गत्वावच्छिन्नावच्छेदकतानिरूपकताभेदस्य वा सत्त्वमादाय व्यभि- चारस्योद्भावनीयत्वात्, पूर्वोक्तहेतोर्व्याप्यत्वसिद्धिः साध्यसिद्धिमपेक्षमाणाऽन्योन्याश्रयमपि सावसर- यति । परीक्षणीया चानुपदं प्रतियोगितापीति । अत्र भेदेऽत्यन्ताभावभेदोपगमे आत्माश्रयानवस्थादिकं तु स्फुटत्वान्नोक्तम् विरुद्धधर्माध्यासादपि न भेदात्यन्ताभावभेदसिद्धिरित्याह नचेत्यादिनेति । ध्वंसप्राग- भावयोरपि स्वप्रतियोगिसमानाधिकरणत्वात्समानकालेति । स्वप्रतियोग्यनधिकरणदेशावच्छेदेनात्यन्ता- भावस्यापि स्वप्रतियोगिसमानकालिकत्वात् समानाधिकरणेति । ननु प्रतियोगितावच्छेदकसम्बन्धावच्छि- न्नस्वप्रतियोगिनिष्ठनिरूपकतानिरूपितसम्बन्धितानिरूपितविशेषणताविशेषावच्छिन्ननिरूपकताश्रयत्वं न विवक्षाक्षमम् घटतादात्म्यवति विशेषणताविशेषेण घटभेदस्यावृत्तेरसम्भवापत्तेः, सम्बन्धितास्थानेऽधि- करणतानिवेशेऽपि तादात्म्यसम्बन्धावच्छिन्ननिरूपकताकाधिकरणताया अप्रसिद्धिनिबन्धन एवासम्भवः । प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वाविवक्षणे च कालिकेन घटाधिकरणे संयोगादिना घटाभावस्य विशेषणताविशेषेण वृत्तेरतिव्याप्तितादवस्थ्यम् । न च–तादृशाधिकरणतानिरूपितविशेषणताविशेषावच्छि- न्ननिरूपकत्वाभाववान् योयस्तदन्यत्वात्मकं प्रतियोगिव्यधिकरणान्यत्वमेवोक्तदलेन विवक्षणीयम्, भेदस्तु न तत्पदेनोपादेयः, तादात्म्येनाधिकरणत्वाप्रसिद्धेः अत्र च तादात्म्यस्य प्रतियोगितावच्छेदकतानभ्यु- पगमेऽपि न हानिरिति–वाच्यम्; संयोगात्यन्ताभावेऽतिव्याप्तेः, विशेषणतायां निरवच्छिन्नत्वविवक्षणेऽ- प्यव्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्याव्याप्यवृत्तित्वेन निरवच्छिन्नविशेषणताविशेषावच्छिन्ननिरू- पकताभाववत्त्वेऽपि तादात्म्यसम्बन्धावच्छिन्नाधिकरणत्वाप्रसिद्ध्यैव तत्रान्यत्वासिवारणेऽपि आत्माश्रयो दुर्वार एव, भेदघटितत्वात्, अन्यादृशभेदस्य तत्रानुप्रवेशे तादृशस्यैवाश्रयकत्वात्प्रथममुपस्थितत्वाच्च प्रकृतवैयर्थ्यसम्पादकत्वम्, भेदकूटघटितत्वेनासर्वज्ञदुर्ज्ञेयत्वञ्चेति चेन्न; स्वप्रतियोगिनिष्ठाधिकरणतानि- रूपितविशेषणताविशेषावच्छिन्ननिरूपकताविरहस्य विवक्षितत्वात्, एवञ्च भेदस्य कालिकेन स्वप्रतियोगि- वृत्तित्वेऽपि न क्षतिः । नच द्वित्वाद्यवच्छिन्नप्रतियोगिताकभेदेऽव्याप्तिः तस्य प्रतियोगिन्यपि वृत्तेरिति वाच्यम्; स्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतानिरूपितनिरूपकताया विवक्षणीयत्वात्, तादृशभेदस्य चातथात्वेनादोषात् । नच सत्तात्यन्ताभावेऽतिव्याप्तिः, सत्ता सतीतिप्रतीत्या सत्तायां तदभावस्यासम्भ- वादिति वाच्यम्, सत्तायामन्यादृशसत्त्वस्य वृत्तावपि प्रतियोगिभूतसत्ताया अवृत्तेः, अन्यथात्माश्रयापत्ते- रिति । स्वावच्छिन्नप्रतियोगितानिरूपकत्व, स्वावच्छिन्नाधिकरणतानिरूपितविशेषणताविशेषावच्छिन्ननिरू- पकत्वेति संसर्गद्वयावच्छिन्नप्रतियोगिताकप्रतियोगितावच्छेदकाभाववत्त्वमित्याद्यनुगमप्रणाली तु परम्प-

तदन्योन्याभाववांश्च तदभावः संसर्गाभावः; यथासम्भवमात्माश्रयाद्यननुभवस्वभेदाननुगमतत्तद्व्यगमानभ्युपगमानामनुत्तरणीयत्वप्रसङ्गात्।

रणां संसर्गतायाः अप्रामाणिकत्वाच्चादिता। संयोगादावतिव्याप्तिवारणायाभावपदम्। संयोगादिव्यावृत्तप्रतियोगिताविशेषविवक्षायामपि तादृशनिरूपकताविरहस्य प्रविष्टत्वेनाभावत्वं विकल्प्योपरितनो निरासो नासङ्गतः। तदन्यान्याभाववानिति। उक्तभेदभिन्न इत्यर्थः। ननूक्तभेदत्वस्य स्वघटितत्वेनाननुगमादेकभेदभेदस्य भेदान्तरे सद्भावमादाय तत्राप्तिव्याप्तिरित्याशङ्क्य तदभाव इत्यत्र प्रतियोगिविशेषपरं तत्पदमुपात्तम्। तथा च घटभेदभिन्नो घटाभावो घटसंसर्गाभाव इत्यर्थः। घटप्रतियोगिक इत्यभिधाने तु घटसंयोगेऽतिव्याप्तिः। यथासम्भवमिति। अभावत्वस्य भावभिन्नत्वरूपतया भेदे भेदानुप्रवेशेनात्माश्रयः, अभावत्वभेदत्वयोः परस्परघटितत्वेन परस्पराश्रयश्च, भावत्वात्यन्ताभावरूपतायां तु सदातनसंसर्गाभावस्यैवात्यन्ताभावत्वेन चक्रकम्; संसर्गाभावत्वस्य स्वघटितात्यन्ताभावत्वघटितभेदत्वघटितत्वात्। नञुल्लेखेन तस्य सखण्डनात्रा एवाभिगमादखण्डत्वस्याप्रामाणिकत्वात्। तस्याखण्डत्वे वा भेदत्वस्य सखण्डतया निर्वक्तुं न शक्यत्वात्। न च समवायसामानाधिकरण्यान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताऽभाव एवाभावत्वमिति वाच्यम्. एवं हि सत्ताभावस्याभावत्वं वा व्याहन्येत, आत्माश्रयो वा प्रसज्येत, व्यक्तिद्वयाभ्युपगमेऽन्योन्याश्रयादिकं वापद्येत। पर्याप्त्यादिनिवेशस्य निरस्तत्वेन तादृशसत्तावटोभयाभावादिकमतिप्रसङ्गाच्च। एवमुक्तभेदलक्षणेऽपि तादृशनिरूपकताविरहस्यातिप्रसक्तत्वं द्वित्वाद्यवच्छिन्नप्रतियोगिताकभेदेऽव्याप्तिश्चेत्यपि द्रष्टव्यम्, घटत्वरूपयत्किञ्चित्प्रतियोगितावच्छेदकोपादानसम्भवात्। न चाभावत्वमनुयोगिताविशेषः, तथा सति तस्य प्रतिव्यक्तिभिन्नत्वेनाभावप्रतीतेरनुगतत्वं भज्येत जातिमात्रं वा विलुप्येत। विशेषस्य प्रतीतिविशेषसाक्षिकतयाऽभिधानस्यान्योन्याश्रयापत्त्याऽसम्भवितया तस्य दुर्वचत्वाच्च। एवं विशेषणतायां विशेषोऽपि दुर्वच एवेति कालिकविशेषणतया स्वप्रतियोगिवृत्तित्वमादायाव्याप्तिरपि द्रष्टव्या। यथा चाखण्डोपाधितावादो न क्षोदक्षमः, न वा लक्षणान्तरं भेदस्य विचारसहं तथोपपादितं भेदभङ्गे पुरा, चतुर्थपरिच्छेदे चोपपादयिष्यते इति। अननुभवेति। भेदभेदस्य संसर्गाभावनिष्ठस्य न तदात्मकत्वम्, नापि प्रथमभेदात्मकत्वम्, आधाराधेयभावस्य प्रतियोग्यनुयोगिभावस्य च भेदे एव दृष्टतयाऽभेदे तदुपगमेऽनुभवविरोधात्, भेदमालोपगमस्यापि च तस्या अननुभूयमानतयाऽसम्भवात्, घटो न पट इत्यादिभेदबुद्धेरुक्तलक्षणविषयकत्वाननुभवाच्च। एवं संसर्गाभावबुद्धेरपि। न च न व्यवहारौपयिकमिदं लक्षणमपि तु व्यावृत्त्यौपयिकमिति वाच्यम्; व्यवहारौपयिकस्य लक्षणान्तरस्य वक्तव्यत्वापातात्। स्वभेदाननुगमेति। स्वत्वाननुगमेत्यर्थः। भेदस्य भेदकपरत्वात्। तथा च स्वपदेन घटभेदोपादाने भेदान्तरासङ्ग्रह इति। यद्वक्तेः पूर्वस्वपदेनोपादानं तस्या एवोत्तरस्वपदेनेत्यत्र नियामकाभावप्रसङ्गेन यत्किञ्चित्प्रतियोगिसमानकालीनत्वमादायातिप्रसङ्गतादवस्थ्येन च स्वत्वाननुगमपक्षं न कक्षीकुर्वन्ति। व्यक्तीभविष्यति चेदं द्वितीयपरिच्छेदे इति। इदमुलक्षणम्। कपिसंयोगिभेदस्य प्रतियोगिवृत्तितया स्वप्रतियोगितावच्छेदकावच्छेदकावच्छिन्ननिरूपकताविरहस्यैव विवक्षणीयतया व्याप्यवृत्तेरवच्छेदकाप्रसिद्ध्या तदवच्छिन्नभेदेऽव्याप्तिरपि द्रष्टव्या। अत्र—स्वावच्छेदकनाघटकसम्बन्धावच्छिन्नस्वावच्छेदकनिष्ठाधेयताकाधिकरणतावच्छेदकावच्छिन्ना या स्वावच्छेदकवत्ताग्रहविरोधितावच्छेदकसम्बन्धावच्छिन्ना वृत्तिस्तदवच्छेदकत्वं स्वनिरूपकत्वं चेत्युभयसम्बन्धेन प्रतियोगिताविशिष्टान्यानुयोगितैव भेदमात्रवृत्तित्वात्तल्लक्षणमस्तु, शाखावच्छिन्नवृत्त्यवच्छेदकत्वस्य कपिसंयोगिभेदनिष्ठानुयोगितायामभावेन तस्याः प्रतियोगिताविशिष्टान्यत्वाक्षतेः, एवं च स्वत्वस्य संसर्गघटकतयाऽननुगमोऽपि न, स्वाधिकरणवृत्तिताव-

ननु संसर्गप्रतियोगिको निषेधः संसर्गाभावः, तादात्म्यप्रतियोगिकश्च तादात्म्याभाव इत्युक्त एव न मिश्रता तयोः, यो हि संसर्गतादात्म्यस्य निषेधः स संसर्गनिषेध एव न भवति, तादात्म्यप्रतियोगिकत्वादिति; मैवम्, द्रव्यगुणकर्मणां समवायिकारणेषु हि तेषां प्रध्वंसा नैवं संसर्गाभावाः स्युः संसर्गप्रतियोगिकत्वे तु संसर्गस्य समवायस्वरूपतया समवायानित्यत्वप्रसङ्गात् । किञ्च-तर्हि संसर्गान्योन्याभावौ द्वावपि न घटादिप्रतियोगिकावपिति घटादेः कालादिवन्निरवधित्वापातः, संसर्गतादात्म्ययोश्चाविशेषितयोर्निषेधे सामान्यत एव तयोरुच्छेदः स्यात्, एवं यद्यदेव प्रतियोगि वाच्यं तत्तत्स्वरूपत एव न

च्छेदकत्वनिवेशे द्वित्वावच्छिन्नप्रतियोगिताविशिष्टस्य तादृशप्रतियोगिताकभेदनिष्ठानुयोगितायां सत्त्वेनाव्याप्तिवारणाय स्वावच्छेदकाधिकरणतावच्छेदकावच्छिन्नान्यस्य वृत्तौ निवेश इति तु न शक्यशङ्कमपि, ध्वंसप्रागभावयोरतिप्रसक्तेः, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकभेदासङ्ग्रहाच्च, भेदघटिततया आत्माश्रयाच्च, परम्पराणां संसर्गताया अप्रामाणिकत्वाच्च । नन्वस्तु लक्ष्यभेदेन लक्षणभेद इत्यत आह तत्तद्व्यगमानभ्युपगमेति । प्रातिस्विकरूपेण तत्तद्व्यक्तीनामुपादातुमशक्यत्वेनासर्वज्ञानवगम्यत्वप्रसङ्गेन व्यवस्थापनासम्भवः, भेदत्वाद्यंशेऽनुगतव्यवहारविलोपापातश्चेत्यर्थः । अत्र-व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकभेदेऽव्याप्तिः । अनवस्थापेक्षयात्माश्रयस्य लघीयस्त्वेनोपगमे तु सत्तात्यन्ताभावे स्वप्रतियोग्यवृत्तावतिव्याप्तिरपि पूर्वोक्तरीत्या द्रष्टव्या ।

**संसर्गप्रतियोगिकेति** । तादात्म्यस्य संसर्गता तु न प्राचीनसरणिसिद्धा, तदन्यत्वं वा निवेश्यम् । घटीयसंसर्गविशेषविरहं विना संसर्गविशेषावच्छिन्नघटप्रतियोगिताकविरहस्याप्यसम्भवात् संसर्गान्तरेण घटसत्त्वेऽप्यपरसंसर्गेण घटाभावस्य तद्विरहेणैव निर्वाह्यत्वाच्च समवायेन घटो नास्तीतिप्रतीतेः समवायविशिष्टघटावगाहिन्या अपि शिखी ध्वस्त इत्यादेरिव विशेषणविरहविषयकत्वसम्भवाच्च क्लृप्तत्वात् संसर्गप्रतियोगिकत्वं सम्भवदुक्तिकमेव सर्वत्र संसर्गाभावस्य, अतएव व्यधिकरणसम्बन्धावच्छिन्नाभावोऽपि न प्रामाणिक इत्याहुरित्यन्यत्र विस्तरः । संयोगप्रतियोगिकसमवायवारणाय **निषेध इति** । **तादात्म्यप्रतियोगिकश्चेति** । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वादिकं तु न लक्षणं यथा, तथा दर्शितं पुरा । मिश्रता = अभेदः । **नेति** । एवञ्च स्मृतित्वसंसर्गान्योन्याभावमादाय पुरोक्तातिप्रसङ्गनिरासः । **प्रध्वंसा इति** । प्रागभावा इत्यपि द्रष्टव्यम्, तेषामपि समवायप्रतियोगिकत्वे तस्योत्पत्त्यावश्यकत्वेनानित्यत्वप्रसङ्गसाम्यात् । **प्रसङ्गादिति** । पूर्वापरकालीनत्वयोस्तु न संसर्गता प्रामाणिकीति भावः । एतेन संसर्गावच्छिन्नप्रतियोगिताकाभावत्वसंसर्गारोपजन्यप्रतीतिविषयाभावत्वयोरप्यव्यापकतोपदर्शिता । एवमतीन्द्रियसंसर्गाभावेऽव्याप्तिः, संसर्गारोपस्याभावप्रतीतिहेतुतायां मानाभावश्चेति । समवायस्यानित्यतापक्षेऽप्याह **किञ्चेति** । **निरवधित्वेति** । नित्यत्वेत्यर्थः । सर्वात्मकत्वकेवलान्वयित्वयोरप्युपलक्षणमिदम् । मीमांसकमते संसर्गस्यैवोत्पत्तिविनाशशालित्वेन रूपादीनां च नित्यत्वेन नित्यत्वापादने तत्रेष्टापत्तिसम्भवेऽपि घटादिस्थले न तत्सम्भवः, तार्किकमते तु न क्वापीति भावः । सर्वात्मत्वप्रसङ्गस्तु तादात्म्यस्य घटाद्यतिरिक्तत्वमतेन । अविशेषितयोः = प्रतियोगिदेशकालाद्यविशेषितयोः, सामान्यत उच्छेदः = अलीकत्वम् । गगनाद्यनात्मकस्य निरवच्छिन्नवृत्तिकाभावप्रतियोगिन एवालीकत्वात् । विशेषितयोर्निषेधपक्षं तु "तर्हि विशिष्टस्य निषेधो विशेषणस्यापि भवती"त्यग्रेतनेन ग्रन्थेन निरसिष्यति । यद्यदेव = संसर्गप्रतियोगी वा संसृष्टं वा । प्रतियोगि = अविशेषितमेव निषेधप्रतियोगि । स्वरूपत एव न स्यात् = अलीकं स्यात् । तस्येत्यादि । संसर्गतत्प्रतियोग्यादेरपि संसर्गस्यैवाविशेषितस्य निषिध्यमानत्वोपगमे चेत्यर्थः ।

स्यात्। तस्यापि संसर्गं प्रति धावने च तद्दूतम्। संसर्गानवस्था शेषेऽच्छेदात्पूर्वपूर्वोच्छेदो वा स्यात्।

---

तदूषणम् = संसर्गतत्प्रतियोग्यादिकं सर्वात्मकं नित्यं पैपलान्यपि धापनम्। तस्यालीकत्वानापत्तत्वर्षात्यादिः। किन्त्वेवमविशेषितसंसर्गस्यैव निषेधे तस्यालीकतापत्त्या किञ्चित्प्रतियोगिकत्वासम्भवेनाविशेषितसंसर्गतत्प्रतियोग्यादेरपि स्वरूपतो निषेधस्यैवापत्त्याऽङ्गीकार्यं मा प्रसाङ्क्षीदिति संसर्गस्यापि संसर्गान्तरमेव निषेद्धव्यमित्यनवस्थापत्तिरित्यर्थः।

अनुयोगी प्रतियोगितानिरूपितानुयोगिताख्यस्वरूपसम्बन्धविशेषाश्रयः, स चाभावः, अत एवाभावत्वमनुयोगिताविशेष इति नवीनाः। तथात्वं = प्रतियोग्यनुयोगिभावः। प्राचीनमते सम्बन्धत्वमिव विरोधित्वमपि विशिष्टस्यैव, नव्यनये पुनरनुयोगित्वं प्रतियोगित्वञ्चेति द्वयमेव। प्रतियोगित्वमपि स्वरूपसम्बन्धविशेष एव, तथात्वे चानिर्वचनीयत्वेऽप्यन्यत्, नतु स्वाभावविरहात्मत्वम्, अबाधिताभावत्वप्रत्ययमनुरुन्धानैरभावाभावस्यातिरिक्ततोपगमात्, अनतिरिक्ततायामपि न भेदादिप्रतियोगितासाधारण्यसम्भवः कथञ्चित्तत्सम्भवेऽपि स्वाभावेत्यादेः स्वप्रतियोगिकाभावेत्याद्यर्थकत्वेनात्माश्रयप्रसङ्गः, प्रतियोगितासम्बन्धेन स्वविशिष्टाभावेत्याद्यर्थकत्वेऽपि प्रतियोगितासम्बन्धेनेत्यस्य प्रतियोगितासम्बन्धेन स्वविशिष्टाभावेत्याद्यर्थकत्वेनैतदर्थघटकीभूतस्यापि तस्य तथैव निवेदयत्वेन विषयतानवस्थानप्रसङ्गः स्पष्ट एव। स्वरूपसम्बन्धविशेषरूपप्रतियोगितायास्तद्घटकत्वे चावश्यकत्वात्तस्यैव प्रतियोगितात्वमुचितमिति स्वाभावविरहात्मतायास्तत्त्वे न प्रमाणमिति। प्रतियोग्यनुयोगिनोर्विरोध इति सम्बन्धः। विरोधः = विरोधपदार्थः। सहभावाभावः = प्रतियोग्यभावव्याप्यत्वं स्वप्रतियोगिमद्वृत्तित्वं स्वप्रतियोगिविरुद्धत्वमित्यर्थः। यद्यप्येवं भेदाव्याप्यवृत्त्यत्यन्ताभावध्वंसप्रागभावानां न स्वप्रतियोगिविरुद्धत्वोपपत्तिः, स्वप्रतियोगिमन्निरूपितवृत्तितायाः स्वप्रतियोग्यवच्छेदकदेशकालावच्छिन्नाया विरहस्य विवक्षायामपि भेदे तदनुपपत्तिस्तदवस्थैव। प्रतियोगिमत्ता यदि प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिनिष्ठनिरूपकतानिरूपितसम्बन्धिता तदा तादात्म्यसम्बन्धावच्छिन्नघटनिष्ठनिरूपकतानिरूपितसम्बन्धिताश्रयघटनिरूपितवृत्तिताया घटभेदे विरहेणोक्तानुपपत्तिपरिहारेऽपि ध्वंसप्रागभावयोरनुपपत्तिरेव, तयोः प्रतियोगितावच्छेदकसम्बन्धस्यैवाभावात्, स्वपूर्वापरकालीनत्वादेस्तथात्वेऽपि वा ध्वंसपूर्वकालीनत्वाद्यवच्छिन्नत्वस्य प्रतियोगिनिष्ठनिरूपकतायामप्रसिद्धिरेव, एवं प्रतियोगिनो व्याप्यवृत्तितास्थलेऽप्यगतिरेव, तदवच्छेदकाप्रसिद्धेः। तथापि भेदस्य व्याप्यवृत्तिसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य स्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतानिरूपितविशेषणताविशेषावच्छिन्नवृत्तिताविरहः, अव्याप्यवृत्तिमद्भेदस्य सोऽवच्छेदकगर्भः, ध्वंसप्रागभावयोश्च स्वप्रतियोग्यवच्छेदककालावच्छिन्नस्वप्रतियोग्यधिकरणनिरूपितवृत्तिताविरहः, अत्यन्ताभावस्य तु समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्ननिरूपकतानिरूपिताधिकरणताश्रयनिरूपितविशेषणताविशेषावच्छिन्ननिरूपकताया विरहः, स्वप्रतियोग्यवच्छेदकदेशावच्छिन्नायास्तादृशनिरूपकताया विरहस्त्वव्याप्यवृत्त्यत्यन्ताभावस्येति विशिष्यैव विरोधो वाच्यः, संयोगेन रूपं नास्तीत्याद्यभावस्य तु केवलान्वयितया न प्रतियोगिविरुद्धत्वमिति संयोगसम्बन्धावच्छिन्नरूपनिष्ठनिरूपकताया अप्रसिद्धावपि न क्षतिः।

यत्तु—स्वनिरूपकाभावस्य स्वविशिष्टावच्छेदकताकनिरूपकताकाधिकरणतावद्वृत्तित्वमित्येव सामान्याभावस्य विरोधः, वैशिष्ट्यञ्च स्वावच्छेदकताघटकसम्बन्धावच्छिन्नत्व—स्वावच्छेदकतापर्याप्त्यधिकरणनिष्ठत्व—स्वनिरूपकानुयोगिताकनिरूपकतावत्त्वेतिसम्बन्धत्रयेण, निरूपकतावत्ता च स्वावच्छेदकतापर्याप्त्यधि-

अथ न प्रतियोग्यनुयोगिनोस्तथात्वं विरोधः, किन्तु सहभावाभावः, अतस्तन्मात्रं न स्यात्, न तु तन्मात्रमेव न स्यादिति चेन्न; अनुयोगिनि प्रतियोग्यापत्तेः। तथा प्रमाऽ-

करणनिष्ठसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकताकत्व–स्वावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्ना-भेदसम्बन्धावच्छिन्नप्रमीयप्रकारतानिरूपितविशेष्यतावच्छेदकतापर्याप्त्यधिकरणनिष्ठत्वेति सम्बन्धद्वयेनेति; तत्तु "नातत्तन्मन्यसे नावन्न तत्तदपि मंस्यसे" इत्युपरितनकारिकाव्याख्यानावसरे निर्देक्ष्यदिशा "घटो घट" इति प्रतीतिमात्रस्य प्रमात्वविरहेण भूतले घटो नास्तीत्यादौ निरूपकतावच्छेदकतापर्याप्त्यधिकरण-घटत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रमीयप्रकारतानिरूपितविशेष्यतावच्छेदकतापर्याप्त्यधिकरणनिष्ठत्व-स्वावच्छेदकतायामसद्भावेनासम्भवदुक्तिकमिति ध्येयम्। तन्मात्रं = सहभावमात्रम्; न तु तन्मात्रमेव न स्यात् = न तु प्रतियोगिनोऽलीकत्वमपि स्यात्। देशविशेषादिकमनन्तर्भाव्य स्वरूपत एव विरोधोपगमे कश्चिदसतोऽन्यत्रापि सत्त्वस्यासम्भवेनालीकत्वप्रसक्तिः स्यादपि, सहानवस्थानस्य तथात्वोपगमे त्वेकत्रा-सवतोऽप्यपरत्र भवनं निराबाधमिति न तत्प्रसक्तिरित्याभासाशयः। एवञ्चाविशेषितत्वमपि प्रतियोगि-नैव, न तु देशकालादिनापीति पर्यवसन्नम्। इदन्त्ववधेयम्, यद्यपि देशविशेषादिकमनन्तर्भाव्य विरो-धोपगमेऽपि प्रतियोग्यविशेषितादिसंसर्गादिनिषेधोपगमे भूतले घटसमवायो नास्तीति समवायेन घटो नास्तीति वा निषेधस्य घटाविशेषितसमवायप्रतियोगिकत्वेन समवायाविशेषितघटप्रतियोगिकत्वेन वा भूतले रूपादिसमवायस्य संयोगेन घटस्यापि चाभावप्रसङ्गोऽस्त्येव, एवमलीकस्यैवात्यन्ताभावप्रति-योगित्वम्, जलाहरणाद्यौपयिकघटादेर्न क्वापि निषेध इति मतेऽविशेषितस्य प्रतियोगिना विशेषितस्य वा-त्यन्ताभावप्रतियोगित्वेऽलीकत्वापादनसम्भवः, 'नहीदमपि कुसुमं गगनकुसुमं येनामोदं नादध्या'दिति प्रतीतिबलादलीके प्रतियोगिताया सन्तव्यत्वात्, तत्र तस्या अनुपगमेपि मिथ्यासाधारणस्य सर्वदेश-कालवृत्त्यन्ताभावप्रतियोगित्वस्यैवापादनीयत्वात्, अभावप्रतियोगित्वेन तस्यानुमेयत्वाद्वा। बाधादेरन्यत्र निरस्तत्वात्। यदाहुः–"तस्माद्यन्नास्ति नास्त्येव यत्त्वस्ति परमार्थतः। तत्सत्यमन्यन्मिथ्येति न सत्य-द्वयकल्पने"ति॥ अयमेतस्य प्रकृतोपयुक्तार्थः–यन्नास्ति = प्रतियोगितासम्बन्धेन यदभावविशिष्टम्, तन्ना-स्त्येव = तत्सर्वदेशकालवृत्त्यत्यन्ताभावप्रतियोगि। आत्मनः पारमार्थिकत्वव्यवस्थितौ तु तद्वृत्तित्ववैशि-ष्ट्यं प्रतियोगितायां सम्बन्धे विशेषणीयम्, जडादिप्रतियोगिकभेदस्य तत्राभ्युपगमेनैव जडत्वाद्यापत्तिवार-णसम्भवेन जडाद्यनुयोगिकभेदीयप्रतियोगित्वं तत्र नाभ्युपगमनीयमिति वा। यत्त्वस्ति = प्रतियोगितास-म्बन्धेन यदभावविशिष्टं न, तत्परमार्थतः सत्यम् = परमार्थसत्यम्। एतेनोक्तसम्बन्धेनाभाववतः सांवृतसत्त्व-स्वीकारो ध्वनितः, तदाह अन्यन्मिथ्येति, त्वलीकम्। न सत्यद्वयकल्पना = परमार्थसत्यनानात्वकल्पना न युक्ता, श्रुतियुक्त्यादिविरोधादिति। तथापि सहानवस्थानलक्षण एव भावाभावयोर्विरोधो न तु प्रति-योग्यनुयोगिभावलक्षणः स्वरूपतोऽपि विरोध इति पराभिप्रायमभ्युपगम्यमाणस्तमेव स्वरूपतोऽपि विरोधोऽ-भ्युपेय एवेत्याशयेन निराकुरुते अनुयोगिनीति। अनुयोगिनि प्रतियोग्याधारतापि सम्भाव्येतेत्यर्थः। यद्यन्यत्र प्रतियोगिसत्त्वमुपगम्याभावसहावस्थानमेव निषिध्यते तत्किमभावस्य भावाधारतानुमन्यते प्रतियोगिसत्त्वसहानवस्थानयोस्तावतापि व्याघातादिति भावः। घटो घटाभाववानिति प्रतीत्या प्रतियो-गिन्यनुयोगिसम्भावना नाभिहिता। तथा प्रमेति। अभावे प्रतियोग्यधारताप्रमेत्यर्थः। परित्यज्य निश्चितानतिप्रसञ्जकतां सम्भाव्यमानातिप्रसञ्जकतावस्य कल्पनाया नौचिती, अन्यथा कार्यकारणयोः सहानवस्थितयोरप्याधाराधेयभावप्रमाया दर्शनेनानुयोगिनि प्रतियोग्याधारताप्रमाया अपि सम्भाव्यमा-नतया तादृशाधारताया अपि सम्भावनाया दुर्निवारत्वात्, प्रतियोग्यनुयोगिभावलक्षणविरोधस्य तु

भावात्कथं तयास्तामिति चेन्न; तथाप्रमाभावमूलस्य विरोधस्य सहानवस्थानस्य नियमन-भङ्गात् प्रतियोग्यनुयोगिभावादन्यः कस्तयोर्विरोधः स्यात्। तथा न प्रमीयमाणत्वमेव स

कल्प्यमानस्य तद्विरुद्धस्यैव कल्पनीयत्वेन न तत्सम्भावनापि, सहानवस्थानस्य तु तद्विरुद्धत्वकल्पनाया न सम्भवः, तत्सत्त्वेऽप्याधाराधेयभावदर्शनादित्याशयेनाह तथाप्रमेति। अस्यार्थकम्। भावमूलस्य = सम्भावकस्य सहानवस्थानात्मकविरोधस्य, मूलकस्येति पाठेऽपि मूलतीति मूलक इति व्युत्पत्त्योक्त एवार्थः। सम्पातायातो वा कः। अभावेतिच्छेदे तु सहानवस्थानस्येति भावप्रधानम्। तथाच तादृशप्रतीतेः प्रमात्वासम्भावकस्य विरोधस्य सहानवस्थानात्मकता न सम्भवतीत्यर्थः। तथाप्रमाऽभावपदेन घटे तदभावसहावस्थानविषयकप्रमितिविरहमभिधाय बहुव्रीहिणापि व्याख्यानं रोचयन्ति केचित्। वस्तु-तस्त्वनुभवबलादेव भावाभावयोरनुयोगिप्रतियोगिभावलक्षणो विरोधो मन्तुमुचितः, स चातिरिक्तो वाऽनतिरिक्तो वेत्यन्यदेतत्, अन्यथाऽतिप्रसङ्गसम्भावनयैव तत्कल्पने सहानवस्थितयोर्गोत्वाश्वत्वयोरपि विरोधान्तरस्यापि कल्पनापत्तेः, इष्टापत्तौ च प्रकृतेऽपि तेनैव निर्वाहेणानुयोगिप्रतियोगिभावलक्षणविरोधस्याप्रामाणिकत्वापत्तिरिति ध्येयम्। अनुयोगिनि प्रतियोग्यापत्तेरितिग्रन्थस्यापत्तिपरत्वं तु न युक्तम्, आपत्तौ बाधस्यानुगुणत्वेन "तथाप्रमाऽभावादिति' ग्रन्थासङ्गतेः। गोत्वाश्वत्वादौ व्यभिचारेण सहानवस्थानस्याधाराधेयभावानापादकत्वाच्च, अतएव न प्रतियोग्यनुयोगिभावविरहस्यापि तदापादकत्वम्, घटो घटात्यन्ताभाववानित्यस्याप्यनापत्तेश्च। नापि घटाभावे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावानधिकरणत्वेन संयोगसम्बन्धावच्छिन्नघटनिष्ठनिरूपकतानिरूपिताधिकरणताया आपादनसम्भवः, तादृशघटाभावाधिकरणताया एव घटाभावे सद्भावेनासिद्धेः। नच—अनुयोगिनिरूपितत्वस्य प्रतियोगिगतत्वापत्तेरिति तदर्थः, घटस्याभाव इति यदभावस्य घट इत्यपि स्यादिति यावत्, प्रतियोग्यनुयोगि-भावाभ्युपगमे तु प्रतियोगिताया घटे एवानुयोगिताया अभावे एव सत्त्वान्नातिप्रसङ्ग इति—वाच्यम्; "प्रतियोग्यनुयोगिनोस्तथात्व"मिति ग्रन्थस्वरसेन प्रतियोग्यनुयोगिभावस्य पूर्वपक्षिणाप्यङ्गीकारात्तस्य विरोधपदार्थतायामेव विवादात्, अतएव 'किन्तु सहभावाभाव' इति ग्रन्थेन विरोधात्मना प्रतियोगिता निरूप्यते इति न वक्तव्यम्; निरुक्तविरोधस्य प्रतियोग्यवृत्तित्वाच्च, यदभावप्रतियोगितावच्छेदको यः सम्बन्धस्तेन सम्बन्धेन तद्वदसम्बन्धित्वस्य सहानवस्थानपदार्थतयाऽभिधानेऽपि समवायेन सत्ताभावप्रतियोगिन्यव्याप्तिः स्पष्टैव, कथञ्चित्तद्वारणेऽपि प्रतियोगितायास्तद्घटकत्वावश्यम्भावेनोक्तरीत्याऽऽत्माश्रयानवस्थादिप्रसङ्गो दुर्वार एवेति। तथानेति। नञ्समासनित्यतोपगमस्य महाविभाषाधिकारबाधितत्वेन समासाभावेऽपि न क्षतिः, यदाहुः—"असद्वादी हि कात्यायनः" इति। नकारेणैव वा समासः। एवमग्रेऽपि। सः = विरोधः। घटाभाववृत्तित्वप्रकारकप्रमित्यविषयत्वं घटाभावविरुद्धत्वमिति नार्थः। पटादावतिप्रसक्तेः। नापि तादृशप्रमित्यविषयत्वे सति घटाभावसमानाधिकरणत्वप्रकारकप्रमित्यविषयत्वम्; विशेषणवैयर्थ्यात्, किन्तु विशेष्यदलमेव। समानाधिकरणत्वगर्भे सम्बन्धित्वं निवेश्यमिति न गगनादावतिप्रसङ्गः। वस्तुतस्तु 'सर्वमाकाशव'दिति प्रत्ययस्य सार्वजनीनत्वेन तस्यावृत्तित्वं निष्प्रमाणमेव। तादृशप्रमित्यविषयत्वञ्च तादृशप्रमितिविषयताव्यापकप्रतियोगिताकात्यन्ताभाव इति न पटादौ यत्किञ्चित्प्रमितिविषयताविरहमादायातिप्रसङ्गतादवस्थ्यम्। सम्बन्धविशेषावच्छेदकविशेषादिनिवेशस्तु पूर्वोक्तरीत्या द्रष्टव्यः। घटभेदविरुद्धत्वं तु घटभेदाधिकरणनिरूपिततादात्म्यसम्बन्धावच्छिन्नसम्बन्धित्ववैशिष्ट्यप्रमित्यविषयत्वम्। सत्तादौ तु स्वाधिकरणनिरूपितवृत्तित्वप्रकारकप्रमित्यविषयाभावकत्वादिकमेव वक्तव्यम्। अतिप्रसङ्गादिति। यत्पटादिष्वप्रसक्तौ घटाभावसमानाधिकरणत्वप्रकारक-

इति चेन्न; अतिप्रसङ्गात् । नियमेनेति चेन्न; जात्या नियमाभ्युपगमात् व्यक्त्योरविरोधा-पत्तेः । तथा न प्रमातुरनौपाधिकी योग्यतेति चेत्; सैव मेयगता योग्यताऽनुयोगिप्रति-

प्रमितिविषयतासामान्याभावस्तत्रातिप्रसक्तेः । न च तादृशव्यक्तौ मानाभावः, संशयेनापि लक्षणासिद्धेः । नचान्तत ईश्वरीयतादृशप्रमीयविषयतासद्भाव इति वाच्यम्; अनीश्वरवादिन्यसिद्धेः । नियमेनेति । यद्रूपावच्छिन्नप्रकारताकप्रमीयविशेष्यत्वं घटाभावप्रकारकप्रमीयविशेष्यत्वाभावव्याप्यं, यद्रूपं वा घटाभावसमानाधिकरणत्वप्रकारकप्रमितिविशेष्यत्वसामान्याभावव्याप्यं तद्रूपावच्छिन्नत्वमित्यर्थः । तद्रूपं च घटत्वं नतु पटत्वतद्व्यक्तित्वादिकम् । आद्ये यद्रूपेऽवच्छेदकता द्वितीये च व्याप्यता हि समवायेन निविष्टा । जात्येति । व्यक्तीनामानन्त्यव्यभिचाराभ्यां नियमस्यानुगतधर्मावच्छेदेनाभ्युपेयत्वात् घटत्वेन तदवच्छिन्नाभावत्वेन च विरोधस्य प्रत्येतुं शक्यत्वेऽपि तत्तद्घटत्वेन तत्तदभावत्वेन च तस्य ज्ञातुमशक्यतयाऽसम्भवदुक्तिकत्वम् । विशेषरूपेण तदसम्भवे च सामान्यरूपेणापि न तत्सम्भवः, अन्यथा विशेषरूपेण कार्यकारणभावादिकमन्तरापि सामान्यरूपेण तदभ्युपगमापत्तेरिति भावः । व्यक्त्योरिति विशेषरूपेणेति शेषः । अथवा तादृशप्रमितिविषयत्वाभाव इति यथाश्रुते यत्किञ्चित्तादृशप्रमितिविषयत्वाभावमादाय पटादावतिप्रसङ्ग एव 'अतिप्रसङ्गादि'ति ग्रन्थेनोक्तः। तादृशप्रमितिविषयतात्वव्यापकप्रतियोगिताकाभावो विवक्षणीय इति च 'नियमेने'त्यनेनोक्तम् । तत्तद्विषयतात्वेन तत्तदभावत्वेन च विरोधस्याज्ञेयतया तदसम्भवो 'जात्ये'त्यादिनोक्तः । तुल्यन्यायतया चान्यत्रापि विशेषरूपेण विरोधस्याप्रमिततयाऽसम्भवे सन्देहे वा सामान्यरूपेणापि न तस्य सम्भवो निश्चयो वेति भाव इति । उपलक्षणञ्चैतत्, भेदसंसर्गाभावयोर्वैलक्षण्यनिरूपणस्यैव प्रस्तुततया तत्स्याव्याप्त्यनिश्चयेनात्यन्ताभावविवक्षाया अकिञ्चित्करत्वेन तादृशप्रमितिविषयताभेदमादायाप्यतिप्रसङ्गः, प्रमात्वस्यैव निरूप्यमाणतया भ्रममादायासङ्गश्च द्रष्टव्यः । एवमग्रेऽपि । तथा नेति । कदाचिद् घटाभावसमानाधिकरणत्वप्रकारकप्रमितिविषयताविरहवत्त्वेन पटादावपि तादृशविरहयोग्यताया मन्तव्यत्वेनातिप्रसक्तेरित्यत अनौपाधिकीत्युक्तम्, स्वाभाविकीत्यर्थः । एषैव स्वरूपयोग्यतेति प्रसिद्धा । तादृशविषयतायोग्यताविरहवत् एव च तादृशविषयताविरहयोग्यतेति तादृशविषयतायोग्यतावति पटादौ तादृशविषयताविरहयोग्यताया न सम्भव इति भावः । यद्यपि विचार्यमाणेयं योग्यता तादृशविषयताविरहव्याप्यत्वस्य तादात्म्यसम्बन्धावच्छिन्नस्य तत्समव्याप्यत्वस्य वाऽवच्छेदकीभूतधर्मवत्तायामेव पर्यवस्यति, तथाच नियमेनेत्यादि ग्रन्थेनैव गतार्थता, अथवेत्याद्युक्तकल्पे शङ्कापौनरुक्त्यपरिहारेऽपि समाधेस्तौल्यमक्षतम् । अत्रापि च तादृशयत्किञ्चित्प्रमितिविषयताविरहवतः पटादेस्तदनौपाधिकयोग्यतापि स्यादेवेति तादृशप्रमितिविषयतासामान्याभावो विवक्षणीय एव, तथा च सर्वज्ञवादे तेनैव चारितार्थ्याद्योग्यतानिवेशोऽकिञ्चित्करः असर्वज्ञवादे तु यत्पटादिव्यक्तौ तादृशसामान्याभावसम्भावना तत्र तद्योग्यताया अपि सम्भव इति रीतिरुक्तैवानुसर्तव्या, तथापि स्वरूपसम्बन्धविशेष एव सा योग्यता, सा च घटे एवाभ्युपेयेत्याशयः । एवं चा'नुयोगिप्रतियोगित्वादन्या का समर्थिता स्या'दित्यग्रिमग्रन्थस्यापि सामञ्जस्यम् । अतएव नञो व्यत्यासेन तादृशप्रमितिविषयतायोग्यताविरह इत्यर्थकतया नायं ग्रन्थो व्याख्यातः, तदा हि 'मेयगता योग्यते'-त्यत्रायोग्यतेतिच्छेदसम्भवेऽपि 'प्रतियोगित्वानुयोगित्वे विहाय तादृशयोग्यताविरहस्य समर्थनासम्भवः, तयोरेव तादृशविरहनियामकत्वादिति तदभ्युपगम आवश्यक' इत्येव समाधेर्वक्तुमौचित्येनाग्रिमग्रन्थासङ्गतेः स्पष्टत्वादिति । न प्रमातुरितिप्रयोगतः प्रमातृगतापि योग्यता भात्येवेत्याशयेन तद्व्यावृत्तये मेयेति । घटसमानाधिकरणत्वप्रकारकप्रमितिविषयत्वाभावयोग्यत्वमभावगतमनुयोगित्वमेवेति भावः ।

योगित्वादन्या का समर्थिता स्यात्। स्वरूपमेवेति चेन्न; मिथः सम्भेदाभ्युपगन्त्रापि तयोः स्वरूपोपगमात्। तथाभूतं स्वरूपमिति चेन्न; तस्यैव निर्वाच्यत्वापत्तेः। कथं गोत्वाश्वत्वाभ्यां भावाभावयोरेवंविधविरोधे विशेषः स्यात्, सत्यां च तयोः साहित्यप्रमायां प्रकारभेदेन व्यवस्थापना किमिति कार्या ? प्रमयैवाप्रमानुपगमादिति।

अथ घटादिविशेषितयोरन्ययोर्निषेधौ तौ, सविशेषणौ च विधिनिषेधौ न कथञ्चिद्विशेषणमनुपसङ्क्रम्य स्यातामिति ब्रूषे; तदपि न, तर्हि विशिष्टस्य निषेधो विशेषणस्यापि भवतीति संसर्गान्योन्यनिषेधोऽपि संसर्गनिषेधः स्यादेवेति पुनः स प्रसङ्गो वज्रलेपायते। अन्योन्याप्रतियोगिकसंसर्गप्रतिषेधस्तथा विवक्षितः, एवमन्योन्यनिषेधोऽपि संसर्गाप्रतियोगिकत्वेन निर्वाच्य इति चेन्न; एवं तर्ह्यन्योन्यसंसर्गाभावः संसर्गान्योन्या-

तादात्म्ययोग्यता घटतदभावादिस्वरूपमेव नतु प्रतियोगित्वाद्यात्मिकेत्याह स्वरूपमेवेति। सम्भेदस्तादात्म्यं तदभ्युपगन्ता "सर्वं हि वस्तु स्वरूपपररूपाभ्यां सदसदात्मना द्विविधम्", "भावाभावात्मकत्वाद्वस्तुन" इति वदन्ननेकान्तवादी भाट्टजैनादिः। एवञ्चाभावप्रतियोगिनोस्तन्मते सामानाधिकरण्यमप्यावश्यकमिति स्वरूपमात्रमतिप्रसक्तमिति भावः। तथाभूतमिति। परस्परासामानाधिकरण्ययतोः स्वरूपविशेष एव निरुक्तयोग्यतेत्यर्थः। स्वरूपगतो विशेषो नानुयोगित्वप्रतियोगित्वादन्यो निर्वक्तुं शक्य इत्याह तस्यैवेति। एवंविधविरोधे = असामानाधिकरण्यमात्रात्मके विरोधे, भावाभावयोः स्वरूपतोऽनुभूयमानो विशेषो नापलप्य इति भावः। तयोः = अव्याप्यवृत्तितदभावयोः। साहित्यं = सामानाधिकरण्यम्। प्रकारभेदेन = अवच्छेदकभेदेन। व्यवस्थापना = विरोधापत्तिपरिहारः। प्रमयैव = सामानाधिकरण्यप्रमाविषयतयैव सामानाधिकरण्यप्रमाविषयताविरहस्यानुपगन्तव्यत्वात्। अयम्भावः—यद्यसामानाधिकरण्यमेव समानाधिकरणत्वेनाप्रमीयमाणत्वमेव वा गोत्वाश्वत्वादिवद्भावाभावयोर्विरोधः, तदा घटत्वतदभावयोरेव विरोधोऽभ्युपेयः, नतु संयोगतदभावयोरपि, तयोः सामानाधिकरण्योपलम्भादित्येकावच्छेदेनासामानाधिकरण्यात्मकविरोधान्तरकल्पना किमिति क्रियते। भावाभावयोरवश्यं कथमप्यसामानाधिकरण्यात्मको विरोध उपपाद्योऽन्यथा भावत्वाभावत्वव्याघात इति चेदेवं तर्हि स्वरूपतो विरोधस्त्वयाऽभ्युपेत एव, तस्य तु विरोधान्तरव्याप्यत्वमनभ्युपगतमित्यन्यत्। केवलान्वयिषु व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकेषु मिथ्यात्वघटकीभूतेषु चाभावेषु व्यभिचारेण विरोधान्तरव्याप्यत्वमप्रामाणिकम्, स्वरूपसम्बन्धविशेषात्मकस्य प्रतियोग्यनुयोगिभावस्य तत्रापि सद्भावादिति तु द्रष्टव्यम्।

तयोः = संसर्गतादात्म्ययोः। तौ = संसर्गाभावान्योन्याभावौ। सविशेषणौ विधिनिषेधौ = विशिष्टसद्भावतदभावविषयकबोधौ। विशेषणमनुपसङ्क्रम्य = विशेषणसद्भावतदभावावनवगाह्य। संसर्गान्योन्यनिषेधः = संसर्गीयतादात्म्यस्य निषेधः, अन्योन्यशब्दस्य तादात्म्यपरत्वात्। स प्रसङ्ग इति। स्मृतित्वसंसर्गस्यान्योन्याभावमादाय स्मृतित्वसंसर्गाभावस्य स्मृतावपि सत्त्वेन तस्याः अनुभूतित्वप्रसङ्गः। तादात्म्याप्रतियोगिकत्वे सति संसर्गप्रतियोगिकोऽभावः संसर्गाभावः, संसर्गाप्रतियोगिकत्वे सति तादात्म्यप्रतियोगिकस्वभावोऽन्योन्याभावः, तथा च स्मृतित्वसंसर्गस्य तादात्म्यप्रतियोगिकाभावो न संसर्गाभाव इति नोक्तदोष इत्याहान्योन्येति। अपरेति। भेदसंसर्गाभावातिरिक्तेत्यर्थः। ननु विशिष्टनिषेधप्रत्ययस्य विशेषणनिषेधावगाहित्वमसति बाधके भ्रमः स्मृतित्वसंसर्गस्य तु स्मृतौ सत्त्वप्रमितेस्तत्तादात्म्यनिषेधस्य न स्मृतित्वसंसर्गप्रतियोगिकत्वसम्भव इति चेन्न; एवं हि समवायादिना घटस्य सत्त्वे एव घटसंयोगादेर्निषेधस्य घटप्रतियोगिकत्वं न स्यादिति न विशेषितनिषेधपक्षेऽपि निस्तारः। तत्र संयोगादिना घटस्या-

भावव्यापक कोटिः स्यात्। किञ्च, एवं सति संसर्गाभावोऽन्योन्याभावो यो न भवति स संसर्गाभावतया विवक्षित इत्युक्तं स्यात्। तथा च संसर्गविशेषणं व्यर्थमिति संसर्गाभावमर्थमधिकमाकाङ्क्षता त्वयाऽन्वर्थः संसर्गाभावशब्दोऽपि हारितः स्यात्। किञ्चानयापि वाचाऽन्योन्याभावनिषेधोऽभिधीयमानोऽन्योन्याभावेऽपि प्रसज्यते; नह्यन्योन्याभावोऽन्योन्याभावो भवतीति शक्यं प्रमातुम्, सामानाधिकरण्यं हि प्रकारभेदे सति भवति,

मत्वात्तत्प्रतियोगिकत्वसम्भव इति तु प्रकृतेऽपि समम्, तादात्म्येन स्मृतित्वसंसर्गस्य स्मृतावसत्त्वात्। अथ प्रतियोगिविशेषणत्वासमानाधिकरणायास्तादात्म्यनिष्ठप्रतियोगिताया अनिरूपकत्वमन्योन्याप्रतियोगिकत्वम्, प्रतियोगिविशेषणत्वासमानाधिकरणायाः संसर्गनिष्ठप्रतियोगिताया अनिरूपकत्वं च संसर्गाप्रतियोगिकत्वं निर्वाच्यम्, एवं च तादात्म्यीयसंसर्गाभावस्य प्रतियोगिविशेषणतासमानाधिकरणतादात्म्यनिष्ठप्रतियोगितानिरूपकत्वेन संसर्गीयतादात्म्यनिषेधस्य च प्रतियोगिविशेषणतासमानाधिकरणसंसर्गनिष्ठप्रतियोगितानिरूपकत्वेन नातिरेकप्रसङ्ग इत्यस्वरसादाह किञ्चेति। अन्योन्याप्रतियोगिकेत्यस्यार्थः 'अन्योन्याभावो यो न भवती'ति, तथापदार्थः 'संसर्गाभावतये'ति। व्यर्थमिति। लक्षणे इत्यादिः। इतीति। तस्य त्यागावश्यकत्वे इति शेषः। संसर्गाभावम् = भेदभिन्नाभावम्। अधिकम् = संसर्गाभावशब्दयोगशक्त्यलभ्यम्। संसर्गशब्दस्य लक्षणवाक्यघटकत्वे संसर्गप्रतियोगिकाभावरूपयोगार्थस्य न त्याग इत्युपष्टम्भसङ्गतिः। यथा भेदत्वादिवत्संसर्गाभावत्वस्याखण्डस्यानुभवेन नाखण्डोपाधित्वं तस्य तार्किकैरनुमन्यते तथा संसर्गाभावशब्देन भेदभिन्नाभावत्वेनापि तस्याननुभवेन तादृप्येण तत्पदबोध्यत्वमपि नानुमन्तुमर्हमित्याशयः। संसर्गाभावपदस्य रूढत्वपक्षमभ्युपेत्याप्याह किञ्चेति। नहीति। शक्यं प्रमातुमित्यन्वयः। सिद्धसिद्धिव्याघातस्तु नोद्भावनीयः. अन्योन्याभावोऽन्योन्याभाव इति बुद्धौ प्रमात्वस्य वा तादात्म्यसम्बन्धावच्छिन्नभेदत्वावच्छिन्नप्रकारतायां भेदत्वावच्छिन्नप्रमीयविशेष्यतानिरूपितत्वस्य वा निषेधे तात्पर्यात्। सामानाधिकरण्यं = अभेदान्वयबोधौपयिकाकाङ्क्षाशालितामद्वयत्वं, समानविभक्तिकनाम्नोरभेदान्वयबोधौपयिकत्वमिति यावत्, अभेदविषयकप्रमात्वमिति तु परमार्थः, शाब्दातिरिक्ततादृशप्रमाया अपि भिन्नप्रकारविषयकत्वनियमस्य वक्तव्यत्वात्। प्रकारभेदे = उद्देश्यताविधेयतावच्छेदकयोर्भेदे। तदभावादेव = उद्देश्यताविधेयतावच्छेदकयोर्भेदाभावादेव। न तथा = अन्योन्याभावत्वावच्छिन्ने तदवच्छिन्नाभेदधियः प्रमात्वं न। अन्योन्याभावत्वावच्छिन्ने तदवच्छिन्नस्याभेदो नेति यावत्। तथा च भेदस्यार्थप्रासत्वेन भेदभिन्नाभावत्वं संसर्गाभावलक्षणं भेदेऽतिप्रसक्तम्। नच निरुक्तप्रतियोगितानिरूपकत्वात्यन्ताभाव एव विवक्षणीयो ननु तन्निरूपकभेद इति वाच्यम्, तन्निरूपकभेदस्य प्रसक्तौ तादृशनिरूपकत्वात्यन्ताभावस्यापि प्रसक्तत्वात्, तादात्म्यनिष्ठप्रतियोगिताया यत्किञ्चित्प्रतियोगिविशेषणत्वसामानाधिकरण्यस्य सत्तया स्वप्रतियोगिविशेषणताया विवक्षणीयत्वेन पूर्वोक्ताननुगमादीनां जागरूकत्वाच्च। न च भेदो भेद इत्यस्या अप्रमात्वेऽपि भेदो भेदाभिन्न इति प्रमयैवाभीष्टसिद्धिरिति देश्यम्; भेदाभेदस्य भेदस्वरूपत्वेन विधेयांशेऽधिकावगाहितया उक्तप्रतीतावभावात्, भेदो भेद इति सामानाधिकरण्यविषयोऽप्रमात्वे तस्या अप्यविश्वसनीयत्वाच्च, नहि नीलमुत्पलमितिप्रमितिविरहे नीलाभिन्नमुत्पलमितिमितिः प्रमात्वमालभेत। अतएव भेदे भेदत्वमिति प्रतीत्यापि न फलतो भेदत्वावच्छिन्नस्य भेदत्वावच्छिन्नात्मकतासिद्धिः, उद्देश्यतावच्छेदकविधेययोरैक्यात्। अज्ञातविषयकत्वाभावे हि न प्रमात्वम्, न चोक्तप्रतीतीनां स्वकारणीभूतविशेषणतावच्छेदकप्रकारकज्ञानविषयादतिरिक्तोऽपि विषयो येनाज्ञातविषयकत्वं स्यात्। विशिष्टवैशिष्ट्यबुद्धिं प्रति विशेषणतावच्छेदकप्रकारकज्ञानस्य कारण-

यथा नीलमुत्पलमित्यादि, ततस्तदभावादेव न तथेत्यतिप्रसङ्गः। अन्यश्चान्योन्याभावेष्वेव तिष्ठन्नेव कः प्रमेयो यद्वति तथा कथ्यते ? अभावमात्रे त्वतिप्रसङ्गात्। व्यक्तिविशेषे च शेषेष्वन्योन्याभावेषु संसर्गाभावत्वापत्तेः। एतच्च सर्वत्र तदन्यत्वेन व्यवच्छेद्यमाने द्रष्टव्यम्। तथाहि—

> नातत्तन्मन्यसे तावन्न तत्तदपि मंस्यसे।
> सामानाधिकरण्यं हि रूपभेदमपेक्षते ॥ २६ ॥

त्यानुपगमे कार्यकारणीभूतज्ञानयोर्विषयतावैलक्षण्योपगमेऽपि वा ज्ञातज्ञापकसाम्यं नापाकर्तुं शक्यम्, नहि भेदो भेद इत्यादिधियां संशयादिनिवर्तकत्वम्, भेदो न भेद इत्यादेराहार्यतया निवर्त्यत्वाभावात्। एवञ्च भेदसामानाधिकरण्योपलक्षिततादात्म्यावगाहित्वे एवाभेदसंसर्गकधियः प्रमात्वम्, भेदसमानाधिकरणसंसर्गान्तरावगाहित्वेनैव च भेदसंसर्गकधियः प्रमात्वम्, अन्यथा तद्घटस्तद्घटवानिति धियोऽपि प्रमात्वापत्तेः, तद्वारणाय प्रमात्वान्तरनिर्वचने च प्रमापदार्थस्य पारिभाषिकत्वापत्तिरिति लघुचन्द्रिकाकारानुसारिणी सरणिः। ननु भेदो न भेद इत्यादेराहार्यत्वस्य त्वयाप्युक्तत्वाद् भेदत्वावच्छिन्ने तदवच्छिन्नस्य भेदविरहेणार्थप्राप्तोऽभेद इति मयापि सुवचमिति नोक्तातिप्रसङ्ग इति चेदेवं तर्हि तदवच्छिन्ने तदवच्छिन्नस्य नाभेदो नापि भेद इति तृतीयैव सरणिरनिर्वाच्यतेति तद्वादिन एव विजयन्ते। अन्यः = भेदत्वान्यः। अन्योन्याभावेष्वेव तिष्ठंश्च = भेदत्वान्यूनानतिरिक्तवृत्तिः। यद्वति = यमुद्देश्यतावच्छेदकीकृत्य। तथाकथ्यते = अभेदसंसर्गेण भेदत्वावच्छिन्नं विधीयते। यद्यपि भेदमात्रवृत्तित्वविशिष्टप्रमेयत्वादिकं भेदत्वान्यूनानतिरिक्तवृत्ति, तथापि तदवच्छेदेन भेदत्वावच्छिन्नाभेदविधाने भेदत्वावच्छेदेन तदसिद्धिरेवेति तेन रूपेणैव भेदातिरेकमादायातिप्रसञ्जनं सुकरम्। किञ्च तादृशप्रमेयत्वस्य विधेयकोट्यन्तःपातोपपत्तावप्युद्देश्यकोट्यन्तःपातो न सोपपत्तिकः। किञ्च, भेदे भेदानतिरेकासिद्धौ भेदातिरिक्तावृत्तित्वं प्रमातुं शक्यं न क्वापि। आत्माश्रयाद्यापत्तेस्तु संसर्गाभावातिरिक्ताभावत्वस्योद्देश्यतावच्छेदकत्वं नाशङ्क्यमपि। अभावमात्रे = अभावत्वावच्छेदेन तथाविधाने तु संसर्गाभावस्यापि भेदत्वापत्तिरुद्भाव्या। अभावत्वसामानाधिकरण्येन तथा विधानं चेत्तदाह व्यक्तिविशेषे इति। व्यक्तिविशेषमुद्दिश्य तथाविधाने इत्यर्थः। सामानाधिकरण्येन बाधबुद्धेरवच्छेदकावच्छेदेन विशिष्टबुद्धिविरोधित्वादाह शेषेष्विति। संसर्गाभावत्वापत्तेरिति। उद्भाव्यत्वादिति शेषः। नच—शेषेष्वेतद्भेदातिरिक्तभेदत्वेनैव संसर्गाभावत्वस्यापादनीयत्वात्तेन रूपेण तत्र भेदात्मता मयापि सुवचेति—वाच्यम्; विधेयांशेऽधिकानवगाहितया दत्तोत्तरत्वात्। तदंशे आधिक्यसम्पत्तिमात्रप्रयोजनकमनाकाङ्क्षितविशेषणाभिधानं तु न युक्तम्; उद्देश्यवाचकपदेनैवावगततया घटस्यापूर्वत्वविरहेणाधिकांशस्यैव विधेयतायाः औचित्येऽपि घटो नीलघटो नवेति संशयस्य घटो नील इत्यसमानाकारकप्रतिपत्त्यप्रतिबध्यतामुपगच्छद्भिर्हि घटो नीलघट इति प्रयोगोऽनुमन्यते, न च प्रकृते भेदः प्रमेयभेदो नवेत्यादिसंशयो येन तथा स्यात्। एवं च कथायां प्रतिवादी नेत्थं शक्यः प्रतिपादयितुम्। स्वयमपि च केनापि प्रातिस्विकरूपेण तत्र तत्र भेदात्मता प्रतिपत्तुं न पार्यते इति व्यक्तमेव। एवञ्च भेदत्वेन रूपेण भेदस्यातिप्रसङ्गस्थलत्वं दुष्परिहरमेवेति भावः। सर्वत्र = निश्चयभिन्नत्वे सति ज्ञानत्वं संशयत्वमित्यादौ। तदन्यत्वेन = अलक्ष्यान्यत्वेन। निश्चयो निश्चय इति प्रतीतेरप्रमात्वेन तत्र तद्भेदस्यार्थप्राप्तत्वादतिप्रसङ्ग इति भावः। मन्यसे इति। योग्यताविरहादिति भावः। न तत्तदिति तत्पदद्वयं तद्धर्मावच्छिन्नपरम्। तेन घटः कम्बुग्रीवादिमानित्यादिप्रतीतेः प्रमात्वेऽपि न क्षतिः। सामानाधिकरण्यमिति। न परं शाब्दबुद्धित्वावच्छिन्नं

रूपान्तरेण निर्दिश्य तच्चेत्तदभिधीयते ।
ताद्रूप्येण तथापि स्यात्सैव सव्यभिचारिता ॥ ३० ॥

अपि चान्योन्याभावस्य संसर्गाभावेऽप्येवं व्यवच्छिन्नः स्यात्, तस्याप्यन्योन्यप्रतियोगिकत्वात् । अथान्योन्याभावस्य संसर्गाभावो नामाधिको नोपेयते एव यमादाय तथा स्यादिति चेन्न; एवं तर्ह्यन्योन्याभावस्यान्योन्याभावोऽपि नाधिकोऽभ्युपगन्तव्यः स्यादित्यन्योन्याप्रतियोगिकत्वेन व्यवच्छेदोऽपि संसर्गाभावस्य त्वदभिमतस्य कथं स्यात् ? व्यवच्छेदस्य निषेधार्थत्वात् । अथ मा भूदधिकोऽसौ स्वरूपमेव तु तथेष्यते इति तदादायैव व्यवहार एष निर्दोष इति चेत्; तर्ह्यन्योन्याभावसंसर्गव्यतिरेकेऽपि तुल्यमेतत् । अपि चान्योन्यप्रतियोगिको न भवत्यभावो यः स संसर्गाभाव इति वदताऽ-

शाब्दप्रमात्वावच्छिन्नं या प्रति तादात्म्यसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन तद्धर्मभेदोऽपेक्षितोऽपि तु प्रमात्वावच्छिन्नमेव प्रतीतिभावः, अन्यथा शाब्दातिरिक्तप्रमयैव तद्धर्मावच्छिन्नस्य तद्धर्मावच्छिन्नात्मकतासिद्धिसम्भवेनासङ्गतिः स्पष्टैव । युक्तिस्तूक्तैव । एवञ्चावच्छेदकभेदस्यापेक्षणीयत्वे तेन रूपेणावच्छेद्ययोरपि भेदस्यानुभविकत्वादात्यन्तिकाभेदाभिप्रायेण तत्तदपीति यथाश्रुतमपि सम्यगेव । रूपान्तरेण = भेदत्वासमनियतधर्मेण । निर्दिश्य = उद्दिश्य । ताद्रूप्येण = भेदत्वेन रूपेण भेदे भेदत्वावच्छिन्नभेदमादाय सव्यभिचारिता = संसर्गाभावलक्षणस्यातिप्रसक्तता । तदवच्छिन्ने तदवच्छिन्नस्य नाभेदो नापि भेद इति पूर्वोक्तवस्तुगतिमनुरुध्य दोषान्तरमाह अपि चेति । अन्योन्यप्रतियोगिकत्वादिति । अन्योन्याभावस्य प्रतियोगित्वे तद्विशेषणीभूततादात्म्यात्मकान्योन्यस्य प्रतियोगितायास्त्वदुक्तपथेनैव प्राप्तत्वादिति भावः । यद्यप्यन्योन्याभावस्य प्रतियोगित्वे तादात्म्ये प्रतियोगिविशेषणतासमानाधिकरणैव प्रतियोगितेति तदसमानाधिकरणप्रतियोगित्वानिरूपकत्वसत्त्वेन नाव्याप्तिः, अन्योन्याभावस्याप्रतियोगित्वे तु तादात्म्यस्य प्रतियोगितायाः शङ्कयाप्यनास्कन्दनेन नितरां न सा । तथापि यथाश्रुते एवेदं दूषणं द्रष्टव्यम् ।

अधिक इति । भेदस्य नित्यत्वेन तत्प्रागभावध्वंसयोः केवलान्वयित्वेन च सामान्यतस्तदत्यन्ताभावस्याप्रसिद्धत्वात् विशिष्य घटान्योन्याभावात्यन्ताभावादावेवाव्याप्तिर्वक्तव्या, तस्य च तादात्म्येन घटादिसमनैयत्येन, अभावमात्राधिकरणकस्यैवाभावमात्रप्रतियोगिकस्याप्यधिकरणात्मकतेतिमतेन वा घटात्मकता घटत्वाद्यात्मता वोपगन्तव्या, लाघवात् अन्यथाऽनवस्थानादित्यर्थः । घटभेदात्मकताभिधानं तु न युज्यते, पटे घटभेदात्यन्ताभावस्य घटे घटभेदस्य च सद्भावप्रसञ्जनात् । तथा स्यात् = अव्याप्तिः स्यात् । नाधिक इति । भेदप्रतियोगिकभेदस्य प्रथमभेदात्मकत्वं वाऽधिकरणात्मकत्वं वेत्यर्थः । अन्योन्याप्रतियोगिकत्वेन व्यवच्छेदः = संसर्गाभावेऽन्योन्याप्रतियोगिकत्वप्रयुक्तोऽन्योन्याभावाद्भेदः । कथमिति । तस्यातिरिक्तस्य संसर्गाभावेऽनभ्युपगमे तत्सम्पत्त्यर्थं संसर्गाभावलक्षणेऽन्योन्याप्रतियोगिकत्वविशेषणवैयर्थ्यमिति भावः । स्वरूपमेव = प्रथमभेदस्याधिकरणस्य वा स्वरूपमेव । व्यवहार इति । संसर्गाभावेऽन्योन्याभावप्रतियोगिकभेदव्यवहार इत्यर्थः । अनवस्थापेक्षयैकत्र प्रतियोग्यनुयोगिभावस्याधाराधेयभावस्य वा सहजौचित्यादिति भावः । तुल्यमिति । घटाद्यात्मना वर्तमानस्य घटभेदाभावस्य व्यवहारान्तरौपयिकत्वेऽव्याप्तिस्थलतापि सम्भवत्येवेति भावः । उक्तरीत्या विवक्षितपक्षे नेयमव्याप्तिरित्यतो दोषान्तरमाह अपि चेति । अन्योन्यप्रतियोगिको न भवतीत्यस्मादन्योन्यप्रतियोगिकप्रतियोगिकभेदो भासते, अन्योन्यपदार्थश्च तादात्म्यम्, तच्च

न्योन्यप्रतियोगिकेऽभावे निषिध्यमानेऽन्योन्यात्मकोऽसावभावोऽभ्युपगतः स्यात्; द्वयो-
र्निषेधयोः सुन्दोपसुन्दतयाऽन्योन्यस्यैव स्थैर्यापत्तेः; तथा च सत्यन्योन्यस्मिन्निर्विशेषणे
जगदेव प्रविष्टमिति संसर्गाभावत्वेन विवक्षितस्य जगदात्मतायां सिद्धयन्त्यामन्योन्या-
भावात्मनापि स्यादिति व्यर्थो विशेषणप्रयासो हासायेति सविशेषणेऽप्यविशेषणत्वप्रसङ्ग
इति महत्कौतुकम्। ननु 'घटाभावो न भवति स्तम्भः' इत्युक्ते किं स्तम्भो घटात्मा विहितो
भवति? तत्कस्य हेतोः? तदा हि तथा स्यात्, यदि घटस्तदभावश्चेत्येव जगत्स्यात्,
यदा तु स्तम्भादिरप्यपरा कोटिरस्ति तदा कथं स्यादित्युक्तप्रसङ्गानवकाश इति; मैवम्,
यथा घटतदभावाभ्यामन्या स्तम्भादिकमप्यस्ति कोटिस्तथान्योन्यतदभावाभ्यां नान्या
कोटिः सम्भवति. निर्विशेषणान्योन्यमध्ये जगत एव प्रवेशात्, तदात्मनोऽपि निषिध्यमा-

तत्तद्व्यक्त्यतिरेकि न सुवचम्, यदाहुः—"तद्व्यक्तित्वं तादात्म्येन मैव व्यक्तिरिति"। एवञ्च भेदान्तरेऽति-
व्याप्तिप्रसङ्गवारणाय यत्किञ्चिद्भेदस्याव्यावर्तनीयत्वेन भेदप्रतियोगितादात्म्यमात्रस्यैव निवेदयतया भावा-
भावात्मकसर्वप्रपञ्चनिवेशस्यैव पर्यवसानेन तदभावानात्मकस्य संसर्गाभावस्य तदात्मकत्वापत्त्याऽन्यो-
न्याभावात्मकत्वमप्यापन्नम्; यथाहि भावाभावात्मकं जगदिति भावभिन्नस्याभावत्वमेव, अभावभिन्नस्य
च भावत्वमेवापद्यते, प्रकारान्तराभावात्, तद्वत्। इयांस्तु विशेषो यदत्र भेदप्रतियोगितया भेदेऽपि वृत्ते-
र्भावाभावात्मकतादात्म्यप्रतियोगिकाभावस्य स्वप्रतियोगिसमुदायान्तर्गततया तदनात्मकस्य तदात्म-
कत्वं व्याहतमापन्नमिति, अतएव 'महत्कौतुक'मित्युक्तम्। नहि तादात्म्याभाव इत्यत्राभावस्य भेदत्वेन
प्रवेशः, येन तादात्म्याभावानात्मकं तादात्म्यात्मकं न स्यात्, किन्त्वभावत्वेन, अन्यथाऽन्याश्रयापत्ते-
र्भेदलक्षणे। भावात्मकतादात्म्याभावानात्मकस्य संसर्गाभावस्य भावात्मकताऽपि यद्यपि व्याहता, तथापि
भेदानात्मकतासम्पत्तये उपात्तविशेषणस्य तदात्मकतासम्पादकत्वमत्युपहासास्पदमित्याशयेनैकत्र व्याह-
तिरुपन्यस्ता। यद्यपि सर्वप्रपञ्चान्योन्याभावोऽप्रसिद्धः, व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्य
तस्याविवक्षितत्वात्, अन्यथा भेदान्तरे संसर्गाभावत्वप्रसक्तेरिति तत्तत्तादात्म्याभावकूटनिवेशस्यावश्य-
म्भावः, तथाप्यनन्ततत्तत्तादात्म्यानां तत्तदभावानात्मकस्यानन्ततत्तत्तादात्म्यात्मकताप्रसक्त्योक्तापत्तिरत्रापि
दत्तपदैव। असर्वज्ञदुर्ग्रहत्वापत्तिः पुनरधिकेत्यन्यत्। एवञ्चान्योन्याभावो न भवति संसर्गाभाव इति
प्रमाणभूतया गिरा भेदस्य तादात्म्यप्रतियोगिकाभावत्वकल्पे संसर्गाभावस्य भेदात्मकतापर्यवसाने तादा-
त्म्यनिष्ठप्रतियोगितानिरूपकत्वात्यन्ताभावविवक्षयापि न निस्तारः, बाधात्। नच तादात्म्यसम्बन्धा-
वच्छिन्नप्रतियोगिताकाभावानात्मकता विवक्षाक्षमा, तादात्म्यस्य प्रतियोगितावच्छेदकसम्बन्धत्वाभावा-
दिना भेदभङ्गे दत्तोत्तरत्वादिति समुदायार्थः। सुन्दोपसुन्दतया = परस्परविरोधितया। सुन्दोपसुन्दयो-
र्दैत्ययोः परस्परोपहन्तृत्वप्रसिद्धेः। अन्योन्यस्यैवेति। तादात्म्याभावभेदस्य न तादात्म्यरूपत्वमपि
तु तादात्म्यात्यन्ताभावात्यन्ताभावस्येति तु तदा स्यात्, यदि तयोः परस्परव्यावृत्तं स्वरूपं निर्वक्तुं शक्येत,
संसर्गाभावत्वखण्डनेन तद्घटितात्यन्ताभावत्वस्यापि निरस्तप्रायत्वादिति भावः। निर्विशेषणे इति याव-
त्तादात्म्यनिवेशसूचनाय। जगदेव = सर्वं जगत्। अन्योन्यतदभावाभ्यामिति। तदभावस्यान्योन्या-
न्तर्गतत्वेऽप्यन्योन्यत्वतदभावत्वाभ्यां भेदात्पृथगुपन्यासः। घटतत्तादात्म्योरतिरेकित्वेऽप्यन्योन्याभाव-
शब्देन घटादिप्रतियोगिकाभावाभिधाने उक्तविचारसरणिरप्रतिहतैवेत्याह तदात्मन इति। तादात्म्या-
श्रयस्य घटादेरित्यर्थः। निषिध्यमानत्वे = अन्योन्याभावप्रतियोगित्वे तन्निषेधात्मके = घटादिप्रतियोगि-
कान्योन्याभावाभावात्मके। जगत्प्रवेशात् = तादृशाभावस्य जगदात्मकत्वादिति यावत्। तादात्म्यसम्ब-

त्वे तन्निषेधात्मके तदात्मनि जगत्प्रवेशात्। नहि 'घटः पटात्मे'त्यनेन पटस्वरूपादन्य-स्तदात्मा विहितः स्यात्। यदि तु तादात्म्यं नामाभेदाख्यो धर्मः कश्चिदिष्यते स घट-पटाद्यधिकरणतया निषिध्यते तदा संसर्गाभाव एव स स्यात्। तस्मान्निर्विशेषणतादा-त्म्यान्तर्भूतं जगदिति कोऽन्यन्तराभाव इति। अपि चैवं तर्हि घटे निषिध्यमाने घटाभावो विधीयते, घटाभावे च निषिध्यमाने घट इत्यपि न स्यात्; तृतीयस्य विद्यमानत्वात्; भवन्वा 'घटाभावः स्तम्भो न भवती'त्यत्रापि घटाभावनिषेधत्वाविशेषात् विशेषान्तरा-निर्वचनात् घटः स्तम्भात्मेत्येवोक्तं स्यादिति त्वत्प्रसङ्गस्त्वयि निपतेत्। संसर्गान्योन्या-भाववैचित्र्यमादाय हि स परिहार्यः, स एव च नाद्यापि व्यवतिष्ठते। अतएव 'प्रतीति-बलादेव वैधर्म्यमनयोरुपेय'मित्यपि निरस्तम्। प्रतिषेध्यप्रतिषेध्यविरोधे प्रकारविशेष-व्यवस्थानिरुक्त्यशक्तेरविशेषेणैकनिषेधेऽन्यविधिध्रौव्यं भवदन्योन्याभावनिषेधेऽप्यन्यो-न्यविधयं स्यात्। मम चानिर्वचनीयतैव प्रतीतिव्यवहारव्यवस्थापर्यनुयोगप्राणवारणाय

---

न्यावच्छिन्नप्रतियोगिताकस्य सम्बन्धानवच्छिन्नप्रतियोगिताकस्य वा घटाद्यभावस्याभावो न घटाद्यात्मक इति तु तदा निगन्तुं शक्येत यदि तादृशलक्षणकोऽन्योन्याभावः स्यात्, न च तत्सम्भवतीत्युक्तमिति भावः। नहि तदात्मा तस्मादतिरिच्यते येन प्रपञ्चात्मनः प्रतियोगित्वे प्रपञ्चस्य तत्र स्यादित्याह नहीति। तदात्मा = पटात्मा। **स्यादिति**। तादृशप्रतीतिभ्रम इत्यन्वेतत्। द्रव्याद्यात्मेत्युचितः पाठः। ननु न घटादेर्भेदप्रतियोगिता, अपि तु तादात्म्यस्य, तच्च न घटाद्यात्मकम्, किन्त्वखण्डधर्मविशेष इति तादा-त्म्याभावानात्मकस्य न यावज्जगदात्मतापत्तिरत आह यदीति। सः = अन्योन्याभावः। घटे पटता-दात्म्यं नास्तीति संसर्गाभावेन तस्याविशेषात्। एवञ्च समानविभक्त्यन्तप्रतियोग्यनुयोगिवाचकपदसम-भिव्याहारस्यान्योन्याभावबोधहेतुताभ्युपगमोऽपि निर्मूलः स्यादिति घटो न पट इति तत्प्रतीत्याकारो व्याहन्येतेति। घटाभावानात्मकस्य घटानात्मकत्वमभ्युपेत्य समाधायि पुरा अधुना तु तस्यापि घटात्म-कत्वमभ्युपेयं सुतरां तादात्म्याभावानात्मकस्य तादात्म्यात्मकत्वमित्युपदर्शयितुमाह अपि चेति। एवं तर्हि = प्रतियोगितदभावातिरिक्तस्य विद्यमानत्वेऽभावाभावस्य प्रतियोगिस्वरूपत्वानुपगमे 'भवन्वा= घटाभावनिषेधो घटात्मको भवन्वा 'घटाभावो न भवति स्तम्भ' इति धीसाक्षिकोऽपि स घटात्मको भवे-दिति घटाभावो न भवति स्तम्भ इत्यत्रापि घटः स्तम्भात्मेत्येवोक्तं स्यात् = घटस्तम्भाभेद एव तादृश-वाक्याधीनधीविषयः स्यादित्यध्याहृत्य व्याख्येयम्, अन्यथा 'भवन्वे'त्यस्यासङ्गतेः। **घटाभाव-निषेधत्वाविशेषादिति**। घटाभावभेदस्येत्यादिः। ननु घटात्यन्ताभावात्यन्ताभावस्य घटात्मकता तद्-व्येव तद्व्यवहारादिना कल्प्यते ननु घटाभावभेदस्य, अन्यथा घटाभाववति तदसत्त्वप्रसङ्गादित्यत आह **विशेषान्तरानिर्वचनादिति**। भेदात्यन्ताभावयोर्विविच्य निर्वचनमन्तरा तादृशकल्पनाया असम्भवेन तादृशप्रसङ्गस्य वक्ष्यमाणप्रकारेणैव समाधानस्य त्वयाप्यादरणीयत्वादिति भावः। **त्वयीति**। स्तम्भ-स्य घटात्मतापत्तिस्त्वय्यपि समानेत्यर्थः। **संसर्गान्योन्याभावेति**। संसर्गाभावान्योन्याभावेत्यर्थः। सः = उक्तप्रसङ्गः। स एव = संसर्गान्योन्याभावयोर्भेद एव। तदेवेत्युचितः पाठः। अतएव = वैधर्म्यस्यासम्भ-वप्रसङ्गः। स एव = संसर्गान्योन्याभावयोर्भेद एव। प्रतीतीति। विलक्षणाकारेत्यादिः। **प्रतिषेध्येत्यादि**। प्रतियोग्य-नुयोगिकत्वे तत्प्रतीतेरप्रमात्वादेव। प्रतीतीति। विलक्षणाकारेत्यादिः। प्रतिषेधेत्यादि। प्रतियोग्य-नुयोगिभावो घटतद्भेदयोरिव घटतत्संसर्गाभावयोरपि समानः, विरोधान्तरं वैधर्म्यञ्चानुगतं न भेदस्य नापि संसर्गाभावस्य नाप्यत्यन्ताभावस्य सुवचमित्युक्तमधस्तादिति भावः। अविशेषेण = अभावत्वावच्छे-देन। अभावनिषेधे प्रतियोगिविधौ इत्यर्थः। **अन्योन्याभावनिषेधे इति**। तद्वतीत्यर्थः। अन्योन्याभा-

वज्रवारबाणायमाना विजयते। मम त्वेवं दर्शनम्-प्रतीतिसिद्धत्वादन्यन्तासद्विलक्षणं भवदपि जगत्तथा सत्त्वोपगमेऽपि बाध्यमानत्वादनिर्वचनीयमिति। अत एव प्रतीयमानत्वा-द्वैचित्र्यमनयोर्घुष्यमाणमतिदूरनिरस्तम्। उक्तप्रतियोग्यादिर्वैचित्र्यानुपपत्तितः प्रतीय-मानस्यैव बाध्यमानताया एव कथनात्। तस्माद्—

अन्योन्याभावसंसर्गाभावभेदव्यवस्थितौ।
सत्यां स्यात्तद्व्यवस्थेति स्वाश्रयं कश्चिदित्यसत्तु ॥ ३१ ॥

अभाव एव यत्रेति सावधारणं वक्तव्यमिति चेन्न; एवकारेण किमधिकमभिधी-यते ?। भावो निषिध्यते इति चेन्न; तस्याभावपदेनैव लब्धत्वात्, भावनिषेधोऽभाव इत्यनर्थान्तरमिदम्। भावसमानाधिकरण्यनिषेध एवकारार्थ इति चेत्; उक्तेनैव गतार्थ-त्वात्। अन्योन्याभावस्य च स्मृतावपि सम्भवात्, नहि भावसामानाधिकरण्यं स्मृतिः।

ग्निषेधस्याप्यन्योन्याभावकत्वायै स्यादिति भावार्थः। स्वमते सर्वप्रमज्ञानां सासमाधानमाह ममेति। यद्यपि वैतण्डिकस्य प्रतिबन्दिपरिहारोऽनुचितः, तेन परमतनिरासस्यैव प्रक्रान्तत्वात्, नवा परस्य पर्यनुयोगेऽप्यत्र कथायामधिकारः, अत एव द्वितीयपरिच्छेदे प्रतिबन्दिखण्डने "मया साम्प्रतं तदभिधा-नस्याप्रस्तुतत्वा"दित्युक्तम्, तथापि ग्रन्थकृदुक्तिरियं सुहृद्भावेनैवेति। वारबाणः = कञ्चुकः। प्रतीति-सिद्धत्वात् = अलीकविषयकप्रतीतिविलक्षणप्रतीतिविषयत्वात्। तथा सत्त्वोपगमेऽपि = तादृशप्रतीति-सिद्धसत्त्वेनोपगम्यमानमपि चानिर्वचनीयमेव, नतु परमार्थसत्, बाध्यमानत्वादिति योजना। कृतप्रप-ञ्चञ्च पुरैतत्। प्रतीतिबलादेवेत्यादिनोक्तमेव समाधानं स्फोरयितुमनुवदन्नाह अत एवेति। अनयोः = संसर्गाभावान्योन्याभावयोः। अनुपपत्तितो बाध्यतायाः इत्यन्वयः। तद्व्यवस्था = तादृशभेदव्यवस्था। भेदभिन्नाभावत्वं संसर्गाभावलक्षणं भेदसंसर्गाभावयोर्भेदसिद्धिं विना न सम्भवति तयोर्भेदसिद्धिश्च तादृशलक्षणं विना न निर्वहतीत्यन्योन्याश्रयः, लक्षणस्यैव भेदकत्वात्। परम्परया भेदसिद्धेः स्वसा-पेक्षत्वात्त्वात्माश्रय इति।

स्मृतित्वस्याभाव एव यत्र तज्ज्ञानमनुभूतिः, स्मृतौ तु न स्मृतित्वस्य भेदात्मकोऽभाव एव, अपि तु स्मृतित्वमपीत्याशङ्कते अभाव इति। शङ्खे पाण्डरत्वमेवेत्यत्र पाण्डरत्वाभाववद्वृत्तित्वस्य शङ्खत्वे प्रतीतिवत्प्रकृते स्मृतित्वाभावाभाववद्वृत्तित्वे स्मृतित्ववद्वृत्तित्वरूपं यादृशज्ञानत्वे तस्यानुभूति-त्वमिति प्रतीत्यभिप्रायेणाह भावसामानाधिकरण्येति। उक्तेनेति। स्मृतित्वाभावोक्त्यैव स्मृतित्व-सामानाधिकरण्याभावस्यार्थाल्लाभात्, प्रत्यभिज्ञानात्मकांशिकानुभूतेरुभयथाऽपि सङ्ग्रहीतुमशक्यत्वा-दिति भावः। अवच्छेदकगर्भसामानाधिकरण्योपादाने तत्सङ्ग्रहेणैवैवकारसाफल्यसम्भवादाह अन्यो-न्येति। स्मृतित्वसामानाधिकरण्यभेदस्येत्यर्थः। स्मृतौ = स्मृतित्वे। स्मृतिः = स्मृतित्वम्। भेदात्यन्ता-भावयोरद्यापि विविच्यानिर्वचनादिति भावः। यद्वा प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यधिकरण-स्मृतित्वात्यन्ताभाववज्ज्ञानत्वमनुभवत्वमित्याशङ्कते भावेति। अत्यन्ताभावस्य प्रतियोग्यधिकरणत्व-नियमात् संयोगाभावस्यापि प्रतियोग्यधिकरणे प्रतियोग्यवच्छेदकावच्छेदेनावृत्तित्वात् मूलशाखावच्छि-न्नवृक्षयोरिव वा भेदात्प्रतियोग्यधिकरणतालाभाय नैवकारसाफल्यमित्याह उक्तेनेति। अत्यन्ताभावस्य प्रतियोग्यधिकरणत्वनियमेऽपि भेदेन तद्विवेकानिरूपणदशायां तद्विवक्षाया अकिञ्चित्करत्वात् स्मृतित्व-भेदमादायातिप्रसङ्गो मा भूदिति समवायेन प्रतियोगिवैयधिकरण्यलाभफलकैवकारसाफल्यमित्याशङ्क्याह अन्योन्याभावस्येति। प्रतियोग्यधिकरणवृत्तित्वप्रतियोगिकान्योन्याभावस्येत्यर्थः। तादृशवृत्तित्वाभा-

स्मृतौ च भावमभावं चैकत्र मन्यमानेन तस्याप्येष्टव्यत्वात्. तयोः परस्परप्रतिक्षेपरूपत्वात्, नहि रूपरसयोरेकत्राभावे न तत्सामानाधिकरण्याभावः स्यात्। समाविष्टयोर्भावाभावयोः परस्परप्रतिक्षेपात्मकतैव न सिद्धेति चेत्; तर्हि तथाविधयोर्भावाभावपद-

वस्य प्रतियोगिव्यधिकरणत्वपदार्थत्वात्, अत्यन्ताभावविवक्षायाश्चाकिञ्चित्करत्वात्। स्मृतौ = स्मृतिनिष्ठे स्मृतित्वाभावे। स्मृतिः = स्मृतिनिष्ठः स्मृतित्वाभावः। एतेन—अयोगव्यवच्छेदोऽभावप्रतियोगित्वव्यवच्छेदः, तथा च शङ्खनिष्ठाभावाप्रतियोगित्वस्य पाण्डरत्वे प्रतीतिवज्ज्ञानविशेषनिष्ठाभावाप्रतियोगित्वस्य स्मृतित्वाभावे प्रतीत्या स्मृतित्वावृत्तिरिति—परास्तम्. अभावप्रतियोगित्वभेदमादाय दोषतादवस्थ्यात्, न च—स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्यावश्यं विवक्षणीयत्वान्न भेदोपादानसम्भवः, एवं पूर्वत्र वृत्तित्वाभावेऽपि द्रष्टव्यमिति—वाच्यम्; भेदात्यन्ताभावयोर्विवेकानिरूपणे स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्य क्वचिन्नियन्तुमशक्यत्वात्। उभयाभावात्मिकमादाय तथापि दोषतादवस्थ्याच्च, पर्याप्त्यादिनिवेशस्याप्यप्रसिद्धिग्रस्तत्वात्। भेदात्मकस्मृतित्वाभावस्य स्मृतित्वस्यापि व्यापकत्वाच्चेति। स्मृतौ प्रकारान्तरेणाप्यतिप्रसक्तिमाह स्मृतौ चेति। स्मृत्यात्मकैकाधिकरणे स्मृतित्वं भेदत्वेनाध्यवसितं तदभावश्च मन्यमानेनापीत्यर्थः। तस्यापि = स्मृत्यन्तर्भावेण स्मृतित्वाभावे स्मृतित्वसामानाधिकरण्याभावस्यापि। तथाच प्रतियोगिव्यधिकरणस्मृतित्वाभाववज्ज्ञानं स्मृतिरपीत्यतिव्याप्तिः, नहीदानीं स्मृतित्वतदत्यन्ताभावयोरेव परस्परविरहात्मकता ननु स्मृतित्वतद्भेदयोरपीति वक्तुं शक्यम्, येन स्मृतित्वाभावे भेदात्मके स्मृतित्वसामानाधिकरण्यं समर्थयितुं शक्येत, अपि तु सामान्यत एव भावाभावयोः सेति तादृशसामानाधिकरण्याभावस्य स्मृतित्वाभावे ध्रौव्यमित्याह तयोरिति। भावाभावयोरित्यर्थः। प्रतिक्षेपः = विरहः। एकत्राभावे इत्यत्र च्छेदः। तथाच रूपरसयोर्यदधिकरणावच्छेदेनाभावः, तदधिकरणावच्छेदेन तयोः परस्परसामानाधिकरण्यस्याप्यभावः परस्परप्रतिक्षेपात्मकस्मृतित्वतदभावयोर्द्वयोस्स्मृतौ सद्भावासम्भवेन तदवच्छेदेन तयोः सामानाधिकरण्याभावलाभे स्मृतित्वसामानाधिकरण्याभाववत्स्मृतित्वाभावस्य स्मृतौ लाभः। यद्यपि तयोः परस्परविरहात्मनोरन्यतरस्यैव स्मृतौ त्यागावश्यम्भावेन स्मृतित्वाभावस्यानैवोपलम्भः। यद्यपि तयोः परस्परविरहात्मनोरन्यतरस्यैव स्मृतौ त्यागावश्यम्भावेन स्मृतित्वाभावस्यानैवोपपत्तेर्नातिव्याप्तिसम्भावना. तथापि विनिगमनाविरहात्स्मृतित्वस्यापि त्यागसम्भवेनेदमुक्तम्। न च—धर्मधर्मिणोरभेदेनापि निर्वाहेण स्मृतित्वाभाव एव त्यक्तुमुचितो ननु स्मृतित्वम्, वेदान्तसंस्कृतमतिरपि च स्मृतित्वस्य मिथ्यात्वोपपत्तये न तदेव स्मृतौ त्यजेदपि तु स्मृतित्वाभावस्यापि तत्र मिथ्यात्वेन तत्समानि—वाच्यम्; अत्यन्ताभेदे स्मृतित्वस्य सुतरां त्यागात्, भेदाभेदे च द्वयोरेवात्यागात्। वस्तुतस्तु पूर्वोक्तरीत्यैवातिव्याप्तिरिदानीं युक्तम् प्रतियोगिव्यधिकरणस्मृतित्वाभावं कालिकेन स्मृत्यादाय च तदानीं सुकरम्। यथा सम्बन्धविशेषनिवेशेनापि न निस्तारस्तथोक्तमधस्तात्।

अत्रेदमवधेयम्—'नहि रूपरसयो'रिति ग्रन्थस्वारस्येन 'एकत्र मन्यमानेने' त्यत्रासम्भवमानेनेति नञ्घटितपाठस्यौचित्यप्रतीतावपि 'तस्यापी'त्यत्रापिशब्दस्वारस्येन 'समाविष्टयो'रिति 'असमानाधिकरण्यमेव यत्रे'त्यग्रिमग्रन्थद्वयस्वारस्येन च प्रसिद्धो नञ्रहित एव पाठो व्याख्यातः। यदि तु—भावाभावावेकत्रास्वीकुर्वता स्मृतौ = तदन्तर्भावेण तस्यापि = स्मृतित्वतदभावयोरुभयोरसद्भावस्यैव स्मृतित्वाभावे स्मृतित्वसामानाधिकरण्याभावस्याप्येष्टव्यत्वात्। एवञ्चापिना स्मृतित्वतदभावसामानाधिकरण्यस्य न समुच्चयः, शिष्टं पूर्ववत्। अग्रिमग्रन्थद्वयं च प्रतीतिबलात्समावेशं प्रसाध्य प्रवृत्तमित्युच्यते तदा नञ्घटितमेव पाठं युक्तं पश्याम इति। समाविष्टयोरिति। स्मृतौ स्मृतित्वतद्भेदयोः प्रतीतिबलात्समाविष्टत्वादिति भावः। तथाविधयोः = परस्परप्रतिक्षेपात्मकयोः। तर्हीति। भेदस्याप्य-

सद्भेदो ननु रूपरसयोरिति भवितव्ये प्रमाणम्। रूपरसयोः परस्परप्रतिक्षेपात्मकत्वात् तदभावे तयोः सामानाधिकरण्याभाव आस्ताम्, अत्र तु नैवमिति चेत्, तथात्वस्या-सामानाधिकरण्यप्रयोजकत्वे तद्रूपनिषेधः सामानाधिकरण्यप्रयोजकः स्यादिति रूपरसा-दीनामसामानाधिकरण्यापत्तिः, भावाभावयोरसामानाधिकरण्यानुपपत्तिश्च। असामा-नाधिकरण्यमेव यत्रेति विवक्षितमिति चेत्, एवकारार्थस्याप्यनिर्वचनीयत्वात्। एतेन-विलक्षण एवायमभावो भावसहासम्भवानुपपन्नो य एवकारसमभिव्याहारेणोच्यते-इति निरस्तम्; तस्यापि वैलक्षण्यं प्रतियोगित्वाश्रयनिषेधनात्मकत्वेऽपि सामानाधिकरण्यविर-हादुन्नेयम्, तच्च तुल्यमभावान्तरेण। सामानाधिकरण्याभावप्रत्ययेनेति चेन्न; प्रत्यय-विशेषकस्यार्थस्य स्मृतावपि भावात्। अन्योन्याभावत्वनिरुक्तिः स्मृतित्वाभाव इत्युक्ती

त्वाभावतो विवेकानिरूपणादत्यन्ताभावस्य च प्रतियोगिना परस्परप्रतिक्षेपात्मकतया एव दर्शनादिति भावः। यद्यपि भेदतत्प्रतियोगिनोः परस्परविरहात्मतायामपि तादात्म्येनैव प्रतियोगित्वात्वदे तद्भेदो न स्यात्, ननु सम्बन्धान्तरेणापि तत्सम्बन्धे, तथा च स्मृतौ स्मृतित्वाभावस्य प्रतियोगिवैयधिकरण्यं दुर्घटमेव, तथापि नैतदपि भेदात्यन्ताभावयोर्विविक्तरूपनिरूपणमन्तरा घटते इत्याशयः। सामान्यतो पर-स्परविरहात्मकतानुपपत्त्यैवापादनतो वैधर्म्यमात्रमुद्भावयति रूपरसयोरिति। तदभावे = रूपरसयोरभा-वाधिकरणावच्छेदेन। अत्र तु नैवम् = स्मृतित्वतदभावयोः परस्परप्रतिक्षेपात्मकत्वाविरहेण तदुभया-भावाधिकरणावच्छेदेनापि न तयोः सामानाधिकरण्याभाव इत्याभासः। तथात्वस्य = परस्परप्रतिक्षेपा-त्मकत्वस्य। प्रयोजकत्वे = समनियतत्वे वा, व्याप्यत्वे एव वा, व्यापकत्वे एव वा। प्रयोजकः = समनियतो वा, व्याप्य एव वा, व्यापक एव वा। पक्षत्रयमपि शून्यगद्येन निराचष्टे रूपेति। असा-मानाधिकरण्यमेवेति। स्मृतित्वतदभावयोरित्यादिः। तज्ज्ञानमनुभव इति शेषः। तथा च स्वत्वा-भावसामानाधिकरण्यानिरूपकत्वसम्बन्धेन स्मृतित्वविशिष्टज्ञानत्वमनुभवत्वमित्यर्थः। स्वत्वाभावासामा-नाधिकरण्यनिरूपकत्वेनापि वैशिष्ट्यनिवेशस्तु निष्फलः। स्मृतेस्तु परस्परप्रतिक्षेपात्मनोस्तयोरसामानाधि-करण्यनिरूपकत्वेऽपि स्मृतित्वं न स्मृतिरिति प्रत्ययबलात्तयोः सामानाधिकरण्यनिरूपकत्वमपीति तद्वया-वृत्तिरिति। सामानाधिकरण्ये च सम्बन्धविशेषस्य प्रवेशनीयत्वात्साम्भव इति भावः। तादृशासामा-नाधिकरण्यनिरूपकत्वभेदस्य स्मृतावपि सत्त्वेनातिप्रसङ्ग इत्याह एवकारेति। भावसहेति। स्वप्रति-योग्यसमानाधिकरण इत्यर्थः। प्रतियोगीति। अन्योन्याभावेन सह प्रतियोग्यनुयोग्यभावस्तावता साम्येऽपीत्यर्थः। सामानाधिकरण्यविरहात् = प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिसम्बन्ध्यवृत्ति-त्वात्। तच्च = उक्तावृत्तित्वं चात्यन्ताभावेऽन्योन्याभावेन तुल्यम्, तद्व्यन्योन्याभावः प्रतियोगितादात्म्यवति वर्तते। इदमुपलक्षणमन्योन्याश्रयस्यापि, तादृशवैलक्षण्यस्य स्वाधीनविलक्षणताकप्रतीत्यधीनतायाः एव वक्तव्यत्वात्। सामानेति। निरुक्तावृत्तित्वप्रत्ययेनेत्यर्थः। वैलक्षण्यमुन्नेयमित्यनुषज्यते। स्मृतौ= स्मृतिगते स्वत्वाभावसामानाधिकरण्यनिरूपकत्वभेदे। भावादिति। तथाच तत्प्रत्ययोऽपि तत्र स्यादेव। एतादृशभेदस्यापि निरुक्तावृत्तित्वाश्रयत्वात् निरुक्तावृत्तित्वाश्रयतादृशनिरूपकत्वाभावमादाय स्मृता-वतिप्रसङ्गात्। स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकतादृशनिरूपकत्वाभावविवक्षायामपि दत्तमुत्तरम्। नच तादात्म्यातिरिक्तसम्बन्धेन स्वप्रतियोगिसम्बन्ध्यवृत्तित्वेन भेदवैलक्षण्यमत्यन्ताभावे उन्नेयमिति वाच्यम्, भेदस्य कालिकेन स्वप्रतियोगिसम्बन्धिनि स्वप्रतियोगिन्यवृत्तेर्व्यभिचारात्। भेदात्यन्ताभाव-योर्वैलक्षण्यासिद्धौ च तादात्म्यातिरिक्तत्वस्य तादात्म्यात्यन्ताभावमादायोभयाभावादिकमादाय च

स्मृतिव्यतिरिक्तपक्षोक्त एव दोषः। तदास्तां विस्तरः।

नापि स्मृतित्वप्रतियोगिकमाश्रयस्य स्वरूपं तद्धीर्वेति पक्षः अन्योन्याभावेऽपि भवतामभावव्यवस्थायास्तादृशत्वेनोक्तप्रसङ्गस्य समानत्वात्। अथान्यदेव किञ्चित्संसर्गाभावनिर्वचनं क्रियते तथाहि-स्मृतित्वस्य यत्र संसर्गितया निषेधस्तत्र तदभावस्य संसर्गाभावत्वम्, यत्र तु तदात्मत्वेन, तत्र तदभावस्य न संसर्गाभावता, किन्त्वन्योन्याभावत्वमेव, स चेह न विवक्षितः, पूर्वक एव तु संसर्गाभावोऽभिधित्सित इति। नैतद्विचारसहम्, संसर्गितया निषेध इति येयं तृतीया, सा किं लक्षणे वा? सहयोगे वा, कारकभेदे वा करणादौ? नाद्यः, संसर्गितया लक्षितस्यैवान्योन्याभावमादाय प्रसङ्गात्। नापि द्वितीयः, तत्सहितस्यैवान्योन्यनिषेधस्य प्रत्याख्यातुमशक्यत्वात्। तृतीयस्तु न सम्भवति, अत्यन्तनिषेधस्यानुत्पत्तिधर्मकत्वात्, तस्य च प्रकृतोदाहरणत्वात्। प्रकारवाचिनीयं तृतीयेति चेद्; प्रकारशब्दार्थस्याधिकस्य निर्वक्तव्यत्वापातात्। प्रकारः प्रकार एवेति चेन्न; अविदितलक्ष्यस्य लक्षणमनभिधायेतरव्यवच्छेदेन तस्य दर्शयितुमशक्यत्वात्; अन्यथा सर्वत्र प्रकारं प्रति लक्षणानभिधानापातात्। को घट इत्यादिपृष्टे 'घट एव घट' इत्याद्येवोत्तरं सङ्गच्छेत। 'प्रकार इति पक्षो नोपपन्नः सदोषत्वादि'ति वक्ता 'को दोष' इत्यनुयुक्तो 'दोष एव दोष' इत्यभिधायैव निर्वृत्ता भवेदिति। इति भेदसंसर्गाभावयोर्भेदखण्डनम्॥

---

तादात्म्येऽपि प्रसक्तत्वाच्च। **स्मृतित्वाभाव इति।** यत्र, तज्ज्ञानमनुभूतिरिति शेषः। दोष इति। यत्किञ्चिदन्योन्याभावभेदस्यातिप्रसक्तत्वाद्भेदकूटस्य चासर्वज्ञदुर्ज्ञेयत्वात् सामान्याभावस्य चोभयाभावादिकमादायातिप्रसक्तत्वादित्यादिकमुक्तं स्मृत्यन्यत्वखण्डने।

भवताम् = प्राभाकराणाम्। तदभावस्य = स्मृतित्वाभावस्य। तदात्मत्वेन = तादात्म्येन स्मृतित्वस्य निषेध इत्यनुषज्यते। सः = अन्योन्याभावः। इत्थम्भूतलक्षणे, सहयुक्तेऽप्रधाने, कर्तृकरणयोस्तृतीयेति सूत्रत्रयं मनसिकृत्य विकल्पितम्। भेदे = विशेषे। लक्षणत्वं व्यावर्तकत्वं तच्च विशेषणतयेत्याशयेन परतः 'प्रकारवाचिनी'त्यादि ग्रन्थः। उपलक्षणतयेत्याशयेन तु नाद्य इत्यादि। लक्षितस्य = उपलक्षितस्य स्मृतित्वस्य। एवं तादात्म्योपलक्षितस्मृतित्वादिप्रतियोगिताकात्यन्ताभावे भेदलक्षणस्यापि दुष्टत्वातिव्याप्तिः तत्सहितस्येत्यादि। संसर्गितासहितस्मृतित्वप्रतियोगिकान्योन्याभावस्येत्यर्थः। स्मृताविति शेषः। अत्यन्तनिषेधस्य = अत्यन्ताभावत्वेनाभिमतस्य। अधिकस्य = विशेषणतातिरिक्तस्य, संसर्गिताविशिष्टस्मृतित्वस्य भेदमादाय दोषसत्त्वादिति भावः यदि तु संसर्गावच्छिन्नप्रतियोगिताकत्वं तादात्म्यावच्छिन्नप्रतियोगिताकत्वं च विवक्षितं तदा निरस्तमेव पूर्वमिति द्रष्टव्यम्। प्रसिद्धपदार्थस्य न निर्वचनापेक्षेत्याशयेनाह प्रकार इति। प्रकारशब्दार्थ इत्यर्थः। अविदितलक्ष्यस्येति। इतरव्यावृत्ततयाऽनिश्चितलक्ष्यस्येत्यर्थः। अस्य 'लक्षण'मित्यनेनैवान्वयः, तेन 'तस्ये'त्यस्य न वैयर्थ्यम्। को दोषः = दोषपदार्थः, यद्विशिष्टत्वेनास्य पक्षस्य सदोषतेत्याशयः। तेन विशेषप्रश्ने दोष एव दोष इत्यभिधाने सन्दर्भासङ्गतावपि न क्षतिः। इति खण्डनशारदायां भेदसंसर्गाभावयोर्भेदखण्डनम्॥

**स्मृतित्ववदिति।** तृतीयान्तात्वतिः। रहितत्वम् = रहितज्ञानत्वम्। प्रत्युक्तमिति। राहित्यशब्देन विशेषाभावस्य सामान्याभावस्यानुयोगिस्वरूपस्य तज्ज्ञानस्य वा विवक्षाया उदीरितनिरासरी-

## अथ स्मृतित्वखण्डनम् ।

स्मृतित्ववत् 'स्मृतेर्लक्षणान्तरेण रहितत्वमनुभूतित्वमि'ति प्रत्युक्तं वेदितव्यम् । गृहीतस्य ज्ञानं स्मृतिरिति च स्मृतिलक्षणे धारावाहिकज्ञानेऽतिप्रसक्तिः । सापेक्षज्ञानं स्मृतिः, सापेक्षता च स्वविषयनियमे समानविषयज्ञानापेक्षेति चेन्न; प्रत्यभिज्ञायास्तत्ता-भागस्य स्मृतित्वापत्तेः । एवमस्त्विति चेन्न; तर्हि प्रत्यभिज्ञायां स्मृत्यनुभवभागयोर्भिन्न-विषयत्वव्यवस्थितौ तद्भेदः केन गृह्यते इति पूर्वदोष आवर्तते । संस्कारमात्रजं ज्ञानं

स्यवतारभाजनत्वादिति भावः । गृहीतस्येति । ज्ञानविशिष्टज्ञानत्वं स्मृतित्वम्, वैशिष्ट्यमत्र यदि स्वसमवायिसमवेतत्वस्वसमानविषयकत्वस्वोत्तरकालिकत्वैर्निवेश्यते तदा धारावाहिनि प्रत्यभिज्ञायाञ्चाति-व्याप्तिः. तृतीयस्थाने स्वजन्यत्वनिवेशेऽपि तथैव, विशेषणज्ञानविधया धारावाहिन्यपि पूर्वस्य कारणता-सम्भवात् । यदि तु स्वजन्यसंस्कारजन्यत्वं विवक्षणीयम्, एवञ्च प्रथमसम्बन्धो निष्प्रयोजनत्वात्त्याज्य एव, द्वितीयसम्बन्धस्थाने च स्वविषयानतिरिक्तविषयकत्वं वाच्यमिति प्रत्यभिज्ञायां नातिप्रसक्तिः, अन-धिगतकालावगाहित्वमते धारावाहिनो द्वितीयेन वारणेऽपि मतान्तरेण तद्वारणाय स्वजन्येत्यादिसम्बन्ध इत्युच्यते, तदापि सर्वं प्रमेयमित्यनुभवजन्यस्मरणेऽव्याप्तिः, स्वविषयातिरिक्ताप्रसिद्धेः । स्वविषयताव्या-प्यविषयताकत्वस्यापि स्वविषयत्वाभाववदप्रसिद्ध्याऽप्रसिद्धिरेव । यदि तु तत्स्थाने स्ववृत्तित्वं निवेश्यम्, तच्च स्वविषयताव्यापकविषयताकत्वसम्बन्धेनेत्युच्यते, तदापि तत्तांशे स्मृतेरनधिगतविषयकत्वमिति प्राग्व्यवस्थापिते मतेऽसम्भव एव, व्यापकत्वेनाभिमतस्याप्यव्यापकतामावहन्ती च रीतिरुक्तैव । परम्-परायाः संसर्गताया अप्रामाणिकत्वेन प्रकारमुद्रया निवेशस्यादरणीयत्वेनाननुगमश्चाप्रतिबद्धप्रसर एव । जन्यतावच्छेदकावधारणापेक्षणीयतायाञ्च प्रकृतस्य लक्षणतायां अनौचितीत्युक्तिस्तैवेत्यादिकं द्रष्टव्यम् । जन्यतावच्छेदकञ्च दुर्निरूपमिति वक्ष्यते । सापेक्षताऽनुभवमात्रेऽतिप्रसक्तेत्यतस्तां निर्ब्रूते सापेक्षतेति । स्वान्यूनविषयकज्ञानविषयतानियतविषयताकत्वमित्यर्थः, स्वविषयताव्यापकविषयताकज्ञानजन्यत्वमिति यावत् । अत्र स्वीययत्किञ्चिद्विषयताव्यापकत्वविवक्षायामाह प्रत्यभिज्ञाया इति । तत्ताभागस्य=तत्ता-विषयकत्वावच्छेदेन । इदं विशिष्टानुभवमात्रेऽतिव्याप्तेरुपलक्षणम् । स्वीययावद्विषयताव्यापकत्वविवक्षायां कस्या अपि विषयताया तादृशयावद्विषयताव्यापकत्वाभावेनासम्भवः, कथञ्चित्तत्परिहारेऽपि धारावाहि-कानुभवेऽतिव्याप्तिः । स्वीययावद्विषयताप्रयोजकज्ञानान्तरकत्वं विवक्षणीयम्, स्वप्रयोज्ययावद्विषयता-कत्वसम्बन्धेन ज्ञानविशिष्टज्ञानत्वमिति यावत्, शाब्दबोधीयाः सांसर्गिकविषयता हि न पदार्थोपस्थिति-प्रयोज्याः । धारावाहिकज्ञानीयविशेषणविषयतातिरिक्तविषयता न पूर्वज्ञानप्रयोज्या इति चेत्; प्रयो-ज्यत्वं हि जन्यतावच्छेदकत्वम् नच तद्विशेष्यकतत्प्रकारकत्वादेस्तत्, अतिप्रसक्तत्वात्. अनुगतानति-प्रसक्तं रूपं च प्राग्दुर्निरूपम् । प्रयोज्यत्वं स्वरूपसम्बन्धविशेष एकदेशसाधारण इति चेन्; अनिर्वाच्य-वादापत्तेः । विशेषणज्ञानत्वावच्छिन्नकारणत्वानिरूपकज्ञानत्वं तु निर्विकल्पकप्रत्यक्षेऽतिव्यापकम्, सप्रका-रकत्वसमानाधिकरणं च तन्निर्विकल्पकस्मृतावव्यापकम्, तस्या प्राग्व्यवस्थापितत्वात् । ज्ञानजन्यत्व-समानाधिकरणं तत्स्मृतित्वम्, ज्ञानं च स्वसमवायिसमवेतत्वेन विशेषणीयमिति नेश्वरज्ञानजन्यतामादाय निर्विकल्पकातिव्याप्तिताऽवस्थ्यमिति चेत्. जन्यतावच्छेदकस्य प्राग्दुर्निरूपत्वादिति प्रतिविहितत्वात् । घटज्ञानात्पटविशिष्टज्ञानवारणाय विशिष्यैव कारणताया वक्तव्यत्वेन विशेषणज्ञानत्वेन कारणताया अप्रा-माणिकत्वाच्च । नवाऽनुमित्यादौ विशेषणज्ञानत्वेन कारणतेत्युक्तमिति तत्रातिव्याप्तेश्च । स्वकारणी-भूतज्ञानयाथार्थ्यप्रयुक्तयाथार्थ्यकज्ञानत्वं स्मृतित्वमिति तु तुच्छम्, प्रमाया गुणजन्यत्वमते शाब्दा-

स्मृतिरित्यपि न; सामग्रीतः सर्वसम्भवेन लक्षणस्यासम्भवात्। असाधारणतद्धेतुकधीत्वमिति चेन्न; आत्मप्रत्यभिज्ञानेऽप्यापत्तेः, आत्ममनोयोगस्य साधारण्यात्; कार्यैक्यानवधारणे च कारणत्वानवधारणात्; तदैक्ये च तदेव लक्षणं स्यात्। येन ज्ञानेनार्थो ज्ञाततात्मकः क्रियते तदनुभवः, येन तु ज्ञातमेव तथा, तत्स्मरणमिति चेन्न; ज्ञातो ज्ञास्यते

दावतिप्रसक्तेः, भ्रमजन्यस्मृतावप्रसक्तेश्च, याथार्थ्यस्य निरसिष्यमाणत्वाच्च। तद्धेतुकेति। संस्कारहेतुकेत्यर्थः। संस्कारध्वंसेऽतिव्याप्तिवारणाय धीत्वमिति। आत्ममनोयोगस्य = आत्ममनसोर्योगानाम्। साधारण्यात् = जन्यज्ञानत्वावच्छिन्नकारणत्वात्, आत्मन आत्मत्वेन मनसश्च मनस्त्वेनोक्तसाधारण्यमक्षतम्, आत्मनो विषयत्वेन मनसश्चेन्द्रियत्वेनात्मप्रत्यभिज्ञानेऽसाधारण्येऽपि संस्कारस्यापि तत्रासाधारण्यं निर्बाधम्, संस्कारमात्रासाधारण्याविवक्षायामतिव्याप्तिदानात्। एवञ्च घटादिप्रत्यभिज्ञानेऽप्यतिव्याप्तिर्द्रष्टव्या, तत्रापीन्द्रियादिवत्संस्कारस्याप्यसाधारण्यात्। ननु तत्तास्मृतेरेव प्रत्यभिज्ञाहेतुत्वं न तु तत्संस्कारस्येति नव्यमते नातिव्याप्तिसम्भावना प्राचीनमतेऽपि संस्कारमात्रासाधारणकारणकत्वविवक्षायां नातिव्याप्तिः, स्मृतिं प्रति मनसो मनस्त्वेनैव हेतुता, नत्विन्द्रियत्वेनेति न तस्यासाधारण्यम्, संस्कारत्वावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकधर्मवत्त्वविवक्षायामप्यदोष एव, स्मृतित्वावच्छिन्नहेतुत्वेनैव संस्कारसिद्धेरित्याशङ्क्याह कार्यैक्येति। कार्यतावच्छेदकेत्यर्थः। कार्यतावच्छेदकनिरूपणं विना न कार्यतानिरूपणम्, तन्निरूपणं विना च किन्निरूपितकारणता संस्कारे निरूप्येति भावः। ननु निर्वचनान्तरासम्भवेऽपि स्मृतित्वं जातिरखण्डोपाधिर्वाऽस्तु तदेव च कार्यतावच्छेदकमिति मुमुक्षुत्वमुक्तलक्षणस्येत्यत आह तदैक्ये इति। कार्यतावच्छेदकावधारणे इत्यर्थः। नन्वस्तु तदेव लक्षणम्, तादृशकार्यतावच्छेदकत्वं तु तत्परिचायकमेवेति चेन्न, लक्षणाधीना लक्ष्यसिद्धिरिति तादृशकार्यतावच्छेदकतया स्मृतित्वसिद्धिरित्युक्तं स्यात्, स्मृतित्वावच्छिन्नकारणतया च संस्कारसिद्धिरिति चक्रकान्योन्याश्रयौ। स्मरामीति प्रमयैव स्मृतित्वसिद्धिरिति चेत्स्मृतित्वसद्भावसिद्धिं विना तत्प्रमात्वस्य दुरधिगमत्वेनान्योन्याश्रयतादवस्थ्यात्। निर्वाच्यस्मृतिलक्षणस्यातिप्रसक्तिरनुभूतौ नोद्भाव्येत्याशयेन प्रथमं तद्व्यावृत्तमनुभूतिलक्षणमाह येनेति। अर्थोऽज्ञातः। ज्ञाततात्मक इति। धर्मधर्मिणोर्भेदेऽस्तादात्म्याङ्गीकारादित्याशयेनेदम्। क्रियाजन्यफलाश्रयत्वरूपकर्मत्वोपपत्तये क्रियया कर्मण्यतिशयस्यावश्याधेयत्वाज्ज्ञानेन घटादौ "ज्ञातो घट" इति प्रतीतिसाक्षिकं प्राकट्यापरपर्यायं ज्ञातत्वमेवाधीयते तदेव च ज्ञानानुमापकम्, स्वविषयत्वस्य ज्ञाने निरस्तत्वात्, अयं घट इत्येव प्रथममनुभवाच्च, द्वितीये च क्षणे घटो ज्ञात इत्येवानुभवात्, तृतीयक्षणे ज्ञानस्यैवाभावेन प्रत्यक्षत्वासम्भवात्, "सम्बद्धं वर्तमानञ्च गृह्यते चक्षुरादिने"ति नियमादिति तन्मतं द्रष्टव्यम्। ज्ञातमेवेति। "न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते" इत्यस्यौत्सर्गिकत्वेन स्मृतेः स्वकारणीभूतज्ञानविषयीकृतकालावच्छिन्नस्यैव स्वविषयस्य ग्राहकत्वम्, न तु स्वकालावच्छिन्नस्येत्याशयेनैवकारः। अत्र स्वसामानाधिकरण्यस्वोत्तरकालिकत्वस्वजनकज्ञानविशिष्टज्ञानजन्यत्वेतिसम्बन्धत्रयावच्छिन्नप्रतियोगिताकज्ञातत्वाभाववज्ज्ञाततानजनकज्ञानत्वमनुभवत्वम्, उक्तसम्बन्धत्रयेण ज्ञानताविशिष्टज्ञातताजनकज्ञानत्वञ्च स्मृतित्वमिति पर्यवसितोऽर्थः। उभयत्रापि द्वितीयसम्बन्धे वैशिष्ट्यं स्वसमवायिसमवेतत्वस्ववृत्तित्वाभ्याम्, स्ववृत्तित्वञ्च स्वविषयताव्यापकविषयताकत्वसम्बन्धेन। धारावाहिनः स्वकालावच्छिन्नविषयावगाहित्वात्पूर्वज्ञानीयविषयताया न तद्विषयताव्यापकत्वम्। स्ववि-अन्यपुरुषावगतावगाहिपुरुषान्तरीयानुभवस्य स्मृतित्ववारणाय स्वसमवायिसमवेतत्वनिवेशः। स्ववि-षयताव्यापकविषयताकस्मृतिजनकानुभवेऽतिप्रसक्तिवारणाय स्वोत्तरकालिकत्वनिवेशः, घटज्ञानजन्य-

चेत्यनुमानादावव्याप्तेः। ततश्च विषयतः स्मृतिविवेचनमन्ततो वाक्येनाप्यनुभाव्यत्वात्कार्यकारणाभ्यां चानुगतरूपस्य प्रागसिद्धेः, जातितश्च सङ्करप्रसङ्गादशक्यमिति। इति स्मृतित्वखण्डनम् ॥

## अथानुभवत्वविशेषखण्डनम्।

नापि चतुर्थः, यतः कार्यगतवैलक्षण्यानवगमे क्व कारणता क्वासाधारण्यं वा ज्ञेयमिति। इत्यनुभवत्वविशेषखण्डनम् ॥

---

ज्ञातावैशिष्ट्यं घटानुभवाहितज्ञाततायामादायातिप्रसङ्गभङ्गाय स्वसामानाधिकरण्यनिवेशः। नच घटानुभवविषयताव्यापकविषयताकत्वस्य पटज्ञानेऽभावादेव नातिप्रसङ्ग इति वाच्यम्; घटपटादिसमूहालम्बने तस्य सम्भवादिति दिक्। ज्ञात इति। घटोऽयं मया ज्ञात इति प्रत्यक्षे 'घटोऽयं मया ज्ञातोऽव्यवहर्तव्या'दिति वाक्योपदर्शितपक्षसाध्यकानुमित्यादिविषयताव्यापकविषयताकत्वमादाय तादृशानुमित्यादावतिप्रसङ्गः, एवं यत्नोपनीतभानबलादन्यथा वा कस्यचिज्ज्ञानस्य घटो ज्ञास्यते इत्याकारकता, तस्य घटो ज्ञास्यते इत्यनुमित्यादिविषयताव्यापकविषयताकत्वात्तादृशानुमित्यादावपि। यथाश्रुते त्वतिव्याप्तिः स्पष्टैव, ज्ञात इति ज्ञास्यत इति चानुमित्यादिना ज्ञातताविशिष्टे एव ज्ञातताजननात्, विशेषणीभूता ज्ञातता पुनर्भूता वा भाविनी वेत्यन्यदेतत्। इदमुपलक्षणम्, जनकतावच्छेदकग्रहस्यात्राप्यपेक्षणीयत्वात्। एवमतीतानागतविषयकज्ञानेन ज्ञातताजननासम्भवः, विषयस्यासत्त्वात्, सत्कार्यवादे केनचिद्रूपेण तत्सत्त्वेऽपि येन रूपेण ज्ञातत्वं तेन रूपेण तदसत्त्वात् घटो ज्ञात इति व्यवहारानुपपत्तिप्रसङ्गात्, तस्मात्तादृशस्थले घटो ज्ञात इति प्रतीतेरन्यथैवोपपाद्यत्वात् वर्तमानस्थलेऽपि तस्यास्तथैवोपपादनमुचितमिति न ज्ञाततायाः प्रामाणिकत्वम्। फलमप्यावरणभङ्गादिरेव। एवमसन्निकृष्टविषयकानुमित्यादिजनितज्ञाततायाः प्रत्यक्षासम्भवेन तस्यास्तत्र ज्ञानानुमापकत्वस्याप्यसम्भव इति तादृशानुमित्यादिसद्भावस्याप्रामाणिकत्वापत्तिरिति साक्षिभास्यत्वैव ज्ञानानामित्यादिकमपि द्रष्टव्यम्। इदन्तानवगाहित्वे सति तत्तावगाहिज्ञानत्वं तु स्मृतिलक्षणं पूर्वं तत्ताया निरस्तत्वेन निरस्तप्रायमेव, तस्या अखण्डोपाधितोपगमे त्वन्योन्याश्रयो बहुशो निवेदितः, इदन्तानवगाहित्वप्रतीतिं विनापि स्मृतित्वव्यवहाराच्च, स घट इति शाब्दाद्यनुभवेऽतिप्रसक्तेश्चेति। विषयतः, कार्यकारणाभ्यां च, जातितश्च स्मृतिविवेचनमशक्यमिति सम्बन्धः। तत्र क्रमेण हेतुत्रयम्। गृहीतज्ञानत्वमिति प्राथमिकं विषयघटितं लक्षणम्, अग्रिमद्वयं च कारणघटितम्; चरमं तु कार्यघटितम्, स्मृतित्वं जातिरिति तु पञ्चमम्, तत्तावगाहित्वादिघटितं तु षष्ठं विषयघटितम्। तत्र यथाश्रुते विषयघटितलक्षणे स घट इत्यादिशाब्दाद्यनुभवेऽतिप्रसक्तिमाह अन्तत इति। वाक्यपदं 'गृहीतज्ञानत्व'मिति लक्षणवाक्यपरमित्यपि व्याचक्षते, अनुगतरूपस्य = कार्यतावच्छेदकस्य कारणतावच्छेदकस्य च स्मृतित्वस्य। सङ्करः प्रत्यभिज्ञायाम्, तस्य जातिबाधकतानभ्युपगमेऽपि स्मृतित्वजातिनिरासोऽनुपदमुक्त एव। इति शारदायां स्मृतित्वखण्डनम् ॥

स्मृतिलक्षणरहितज्ञानत्वमित्यनुभूतिलक्षणं महताप्रबन्धेन निराकृत्य तदविदूरप्राक्कालेत्यादि पूर्वं शङ्कितं लक्षणान्तरं निराचष्टे नापीति। कार्यगतवैलक्षण्यम् = कार्यतावच्छेदकमनुभूतिगतम्। यद्धर्मावच्छेदेन स्वाव्यवहितपूर्वनियतोत्पत्तिकासाधारणकारणजन्यता प्रत्येतव्या स धर्मो नाद्यापि प्रत्यक्षादिसाधारणो निरुक्तः, नवा सम्भवदुक्तिकोऽपि, प्रत्यक्षत्वानुमितित्वादेः प्रत्येकमेवेन्द्रियसन्निकर्षव्याप्तिज्ञानादिजन्यतावच्छेदकत्वात्, एवञ्च प्रत्येकमिलितविकल्पानुपपत्तिरपि सावकाशा। नच प्रत्यक्षत्वाद्यन्यतमत्वं प्रत्यक्षाद्यन्यतमत्वं वाऽनुभवत्वम्, अनुयोगिप्रतियोगिविधया सकलप्रपञ्चघटितत्वेनासर्वज्ञदुर्ज्ञेय-

## अथ तत्त्वानुभवत्वखण्डनम् ।

न केवलं प्रत्येकपदार्थस्य तदवच्छेदकत्वस्य चानुपपत्तिः, मिलितेऽप्यस्मिन् लक्षणे दूषणमुच्यते, तथाहि—'तत्त्वानुभूतिः प्रमे'त्यनेन काकतालीयमपि यथार्थज्ञानं व्याप्यते, तद्यथा—पाणौ पञ्चवराटकान् पिधाय कश्चित्पृच्छति 'कति वराटका' इति ? पृष्टश्चाजाकृपाणीयन्यायेन ब्रवीति 'पञ्चे'ति, ततः 'पञ्चे'ति ज्ञानमस्ति वक्तुः श्रोतुश्च; दृश्यन्ते तावदेवंविधान्युदाहरणानि; तच्च ज्ञानं न तत्त्वपदेन व्यवच्छेत्तुं शक्यम्, वस्तुतस्तस्य पञ्चसङ्ख्यावच्छिन्नत्वेनातथाभूतत्वाभावात् । नाप्यनुभवशब्दव्यवच्छेद्यम्, अननुभूतचरत्वेन स्मरणलक्षणापेतत्वात् । नच—वक्तुः संशय एव, निश्चायकाभावात्, एकतरकोटिव्यवहारस्तु कृष्यादिप्रवृत्तिवदिति—युक्तम्; तत्राप्याहार्यरूपैककोटिनिश्चयाऽऽस्थानात्, अन्यथा संशयस्य कोटिद्वयनिश्चयसमुच्चयतापत्तेः । नच प्रमैव तदित्युररीकरणीयम्; मध्येऽप्यत्तादिदुरन्तर्भावत्वात् । अव्यभिचारिकरणजन्यत्वे सतीतिविशेषणीय-

स्वापत्तेः, नहि प्रत्यक्षत्वादिभेद एव स्यानुयोगितावच्छेदकः, आत्माश्रयापत्तेः, विधिमुखप्रत्ययस्य निषेधमुखेनोपपादनेऽतिप्रसङ्गाच्च, उक्तरीत्या अनुभवामीति व्यवहारस्यानुमित्यादिव्यावृत्तत्वे च प्रमितिचतुष्टयसाधारणस्यानुभवत्वनिर्वचनस्य निरवसरत्वाच्चेति । इति खण्डनशारदायामनुभवत्वविशेषखण्डनम् ॥

प्रत्येकेति । प्रत्येकं तत्त्वादीत्यर्थः । काकतालीयं यथार्थज्ञानम् = दैववशसम्पन्नयाथार्थ्यकं ज्ञानम् । "समासाच्च तद्विषया"दिति सूत्रेणेवार्थे समासाच्छः । एवं वक्ष्यमाणेऽजाकृपाणीयेऽपि । आगच्छतः काकस्याकस्मात्तालफलपतनात्, आगच्छन्त्याश्चाजाया आकस्मिककृपाणपतनाद्यथा मरणं तथेत्यर्थः । अजाकृपाणीयन्यायेन = अवितर्क्यैव । तत इति । ततः पूर्वं वक्तुः, ततः परं च श्रोतुरित्यर्थः । तच्चेति वक्तृसमवेतमित्यर्थः । श्रोतृसमवेतस्य शाब्दप्रमायामन्तर्भावसम्भवादिति भावः । तस्य = वराटकादेः । स्मरणेति । यदा भावनाजन्मनोऽपि प्रातिभस्य न स्मृतित्वम्, तदा तदजन्मनस्तद्दूरतरम् । संशय इति । तदुक्तं शास्त्रदीपिकायाम्—"यत्तु प्रातिभाख्यं प्रमाणम् 'श्वस्तं भ्राताऽऽगन्ते'ति तत्तु लिङ्गाद्याभासजमनिश्चायकत्वादेवाप्रमाणमि'ति । अनिश्चायकत्वात् = अनिश्चयत्वात् । अवग्रहाद्यन्तरायाणामपि सम्भवेनानिश्चितसस्याधिगमानामपि प्रवृत्तौ "भविष्यति फलमवग्रहाद्यभावे" इत्येकतरकोटिव्यवहारवदित्यर्थः । तत्रापि = कृष्यादिस्थलेऽपि । आहार्यरूपे = यदिपदघटितवाक्याभिलप्यविषयको निश्चयो यदि वृष्टिर्भविष्यति तदा कृष्यादितोऽवश्यं फलं लप्स्यते इत्याकारः । अयमेव मङ्गलवादमणौ तर्कशब्देन व्यवहृतः "यदि च वृष्ट्यादौ सति कृष्यादितोऽवश्यं फलमिति तर्कात्तत्र प्रवृत्तिस्तदा सति विघ्ने मङ्गलादवश्यं फलमिति तर्कादत्रापि प्रवृत्ति"रिति तत्रोक्तम् । तर्कादिति निश्चयादित्यर्थ इति तत्र मथुरानाथाः । आस्थानात् = स्वीकारात् । संशयादेकतरकोटिव्यवहारानुपपत्तेरित्याशयः । एतेन—कृष्यादौ न निष्कम्पा प्रवृत्तिरपि तु सकम्पा, सा च संशयाधीनैवेति निरस्तम्; उक्तज्ञानस्य च संशयात्मकत्वात् । लिङ्गग्रहादिकमन्तरेणैवोत्पत्तेरानुभविकत्वात्तादृशनिश्चयस्य लिङ्गाद्याभासजत्वाभिधानं न युज्यते । अन्यथा = एकतरकोटिकव्यवहारजनकत्वेन निश्चयस्यापि तादृशज्ञानस्य संशयत्वोपगमे । संशयस्य = पर्वतो वह्निमांश्चेति ज्ञानस्यापि । यदि संशयत्वमेककोटिकज्ञानवृत्ति स्यात् निश्चयत्वानतिरिक्तवृत्ति स्यात् निश्चयत्ववदित्यर्थः । दुरन्तेति । योगजधर्मप्रसूतानुभवस्येवास्यापि प्रत्यक्षत्वं स्यादिति तु न देश्यम्, अत्र साक्षात्करोमीत्यनुव्यवसायस्य वक्तुः कदाप्यनुदयात् । एवमनुमिनोमीत्यादिप्रत्यया-

मिति चेन्न; तत्त्वपदवैयर्थ्यापातात्। न च काकतालीयसंवादमपि ज्ञानं व्यभिचारिकरणसामग्रीजन्यमास्थातुमीशिषे; व्यभिचारिणोऽपि कारणाविशेषाद्यथार्थत्वप्रसङ्गात्, नह्यहेतुकमेवास्य यथार्थत्वम्, नियामकाभावेनातिप्रसङ्गापातात्; अवश्यमस्याव्यभिचारित्वेऽव्यभिचारिनियतमेव करणं वक्तव्यम्। किं तदिति चेत्; स्वात्मनैवात्र प्रश्ने दीयतामुत्तरं भवता, येन नियतेषु प्रमाराशिष्वेवेदं ज्ञानमन्तर्भाव्यम्, प्रमासामान्यलक्षणेन वा व्यवच्छेत्तव्यम्।

एवं लिङ्गाभासादिभ्योऽपि जातं लिङ्गिज्ञानं दैवगत्या स्थितलिङ्गलिङ्गिनि लिङ्गिमत्येव

भावेन नानुमितित्वादिकमपि। अथाव्यभिचारिकरणजन्यत्वं यदि प्रमाकरणजन्यत्वं तदात्माश्रयः, शिरोवेष्टनेन नासिकास्पर्शानुधावनापातश्च, यदि पित्तादिरहितेन्द्रियसन्निकर्षयथार्थलिङ्गज्ञानयथार्थसादृश्यज्ञानयथार्थयोग्यताज्ञानान्यतमजन्यत्वं तत्, तदाप्यात्माश्रयः, भ्रमात्मकलिङ्गज्ञानजन्यानुमितेरपि क्वचित् प्रमात्वेनाव्याप्तिश्च, तत्त्वपदवैयर्थ्यापाताभिधानस्यासङ्गतिश्च, तादृशानुमितेस्तत्त्वानुभवत्वलक्षणेन सङ्गृहीतत्वात्। अतएव दुष्टेन्द्रियभ्रमात्मकलिङ्गज्ञानाद्यजन्यत्वमपि न तत्। नच भ्रमजन्यानुमितेरयथार्थत्वमेव, तत्र विशेष्यावृत्तेरेव प्रकारस्य भानमिति मतस्यैवावलम्बनीयत्वात्, एवंच न तत्त्वपदवैयर्थ्याभिधानस्यासङ्गतिरिति वाच्यम्; एवं सति 'नच काकतालीयसंवादमपी'त्यग्रिमग्रन्थासङ्गतिरेव, उक्तमतानुसारं तत्रापि कराग्रवृत्तिवराटिकादे र्व्यधिकरणप्रकारस्यैव भानोपगमसम्भवादिति चेन्न; उक्तमतानुसारेणैव वैयर्थ्याभिधानात्, नचेत्यादिग्रन्थस्य च लौकिकव्यवहारानुरोधेन याथार्थ्यमुपगम्य प्रवृत्तेर्वक्तुं शक्यत्वात्। अव्यभिचारित्वे च तत्त्वपदार्थातिरेकिण एव व्यधिकरणप्रकारकत्वाद्यभावरूपयाथार्थ्यस्य घटकत्वसम्भवादिति। प्रकृतज्ञानं तु लिङ्गभ्रमजन्यमित्यभिमानः। तत्त्वपदत्यागेऽप्युक्ताभिमानं निराकुर्वन्नाह नचेति। संवादो याथार्थ्यम्। करणसामग्री = करणघटितसामग्री। व्यभिचारिणः = व्यधिकरणप्रकारकत्वेन प्रसिद्धग्रहस्यापि यथार्थत्वप्रसङ्गात्, प्रकृतज्ञानकारणेन तत्कारणस्य दुष्टत्वेनाविशिष्टत्वात्। ननु दोषघटितसामग्रीप्रयुक्तं न प्रकृतज्ञानस्य याथार्थ्यं येनान्यत्रापि तद्बलात्तदापत्तिः स्यात्, अपि त्वाकस्मिकमेवेत्यत आह नहीति। अव्यभिचारिनियतं = व्यधिकरणप्रकारकत्वाभाववज्ज्ञानजनकम्, एवञ्चैतावताऽव्यभिचारिकरणजन्यघटितलक्षणस्यापि तत्रातिव्याप्तिरुक्ता। येन भवता नियतेषु = क्लृप्तेषु।

ननु तस्य सम्भावनात्वमेव, कृष्यादिस्थलेऽपि सम्भावनायामेव निश्चयत्वभ्रमः, "यदि जलं सहकारिभिः सम्पत्स्यते तदा मे कृषं शमयिष्यती"त्यादेः सम्भावनाख्यतर्कत्वं चतुर्थे भवतैव व्युत्पादनीयम्, अतएवोपक्रमणावपि तर्कशब्देन तदभिधानं यथाश्रुतमेव सम्यक्, यदि च तादृशसम्भावनायाः कोट्यन्तरासंस्पर्शित्वं प्रकृतज्ञानस्यैव वा तथात्वं शपथेन निर्णीयते तथाच तस्या निश्चयत्वमेवेत्याग्रहः, तदाऽस्तां प्रकृतज्ञानस्यातिरिक्तप्रमात्वम्, अपसिद्धान्तभीरुतायां वा निवेश्यतां प्रमालक्षणे प्रातिभभिन्नत्वम्, स्मृतेर्यथार्थाया अपि प्रमाणान्तरस्वीकारभयेन व्यावृत्तयेऽनुभवत्वमिवेत्यस्वरसादतिव्याप्तेः स्थलान्तरमाह एवमिति। लिङ्गेति। अव्याप्यस्यापक्षधर्मस्य वा धूलीपटलादेर्व्याप्यत्वेन पक्षधर्मत्वेन च परामर्शादित्यर्थः। लिङ्गि = साध्यम्। दैवगत्या = स्वसामग्रीवशात्। स्थितेत्यादिबहुव्रीहिः। धूमवह्न्युभयवद्देशवृत्तिकमित्यर्थः। तत्र लिङ्गस्याभावेऽपि प्रकृतनिर्वाह इत्याशयेनाह लिङ्गिमत्येव चेति। धूमवद्विशेष्यकत्वे सति वह्निमद्विशेष्यकमित्यर्थः। लिङ्गाभासे इति। इदञ्च लिङ्गोपहितलैङ्गिकभानमताभिप्रायेण, अन्यथा लिङ्गाभासभानस्यानुमितौ प्रसक्तेरेवाभावेन तदंशे प्रमात्वनिषेधासङ्गतेः। तद्वति = सामानाधिकरण्यसम्बन्धेन तद्विशिष्टे। विशेषणांशे प्रमात्वं विना विशिष्टांशे प्रमात्वानिर्वाहादिति भावः।

वा यत्स्यात् तत्तु यद्यपि लिङ्गाभासांशे न प्रमा, तथा तद्वति लिङ्गिस्वरूपे, तथापि विशिष्टं तथाविधं गोचरयन्त्यास्तस्या बुद्धेर्लिङ्गान्तरवति केवले वा लिङ्गिनि वह्न्यादावप्यंशे विषये प्रामाण्यस्वीकारेणोक्तदोषापरिहारादिति। आभासकरणजत्वात्तद्विषयस्य वस्तु-

विशिष्टं = लिङ्गाभासविशिष्टं तथाविधं = लिङ्गिनं गोचरयन्त्याः = तत्तदंशे तेन तेन सम्बन्धेन तत्तत्प्रकारिकाया इति यावत्, तेनापक्षधर्मे सामानाधिकरण्यस्याव्याप्ये च व्याप्यत्वादेरप्रसिद्धावपि न क्षतिः। बुद्धेरिति। अनुमितेरिति तु नोक्तम्, लिङ्गाभासादिभ्य इत्यत्रादिपदोपादानेन तादृशार्थापत्त्यादेरपि सङ्ग्राह्यत्वात्। अनुमित्यादेरित्यभिधाने च गौरवात्। वस्तुतस्तु वक्ष्यमाणदिशा तस्यानुमित्यनन्तर्भावाभिप्रायेणेदमुक्तम्। लिङ्गान्तरवति लिङ्गिनि = सामानाधिकरण्यसम्बन्धेन सल्लिङ्गविशिष्टलिङ्गिविषयकत्वावच्छेदेन। पूर्वं स्थितलिङ्गलिङ्गिनीत्युक्तत्वादिदमुक्तम्, लिङ्गिमात्रेत्युक्तानुसारेणाह केवले इति। अंशे विषये = विषयात्मकांशे, तथाच वह्न्यादिरूपकेवललिङ्गिविषयकत्वावच्छेदेनेत्यर्थः। अपिना धर्मिसमुच्चयः। नचैवं धर्म्यंशे ज्ञानमात्रस्य यथार्थत्वेन ज्ञानविशेषपर्यन्तं धावनं विफलमिति वाच्यम्, धर्म्यंशे ज्ञानमात्रस्य यथार्थत्वेऽपि 'इदं रजतमिति ज्ञानं भ्रमो नतु प्रमे'ति सार्वजनीनव्यवहारेण प्रकारांशमादायैव भ्रमत्वाभ्रमत्वयोर्व्यवस्थितेर्ज्ञानविशेषपर्यन्तधावनसाफल्यात्। वस्तुतस्तु 'अंशेऽपि विषये' इति योजनया 'नह्यनांशिकमेव यथार्थत्वमपित्वांशिकमपी'त्यर्थः स्वारसः साधीयान्। प्रामाण्यं = तद्वति तत्प्रकारकत्वम्, तेनातिव्याप्तिदानस्य यथाश्रुते नासङ्गतिः। लिङ्गोपहितलैङ्गिकभानाभ्युपगमेनांशिकयाथार्थ्यमुक्तम्, तदनभ्युपगमे तु सर्वांशे एव याथार्थ्यं द्रष्टव्यम्। उक्तदोषः = प्रमालक्षणातिव्याप्तिः। नच—लक्ष्यत्वान्नातिव्याप्तिः, अनुमितित्वस्य व्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यज्ञानत्वरूपस्य जातिविशेषरूपस्य वा तत्र सम्भवद्वृत्तिकत्वादिति—वाच्यम्; दोषसमवहितजन्यज्ञानत्वस्याप्रमात्वसमनैयत्यमिति मीमांसकमते तावत्तस्य लक्ष्यतासम्भवः, उक्तपरामर्शस्य भ्रमत्वेन तत्र दोषस्यावश्यकत्वात्, दोषाभावप्रयोज्यत्वं च प्रमात्वे तन्मते तत्स्वतस्त्वान्यथानुपपत्त्या आवश्यकम्। नापि तार्किकमते, तेन प्रमाया गुणजन्यत्वोपगमेनानुमितौ च यथार्थलिङ्गज्ञानस्यैव गुणत्वेन तस्य चात्रासद्भावेन प्रमात्वानुपपत्तेः। अतएव व्याप्तिविशिष्टप्रतियोगिकपक्षानुयोगिकसम्बन्धावगाहिज्ञानजन्यं ज्ञानमनुमितिरिति प्राहुः। नचेश्वरीयतादृशज्ञानमेव तत्र गुण इति तज्जन्यत्वेनानुमित्यात्मकप्रमात्वोपपत्तिरिति वाच्यम्; ईश्वरीयतादृशज्ञानजन्यज्ञानत्वस्यानुमितित्वं प्रति वा, प्रमात्वं प्रति वा, उभयं प्रति वा प्रयोजकत्वम्, आद्ये ज्ञानमात्रस्येश्वरीयतादृशज्ञानजन्यत्वेनानुमितित्वप्रसङ्गः, जन्यतानवच्छिन्नजन्यताभिधाने च प्रकृतज्ञानेऽपीश्वरीयज्ञानजन्यतायाः जन्यतानवच्छिन्नतया नानुमित्यन्तर्भावसम्भवः, द्वितीये ज्ञानमात्रस्य प्रमात्वप्रसङ्गः, अतएव न तृतीयोऽपि। अथ तादृशज्ञानजन्यज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वेन प्रकृतज्ञानस्यानुमितित्वमवश्यं वाच्यम्, अतएव "वस्तुतो वह्निमत्यपि पर्वते यदि कश्चिद्बाष्पं धूमं प्रतीत्य ततो वह्निमनुमिनोती"ति मूले एव प्रमाखण्डनप्रस्तावेऽभ्यधायि, तदीयप्रमात्वोपपादनाय परं तादृशं भगवज्ज्ञानं शरणीकरणीयम्, पर्वतो वह्निमानितियथार्थानुमिति प्रत्येव 'पर्वतो वह्निव्याप्यवानि'त्येतद्विषयकज्ञानस्य गुणत्वकल्पनाच्च नातिप्रसङ्गः, यथार्थानुमितित्वस्य प्रकृतज्ञाने तथापि सम्भवत्वेन भगवज्ज्ञानस्य गुणत्वकल्पनाच्च नातिप्रसङ्गः, यथार्थानुमितित्वस्य प्रकृतज्ञाने तथापि सम्भवतत्वेन भगवज्ज्ञानस्य गुणत्वकल्पनाच्च न तद्विरहपत्तेः, अनुमानादि परस्परापेक्षितया व्याप्त्यादिघटकपदार्थावगाहिज्ञानस्याप्यपेक्षणीयतया च न तद्विरहपत्तेः, अनुमानादि परस्परापेक्षितया व्याप्त्यादिघटकपदार्थावगाहिज्ञानस्याप्यपेक्षणीयतया च न तद्विरहपत्तेः, अनुमानादि परस्परापेक्षितया व्याप्त्यादिघटकपदार्थावगाहिज्ञानस्याप्यपेक्षणीयतया च न तद्विरहपत्तेः इति चेन्न; प्रमात्वखण्डनशेषे वक्ष्यमाणदिशा प्रमायां दशायां भगवन्तादृशज्ञानमादायानुमितिप्रसङ्ग इति चेन्न; प्रमात्वखण्डनशेषे वक्ष्यमाणदिशा प्रमायां गुणजन्यत्वस्याप्रामाणिकत्वेन दोषाभावप्रयोज्यताया एव तत्र वाच्यत्वेन प्रकृते च दोषस्य सत्त्वेन न प्रमात्वापादने इष्टापत्त्यवकाश इत्याशयेनातिव्याप्त्यभिधानात्। अतएव स्वतस्त्ववादिमतेनैवाशङ्कते आभा

भूतलिङ्गयादेरन्यत्वमेवेति चेन्न; विशेषस्यान्यत्वेऽपि तज्जातीयमात्रवत्तावभासांशे दोषापरिहारात्। सामान्यसम्बन्धकोटिनिविष्टत्वाद्विशेषस्य, तस्य च तत्रानवस्थितस्यैव स्फुरणान्नैष दोष इति चेन्न; विशेषाप्रतिभासे सामान्यतस्तन्मात्रवत्ताप्रतिभासस्याप्यभ्युपेयत्वात्, देवदत्तयज्ञदत्तसम्बन्धितासंशयेऽपि पुरुषसम्बन्धितया निश्चयवत्। सम्बन्धिविशेषस्य निर्लुण्ठितविशेषरूपतया च प्रवेशे व्याप्त्यादेरननुगमप्रसङ्गात्। सामान्यानुमा-

सकरणजत्वादिति। दोषघटितसामग्रीजन्यत्वादित्यर्थः। प्रकृतज्ञानस्येत्यादिः। तद्विषयस्य = प्रकृतज्ञाने विधेयतया भासमानस्य। वस्तुभूतेति। विशेष्यवृत्तीत्यर्थः। अन्यत्वमेवेति। तथा च स्वनिरूपितविशेष्यताश्रयावृत्तिप्रकारकत्वेन प्रकृतज्ञानस्य भ्रमत्वमेवेति भावः। तज्जातीयमात्रवत्तावभासांशे = वह्नित्वावच्छिन्नप्रकारकत्वावच्छेदेन। वह्नित्वेन रूपेण हि व्यापकता गृहीता न तु पर्वतावृत्तितत्तद्वह्नित्वेनेति व्यापकतावच्छेदकवह्नित्वेनैवानुमितौ विधेयस्य भानं युक्तम्, इतरविशेषबाधस्य लाघवस्य वा सहकारेण हि कचिद्व्यापकतानवच्छेदकरूपेणापि साध्यस्यानुमितौ भानमुपेयते नच प्रकृतेऽनुमातुस्तथा, तेन पूर्वं स्वपरामर्शस्य भ्रमत्वानवधारणात्, एवंच वह्निमति पर्वते 'पर्वतो वह्निमान्' इत्याकारकधियः कथं न यथार्थत्वमिति भावः। सामान्येत्यादि। वह्नित्वादिसामान्यप्रतियोगिकसम्बन्धनिरूपितसम्बन्धिताश्रयघटकत्वादित्यर्थः। सामान्यधर्मावच्छिन्नत्वादिति यावत्। विशेषस्य = तत्तद्व्यक्तिरूपविशेषस्यैव। तस्य = विशेषस्य। तत्रानवस्थितस्य = पर्वतेऽवर्तमानस्य। विशेष एव हि सामान्यधर्मावच्छिन्नः; स च यदि पर्वतावृत्तिरेव प्रकृतज्ञानप्रकारतया तद्दोषजन्यत्वान्यथानुपपत्त्या कल्पितः, तदा सामान्यधर्मावच्छिन्नतयाऽपि स एव भायान्न तु पर्वतवृत्तिरिति कथमुक्तधियो यथार्थत्वमित्यर्थः। विशेषाप्रतिभासे = महानसीयत्वादिना वह्नेरनुल्लेखविषयत्वे। महानसीयवह्नित्वाद्यवच्छिन्नव्यापकताग्रहादिघटितसामग्रीविरहदशायामित्यादिः। अपिरेवकारार्थे। वह्नित्वावच्छिन्नविधेयताकत्वस्यैवेत्यर्थः। यत्र सामान्यधर्मावच्छिन्नस्य कस्यापि न सद्भावः, यथा पुरोवर्तिनि रजतत्वावच्छिन्नस्य, तत्रान्यथाख्यातिवादिनां मयता देशान्तरवर्तिन एव सामान्यधर्मपुरस्कारेण भानकल्पनं युज्यते, यत्र तु कस्यचित्सामान्यधर्मावच्छिन्नस्य सद्भावः, तत्र सामग्रीसत्त्वे सोऽपि कुतो न भायात्, प्रकृतज्ञाने च दोषजन्यत्वेन विशेष्यावृत्तिविषयकत्ववद्वह्नित्वावच्छिन्नव्यापकताग्रहघटितसामग्रीसत्त्वेन विशेष्यवृत्तिरपि वह्निः कुतो न भासेत, नहि महानसीयत्वादिना विशेषोऽनुमितौ परिस्फुरति, येन विशेषान्तरस्य तद्विषयत्वमसम्भवदुक्तिकं स्यात्, अपितु वह्नित्वेनैव, तथैव व्यापकताग्रहादिति भावः। देवदत्तेति। यथा घटादौ देवदत्तीयत्वादिना निश्चयसामग्र्यभावदशायां पुरुषीयत्वेनैव च निश्चयसामग्रीसत्त्वदशायां तेनैव रूपेण निश्चयस्तथेत्यर्थः। न च तत्तद्वह्नित्वावच्छिन्नव्यापकताग्रहसम्भवः, व्यक्त्यानन्त्यात्, तथा पर्वतीयवह्निग्रहं विना तन्निरूपितव्यापकतायाः पर्वतीयधूमनिरूपितताया ग्रहासम्भव इति लाघवज्ञानादिविरहे महानसीयत्वाद्यवच्छिन्नविधेयताकत्वं कथमनुमितौ शङ्कनीयमित्याह सम्बन्धिविशेषस्येति। सामानाधिकरण्यनिरूपितसम्बन्धिताश्रयस्येत्यर्थः। तादृशाश्रयत्वं च व्यापके सामानाधिकरण्यस्य निरूपकतया, व्याप्ये च तदाश्रयतया। निर्लुण्ठितत्वं = सामान्यधर्मानवच्छिन्नत्वम्। तथा च सामान्यधर्मावच्छिन्नतया व्याप्त्याद्यघटकत्वे इत्यर्थः। व्याप्त्यादेरित्यादिनाऽनुमितिव्याप्तिज्ञानयोः कार्यकारणभावो विरोधिज्ञानैः प्रतिबध्यप्रतिबन्धकभावश्च गृह्यते। प्रातिस्विकरूपैर्व्याप्त्यादेः पुरुषायुषैरपि ज्ञानासम्भवेन नेष्टापत्तिरिति भावः। वस्तुतस्तु 'यो वह्निरन्यमापि, समेवात्र निश्चिन्ते' इति प्रायभिज्ञानानुरोधेन पर्वतवृत्तिवह्निरेव तादृशानुमितिविषयः, अनुभवानुसारे च कथानधिकरणनिरिग्गुणानुमितेः मयांशे एव यथार्थत्वम्। एतेन-प्रामाण्ये

नाभासे च संवादिनि विशेषान्यवत्ताकल्पनात्प्रकाशात्, सामान्यसमवाययोरप्यन्ययोरेव प्रतिभासेऽन्यथाख्यातिं विहायासत्ख्यातिप्रवेशापातात् । तत्रत्यधर्मान्तरस्य जात्या तादात्म्यारोपस्तत्रेति चेन्न; तथापि धर्मिणि जातौ च प्रमात्वतादवस्थ्यात्, संसर्गारोपनिमित्ताच्च तादात्म्यारोपानुपपत्तेः, परार्थानुमानाभासे हि प्रतिपादितपदार्थसंसर्गारोपकार-

दोषाभावप्रयोज्यत्वान्यथानुपपत्त्या वह्नित्वावच्छिन्नव्यापकताग्रहाधीनाया अपि प्रकृतानुमितेर्वह्नित्वेन पर्वतावृत्तिविषयकत्वमेव कल्पनीयम् । किञ्च सर्वांशे एव प्रमात्वं दोषाभावप्रयोज्यम्, आंशिकप्रमात्वं तु सत्यपि दोषे सम्भवत्येव, अन्यथा शुक्तौ 'इदं रजत'मिति घटाभाववति पटवति च 'इदं घटवत्पटवच्चे'त्यादिज्ञानस्यांशिकप्रमात्वं विलुप्येत, एवं च प्रकृतज्ञानस्यांशिकप्रमात्ववतोऽनुमितिप्रमायामन्तर्भावसम्भव इतिदेश्यस्य नावकाशः । यत्र व्यक्त्यन्तरभानकल्पनं नोदयमप्यासादयति तादृशस्थलेऽतिव्याप्तिमाह सामान्यानुमानाभासे च संवादिनीति । गोत्वव्याप्यपृथिवीत्ववतीयमित्यादिभ्रमजन्यगोत्वाद्येकव्यक्तिसाध्यकगोत्ववतीयमितियथार्थानुमितावित्यर्थः । गोत्वत्वेनोपस्थितिदशायां च तत्सम्भवः । विशेषान्यवत्तेति = पक्षावृत्तिगोत्वविषयकत्वेत्यर्थः । तथाच गोत्ववति गोत्वप्रकारकत्वेन तादृशानुमितेर्याथार्थ्याद्दोषजन्यत्वेन चालक्ष्यत्वादतिव्याप्तिरिति । समवायेति समवायव्याप्यभावत्त्ववान् घट इति भ्रमाधीनानुमित्यभिप्रायेण, एवञ्च पूर्वत्रापि सामान्यपदं समवायस्योपलक्षणम्, प्राचीनतार्किकमते तस्यैकत्वात् । तत्साध्यकानुमितावतिव्याप्तिरपि साध्यकानुमित्यतिव्याप्तिसमानयोगक्षेमा । तदनङ्गीकर्तृभट्टमते तु सत्साध्यकानुमितौ नातिव्याप्तिसम्भावना । अन्यथाख्यातिं = विशेष्यावृत्तिसतो ज्ञानविषयत्वं विहाय = अङ्गीकृत्य । असत्ख्यातिप्रवेशः = असतः प्रकारतया ज्ञानविषयत्वस्वीकारः, तेन प्राचीनान्यथाख्यातिमतेऽसतः संसर्गतया ज्ञानविषयत्वोपगमेऽपि न क्षतिः । प्रकृते तु सामान्यसमवाययोः साध्यतया प्रकारतैवेति भावः । तत्रत्यधर्मान्तरस्य = गोत्वान्यस्य गोवृत्तिधर्मस्य । तत्र = गोत्वव्याप्यपृथिवीत्ववदिदमितिभ्रमाधीनः । तथाच तादृशभ्रमेण गोत्वभिन्नपक्षकतादात्म्यसम्बन्धावच्छिन्नगोत्वत्वावच्छिन्नसाध्यताका 'इदं गोत्व' मित्यनुमितिरेव प्रसूयते, न तु गोपक्षिका समवायसम्बन्धावच्छिन्नगोत्वत्वावच्छिन्नसाध्यिकेति न तस्या याथार्थ्यम् । यद्यपि गवावृत्तिधर्मे गवाधिकरणे च धर्मिण्यपि तादात्म्येन गोत्वानुमितेर्भ्रमत्वसम्भवस्तथापि तत्र भ्रमसामग्रीसम्पादनं क्लिष्टं स्यादित्याशयेन तत्रत्यधर्मान्तरस्येत्युक्तम् । उपलक्षणञ्चेदम्, गवान्तरस्यापि गोत्ववत्तया तादात्म्येन तत्साध्यकतयापि गोत्ववतीयमित्यनुमितेर्भ्रमत्वोपपत्तेः । तदनौपयिकपरामर्शस्थले एवातिव्याप्तिर्दित्सितेत्यस्याग्रे एव स्फोरणीयत्वात् । इदं गोत्वमित्युक्तानुमितेस्तादात्म्यांशे एव भ्रमत्वं ननु धर्मिप्रकारांशेऽपीत्यनुशयेनाह धर्मिणीति । प्रमात्वेति । प्रमात्वापत्तेरित्यर्थः । ननु धर्म्यंशे क नाम भ्रमे नाभ्रमत्वमिति भ्रमविशेषानुधावनवैफल्यम्, तत्सम्बन्धिनि तत्प्रकारकानुभवत्वस्य तदंश एव प्रमात्वव्यवहारनियामकतेत्युक्तत्वाच्च, एवं च गोत्वतादात्म्यानापन्ने एव तादात्म्येन गोत्वप्रकारकतयोक्तानुभवस्य न गोत्वांशेऽपि प्रमात्वापादनसम्भवः, उक्तरीत्यांशिकप्रमायाः कुसुमान्तर्भावसम्भवेन तत्रान्यापत्तिदानस्य नौचिती चेत्यस्वरसादाह संसर्गेति । समवायसम्बन्धावच्छिन्नगोत्व त्वावच्छिन्नप्रकारताकानुमितिकारणात् समवायसम्बन्धावच्छिन्नगोत्वत्वावच्छिन्नप्रतियोगिताकगोत्वाभाववदवृत्तित्वनिष्ठप्रकारताकपृथिवीत्वादिनिष्ठविशेष्यतावच्छिन्नप्रकारताकगोनिष्ठविशेष्यताकपरामर्शादित्यर्थः । गोत्वभिन्नावृत्तित्वविषयकपरामर्शस्यैव तादात्म्येन गोत्वानुमित्यौपयिकत्वादिति भावः । परार्थानुमानाभासे इति । प्रमात्मकपरामर्शप्रयोजकतयाऽऽभासीभूतवाक्यविशेषरूपन्याये इत्यर्थः । अधीनत्वं कारणान्वयि सप्तम्यर्थः । निरुक्तपरामर्शात्मकं हि

णसम्भवात्, तथापि तत्र तादात्म्यारोपकल्पने च तथाभ्रमनियमस्य निष्कारणत्वात्। कस्यचित्तत्र जातसंवादजातिसंसर्गभ्रमस्य मितौ का गतिः ? का वा गतिः सिद्धसाधने ?

संसर्गारोपकारणं व्याप्तिविशिष्टवैशिष्ट्यावगाहितया व्याप्तिप्रकारकपृथिवीत्वविशेष्यकज्ञानात्मकेन विशेषणतावच्छेदकप्रकारकज्ञानेन जन्यम्, तच्च न्यायजन्यशाब्दबोधजन्यमिति परम्परयाऽधीनत्वमक्षतम्। प्रतिपादितपदार्थसंसर्गः = न्यायजन्यशाब्दबोधविषयीभूतो गोत्वनिष्ठव्यापकतावच्छेदकः समवायात्मकः संसर्गः। न्यायस्य समवायसम्बन्धावच्छिन्नगोत्वाभाववदवृत्तित्वविषयकशाब्दबोधजनकोपनयवाक्यघटितत्वे परामर्शस्यापि तादृशव्याप्तिविषयकत्वेन तत्स्थलेऽनुमितेरपि समवायसम्बन्धावच्छिन्नप्रकारताकत्वमावश्यकम्, अन्यथातिप्रसङ्गादिति भावः। इदमुपलक्षणम्, स्वार्थानुमितिजनकपरामर्शस्यापि तादृशव्याप्तिविषयकत्वेऽनुमितेस्तादृशप्रकारताकत्वस्यानपलपनीयत्वात्, एवञ्च भ्रमजन्याया गवि गोत्वसाध्यकानुमितेः सर्वांशे याथार्थ्येन प्रमात्वापत्तिरिति। तथापि = निरुक्तसंसर्गारोपकारणसत्त्वेऽपि। तथाभ्रमनियमस्य = तत्संसर्गकज्ञानत्वे तत्संसर्गकज्ञानकारणजत्वव्याप्तेः। निष्कारणत्वात् = अप्रामाणिकत्वापातात्, तथाचान्यत्रापि संसर्गान्तरज्ञानसामग्र्या अपरसंसर्गकज्ञानजनकत्वापत्तिः। ननु दोषजन्यज्ञानत्वस्याप्रमात्वव्याप्यत्वान्यथानुपपत्त्या क्वचित्संसर्गान्तरज्ञानसामग्र्या अपरसंसर्गज्ञानजनकत्वमास्ताम्, दोषसमवहितसामग्र्याः शक्तिविपर्याससम्भवाच्चेत्यत आह कस्यचिदिति। जातसंवादः = अनुव्यवसायविषयीभूतः समवायेन गोत्वप्रकारकबोधो यस्य तादृशपुरुषस्येत्यर्थः। तथा च समवायेन गोत्वप्रकारकतयाऽनुव्यवसीयमानानुमिताविस्यर्थः। अनुव्यवसायस्य प्रामाण्यनियमान्नात्र कुकल्पनावकाशः। प्रकृतज्ञानस्य यथार्थत्वेऽपि 'भ्रमस्ये'त्यभिधानं तस्य दोषजन्यतया प्रमात्वानन्तर्भावाभिप्रायेण, तदभाववति तत्प्रकारकत्वरूपं भ्रमत्वं तु नात्र विवक्षितम्। गतिः = प्रमात्वापत्तिपरिहारोपायः। अतिव्याप्त्यन्तरमाह का वेति। सिद्धसाधने = तत्र तत्प्रकारकनिश्चयानन्तरं तत्र तत्प्रकारकानुमितौ। तस्या यथार्थाया अपि आभासकरणजन्यतया प्रमात्वे नेष्टापत्तिः, क्लृप्तप्रमानन्तर्भावादिति। इदञ्चापाततः, तथाहि—सिद्धौ सत्यां पक्षताया विरहेण हेतोरपक्षधर्मतया स्वरूपासिद्धिर्वा पक्षविशेषणाप्रतीत्याऽऽश्रयासिद्धिर्वेति सा हेत्वाभास इति प्राचीनमतम्, अनुमितिं तद्धेतुज्ञानं वा प्रति साक्षाद्विरोधिन एव हेत्वाभासत्वेन सिद्धेश्च सिषाधयिषारूपपक्षताविघटकतयैवानुमितिविरोधित्वेन साक्षादतथात्वेन हेत्वाभासत्वाभावेऽपि तत्र हेतोर्दुष्टत्वमक्षतमेवेति मणिकारादिमतम्। स्वत एव तस्यानुमितिविरोधित्वमिति च मतान्तरम्, मतेषु चैषु सिद्ध्यनन्तरमनुमितेरसम्भवदुक्तिकत्वेन कथं तत्रातिव्याप्तिः। अनुमितेस्सद्भावे तु सिद्धसाधनमदोष एव, इच्छाविषयतावच्छेदकरूपेण सिद्धेरसद्भावात्। पक्षता नानुमितिहेतुरिति वदतां प्राभाकराणां वेदान्तिनाञ्च मते सिद्धेरप्रतिबन्धकत्वेनार्थान्तरविधयैव च कथायामुद्भावनीयत्वेन तदुत्तरोत्पन्नाया अप्यनुमितेरदुष्टकरणजत्वेन प्रमात्मकतया कथमतिव्याप्तिः। "प्रत्यक्षादौ बाधेन न ज्ञानं प्रतिबध्यते, किन्तूत्पन्नज्ञानेऽप्रामाण्यं ज्ञाप्यते, अनुमितौ तूत्पत्तिरेव प्रतिबध्यते" इति मण्युक्तविभागस्य शापथिकप्रमाणकत्वेन विनेयमात्रमनोरञ्जकत्वेनार्धजरतीयतया अनौचित्येन च सर्वत्रैव बाधादिभिरप्रामाण्यमेव ज्ञाप्यते उत्पन्ने ज्ञाने, उत्पत्तिस्तु न क्वापि प्रतिबध्यते इति मते यादृशविशिष्टविषयकनिश्चयत्वव्यापकोऽनुमित्यप्रतिबन्धकत्वासाधारण्याविषयकत्वोभयाभावस्तादृशविशिष्टस्य हेत्वाभासतेत्युक्तेरप्रामाणिकत्वेन प्रकृतेऽनुमित्युत्पत्त्युपगमेऽपि सिद्धेस्तत्राप्रामाण्यज्ञापकत्वेन तत्र दोषता न सम्भवदुक्तिकेति कथमनुमितावतिव्याप्तिरिति कृतं विस्तरेण। तत्र = उक्तानुमितौ। अन्यत्वकल्पनायां = विशेष्यावृत्तित्वपर्मिविषयकत्वकल्पनायाम्। तथात्वे च = उक्तानुमितेः प्रमात्वोपगमे च। यथार्थग्राहितया = प्रमितिजनक-

तत्राप्यन्यत्वकल्पनायां सिद्धत्वव्याघातात्, तथात्वे च हेत्वाभासस्यापि यथार्थग्राहित-योक्तनिमित्तस्य व्यभिचारेणान्यत्राप्याभासेऽन्यप्रतिभासकल्पनाया निर्निमित्तत्वात्। सिद्धसाधनमितेरेव वाऽव्यवच्छेदात्। इति खण्डने तत्त्वानुभवत्वखण्डनम्।

## अथ याथार्थ्यखण्डनम्।

यथार्थानुभवः प्रमेत्यप्यलक्षणम्। यथार्थत्वं हि तत्त्वविषयत्वं वा ? अर्थसदृशता वा स्यात्? नाद्यः, पूर्वं निरस्तत्वात्, नापि द्वितीयः, व्यभिचारिणोऽपि प्रमेयत्वादिनाऽर्थ-सादृश्येन प्रमात्वापातात्। ननु ज्ञानविषयीकृतरूपेण सादृश्यं विवक्षितम्, नच-प्रमेयत्वा-दिरूपस्य व्यभिचारिण्यपि प्रकाशसम्भवेन तथाप्यतिप्रसङ्ग इति-वाच्यम्; प्रमेयत्वाद्यंशे प्रकाशमाने विषयीभूतधर्मान्तरापेक्षया व्यभिचारिणोऽपि प्रमात्वाभ्युपगमादिति; नैतद्यु-क्तम्, प्रकाशमानेन रूपादिसमवायित्वेन रूपेण ज्ञानस्यार्थसादृश्यानभ्युपगमेऽपि तत्र तदीयप्रमात्वाङ्गीकारादिति। प्रकाशमानेन रूपेण विशेषणभावादर्थसादृश्यमनुभवस्य विवक्षितम्, अर्थस्य च यथा समवायाद्रूपं विशेषणीभवति तथा विषयभावाज्ज्ञानस्यापि तद्विशेषणं भवत्येवेति चेन्न; एवं हि पुरोवर्तित्वादिना रूपेण तथाभावसम्भवात्पुरोवर्तिनीं शुक्तिं रजततयाऽवगाहमानं ज्ञानं प्रमा स्यात्। न च वाक्यमिष्यते एव सा प्रमायीति न

तया। उक्तनिमित्तस्य व्यभिचारेण = दोषजन्यज्ञानत्वेऽप्रमात्वव्याप्तेरभावेन। अन्यत्राभासे = भ्रमात्मक-परामर्शजन्यानुमितौ। सिद्धसाधनमितेरिति। प्रकारान्तरेण दूषणमिदमुक्तास्वरसादेव द्रष्टव्यम्। ज्ञातविषयकयथार्थज्ञानमात्रस्येत्यर्थः। "अनुपलब्धेऽर्थे तत्प्रमाणमिति" पारमर्षसूत्रादज्ञातविषयकस्यैव बोधस्य प्रमात्वेन ज्ञानविषयकस्य यथार्थस्यापि स्मृतिवदप्रमात्वेन तार्किकोक्तलक्षणमात्रस्य तत्राति-व्याप्तिः। अन्यथा स्मृतिव्यावृत्तयेऽनुभवत्वोपादानं प्रमात्वस्य पारिभाषिकतां प्रयुञ्जीत। स्मृतेव्यावर्तने तद्वेतोः प्रमाणान्तरत्वापत्तिरिति चेत्सहभ्यतो विषयतान्वानुयोगितात्वप्रतियोगितात्वादीनां कृप्तातिरिक्तानां कल्पकस्य भवतो न यदि कापि हानिः, तर्हि प्रमाणान्तरस्वीकारेणापि न सा स्यादिति शिवम्। इति खण्डनशारदायां तत्त्वानुभवत्वखण्डनम्।

यथार्थेति। यथाशब्दस्य पदार्थानतिवृत्तिसादृश्यार्थकताभिप्रायेण विकल्पद्वयम्, योग्यता-वीप्सयोः प्रकृतेऽसम्भवात्। व्यभिचारिणो भ्रमस्य। प्रमेयत्वादिनेति। अभेदस्तृतीयार्थः सादृश्या-न्वयी। व्यभिचारिणि प्रकाशेति। भ्रमनिरूपितविषयतेत्यर्थः। विषयीभूतधर्मान्तरविषयकत्वावच्छेदेन धमत्ववतोऽपि प्रमेयत्वादिविषयकत्वावच्छेदेन प्रमात्वाभ्युपगमादित्यर्थः। रूपादीति। स्वविशेष्यता-निरूपितप्रकारताश्रयधर्मवत्तो ज्ञानस्य यथार्थत्वविवक्षायां रूपसमवायी घट इति ज्ञानेऽव्याप्तिः रूपसम-वायित्वरूपतादृशधर्मवत्त्वाभावादित्यर्थः। इदमुपलक्षणम्, अयं घट इत्यादिज्ञानेष्वपि द्रष्टव्याव्याप्तिः, प्रकारतावच्छेदकेन समवायसम्बन्धेन ज्ञाने घटत्वविरहात्। उक्तधर्मवैशिष्ट्यं न प्रकारतावच्छेदकसम्बन्धेन विवक्षितम्, अपितु विषयतासम्बन्धेनेति शङ्कते प्रकाशेति। अत्र च तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकार-कत्वे एव पर्यवसानं द्रष्टव्यम्। शुक्तौ 'पुरोवर्ति रजत'मिति ज्ञानस्य पुरोवर्तित्ववच्छुक्तिविशेष्यकत्वावच्छि-न्नपुरोवर्तित्वप्रकारकत्वेन तत्रातिव्याप्तिरित्याह एवमिति। तथाभावो विषयत्वम्। व्यभिचारचोदना=अति-व्याप्त्युद्भावनम्। प्रमायामिति। अनुभवत्वं प्रमात्वव्याप्यं स्यात्, प्रमात्वसमनियतं स्यादिति यावत्। यदि तु ज्ञानमात्रस्य धर्मेणो प्रमात्वेऽपि तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वं तदंशे याथार्थ्यमिति लाभाय

व्यभिचारचोदनेयं युक्तिमतीति; यथार्थताविशेषणवैयर्थ्यप्रसङ्गात्, अनुभूतिः प्रमेत्युक्त एव हि तावन्नास्त्यतिप्रसङ्गः, सर्वस्य व्यभिचार्यनुभवस्यान्ततोऽन्यथाख्यातिवादिनये धर्मिण्यपि प्रमात्वसम्भवेन प्रमायामेवानुभवत्वस्य स्थैर्यात्। यदि त्वंशतोऽपि व्यभिचारिण्यां मा लक्षणं गमदिति चेतसि निधाय यथार्थत्वविशेषणं प्रयुक्तं तदा न युक्तम्, उक्तदोषात्।

यथार्थपदम्, तदा तत्त्वानुभवत्वखण्डनोपक्रमे "भवितुरतत्त्वशब्दार्थत्वप्रसङ्गेने"ति पङ्क्तिव्याख्यायामुक्तमनुसन्धेयम्। व्यभिचारिण्यामिति। प्रतीताविति शेषः। उक्तदोषादिति। तत्त्वाद्यत्वेनाभिमताया आंशिकप्रमाया उक्तलक्षणाक्रान्ततयाऽतिव्याप्तेरित्यर्थः। अत्राहुः—स्वाधिकरणावृत्तिनिष्ठप्रकारतानिरूपिता या या विशेष्यता तत्तन्निरूपकत्वं सर्वांशे याथार्थ्यम्। स्वाधिकरणावृत्तित्वं च स्वाधिकरणनिरूपितप्रकारतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभावः, तेन सम्बन्धसामान्येनावृत्तिगगनादिनिष्ठप्रकारतानिरूपितविशेष्यत्वानिरूपकत्वमादाय 'ह्रदो वह्निमानि'त्यत्र नातिप्रसङ्गः। न च—गुणः संयोगेन घटवानिति ज्ञानस्य प्रमात्वापत्तिः, गुणनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्धेरिति—वाच्यम्; प्रकारतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वीयस्वरूपसम्बन्धेन स्वाधिकरणनिरूपितवृत्तित्वस्याभावः प्रकारताश्रयधर्मे विवक्षणीयः, तथा च संयोगसम्बन्धावच्छिन्नवृत्तित्वीयस्वरूपसम्बन्धस्य गुणनिरूपितवृत्तित्वव्यधिकरणतया नोक्तापत्तिः। अथ घटत्वप्रतियोगिकसमवायेन पटत्ववान् पट इति ज्ञानस्य प्रमात्वं स्यात् प्रकारतावच्छेदकसमवायसम्बन्धावच्छिन्नवृत्तित्वीयस्वरूपसम्बन्धेन पटनिरूपितवृत्तित्वस्य पटत्वे सत्त्वात्। न च—प्रकारतानिरूपितसंसर्गनिष्ठावच्छेदकतानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकसंसर्गनिष्ठावच्छेदकतानिरूपकवृत्तित्वीयस्वरूपसम्बन्धेन स्वाधिकरणनिरूपितवृत्तित्वाभावो विवक्षणीयः, तथाच प्रकृते उक्तपर्याप्त्यनुयोगितावच्छेदकं घटत्वप्रतियोगिकत्वसमवायत्वनिष्ठद्वित्वं तदवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकघटत्वप्रतियोगिकसमवायनिष्ठावच्छेदकतानिरूपकवृत्तित्वीयस्वरूपसम्बन्धस्य तज्ज्ञानीयविषयताश्रयपटनिरूपितवृत्तित्वव्यधिकरणतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकस्य तादृशवृत्तित्वाभावस्य पटत्वादिरूपप्रकारे सत्त्वान्नोक्तापत्तिरिति—वाच्यम्; गुणीयसंयोगेन घटवान् गुण इति ज्ञानस्य प्रमात्वापत्तेः, तज्ज्ञानीयप्रकारतावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकगुणप्रतियोगिकत्वसंयोगत्वनिष्ठद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतावच्छेदकताकवृत्तित्वाप्रसिद्धेः स्वपदेन ज्ञानान्तरीयविषयताया एव धरणीयत्वादिति चेन्न; स्वनिरूपितप्रकारतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकावच्छेदकतानिरूपकीयस्वरूपसम्बन्धेन स्वाश्रयनिरूपितवृत्तित्वाभावस्य विवक्षणीयतया गुणप्रतियोगिकत्वसंयोगत्वनिष्ठतादृशपर्याप्त्यनुयोगितावच्छेदकीभूतद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकीभूता या संसर्गविधयावच्छेदकता तन्निरूपकत्वस्य वृत्तित्वेऽप्रसिद्धावपि तज्ज्ञानीयघटत्वावच्छिन्नप्रकारतायां प्रसिद्धेस्तादृशप्रकारत्वीयस्वरूपसम्बन्धस्य वृत्तित्वव्यधिकरणतया तदवच्छिन्नप्रतियोगिताकस्वाधिकरणनिरूपितवृत्तित्वाभाववद्घटनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपके प्रोक्तज्ञानेऽतिव्याप्तेः। अथ तद्व्यक्तित्वादिना घटत्वादिज्ञानं विशेष्यीकृत्य जायमाने विषयितासम्बन्धेन स्वरूपतो घटत्वप्रकारकज्ञाने प्रमात्वं स्यात्, तज्ज्ञानीयोक्तज्ञाननिष्ठविशेष्यतानिरूपितप्रकारतानिरूपितसंसर्गनिष्ठावच्छेदकतानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतं यद्विषयतात्वनिष्ठं तद्व्यक्तित्वं तदवच्छि-

नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकसंसर्गनिष्ठावच्छेदकतानिरूपकविषयितासम्बन्धावच्छिन्नवृत्तित्वीयस्वरूपसम्बन्धेन विशेष्यताश्रयतादृशज्ञाननिरूपितवृत्तित्वस्य घटत्वादिरूपप्रकारे सत्त्वेन स्वपदेन तादृशविशेष्यताया अशक्योपादानत्वात् । न च–निरुक्तस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकस्वाश्रयनिरूपितनिरवच्छिन्नवृत्तित्वाभाववन्निष्ठनिरवच्छिन्नप्रकारतानिरूपितविशेष्यत्वानिरूपकत्वं विवक्षणीयम्, तथा च विशेष्यताश्रयीभूतज्ञाननिरूपितविषयितासम्बन्धावच्छिन्नवृत्तित्वस्य घटत्वे सत्त्वेऽपि तद्वृत्तित्वं तद्व्यक्तित्वावच्छिन्नं न तु निरवच्छिन्नमिति स्वपदेन तादृशविशेष्यतोपादातुं शक्यता, प्रकारतायां निरवच्छिन्नत्वविशेषणं तु घटत्वत्वेन घटत्वावगाहिज्ञानविशेष्यकस्य विषयितासम्बन्धेन घटत्वत्वेन घटत्वप्रकारकज्ञानस्य सङ्ग्रहार्थम्, अन्यथा तस्य विशेष्यताश्रयज्ञाननिरूपितनिरवच्छिन्नवृत्तित्वाभाववद्घटत्वनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपकत्वेन स्यादसङ्ग्रह इति–वाच्यम् ह्रदो वह्निमानिति ज्ञानस्य प्रमात्वापत्तेः, तदीयवह्निनिष्ठप्रकारताया निरवच्छिन्नत्वाभावेन ज्ञानान्तरीयनिरवच्छिन्नप्रकारतानिरूपितविशेष्यत्वानिरूपकत्वस्य तत्र सद्भावादिति चेन्न; स्वाश्रयनिरूपितवृत्तितानवच्छेदकधर्मावच्छिन्नप्रकारतानिरूपिता या या विशेष्यता तत्तदनिरूपकत्वस्य विवक्षणीयत्वात्, उक्तज्ञाने स्वविशेष्यताश्रयह्रदनिरूपितवृत्तितानवच्छेदकवह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपकतायाः सत्त्वेनानतिव्याप्तेः । वृत्तिता च प्रकारतावच्छेदकसम्बन्धावच्छिन्ना, अन्यथा वह्नित्वादेः कालिकसम्बन्धावच्छिन्नह्रदादिनिरूपितवृत्तितावच्छेदकत्वेन तदनवच्छेदकगगनत्वाद्यवच्छिन्नप्रकारतानिरूपितज्ञानान्तरीयविशेष्यत्वानिरूपके उक्तज्ञानेऽतिव्याप्तितादवस्थ्यात् । वृत्तित्वावच्छेदकत्वाभावश्च न स्वरूपसम्बन्धेन, किन्तु स्वनिरूपितप्रकारतानिरूपितसंसर्गतानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकसंसर्गतानिरूपकनिरूपितावच्छेदकत्वीयस्वरूपसम्बन्धेन, स्वं विशेष्यता, ह्रदो वह्निमानित्यत्र संयोगत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकसंयोगनिष्ठसंसर्गतानिरूपकप्रकारतानिरूपितावच्छेदकत्वीयस्वरूपसम्बन्धेन ह्रदनिरूपितवृत्तितावच्छेदकत्वाभाववद्वह्नित्वमित्यनतिप्रसङ्गः । एवञ्च वृत्तिता प्रकारतावच्छेदकसम्बन्धावच्छिन्ना न विवक्षणीया, तेन गुणः संयोगेन घटवानिति ज्ञाने विशेष्यताश्रयगुणनिरूपिततादृशवृत्तित्वस्याप्रसिद्धत्वेऽपि नातिव्याप्तिः । उक्तसंसर्गे तादृशसंसर्गतानिरूपकनिरूपितत्वस्यैव प्रवेशेन निरूपकपदेन प्रकारताया शक्योपादानत्वेन च गुणविसंयोगेन घटवान् गुण इति ज्ञाने गुणप्रतियोगिकत्वसंयोगत्वनिष्ठद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकसंसर्गनिष्ठावच्छेदकतानिरूपकवृत्तित्वस्याप्रसिद्धत्वेऽपि नातिव्याप्तिरिति ।

अत्रोच्यते—तद्विगस्तु कलयत्किल लक्ष्यं दूषणं पतति नैव यदत्र ।

विस्तरस्तु प्रथतां न महीयान् दूषणस्य भणितिः कियतोऽपि ॥

न च नातिव्याप्तिः, स्वरूपतो रजतत्वादिप्रकारताकस्य तद्व्यक्तित्वादिना घटत्वादिज्ञानविशेष्यकस्य स्वरूपतो विषयितया घटत्वप्रकारताकस्य च भ्रमस्य धर्मावच्छिन्नप्रकारतानिरूपितविशेष्यत्वानिरूपकत्वेन तत्र तस्या अवश्यम्भावात् । स्वाश्रयनिरूपितवृत्तितानवच्छेदकधर्मेतरधर्मानवच्छिन्नप्रकारतानिरूपितविशेष्यत्वानिरूपकत्वविवक्षयामुक्तभ्रमीयविशेष्यतानिरूपकप्रकारतायास्तादृशधर्मेतरधर्मानवच्छिन्नत्वेनातिव्याप्तिवारणेऽपि 'अयं घट' इत्यादिप्रमायाः स्वरूपतो घटत्वप्रकारिकाया अपि तादृशप्रकारताकविशेष्यताकत्वेनाव्याप्त्यापत्तेः । निखिलभ्रमीयविशेष्यतानां प्रातिस्विकरूपेण स्वपदेनोपादानासम्भवेन कतिपयभ्रमीयविशेष्यतानामुपादाने भ्रमान्तरेषु तदनिरूपकेष्वतिव्याप्तेर्दुर्वारत्वाच्च । एवं तादृशविशेष्यतानिरूपकत्वघटोभयाभावादिकमादायापि, तन्निवारणाय प्रकारान्तरानुसृतिस्तु स्मृतिसामान्यान्योन्याभा

वखण्डने निवेदितदोषभावामनवस्थामनापाद्य न शाम्यति । एवं तादृशनिरूपकत्वात्यन्ताभावं कालिकेन स्थापयित्वापि, स्वरूपसम्बन्धावच्छिन्नतादृशात्यन्ताभावत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणताविवक्षा तु लक्षणापर्यवसानं प्रसूते इति द्रष्टव्यं लक्षणसामान्यखण्डने । न च नाव्याप्तिः, उक्तरीत्यैव वृत्तितानवच्छेदकत्वस्यातिप्रसक्तत्वेन तस्या दुर्वारत्वात् । न च नासम्भवः, लक्षणघटकविशेष्यतानामननुगमकानतिप्रसक्तरूपविरहेण तत्तन्निरूपकत्वात्यन्ताभावामनन्तानां क्वापि प्रमातुमशक्यत्वेन तस्यापि ध्रौव्यात्, एतावत्पदार्थानजानतोऽपि प्रमात्वव्यवहाराच्च, एतस्येतरभेदानुमापकत्वे व्यवहारौपयिकस्य लक्षणान्तरस्य वक्तव्यत्वापाताच्च । नच नात्माश्रयादिः; विशेष्यताश्रयत्वादिकं वैज्ञानिकमतिप्रसक्तमिति वास्तवत्वं तत्र विवक्षणीयम्, भ्रमे विशेष्यानुयोगिकालीकसंसर्गावगाहनोपगमे तु नितराम्, वास्तवत्वं च प्रमात्वाघटितं दुर्वचमिति व्यक्तावात्माश्रयान्योन्याश्रयौ, प्रमात्वनिर्णयस्य स्वनिर्णयाधीनवास्तवत्वनिर्णयाधीनविशेष्यताश्रयत्वादिनिर्णयाधीनत्वात्तु चक्रकमपि । अनवस्था तूक्तैव । एवं घटत्वप्रतियोगिकसमवायेन पटत्ववान् पट इति प्रतीतेः प्रमात्ववारणाय संसर्गतावच्छेदकतापर्याप्तेरवश्यं निवेशनीयतयापि सा, समवायत्ववृत्तित्वविशिष्टावच्छेदकता समवायत्वे पर्याप्तेति प्रतीत्या समवायत्वगतैकत्वस्याप्यनुयोगितावच्छेदकतया शक्योपादानत्वादतिव्याप्तिस्तदवस्था मा भूदित्यवच्छेदकतात्वेतरानवच्छिन्नत्वेनापि पर्याप्तिप्रतियोगिताया विवक्षणीयत्वात् । अधिकं तूक्तम् । विशेष्यतादीनां लक्षणघटकानां यथासम्भवं स्वरूपसम्बन्धविशेषात्मकताया अखण्डोपाधिताया वोपगन्तव्यत्वेन त्वात्माश्रयान्योन्याश्रयौ सुप्रतीताविति । नच नापसिद्धान्तः, स्वाश्रयनिरूपितवृत्तितानवच्छेदकधर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपकत्वरूपं भ्रमत्वं युक्तलक्षणप्रतियोगि, नच ह्रदो वह्निमानित्यत्र वह्निनिष्ठप्रकारतानिरूपितत्वं ह्रदनिष्ठविशेष्यतायां ह्रदवह्न्योः सम्बन्धमन्तरा सम्भवति, नच सम्बन्धस्य सम्बन्ध्यात्मकत्वं प्रामाणिकम्, एवं न स्वीयमित्यनुभवबाधात् । नचासौ सम्बन्धोऽतिरिक्तः सन्, तथा सति व्यधिकरणप्रकारकत्वस्यापि दुर्निरूपत्वेन तत्र भ्रमत्वव्याहतेः । वक्ष्यते चाधिकम् । नचासावसन्, तथा सति सदसतोरुपरागानुपपत्तेः सम्बन्धिनोरप्यसत्त्वस्यैव वक्तव्यत्वेन बौद्धमतप्रवेशापत्तेरिति । एतेन–विशेष्यताविशिष्टप्रकारताशून्यत्वं सर्वांशे प्रमात्वम्, वैशिष्ट्यञ्च स्वनिरूपितत्वस्वाश्रयनिष्ठाधिकरणतानिरूपकताविशिष्टान्यत्वोभयसम्बन्धेन, अत्र वैशिष्ट्यञ्च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्यस्वानवच्छेदकानवच्छिन्नत्वस्ववृत्तित्वेति सम्बन्धचतुष्टयेन, स्ववृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन, विशेष्यताश्रयह्रदनिष्ठाधिकरणतानिरूपितजलनिष्ठनिरूपकताविशिष्टा जलनिष्ठा प्रकारता तदन्यत्वं वह्निनिष्ठप्रकारतायामिति सैव विशेष्यताविशिष्टा तच्छून्यत्वं ह्रदो जलवानिति ज्ञाने एवेति नाप्रसङ्गातिप्रसङ्गौ । सम्बन्धचतुष्टयान्तर्गतप्रथमसम्बन्धानिवेशे ह्रदो वह्निमानितिज्ञानीयविशेष्यतानिरूपितवह्निनिष्ठप्रकारतायां ह्रदनिष्ठाधिकरणतानिरूपितकालिकसम्बन्धावच्छिन्नवह्निनिष्ठनिरूपकतायाः सामानाधिकरण्यादिसम्बन्धत्रयेण सत्त्वात्तादृशविशेष्यतायाः स्वपदेनोपादानानुपपत्तेर्घटो गगनवानितिज्ञानीयघटनिष्ठविशेष्यताया एवोपादेयतया तद्विशिष्टप्रकारताशून्यतया ह्रदो वह्निमानितिज्ञानेऽतिव्याप्तिः । द्वितीयसम्बन्धानिवेशे गुणत्वनिष्ठनिरवच्छिन्ननिरूपकतायाः परिनिष्ठसम्बन्धैर्द्रव्यत्वनिष्ठनिरवच्छिन्नप्रकारतायां सत्त्वात्तदन्यप्रकारत्वानिरूपके गुणो द्रव्यमितिज्ञानेऽतिव्याप्तिः । न च निरवच्छिन्ननिरूपकत्वप्रकारत्वयोरवच्छेदकाप्रसिद्ध्या न द्रव्यत्वनिष्ठनिरवच्छिन्नप्रकारतायां तादृशनिरूपकतावैशिष्ट्यमिति वाच्यम्; घटो द्रव्यमिति ज्ञानसङ्ग्रहाय स्वानवच्छेदकत्वस्यावच्छेदकतासम्बन्धेन स्वाभाववत्त्वरूपस्य वक्तव्यत्वात्, अन्यथा विशेष्यताश्रयघटनिष्ठाधिकरणतानिरूपकताविशिष्टा द्रव्यत्वनिष्ठा प्रकारता न स्यात्, निरवच्छिन्नत्वात् । तृतीयसम्बन्धानिवेशे स्वरूपतो घटत्वव-

अथोच्येत-प्रकाशमानरूपेण सर्वेण विशेषणभावाद्यस्यानुभवस्यार्थसादृश्यं सा प्रमा, न च तावता धर्मिणो धर्मविशेषगततया दोषः; तस्यापि तद्विषयान्तराव्यवच्छेदकत्वादिति; तर्हि व्यभिचारिज्ञानं धर्मिण्यपि प्रमा न स्यात्, सर्वात्मना सादृश्याभावात्;

ग्राहिज्ञाने घटत्वत्वादिना विषयितासम्बन्धेन घटत्वप्रकारकज्ञानस्य विशिष्टसत्त्वात् गुण इति ज्ञानस्य च प्रमात्वं स्यात्, अधुना त्ववच्छेदकतासम्बन्धेन निरूपकत्वाभाववद्घटत्वत्वविशिष्टसत्त्वावच्छिन्नत्वस्यैव प्रकारतागतत्वात् तादृशप्रकारता निरूपकताविशिष्टान्यैवेति तन्निरूपकत्वेन नोक्तज्ञानयोरतिप्रसङ्गः। चतुर्थसम्बन्धानिवेशे घटत्वत्वेन घटत्वावगाहिज्ञाने विषयितासम्बन्धेन स्वरूपतो घटत्वप्रकारकज्ञानस्य प्रमात्वं स्यात्। अथ चेदं रजतमित्यादिनिरवच्छिन्नप्रकारताकभ्रमेष्वपि नातिव्याप्तिरिति-निरस्तम्; प्रकारताया अवच्छिन्नत्वाभावप्रयुक्तायाः पूर्वलक्षणोक्तातिव्याप्तेरभावेऽपि प्रकारान्तरेणोक्तानामतिव्याप्त्यादीनां सर्वेषामेव दोषाणामत्रापि सावसरत्वात्, परम्परया संसर्गताया अप्रामाणिकत्वाच्च। एतेन भ्रमसामान्यभिन्नानुभवत्वं सर्वांशे प्रमात्वमित्यपि निरस्तम्: तस्योक्तप्रकारद्वयातिरिक्तस्य दुर्वचत्वात्। किञ्च भ्रमत्वमननुगतं वाऽनुगतं वा, आद्ये भेदकूटस्यैव निवेश्यत्वेनासर्वज्ञदुर्ज्ञेयत्वम्, द्वितीये तूभयाभावादिकमादायातिप्रसङ्गो वाऽनवस्था वेत्युक्तम्। न च गुणत्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकधर्मवत्त्वं दोषाभावत्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावच्छेदकधर्मवत्त्वं वा प्रमात्वम्, रूपान्तरेण प्रमात्वस्य लक्ष्यतावच्छेदकता, उक्तरूपेण च लक्षणतेति न विरोध इति वाच्यम्; गुणत्वदोषत्वयोरनुगतयोरभावात्, ईश्वरज्ञानसाधारणप्रमात्वस्य जन्यतावच्छेदकत्वासम्भवाच्च, जन्यप्रमात्वस्य तथात्वे च नित्यानित्यसाधारणप्रमात्वस्य निर्वक्तव्यत्वापातात्, व्यवहारानुगमदर्शनात्। गुणत्वस्य प्रमात्वघटितत्वाच्च। दोषत्वस्यापि प्रमितिप्रतिबन्धकतारूपत्वे तथात्वाच्च।

विशेषणभावात् = विषयितादिसम्बन्धेन विशेषणतया, तथा च स्वविषयीभूतयावद्विशिष्टविषयकत्वं याथार्थ्यमित्यक्षरार्थः, इदं रजतमिति भ्रमस्य स्वविषयीभूतरजतत्वविशिष्टविषयकत्वाभावान्नातिप्रसङ्गः। दोषः = असम्भवः। अनुभवविषयान्तरं प्रकारः संसर्गश्च। तथा च स्वविषयीभूतं यद्यत्तत्तद्व्यावृत्तं यद्यत्तत्तदितराविषयकत्वं वक्तव्यम्, यावद्व्यावृत्तस्यैकस्याभावात्। अथ यद्यपि तद्व्यावृत्तत्वं यदि तज्ज्ञानजन्यव्यावृत्तिधीविषयत्वं तदा भ्रान्तावतिप्रसक्तिस्तदवस्था, यद्दर्शयति "रजतत्वादिकमपि व्यवच्छिनत्त्येव शुक्तिका"मिति। तादृशव्यावृत्तिप्रमितिविषयत्वं तु प्रमात्वस्यैव निरूप्यमाणतया न विवक्षाक्षमम्। न च स्वप्रकारीभूतयावद्विशिष्टविशेष्यकत्वविवक्षायां धर्मिणो यावदनन्तर्गतत्वात्सोक्तासम्भव इति वाच्यम्; घटवद्भूतलमित्यादौ कस्यापि विशेष्यस्य घटत्वादिरूपयावत्प्रकारविशिष्टत्वाभावेनाव्याप्त्यापत्तेः। स्वीयविशेष्यतानिरूपितयत्सम्बन्धावच्छिन्नप्रकारताश्रयो योयस्तत्तत्सम्बन्धावच्छिन्नतत्तन्निरूपितसम्बन्धितावद्विशेष्यकत्वविवक्षायामपि 'घट'इत्यादौ वीप्सार्थाप्रसिद्ध्याऽव्याप्तिः। विशिष्टसत्त्वात् गुण इत्यत्रातिव्याप्तिश्च। तादृशप्रकारतावच्छेदकीभूतं यद्यत्, तत्तदवच्छिन्ननिरूपकतानिरूपितसम्बन्धितोक्तौ च निरवच्छिन्नप्रकारताकभ्रमेष्वव्याप्तिरित्येवमादिपर्यालोच्यमाने पूर्वनिरस्तपरिष्कृतिभूयमननुभूय न लक्षणविश्रान्तिस्तथापि समाधिसौकर्यादाह तर्हीति। प्रमा न स्यादिति। न च सर्वांशे प्रमात्वस्यैव निरूप्यमाणतयैतदप्रसङ्गरमिति वाच्यम्; 'इदं ज्ञानमंशे प्रमा, इदञ्च सर्वांशे प्रमे'ति व्यवहारस्य प्रमात्वांशेऽनुगतस्यैवानुभवादुभयानुगतप्रमात्वस्यावश्यं निर्वाच्यत्वादित्यभिप्रायात्। न च 'इदं रजत'मिति ज्ञानं प्रमेति व्यवहारविरहेण प्रकारांशमादायैव प्रमात्वाप्रमात्वव्यवस्थायाः स्वीकार्यत्वेन तदनुपग्रहेऽपि न क्षतिरिति वाच्यम्; भूतलमिदं घटवद्घटवच्चेति ज्ञानस्य घटप्रकारांशे प्रमात्वं पटांशे च भ्रमत्वमासे-

अव्यभिचारिणं चांशमनुरुध्य तदीयाप्रमितकोटिनिक्षेपसाहसिक्यादविभ्यता किमव्यभिचार्यंशानुरोधेन व्यभिचार्यंशस्यापि प्रमाकोटिनिवेशनमेव नाध्यवसीयते भवता, शक्यन्ते ह्यनुभूतित्वज्ञानत्वादयस्तादृगभिप्रायेण लक्षणीकर्तुम्। यदि च बाध्यार्थांशा धारबाध्यांशेऽप्यप्रमैव तदा सौधाग्रकुम्भादिवत् दूरत्वात्तुहिनद्युतिविद्युदादिपरभागाग्रहणादवयविनं च तावत्परिमाणाग्रहणादल्पपरिमाणमुल्लिखत्प्रत्यक्षं प्रमात्वेन लोकप्रसिद्धमप्रमा स्यात्। क्वचच लभ्यं देशकालालोकादिव्यक्तिसहितजलादिज्ञानस्य समस्ततावदर्थप्रवृत्तिसामर्थ्योदाहरणं येन तत्प्रामाण्यं मन्यसे। यदि चांशे बाधादबाध्येऽप्यंशे तद्बाधमिथ्यात्वं समर्थयसे तदा यदर्थजातीयं बाध्यं तदर्थजातीयमबाध्यमपि मिथ्येति मन्यमाने किमुत्तरं ते स्यादन्यत्र लोकप्रसिद्धप्रमोदाहरणत्यागात्।

दुपःसद्ग्राह्यत्वात्। प्रमासामान्यलक्षणेन तत्सद्ग्राह्यतानुपगमे आह अव्यभिचारिणमिति। तदीयाप्रमितिकोटिनिक्षेपः = उक्तज्ञानस्याप्रमात्वोपगमः प्रमाकोटिनिवेशनम् = प्रमात्वाश्रयता। नेति। तथा च विनिगमनाविरहात्प्रमात्वाप्रमात्वोभयमपि तथास्थेयमिति भावः। यथार्थस्मृतेर्लक्ष्यताभिप्रायेण ज्ञानत्वेति। आदिपदेनागृहीतासंसर्गकधर्मधर्मिविषयकैकज्ञानत्वं सविषयकत्वञ्च गृह्यते, इच्छादौ याचितमण्डनन्यायेनैव सविषयकत्वव्यवहृतेर्नातिप्रसङ्गः। नायं घट इति यथार्थज्ञानमिदम्पदार्थधर्मिणि घटत्वप्रमात्वं नालम्बेतेत्याशयेनागृहीतासंसर्गकेति। तादृगभिप्रायेण = आंशिकभ्रमत्ववतोऽपि प्रमात्वाभिप्रायेण। बाध्यार्थांशा = यत्किञ्चिद्विषयकत्वावच्छेदेन भ्रमत्ववती। सौधो राजसदनम्। दूरत्वात्परभागाग्रहणात्तावत्परिमाणाग्रहणादित्यत्र पूर्वपूर्वस्योत्तरोत्तरं प्रति हेतुता। तुहिनद्युतिः = चन्द्रमाः। विद्युदादीति द्वितीयान्तम्। अवयविनं च = अन्यञ्चावयविनम्, तेन चन्द्रादेरप्यवयवित्वेन नासङ्गतिः। यद्यपि सौधाग्रकुम्भादिप्रत्यक्षे एवाप्यासिसत्त्वेन तद्विषयं दृष्टान्तीकृत्य चन्द्रादिप्रत्यक्षेऽप्यासिदानमनुचितम्, तथाप्युक्तिवैचित्र्यार्थमेवेदम्। अनल्पपरिमाणेऽल्पपरिमाणतावगाहितयांशिकभ्रमत्वमुपोद्बलयितुं च दृष्टान्तोपन्यासः। प्रमात्वेनेति। क्वचिदंशे इत्यादिः। अप्रमा = सर्वांशेऽप्रमा। सर्वांशे प्रमाया एव लक्ष्यतामुपेत्याप्याह क्वेति। तावदर्थसामर्थ्येति। तज्ज्ञानीयविषयताश्रययावद्विषयकसफलप्रवृत्तिजनकत्वेत्यर्थः। उक्तजलादिज्ञानं क्वापि जने स्वीययावद्विषये संवादिप्रवृत्तिजनकमिति न शक्यमुदाहर्तुम्। प्रवृत्तिपर्यन्तं कालादेर्जलादिज्ञानविषयस्यानवस्थितत्वं सूचयितुं व्यक्तिपदं व्यक्तिविशेषपरम्। स्वतःप्रमात्ववादेऽपि तद्वति तत्प्रकारकत्वादिरूपमेव प्रमात्वं स्वाश्रयज्ञानविषयकप्रथमज्ञानेन गृह्यते न तु सर्वांशे प्रमात्वम्, तज्ज्ञानप्रयोजकसामग्रीविरहादिति व्यक्तमन्यत्र, एवञ्चानेकविषयकोक्तज्ञानस्य सर्वांशे प्रमात्वं स्वीययावद्विषये सफलप्रवृत्तिजनकत्वेनैव ग्राह्यम्, जनकत्वञ्च नोपधानम्, स्वीययावद्विषये प्रवृत्त्युपधाने मानाभावात्, केषाञ्चिद्विषयाणां प्रवृत्तिपर्यन्तमनवस्थायित्वाच्च, नापि स्वरूपयोग्यत्वम्, अवच्छेदकस्य निरूपणीयत्वापातात्, इदं जलत्वप्रकारकं ज्ञानं जलविशेष्यकं जलभिन्नाविशेष्यकत्वे सति सविशेष्यकत्वाद्व्यतिरेके जलभ्रमवदिति रीत्या तु विषयविशेषे एव प्रमात्वं गृह्येत न तु सर्वत्र, न वा तत्तत्प्रकारांशे तत्तत्प्रकाराश्रयभिन्नाविशेष्यकत्वं सर्वांशे संवादिप्रवृत्त्युपधानं विना शक्यं ग्रहीतुमिति तादृशप्रमितीनां सर्वांशे प्रमात्वं न स्यादिति भावः। सिंहावलोकितेनाह यदीति। मिथ्यात्वम् = अप्रमात्वम्। समर्थयसे = अभिमन्यसे। यदर्थजातीयं = यद्धर्मावच्छिन्नविषयकं किञ्चिज्ज्ञानं बाध्यं = भ्रमत्वेन प्रसिद्धं तदर्थजातीयं = तद्धर्मावच्छिन्नविषयकं ज्ञानान्तरमबाध्यमपि = प्रमात्वेन प्रसिद्धमपि मिथ्या = अप्रमेत्यभिमन्यमानं प्रतिवादिनं प्रति लोकप्रसिद्धप्रमोदाहरणातिरिक्तमुत्तरं ते न स्यात्। अंशे

अथोच्यते-प्रकाशमानेन रूपेण विशेषणतया यदर्थसाम्यमनुभवस्य तत्र तस्य प्रमात्वमिति विषयविशेषनियमेनैव प्रमात्वं लक्षणीयमित्येतदर्थमेव यथार्थविशेषणोपादानमिति; मैवम्; विशेष्यांशेऽनुभूतिरेवं प्रमा न स्यात्। व्यवच्छेदकत्वं विशेषणत्वमभिमतम्. धर्म्यपि च स्वसम्बद्धान् धर्मान् विशिनष्टीति नोक्तदोषः इत्युक्तमेवेति चेन्न; विशिष्टे प्रमात्वाभावापत्तेः। अपि च, एवं तर्हि रजतत्वादिकमपि व्यवच्छिन्दत्येव शुक्तिकां 'रजततया प्रकाशिता या शुक्तिव्यक्तिः सेय'मिति। ननु साक्षाद्विशेषणत्वं विवक्षितम्, रजतत्वं तु ज्ञानद्वारा शुक्तिविशेषणमिति नातिप्रसङ्ग इति; मैवम्; नहि दीर्घदण्डः पुरुष इत्यादौ ह्रस्वदण्डादिभ्यो वैलक्षण्ये विशेष्यस्यानुभूयमानेऽनुभूतेर्न प्रमात्वं स्यात् दीर्घत्वादेर्दण्डादिद्वारा विशेषणत्वादिति। ज्ञानरूपद्वारानपेक्षतया विशेषणत्वमिष्टमिति चेन्न; साक्षात्कृत इत्याद्यवगमानामप्रमात्वापातात्। तज्ज्ञानप्रकाशितरूपेण विशेषणत्व-

---

प्रमात्वमुपेयुषोऽपि सर्वात्मना भ्रमत्वं यदि तदा सर्वांशे प्रमात्वमुपेयुषोऽपि तत्किञ्च स्याद्विनिगमकाभावात्, आंशिकत्वानांशिकत्वयोरप्रयोजकत्वादिति भावः।

नत्रेति। विषयतया स्वविशिष्टं यत्, तद्विशिष्टविषयकत्वं स्वस्य तदंशे याथार्थ्यमित्यर्थः। विषयविशेषनियमेन = विषयविशेषनियन्त्रितं, तत्तद्विषयकत्वावच्छिन्नमिति यावत्। तद्विशिष्टत्वं यदि तदाश्रयत्वं तदाह विशेष्येति। तद्व्यावृत्तत्वमेव तद्विशिष्टत्वम्, धर्मधर्मिणोश्च परस्परं व्यावृत्ततया न दोषः, अतएव गोत्वत्वं समवेतत्वसम्बन्धेन गोत्वे प्रकारीभूतं यत्किञ्चिद्गोव्यक्तिरेवेति वदन्तीत्याशङ्कते व्यवच्छेदकत्वमिति। अत्र धर्मधर्मिणोर्व्यावृत्तत्वज्ञानादन्योन्यव्यावृत्तिबोधेऽन्योन्याश्रयोऽपि द्रष्टव्यः। स्वीयप्रकारताश्रयतद्विशिष्टविशेष्यकस्य तदंशे याथार्थ्यमिति विवक्षायामपि विशिष्टसत्त्वात् गुण इत्यादावतिव्याप्त्यादिकमुक्तमनुसन्धेयम्। विशिष्टस्यानतिरिक्तत्वेऽप्याह अपि चेति। रजततयेत्यादि। इदमुपलक्षणम् बाधग्रहात्पूर्वमपि रजतत्वग्रहाधीनव्यावृत्तिग्रहविषयत्वरूपस्य रजतत्वव्यावृत्तत्वस्य सम्भवात् व्यावृत्तिग्रहे प्रमात्वविवक्षायां तूक्तमेव, व्यावृत्तेर्वस्तुगम्या पूर्वमपि सद्भावेन रजतत्वजन्यत्वस्य रजतत्वग्रहजन्यत्वस्य वा तत्रासम्भवदुक्तिकत्वेन व्यावृत्तिग्रहस्यैव व्यावृत्तत्वे प्रवेशनीयत्वात्। ज्ञानद्वारा = स्वप्रकाशकज्ञानविशेष्यत्वसम्बन्धेन। इत्यादावित्यादि। इत्यादिज्ञानार्थानुभव विषये विशेष्यनिष्ठवैलक्षण्ये इत्यर्थः। तेन वैलक्षण्यबुद्धेर्विशिष्टधीफलत्वादन्यथाऽसिद्धत्वादप्रसङ्गात 'दीर्घदण्डः पुरुष' इति धियो वैलक्षण्याविषयकत्वेऽपि न क्षतिः दण्डादिद्वारा = स्वसमवायिसंयोगसम्बन्धेन। आदिपदं खड्गादिविशेषणकधियमभिप्रेत्य। एकत्र द्वयमिति रीत्या च दीर्घत्वादेः पुरुषादौ भानसम्भवः एवञ्च 'दीर्घदण्डपुरुष' इति ज्ञाने पुरुषे धर्मिणि दीर्घत्वांशे प्रमात्वाभावद्वारा तदधीनव्यावृत्तिबुद्धेरप्रमात्वमित्यर्थः। तेन व्यावृत्तेः साक्षाद्विशेषणत्वेऽपि न क्षतिः। व्यवच्छेदकाप्रमितौ व्यवच्छित्तेः प्रमित्यसम्भवात्। दीर्घदण्डः पुरुष इति ज्ञानस्य पुरुषरूपधर्मिणि दण्डत्वविशिष्टबुद्धित्वमादाय प्रमात्वं न स्यादित्येतावदभिधानेनैव निर्वाहे तदधीनबुद्धेर्व्यावृत्त्यंशेऽप्रमात्वापादनं विप्रतिपत्तिं परिहर्तुम्। उपलक्षणञ्चेदम्, उक्तरीत्या भ्रमेऽतिव्याप्तिसत्त्वात्। साक्षाद्विशेषणत्वं नाम ज्ञानाघटितसम्बन्धेन विशेषणत्वमिति 'रजततया प्रकाशिते'ति ज्ञानमादाय नातिप्रसङ्ग इत्याशङ्कते ज्ञानेति। घातादिति। साक्षात्त्वस्य स्वाश्रयविषयत्वसम्बन्धेन ज्ञानघटितेनैव विषयविशेषणत्वादिति भावः। एवं घटत्वस्य स्वप्रकाशकसाक्षात्कारविषयत्वसम्बन्धेन विशिष्टबुद्धित्वमादाय घटत्वेन साक्षात्कृतोऽयमित्यादावप्यव्याप्तिर्द्रष्टव्या। रूपं प्रकारसंसर्गौ, तथा च यद्रूपावच्छिन्नयत्सम्बन्धावच्छिन्नयज्ज्ञानीयप्रकारताश्रयत्वं यस्य तद्-

मिति तु दूरं तुच्छम्, रूपादेः समवायेन तज्ज्ञानाविशेषकत्वात्। अर्थविशेषणत्वेऽयं नियमो यत्तज्ज्ञानप्रकाशितेन रूपेणेति, नतु ज्ञानेऽपीति चेन्न; तज्ज्ञानव्यक्तेरन्यत्रासम्भवेनासाधारण्यादव्यापकत्वादित्यलम्। इति खण्डनखण्डखाद्ये याथार्थ्यखण्डनम्।

## अथ सम्यक्त्वखण्डनम्।

सम्यक्परिच्छित्तिः प्रमेत्यपि न युक्तम्; न खलु सम्यक्त्वं तत्त्वविषयता याथार्थ्यं वा सम्भवति, उक्तदोषात्। ननु सामस्त्यं सम्यक्त्वमिष्टम्, अभिधीयते हि लोके-'न मया सम्यग्दृष्टं सामान्याकारेण तूपलब्ध'मिति, तदिह समीचोऽर्थस्य परिच्छेदः सम्यक्परिच्छेदः, सम्यगर्थविषयत्वाद्वा सम्यक्शब्दः परिच्छेदसमानाधिकरण एवायमिति; मैवम्, सामस्त्यमर्थस्य किं सर्वावयवसहितत्वम्, अथवा सर्वधर्मसहितत्वम्, नाद्यः, अनवयवपदार्थपरिच्छेदस्य सावयवपदार्थपरिच्छेदस्यापि मध्यभागाद्यविषयस्याप्रमात्वापातात्। नापि द्वितीयः. असर्वविदपरिच्छित्तीनां सर्वासामप्रमात्वापत्तेः। अथ मन्यसे-सम्यक्शब्दः सविशेषार्थ, यदपि लोकेऽभिधीयते 'न मया सम्यग्दृष्टम्' तस्यापि मया न विशेषतो दृष्टमित्यर्थः, तस्माद्विशेषसहितधर्मिपरिच्छित्तिः प्रमेत्युक्तं भवति, विभ्रमादयो हि विशेषमपश्यतो जायन्ते इति तद्व्यावृत्त्यर्थं विशेषणमिदम्, विशेषाणां च सर्वेषां विशेषान्तरानभ्युपगमेऽपि स्वरूपमेव केषाञ्चिद्विशेष इति; नैतद्युक्तम्, विशेषमात्राभिधाने रजतत्वादिना विशेषेण सहैव शुक्तिव्यक्त्यादेर्भ्रमेणावगाहनात्तस्यापि प्रमात्वं स्यात्। प्रत्यर्थं व्यावृत्ताकाराणां च विशेषाणामुपादानेऽननुगमप्रसङ्गात्, सामान्यतश्चातिप्रसङ्गादित्युभयथाप्यसङ्गततापत्तेः। ननु न ब्रूमो विशेषेण सहोपलम्भो विशेषसहि-

पावच्छिन्नतत्सम्बन्धावच्छिन्नतत्सम्बन्धितावत्तज्ज्ञानस्य तदंशे प्रमात्वमित्यर्थः। सम्बन्धितावत्त्वं यदि यथाश्रुतं तदा समवायेन रूपवान् घट इत्यादावव्याप्त्या दूषयति दूरमिति। अतीत्यर्थः। तत्सम्बन्धितावत्त्वं स्वाश्रयविषयकत्वसम्बन्धेनेति नोक्तदोष इत्याशङ्कते अर्थेति। अन्यत्रासम्भवेन = स्वविषयान्यविषयकत्वासम्भवेन। असाधारण्यात् = अननुगमात्, लक्ष्यमात्रसाधारण्यविरहादिति यावत्। इदमुपलक्षणं रूपानवच्छिन्नप्रकारताकप्रमित्यव्याप्तेरपीति शिवम्। इति खण्डनशारदायां याथार्थ्यखण्डनम्॥

परिच्छित्तिः = अनुभवः। सम्यगर्थविषयत्वात् = सम्यगर्थविषयकत्वपरत्वात्। परिच्छेदसमानाधिकरणः = परिच्छित्तिपदार्थविशेष्यकाभेदबोधजनकः। सर्वेति। स्वीयेत्यादिः। असर्वविदिति। वस्तुमात्रस्यानन्तधर्मकत्वात् सामान्यप्रत्यासत्तेश्चाप्रामाणिकत्वात्, प्रामाणिकत्वेऽपि तदनधीनज्ञानासङ्ग्रहस्य दुर्वारत्वादिति भावः। नन्वेवमन्त्यविशेषविशेष्यकप्रमित्यव्याप्तिः, तदीयविशेष्यस्य विशेषसहितत्वाभावादित्याशङ्क्याह विशेषाणामिति। स्वरूपमेवेति। तथा च विशेषविषयकत्वमेव सम्यक्त्वं विवक्षितमिति विशेषसाहित्यस्यान्तिमविशेषेष्वसम्भवेऽपि न क्षतिः। स्यादिति। स्वविशेष्यवृत्तिविशेषविषयकत्वविवक्षायामपि पुरोवर्तित्वस्यापि किञ्चिदपेक्ष्य विशेषत्वेन तद्विषयकोऽभ्रमेऽतिव्याप्तिः, अन्त्यविशेषविशेष्यकप्रमितावव्याप्तिश्चेति तत्तद्विशेषविषयकत्वेनैव तत्तज्ज्ञानस्य प्रमात्वं वाच्यमित्यभिसन्धानेनाह प्रत्यर्थमिति। उभयथेत्यनेन परामर्शसौकर्यार्थमुक्तमनुवदति सामान्यत इति। व्यावृत्ताकारेण शुक्तित्वादिनानुपादाने इत्यर्थः। विशेषत्वस्याननुगतस्याभावादननुगमोऽत्र पक्षेऽपि दुष्परिहरः। एवमग्रेऽपि। कथमिति। भ्रमसंतापनिवर्तकज्ञानविषयस्यैव विशेषतया पुरोवर्तित्वं न विशेष

तोपलम्भः, किन्नाम विशेषेण सहितस्य पदार्थस्योपलम्भः तथा च न शुक्तौ रजतत्वं विशेषोऽस्ति. तत्कथं रजतभ्रमेऽतिप्रसङ्ग इति; न; उक्तदोषेणैव निरस्तत्वात्, यदि हि विशेषस्य सामान्यतोऽभिधानं तदा पुरोवर्तित्वादेः सत्त्वान्न प्रसङ्गनिवारणम्, विशेषेण तदभिधाने त्वननुगम इति। विशेषस्य च भवतु स्वरूपमेव विशेषस्तथाप्यभेदादेव विशेषसहितत्वं नास्तीत्यव्याप्तेरपरिहारात्।

यत्तु कश्चिदवोचत्-विशेषशब्देन तेऽभिधीयन्ते यद्दर्शनेन भ्रमसंशयावकाशो

इति गूढोभिसन्धिः। तादृशज्ञानविषयस्य विशेषतायाः स्वतो निराकरणीयतया न प्रामाणिकत्वमित्याशयेन परिहरति उक्तेति। ननु स्वविशेष्यवृत्तियद्विशेषविषयकत्वं यस्य तदंशे तस्य सम्यक्त्वमिति पुरोवर्तित्वांशे प्रमात्वमिष्टमेवेत्याशङ्क्यान्तिमविशेषविशेष्यकप्रमायामव्याप्तिमाह विशेषस्येति। नह्यभेदेऽपि सम्बन्धिता येन वृत्तित्वस्थाने तन्निवेशेन निस्तारः स्यात्. नचैवं प्रकारांशे प्रमात्वनियतिः स्यात, नवा विशिष्टसत्तावान् गुण इत्यादौ नातिव्याप्तिः स्यात्। नच निरवच्छिन्नप्रकारताकभ्रमे नातिव्याप्तिर्येन स्वविशेष्यवृत्तितावच्छेदकावच्छिन्नप्रकारताकत्वविवक्षा क्षोदक्षमा स्यात। नच प्रकारान्तरं न पुरा निरस्तं येन तदेवात्रोपादेयं स्यादिति भावः।

पुरोवर्तित्वादिव्यावृत्तविशेषानुगमपरं कुसुमाञ्जलिस्थग्रन्थमर्थतः पठति विशेषशब्देनेति। भ्रमसंशयान्यतरस्यैव निवेशः, विपरीतज्ञानत्वेनोभयोर्वा। तथा च तद्विशेष्यकभ्रमप्रतिबन्धकज्ञानविषयत्वं तद्विशेषत्वम्, तेन पुरोवर्तित्वादेः कचिद्भ्रमप्रतिबन्धकज्ञानविषयत्वेऽपि न क्षतिः। स्मृतिरूपे विशेषदर्शने सत्यपि पीतः शङ्ख इति भ्रमोदयेन शङ्खगतो विशेषो न सङ्गृह्यते इति तु न वाच्यम्; प्रत्यक्षभ्रमे प्रत्यक्षविशेषदर्शनस्यैव प्रतिबन्धकत्वेन तत्र तस्यैव निवेशनीयत्वात्, अननुगमस्य तार्किकैरगत्या स्वहस्तितत्वात्। नचैवं समूहालम्बनं पुरोवर्ति शुक्तिरित्यादिज्ञानमादायातिप्रसङ्ग इति वाच्यम्; तादृशप्रतिबन्धकतावच्छेदकविषयताश्रयत्वस्यैव विवक्षणीयत्वात्, प्रतिबन्धकता च तद्विशेष्यकभ्रमत्वव्यापकप्रतिबध्यतानिरूपिता विवक्षणीया, नचावच्छेदकत्वस्यानतिरिक्तवृत्तित्वरूपत्वेऽसम्भवः; इच्छाप्रयोज्यत्वाभावेन विषयत्वावच्छिन्नत्वाभावेनाप्रामाण्यज्ञानाव्याप्यवृत्तित्वज्ञानानास्कन्दितज्ञानीयत्वेन च विशिष्टाया एव विषयतायाः प्रतिबन्धकतानतिरिक्तवृत्तित्वस्य वक्तव्यत्वात्। संशयीयैककोटिविषयताऽपरकोटिविषयतावच्छिन्नेति द्वितीयविशेषणेन तद्वारणम्। अधिकमन्यत्र प्रसिद्धदिशात्र द्रष्टव्यम्। वस्तुतस्तु शुक्तित्वव्याप्यत्वेन रजतत्वाद्यभावव्याप्यत्वेन वा पुरोवर्तित्वेऽपि शुक्तिविशेषताऽस्त्येव, तथात्वेनागृह्यमाणे तु नीलपृष्ठत्वादावपि सा नास्त्येवेति तत्तद्ग्रहकालीनविषयताया एवानतिरिक्तवृत्तित्वम्, एवञ्च पुरुषविशेषनियन्त्रित्वमपि, परन्तु तथाग्रहस्य विशेषणत्वे तदभावकाले विशेषत्वाभावेन प्रमात्वाव्याप्तिः, उपलक्षणत्वे तु तथाग्रहाभावकालिकविशेषविषयतायाः प्रतिबन्धकतातिरिक्तवृत्तितया नोक्तलक्षणसम्भवः, तस्मात्स्वरूपसम्बन्धरूपावच्छेदकतां विवक्षित्वा यद्रूपावच्छिन्नविषयतात्वव्यापकं यद्विशेष्यकभ्रमप्रतिबन्धकतावच्छेदकत्वं तद्रूपावच्छिन्नस्य तद्विशेषत्वमित्येव वक्तव्यम्, समानाकारकज्ञानीयविषयतानामैक्याच्चाप्रतिबन्धकज्ञानीयविषयताया अपि तादृशावच्छेदकत्वमिति दिक्। बाधाबाधव्यवस्था = विपरीतज्ञानेऽयथार्थत्वस्याविपरीतज्ञाने च यथार्थत्वस्य प्रमितिः. विशेषदर्शनं हि तद्व्याप्यस्य तदभावव्याप्यस्य वा दर्शनमिति तत्प्रकारकग्रहे तद्व्याप्यवद्विशेष्यकत्वग्रहेण तद्वद्विशेष्यकत्वस्यापि प्रतीत्या यथार्थत्वग्रहस्य फलतः पर्यवसानम्, तदभावव्याप्यवद्विशेष्यकत्वग्रहेण तु तदभाववद्विशेष्यकत्वप्रतीत्याऽयथार्थत्वग्रहस्येति भावः। तथा च भ्रमत्वप्रमात्वान्यतरप्रमित्यौपयिकत्वम्, शुक्तिविशेष्यकतत्प्रकारकग्रहविशेष्यकतद्वद्विशेष्यकत्वप्रकारकप्रमितिजनकतावच्छेदकी-

यद्दर्शने च बाधाबाधव्यवस्था, तदनभ्युपगमे तत्त्वातत्त्वविभागो न स्यात्, भवितव्यं च तेन, अन्यथा व्याघातादिति; तदयुक्तम्; न तावदेवंविधो विशेषोऽभिधातुं शक्यो यदवगमस्य न भ्रान्तित्वादिसम्भवः, स्वप्नदृशः सर्वविशेषोपलम्भात्। न च व्याघातदण्डभयमात्रादसावुपपादयितुमशक्योऽप्यभ्युपगन्तव्य इति युक्तम्; तदुपदर्शनाशक्यत्वेन व्याघातपरिहार एव कश्चिदन्यो निर्वक्तुमशक्योऽप्यस्तीत्येव तदा किन्न व्यवस्थाप्यते, नहि

---

भूतनिरूपकत्वनिष्ठप्रकारतावच्छिन्नविशेष्यतानिरूपितविशेष्यतानिष्ठप्रकारतावच्छिन्नविशेष्यतानिरूपितवृत्तित्वनिष्ठप्रकारतावच्छिन्नविशेष्यतानिरूपिताधिकरणनिष्ठप्रकारतावच्छिन्नविशेष्यतानिरूपितप्रकारताभत्त्वं शुक्तिविशेषत्वमिति यावत्। एवं तद्वद्विशेष्यकत्वस्थाने तदभाववद्विशेष्यकत्वं निवेश्यमपीति। तदनभ्युपगमे = विशेषानभ्युपगमे। तत्त्वातत्त्वविभागः = प्रमिताप्रमितकोटिविभागः, ज्ञानानां प्रमात्वाप्रमात्वविभागो वा। तेन = उक्तविभागेन। व्याघातादिति। निषेधे क्रियमाणे प्रतियोगिनः सिद्ध्यसिद्धिभ्यामनुपपत्तेः, एवं ज्ञानमात्रस्य प्रमात्वे शुक्तौ रजतत्वज्ञानादेर्विसंवादिप्रवृत्तिजनकत्वानुपपत्तेः, अप्रमात्वे तु रजते रजतत्वज्ञानस्य संवादिप्रवृत्तिजनकत्वानुपपत्तेः, प्रतिवादिनि प्रमित्याधानाय तद्वाक्यप्रयोगानुपपत्तेश्चेत्यर्थः। स्वप्नेऽपि शुक्तित्वादिव्याप्यधर्मदर्शनं प्रतिबध्नात्येव शुक्तिविशेष्यकरजतत्वादिभ्रमादिकम्, तत्र तद्व्याप्यत्वेन प्रतीयमानस्य तद्व्यभिचारित्वेनाप्रतीतेः, अन्यथा क्वापि बाध्यबाधकभावो न स्यात्। यदि हि विशेषोपलम्भेऽपि विपर्ययो भवेत् तदा बाधकाभावेन विपर्ययत्वमपि तस्य कुतः, बाधकत्वेनाभिमतस्यापि वा कुतो न तथात्वम्, तस्माद्विशेषोपलम्भाभावस्य भ्रमादिकारणत्वे तत्प्रतियोगिनो भ्रमादिप्रतिबन्धकत्वेनोक्तविशेषलक्षणसम्भव इति पराभिप्रायमभिप्रेत्य परिहरति तदयुक्तमिति। यदवगमस्येति। तथाच स्वप्ने तद्व्याप्यत्वेन प्रतीयमानस्यापि तद्व्यभिचारित्वेनज्ञानधीनापि प्रतीतिरिति सर्वेषामपि ज्ञानीयप्रतिबध्यप्रतिबन्धकभावानां स्वप्ने व्यभिचारः, एवं ज्ञानीयकार्यकारणभावानामपि, इच्छां विनापि शुक्तित्वस्य स्वाप्नभ्रमे रजतत्वप्रकारताकविशेष्यतावच्छेदकत्वात्तद्दर्शनस्य भ्रमादिप्रतिबन्धकत्वं दूरोत्सारितम्। अत्र यद्यपि विशेषनिश्चयत्वेनैव जाग्रति प्रतिबन्धकता क्लृप्ता न तु विशेषप्रमात्वेनापि, सा च व्यभिचरिता, तथापि तद्विशेष्यकभ्रमादिप्रतिबन्धकज्ञानविषयस्यैव तद्विशेषत्वे शुक्तिविशेष्यकरजतत्वप्रकारकभ्रमप्रतिबन्धककाचत्वप्रकारकभ्रमविषयस्य काचत्वस्यापि शुक्तिविशेषत्वं स्यात्, तस्मात्तद्विशेष्यकभ्रमादिप्रतिबन्धकप्रमाविषयस्यैव तद्विशेषत्वं वाच्यम्, स्वाप्नं विशेषदर्शनञ्च न प्रमेत्यदोष इति न वाच्यम्, प्रमात्वस्याद्याप्यविविक्तत्वात्, एतेन निरुक्तं भ्रमत्वप्रमात्वान्यतरप्रमित्यौपयिकत्वमपि निरस्तम्, दोषान्तरं च वक्ष्यति। यदि तु शुक्तित्वादिकमेव शुक्तेर्विशेष इत्येव वक्तव्यम्, तेनानुगमकरूपाभावेऽपि न क्षतिरित्युच्यते तदाऽपि शुक्तौ रजतमित्यादिविशेषविषयकस्वाप्नभ्रमेऽव्यतिव्याप्तिः प्रमालक्षणस्येत्यपि यदवगमस्येत्यादिनोक्तमेवेति द्रष्टव्यम्। स्वप्नदृशः = स्वप्नतत्समयवतः। सर्वविशेषेति। जाग्रति तत्तद्भ्रमप्रतिबन्धकतावच्छेदकविषयताश्रयेत्यादिः। उक्तानुपपत्त्यात्मकव्याघाते दण्डत्वं तु विशेषात्मके व्यवस्थापनीयेऽर्थे विप्रतिपत्तिनिराकृतिसाधनत्वम्। असौ = विशेषः। तदुपदर्शनाशक्यत्वेन = विशेषस्य निर्वक्तुमशक्यत्वेन। कश्चित = अनिर्वचनीयताख्यः। अनिर्वचनीयताया अप्यनिर्वचनीयत्वादित्याशयेनाह निर्वक्तुमशक्य इति। नन्वनिर्वचनीयानिर्वचनीयताया व्याघातपरिहारत्वं वा कल्प्यताम्, अनिर्वचनीयविशेषस्य व्याघातपरिहारसाधनत्वं वेत्यत्र किं विनिगमकमिति चेल्लाघवमेव, त्वया व्याघातपरिहारतत्साधनयोर्द्वयोः कल्पनीयत्वात्, मया च व्याघातपरिहारस्यैव, यदि हि निरुक्तलक्षणो व्याघातोऽनुभूयेत तदा स्यादपि गौरवमकिञ्चित्करम्, नन्वेवम्, स्वा-

परिदृश्यमानपदार्थगोचरं तदस्ति किञ्चिदनुभूयमानं यत्स्वप्ने वा वाक्याभासे वा प्रतिपत्तुमशक्यमिति प्रतिपत्त्यारूढतया येयमप्रतीयमानकल्पना ततो वरमनुपलभ्यमानस्य व्याघातपरिहारस्यैव कल्पना भद्रा। यदुक्तञ्च व्याघातोद्भावनधिभीषिकामिमामुन्मूलयिष्यामः। बाधाबाधव्यवस्थाहेतुरस्ति विशेष इति पक्षं यस्तु जडतरो न जहाति स 'आप्तानाप्तवाक्याभ्यां नदीतीरे फलानि सन्तीत्येवंरूपाभ्यां प्रतिपाद्यमानेऽर्थे स्थितं कं विशेष-

---

प्नभ्रमे वाक्याभासाधीनभ्रमे च व्यभिचारेण विशेषदर्शनाभावस्य भ्रमाहेतुत्वादुक्तलक्षणस्यासम्भवादित्युक्त्यादित्याह नहीति। परिदृश्यमानपदार्थगोचरं = प्रामाणिकपदार्थान्तर्गतं, परिदृश्यमानपदार्थेषु गोचरोऽवकाशो घटकतया यस्येति वा परिदृश्यमानाः पदार्था गोचरा घटिततया सन्निहिता यस्येति वा व्युत्पत्त्या तादृशार्थलाभात्। अन्यथाख्यातिमते सत्त्वस्य ज्ञानविषयताव्यापकत्वात्प्रामाणिकपदार्थानामेव भ्रमे भानादिति भावः। वाक्याभासे इति। "अत्यन्तासत्यपी"तिन्यायेन विशेषदर्शनकाले उत्पन्नोऽपि शाब्दबोध आहार्य एव. प्रतिबध्यभ्रमे चानाहार्यत्वमवश्यनिवेश्यमन्यथा भ्रमत्वव्यापकत्वस्य प्रतिबध्यतायामनुपपत्तेः, तदभाववति तत्प्रकारकत्वस्याहार्येऽपि सत्त्वादिति तु न वक्तव्यम्; अनाहार्यत्वं हि स्वविषयत्वस्वाभाववद्वृत्तितोत्तरत्वाभ्यामिच्छाविशिष्टज्ञानान्यत्वं तच्चोक्तशाब्दबोधेऽक्षतमेव, विशेषदर्शने सत्यपि वाक्याभासश्रवणसमनन्तरमिच्छां विनैव शाब्दस्यानुभविकत्वात् विशेषदर्शनस्य प्रतिबन्धकत्वे दोषाया उत्तेजकतामन्येत शाब्दे तस्याप्रतिबन्धकताया अनुभवेन निर्णये तु क तस्या उत्तेजकतेति भावः। प्रतिपत्त्यारूढतया = भ्रमाद्यप्रतिबन्धकप्रतिपत्तिविषयतया निरुक्तलक्षणवत्त्वेनाप्रतीयमानस्य = अनिर्वाच्यस्य विशेषस्य येयं कल्पना ततोऽनुपलभ्यमानस्य = अनिर्वचनीयस्य व्याघातपरिहारस्यैव कल्पना लाघवसहकृतत्वेन भद्रेत्येव वरम्. एवेन विशेषव्यवच्छेदः। यदि तु 'यद्दर्शनेने'त्यादिना तद्विशेष्यकभ्रमाप्रकारस्यैव तद्विशेषत्वं सूचितम्, 'यद्वागमस्ये'त्यादिना च शुक्तिविशेष्यकभ्रमप्रकारतायाः शुक्तौ रजतमिति स्वाप्नभ्रममादाय शुक्तित्वेऽपि सत्त्वेन तस्य शुक्तिविशेषत्वं न स्यादित्युक्तम्, नचेत्यादिग्रन्थश्च पूर्ववत्, वाक्याभासश्च 'शुक्तौ रजत'मित्यादिर्गृह्यते, तदा प्रतिपत्त्यारूढतया = सर्वस्यापि तत्तद्विशेषस्य तत्तद्विशेष्यकभ्रमप्रकारत्वेऽपि अप्रतीयमानकल्पना = तादृशभ्रमाप्रकारत्वं परिकल्प्य विशेषस्योक्तलक्षणस्य कल्पना, तत्तद्विशेष्यकभ्रमाप्रकारीभूतानां विशेषाणामप्रतीयमानानां = अप्रामाणिकानामपि प्रतिपत्त्यारूढतया = प्रामाणिकत्वेन कल्पनेति वा व्याख्येयम्, प्रतीयमानता तु तादृशभ्रमप्रकारतावत्तामेव। अत्र च धर्मिकल्पना तत्र चानुभवविरुद्धतादृशभ्रमाप्रकारत्वादेश्च कल्पनेत्यधिकं गौरवम्। उपलक्षणञ्चेदम्, जाग्रतोऽपि शुक्तिविशेष्यकसमूहालम्बनभ्रमविषयतया शुक्तित्वे सम्भवेनाव्याप्तेः. नच—शुक्तिविशेष्यकभ्रमत्वावच्छेदकविषयितानिरूपकत्वमेव शुक्तिविशेषत्वमिति नोक्तदोषः शुक्त्यविशेषाणां तु स्वप्नदशामादाय तादृशविषयतानिरूपकत्वमेवेत्यतिप्रसक्तिरिति—वाच्यम्; एवं हि पुरोवर्तित्वस्यापि तथात्वेन तद्विषयकभ्रमेऽतिप्रसक्तिः प्रसक्तैव प्रकृतप्रमात्वस्य। तत्तदीयविशेषवैशिष्ट्यविषयकानुभवस्य तदीयविशेषांशे प्रमात्वमित्यभिधानं तु नाननुगमान्योन्याश्रयादिकमतिक्रामति, निष्फलश्चैवं विशेषत्वनिवेश इति कृतं विस्तरेण। उन्मूलयिष्याम इति। अनुमानखण्डने प्रथमपरिच्छेदे, द्वितीयचतुर्थपरिच्छेदयोश्चेत्यर्थः। 'यद्दर्शनेन भ्रमसंशयावकाश' इत्यंशं दूषयित्वा 'यद्दर्शने बाधाबाधव्यवस्थे'त्यंशं दूषयितुमाह बाधेति। उक्तरीत्या तद्विशेष्यकभ्रमप्रकारीभूतत्वे तद्विशेषस्य बाधाबाधव्यवस्थापकत्वस्याप्यसम्भवात्स्याग एवोचित इत्याशयेन जडतर इति। दूषणदिक्प्रदर्शनेऽपि पक्षान्तरे दूषणानभ्यूहितेत्यर्थः। तद्प्रदर्शने दूषणानभ्यूहिता तु जड इति भावः। स पृष्टः प्रतिबोधनीय इत्यन्वयः। कं विशेषमिति।

मेकत्र पश्यसि यमपरत्र न पश्यसी'ति पृष्ट्वा प्रतिबोधनीयः, तथाप्यजातबोधस्तु जडतमः कश्चिद्यदि स्यात्, स एवं प्रबोध्यः,ये ते विशेषान्तरप्रवाहस्वीकारेऽनन्तविशेषापत्तिभया-त्वया स्वत एव विशेषरूपा इति स्वीकृतास्तेषां स्वरूपं तावत्परस्परव्यावृत्तमतोऽनुगतैक-रूपाभावादव्यापकत्वं स्यादिति। बाधव्यवस्थाहेतुत्वादेवानुगतिरिति चेन्न; क्वाचित्क-बाधहेतोर्भ्रमेऽपि प्रकाशात्। तत्र तस्येति चेन्न; व्यावृत्तेः, बाधस्य च तद्विपरीतार्थप्रमा-त्वेन तदर्थाननुगमात्, प्रमायाश्चाद्याप्यव्यवस्थापनादिति। शङ्कान्तराणि चातः पराणि याथार्थ्यविशेषणदूषणदूषितान्येवोपनिपतन्तीतीह द्विरभिधानभयान्नोक्तानि। किञ्च तर्क-ज्ञानमाहार्यौ च संशयविपर्ययौ परिदृश्यमाने एव विशेषे भवन्तीति तैरतिप्रसङ्गः स्यात्।

इदं रजतमितिशुक्तिविशेष्यकस्य शुक्तिविशेषाविषयकत्वेन भ्रमत्ववत्, इयं शुक्तिरितिशुक्तिविशेष्यकस्य च तद्विषयकत्वेन प्रमात्ववत् प्रकृतशाब्दयोः समानाकारतयैकस्य विशेष्यगतविशेषाविषयकत्वमपरस्य च तद्विषयकत्वमित्यस्य वक्तुमशक्यत्वेन भ्रमत्वं प्रमात्वं वा न व्यवतिष्ठेत, नहि प्रमात्वव्यवस्थां विना प्रमा-विषयत्वं विशेषो वदितुं शक्यः, नवा स प्रकृतशाब्दव्यक्तिविषयः अत एव न स्वनिष्ठप्रकारताकविशेष्य-तावद्वृत्तित्वं स्वनिष्ठविशेष्यतानिरूपितप्रकारतावत्सम्बन्धित्वं वा स्वस्य विशेषः। ननु तादृशशाब्दयो-रेकस्मिन्नदीतीरे एककाले एव फलावगाहित्वे द्वयोरेव भ्रमत्वं प्रमात्वं वा स्यात्, तस्माद्भिन्नकालिकोच्चा-रणविषयवाक्यजत्वमेव तयोर्वाच्यम्, तथासति 'सन्ती'ति पदमहिम्ना तयोर्भिन्नकालविषयत्वेन विषयगतो विशेषः सुवच इति चेन्न; उक्तवाक्ययोः समानकालिकोच्चारणविषयत्वेऽपि तज्जन्यशाब्दयोर्वस्तुतोऽन्या-न्यतीरविषयकत्वेनैकतरस्य भ्रमत्वमपरस्य च प्रमात्वमित्युपपत्तेः। नदीतीरत्वेनैव भानेऽप्याप्तानाप्तवाक्य-जत्वान्यथानुपपत्त्या प्रमात्वाद्युपपत्तये शाब्दयोरन्यान्यतीरविषयकत्वस्य कल्पनसम्भवात्, भ्रमात्मकपरा-मर्शजन्यत्वान्यथानुपपत्त्या मीमांसकमते वह्निमत्पर्वतविषयिण्या अप्यनुमितेः पर्वतावृत्तिवह्निविषयकत्व-वत्। किञ्च कालभेदेऽपि कालविशेषावच्छिन्ननदीतीरसामान्यवृत्तित्वं न फलस्य तदभावस्य वा विशेष इति नदीतीरभेदः कल्पनीय एवेति। उपलक्षणञ्चेदमिदं रजतमित्याद्येकाकारयोः प्रत्यक्षाद्यात्मकभ्रमप्रम-योरपि। वस्तुतस्तु शुक्तित्वादेरपि रजतत्वाद्यभावव्याप्यत्वेनागृह्यमाणतादशायां प्रमात्वादिव्यवस्थाप-कत्वाभावेन प्रमात्वाव्याप्तिपरिहाराय व्यवस्थायोग्यतया एव विवक्षणीयत्वेनानुगतावच्छेदकं विना च तस्यास्तत्तत्स्वरूपतायामेव पर्यवसानेनानुगमवार्ताया अपि विरहेण विशेषत्वेन विशेषावगाहितायाः प्रमा-त्वानुप्रवेश उपहास्यतापदवीमेवाधिरोहतीति। ननु वस्तुगत्या तदीयविशेषस्य तत्र वैशिष्ट्यावगाहित्व-विवक्षायां नोक्तदोष इत्यत आह तथापीति। प्रमात्वनिर्वचनं विना वस्तुगत्यादेर्निर्णयासंभवेन स्फुट-स्यापि दोषस्येक्षणाक्षमत्वादाह जडतम इति। स्वत एव विशेषरूपाः = स्वेतरलिङ्गकव्यावृत्तिर्धीविशेष्यी-भूतं यद्यत्तदन्ये इत्यर्थः। क्वाचित्केति। रजतत्वादेरपि रजतविशेष्यकप्रतीतेरुक्तरीत्या प्रमात्वव्यव-स्थापकत्वादित्यर्थः। तत्र तस्येति। शुक्तिविशेष्यकत्वप्रकारकमहविशेष्यकेत्यादिपुरोदीरितनिरुक्तिर-भिप्रेताऽत्र। व्यावृत्तेः = अननुगमात्। अननुगमेन वा समाधीयतामनिर्वचनीयतया वा, तत्र द्वितीय एव पक्षः प्रेक्षावद्भ्यो रोचते, अननुगमस्यानुगतव्यवहारापलापकत्वेनासमाधानत्वादिति भावः। ननु विशे-षमाहित्यमर्थे ज्ञानोल्लिखितविशेषसम्बन्धित्वम् ज्ञाने तु स्वविशेष्यसम्बन्धिविशेषप्रकारकत्वमित्याशङ्क्याह शङ्कान्तराणीति। द्विरभिधानभयादिति। यद्यपि "शब्दार्थयोः पुनर्वचनमन्यत्रानुवादा"दिति-न्यायसूत्रात्पौनरुक्त्यस्य निग्रहस्थानत्वेन कथायामेव तस्माद्भयमुचितम्, 'शङ्कान्तराणी'त्याद्यभिधानं तु ग्रन्थकर्तुरेव, तथापि द्विरभिधाने प्रयोजनाभावो ग्रन्थगौरवञ्चेति भावः। तर्कज्ञानमिति। पर्वतो यदि

न चाहार्यौ तौ नाभ्युपगन्तव्याविति युक्तम्; विप्रलम्भकस्य वाक्यप्रयोगमूलतयाऽऽहार्यभ्रमस्य, ज्ञाततत्त्वस्य च गुरोः शिष्यप्रबोधार्थं विचारं प्रवर्तयत आहार्यसंशयानां भवत एव शास्त्रेऽनुमतत्वात्। परिच्छेदशब्दश्चानुभूतिपर्यायोऽनुभूतिदूषणं नातिक्रामतीत्यलम्। इति सम्यक्त्वखण्डनम्।

## अथाव्यभिचारित्वखण्डनम्।

नाप्यव्यभिचार्यनुभवः प्रमेति युक्तम्, अव्यभिचारिपदस्य यदि तत्त्वविषयत्वाद्यर्थत्वं तदा दूषणान्युक्तान्येवावर्तन्ते। अथैवमुच्यते-अव्यभिचारित्वमर्थाविनाभूतत्वं तदा

वह्निमान् स्याद्धूमवान् स्यादित्यारोपे वह्न्यभावादिकं यद्यपि न पर्वतविशेषः, पर्वतत्वस्य तद्विशेषतया अभिप्रेतत्वे तु तर्कपर्यन्तानुधावनवैफल्यम्, तथापि वह्न्यादेरुपस्थिततयाऽऽरोपविषयत्वसम्भवः, परं प्रत्यापादने तु तदभिलापकशब्दप्रयोगो नेत्यन्यदिति भावः। एवमाहार्यविपर्ययेऽपि। **संशयेति।** यद्यपि संशयस्य द्विकोटिकारोपत्वेनैककोटेर्वास्तवत्वेऽनाहार्यसंशयेऽप्यतिव्याप्तिः सम्भवति, व्यधिकरणप्रकारकत्वाभावविवक्षायाञ्च नाहार्येऽपि सा, अपि त्वविरुद्धभावाभावद्वयकोटिकसंशयस्य प्रामाणिकत्वे ह्रदो जलवान् वह्न्यभाववान्वेत्यादावेव. तस्याप्रामाणिकत्वेऽपि वृक्षः कपिसंयोगाभाववान्नवेत्यादावेव, तस्य यथार्थत्वेऽपि प्रमात्वेनाव्यवहारात्, संशयान्यत्वनिवेशे च न तत्रापि। नचाहार्यसंशयस्य विशेषदर्शनाप्रतिबध्यत्वेनोक्तविशेषलक्षणासाङ्गत्यप्रदर्शनपरोऽयं ग्रन्थ इति वाच्यम्; पूर्वं प्रदर्शितरीत्या तदसाङ्गत्याभावात्। किञ्चैवमाहार्यविपर्यीभूतविशेषे विशेषलक्षणाप्रसङ्गस्यैव प्रदर्शनीयत्वेना'तिप्रसङ्गः स्या'दिति कथनासङ्गतेः, विशेषाविषयकत्वे प्रमात्वस्यापि तत्रानतिप्रसक्तेः; तथापि संशयस्य भावाभावकोटिकत्वनैयत्यमते संशयमात्रस्योपलक्षणमेवेदम्, अयं स्थाणुर्वा पुरुषो वेति भावद्वयकोटिकसंशयस्याप्यङ्गीकारे तु वास्तवैककोटिकसंशयमात्रस्येति भावः। तैः = तेषु। तौ = संशयविपर्ययौ। आहार्यभ्रमस्यानुमतत्वादित्यन्वयः। **भवत इति।** तदुक्तं न्यायकुसुमाञ्जलावाचार्यैः "न च जिज्ञासासंशयादय ईश्वरे प्रतिषिद्धा इति युक्तम्, शिष्यप्रबोधनायाहार्यत्वेनाविरोधात्, को धर्मः, कथं लक्षणक इत्यादिभाष्यव"दिति। **अनुभूतिपर्याय इति।** संशयान्यस्मृत्यन्यज्ञानपरत्वेऽपि स्मृतिसामान्यान्योन्याभावखण्डनावतारसम्भव एवेति भावः। इति खण्डनशारदायां सम्यक्त्वखण्डनम्।

**अर्थाविनेति।** अर्थं विना न भवनम्, विनापदार्थोऽभाववत्त्वम्, द्वितीयार्थः प्रतियोगित्वम्, भवनं वृत्तिता, तथाच स्वविषयप्रतियोगिकाभाववन्निरूपितवृत्तित्वाभावो लभ्यते अत्र च विषयो यदि प्रकारः, वृत्तिता च विशेष्यतासम्बन्धेन, तदा स्वीयप्रकारताश्रयप्रतियोगिकाभाववद्विशिष्टविशेष्यत्वानिरूपकत्वं पर्यवस्यति, तत्र च भूतलं घटवदित्यादिप्रमायामव्याप्तिः, तस्याः स्वीयप्रकारताश्रयघटत्वाभाववद्भूतलनिष्ठविशेष्यतानिरूपकत्वात् तस्मात्स्वनिरूपितप्रकारताश्रयाभाववद्विशिष्टा या या विशेष्यता तत्तन्निरूपकत्वं वाच्यम्, अत्र स्वं न ज्ञानमपि तु विशेष्यतेति नोक्तदोषः, प्रकारताश्रयाभावश्च न प्रकारतावच्छेदकसम्बन्धमात्रावच्छिन्नप्रतियोगिताकः, घटत्वप्रतियोगिकसमवायेन पटत्ववान् पट इत्यत्रातिव्याप्त्यापत्तेः, अपितु प्रकारतानिरूपितसंसर्गनिष्ठावच्छेदकतानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतावच्छेदकतानिरूपकसंसर्गनिष्ठावच्छेदकतानिरूपकप्रतियोगिताकः। नचैवमपि विशिष्टसत्तावान् गुण इत्यत्रातिव्याप्तिः, सत्ताऽभाववद्विशिष्टविशेष्यत्वानिरूपकत्वस्य तत्र सत्त्वादिति वाच्यम्; प्रकारतावच्छेदकधर्मपर्याप्तावच्छेदकताकप्रतियोगिताकाभावस्य विवक्षणीयत्वात्। परन्त्वेवमयं घट इत्यादिनिरवच्छिन्नप्रकारताकभ्रमेष्वतिव्याप्तिः, तदीयविशे-

प्रष्टव्यं कोऽस्यार्थः ? किं यदार्थस्तदैव ज्ञानम् ? उत यत्रार्थस्तत्रैव देशे ज्ञानम् ? अथ यादृगर्थस्तादृगेव ज्ञानं यत्तत्प्रमितिरिति ? । नाद्यः, अतीतानागतानुमित्यव्यापनात् । न द्वितीयः, ज्ञानासमानदेशार्थप्रमितीनामव्यापनात्, ज्ञानसमानदेशमर्थमन्यत्रारोपयतोऽप्यनुभवस्य प्रमात्वापत्तेः । नापि तृतीयः, ज्ञानार्थभेदवादे सर्वाकारेण तत्साम्यानुपपत्तेः, अभेदवादे भ्रमस्यापि तथाभ्युपगन्तव्यत्वप्रसङ्गेन विशेषणवैयर्थ्यापातात्, तैश्च तैश्च विशेषैः सादृश्यस्य विवक्षितत्वे यथार्थताप्रस्तावोक्तदूषणान्यावर्तन्ते इति । इत्यव्यभिचारित्वखण्डनम् ।

## अथाविसंवादित्वखण्डनम् ।

अविसंवाद्यनुभवः प्रमेत्यपि न युक्तम्; असंवादित्वं हि ज्ञानान्तरेण तथैवोल्लिख्यमानार्थत्वं वा ? ज्ञानान्तरेण विपरीततयाऽप्रतीयमानार्थत्वं वा ? प्रतीयमानव्याप्यविषयत्वं वा ? अन्यदेव वा किञ्चित् ? । न प्रथमः, धारावाहिनो भ्रमस्य प्रमात्वप्रसङ्गात् । न

ष्यतायाः स्वपदेन धर्तुमशक्यत्वात् । अधिकं याथार्थ्यखण्डनोक्तरीत्याऽनुसन्धेयम् एवञ्चैवंविधनिरुक्तेः प्रागेव निरस्तत्वात् 'यदार्थस्तदैव ज्ञान'मित्यादिना प्रकारान्तरेणाविनाभावः शङ्कित इत्यवधेयम् । कोऽस्यार्थः = कथमस्याभिनयः, तेन 'यदार्थस्तदैव ज्ञान'मित्यादेर्व्याप्तिस्वरूपत्वाभावेऽपि नासङ्गतिः । तदैवेति । अत्रैवकारबलाद्व्याप्यता ज्ञाने एव भासते । यादृगिति । सर्वाकारेण साम्यस्याभेदे एव सम्भवेन तादात्म्यसम्बन्धेन व्याप्यव्यापकभावमभिप्रेत्यायं विकल्पः । अनुमितीति शाब्दादेरप्युपलक्षणम् । अव्यापनादिति भ्रमविशेषेऽतिव्याप्तेरप्युपलक्षणम् । अव्यापनादिति । सुखादिप्रमितौ लक्षणसमन्वयसम्भवेनासम्भवो नाभ्यधायि । अर्थं = आत्मत्वादिकं, अन्यत्र = देहादौ । सर्वाकारेणेति । यद्यपि ज्ञानस्य यदर्थसारूप्यं तदेव तस्य प्रामाण्यमित्यर्थकात् "अर्थसारूप्यमस्य प्रमाण"मिति न्यायबिन्दौ धर्मकीर्तिवचनात् सौत्रान्तिकादिमतेऽर्थसाम्यमेव प्रमात्वं तथापि न सर्वाकारेण, किन्तूल्लिख्यमानरूपेणैवेत्यर्थः । ननु योगाचारमते एवैतल्लक्षणमस्त्वत आह अभेदेति । प्रसङ्गेनेति । भ्रमस्यैव प्रत्यक्षत्वादौ स्वमात्रविषयकत्वादिव्याप्तिग्रहस्थलस्य परैरुपगमादिति भावः । विशेषणमव्यभिचारित्वरूपम् । तैश्चेत्यादि । स्वप्रकारीभूतयावद्विशिष्टविशेष्यकत्वमेव सादृश्यमित्याद्युक्तौ घटवद्भूतलमित्यादौ कस्यापि विशेष्यस्य घटत्वादिरूपयावत्प्रकारवैशिष्ट्याभावेनाव्याप्तिरित्यादि पूर्वोक्तमनुसन्धेयम् । इति खण्डनशारदायामव्यभिचारित्वखण्डनम् ।

ज्ञानान्तरेणेति । स्वसमानविषयकज्ञानान्तरकत्वम्, यत्किञ्चिन्निश्चयविशिष्टत्वमिति यावत् वैशिष्ट्यं स्वभिन्नत्वस्वविशेष्यतानिरूपितप्रकारतानिरूपितविशेष्यतानिरूपकत्वाभ्याम् । ज्ञानभेदेन विषयताभेदे मानाभावेनैकधर्मावच्छिन्नप्रकारत्वादेरैक्यादिति भावः । ज्ञानान्तरेणेति । विपरीततया = अभावप्रतियोगितया । निश्चयीयविशेष्यतावृत्तिविशेष्यताकत्वात्यन्ताभाववत्त्वम्, वृत्तित्वं स्वावच्छेदकधर्मावच्छिन्नत्वस्वनिरूपितप्रकारतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावनिष्ठप्रकारतानिरूपकत्वाभ्यामिति, तत्र वृक्षः कपिसंयोगवान् तदभाववांश्चेतिप्रमित्यव्याप्तिः, अभावे प्रतियोगिवैयधिकरण्यस्यापि धर्तव्यत्वात्, वृत्तित्वञ्चैतादृशस्थले सम्बन्धित्वमेव, तेन तादृशसम्बन्धानां वृत्त्यनियामकत्वेऽपि नासङ्गतिरिति ध्येयम् । प्रतीयमानेति । प्रतीयमानस्य = स्वविषयीभूतस्य यद्व्याप्यं तद्विषयकत्वम्, तत्र तद्व्याप्यविषयकत्वे सति तत्र तद्विषयकत्वम्, तद्व्याप्यवद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वमिति यावत् । अन्यदेवेति । स्वयमेव वक्ष्यति । यत्किञ्चित्प्रमाविशिष्टत्वमेवोक्तसम्बन्धाभ्यां विवक्षणीयमित्या·

च प्रमाभूतं ज्ञानान्तरं विवक्षितमिति वाच्यम्; प्रमाया एव लक्ष्यमाणत्वात्। नापि द्वितीयः, अनुपजातबाधभ्रमव्यापनात्। स्वस्थदशोत्पन्नस्य शुक्तिशङ्खादिज्ञानादेर्दुष्टेन्द्रियदशोत्पन्नतत्पीतिमज्ञानाद्युल्लिखितविषयवैपरीत्यस्याप्रमात्वप्रसङ्गाच्च। प्रमित्यानुल्लिखितार्थवैपरीत्यभावविवक्षायां तु 'प्रमाया लक्ष्यमाणत्वा'दित्युक्तमनुषज्जति। अदुष्टकरणकज्ञानेनाबाधितत्वं विवक्षितमिति चेन्न; तदेव तर्हि प्रमालक्षणमस्तु। किञ्च दुष्टत्वनिरूपणमन्तरेणादुष्टत्वस्य दुर्निरूपत्वात्। ननु किमेतावता, दुष्टत्वं विपरीतज्ञानप्रयोजकस्तद्धेतुगतो विशेष इति सुवचमेवेति; न, विपरीतपदव्यवच्छेद्याप्रमितौ तदुपादानवैयर्थ्यात्, तदनुपादाने च ज्ञानजनकत्वमात्रं दुष्टत्वमित्यदुष्टकरणजं ज्ञानं नास्त्येवेति स्यात्। विपरीतपदव्यवच्छेद्या प्रमैवेति चेन्न; तस्या एव लक्ष्यमाणत्वात्। तदीयस्वरूपस्येतरव्यावृत्तस्याद्याप्यप्रतीतेः कुतो व्यवच्छेदः प्रत्येतव्य इति व्यवच्छिन्नतज्ज्ञानमन्तरेण व्यवच्छिन्नतज्ज्ञानमशक्यमित्यात्माश्रयान्योन्याश्रयानवस्था वा।

> एकोऽनेकविशेषेऽर्थे विशेषो यत्र लक्ष्यते।
> तद्विशेषान्तरान्यत्वाद्दोषस्तत्रैव धावति॥ ३२॥

तद्गते नचेति। अनुपजातबाधेति। अनुत्पन्नो बाधो यस्य तादृशभ्रमस्यापि निरुक्तविशेष्यताकान्यत्वादतिव्याप्तिरित्यर्थः। नन्वन्ततो भगवत एवान्यस्य वा सर्वज्ञस्य विपरीतनिश्चयमादाय भ्रमे निरुक्तविशेष्यताकत्वसम्भवेन नातिव्याप्तिरित्यत आह स्वस्थेति। विषयवैपरीत्यस्येत्यत्र बहुव्रीहिः। प्रमीयविशेष्यतावृत्तीत्यादिविवक्षायां नायं दोष इत्यत आह प्रमित्येति। अनुल्लिखितमविषयीकृतमर्थवैपरीत्यं यस्य तद्भावेत्यर्थः। दुष्टकरणाजन्यज्ञानीयविशेष्यतावृत्तीत्यादि विवक्षणीयमिति प्रकृतप्रमात्वस्य स्वस्मिन्ननुप्रविष्टत्वेन नात्माश्रय इत्याह अदुष्टेति। तदेव = दुष्टकरणाजन्यानुभवत्वमेव, दोषाजन्यानुभवत्वमेवेति यावत् प्रथमोपस्थितिके एव विशेषणान्तरदानौचित्यात्। ननु व्याप्यत्वपक्षधर्मत्वाभ्यामव्याप्यापक्षधर्मावगाहिपरामर्शजन्यसाध्यवद्विशेष्यकमितेर्दुष्टकरणजत्वेन तत्राव्याप्त्या नास्य प्रमालक्षणत्वसम्भवः, नचैवं दुष्टकरणजन्ययथार्थज्ञानबाध्ये भ्रमेऽतिव्याप्तिः, सर्वज्ञज्ञानीयविशेष्यतावृत्तिविशेष्यताकत्वमादायैव तद्वारणात्; मैवम्, उक्तपरामर्शजन्यमितेः प्रमान्तर्भावस्य पूर्वं निवेदितत्वात्। नन्वस्त्वेतदेव लक्षणमित्यत आह किञ्चेति। प्रयोजकः = जनकः। तद्धेतुगतः = विपरीतज्ञानहेतुगतः। विपरीतज्ञानत्वं तदभाववति तत्प्रकारकज्ञानत्वं भ्रमसंशयोभयसाधारणम्, तदवच्छिन्नकार्यतानिरूपितकारणतावच्छेदकधर्मवत्त्वं दोषत्वमित्यर्थः। विस्तरस्तु पुरेरितः। तदीयेति। प्रमीयेत्यर्थः। व्यावृत्तप्रमास्वरूपनिर्णयं विना न तद्व्यावृत्तघटितदोषत्वनिर्णयः, तं विना च न दोषाजन्यानुभवत्वनिर्णय इति व्यावृत्तप्रमास्वरूपस्य दोषाजन्यानुभवत्वाभेदेऽन्योन्याश्रयः, तद्भेदे तु प्रकृताविसंवाद्यनुभवत्वरूपत्वे चक्रकम्, एवं च परम्परया व्यावृत्तप्रमात्वस्य स्वनिर्णयाधीननिर्णयकत्वेनात्माश्रयः, स्वनिर्णयाधीनव्यावृत्तविपरीतज्ञानत्वनिर्णयाधीननिर्णयकत्वेन चान्योन्याश्रयः, तादृशविपरीतज्ञानत्वनिर्णयाधीनदोषत्वनिर्णयाधीननिर्णयकत्वेन च चक्रकम्, यदि तु तादृशविपरीतज्ञानत्वनिर्णयाधीननिर्णयकं प्रमात्वं न विपरीतज्ञानत्वनिर्णयौपयिकनिर्णयकमपि तु प्रमात्वान्तरमेव, लक्षणानां बहुत्वात्, तदपि च न स्वनिर्णयाधीनविपरीतज्ञानत्वनिर्णयाधीननिर्णयकमपि तु विपरीतज्ञानत्वान्तरनिर्णयाधीननिर्णयकमेव, विपरीतज्ञानत्वान्तरमपि तृतीयप्रमात्वनिर्णयाधीननिर्णयकमेव, एवं तृतीयप्रमात्वेऽपीति तदा व्यावृत्तस्वरूपनिर्णयेऽनवस्थेत्यर्थः। एक इति। तद्व्याप्यत्वे सति तद्व्याप्यान्याव्याप्यत्वे सति तद्विशिष्टतद्विशेषः, यथा ज्ञानत्वविशेषः प्रमात्वभ्रमत्वसंशयत्व-

नापि तृतीयः, व्याप्यशब्देन व्याप्यमात्रं तद्विशेषो वा कश्चिदभिप्रेतः स्यात् ? आद्ये सधूमाग्निविषयस्य स्वप्नज्ञानस्यानाप्तवाक्यजबोधस्य वा नाप्रमात्वं स्यात् । नापि द्वितीयः, स ह्यर्थक्रिया वा सामग्री वा, उभयत्रापि पूर्वोक्तदोषानतिवृत्तेः । एकदा च सर्वत्र प्रमाणासम्भवेन क्रमाश्रयणे तत्तदर्थक्रियातत्तत्सामग्रीपरम्परावगमनियमाभ्युपगमे एकस्मिन्नेव विषये पुरुषायुषः पर्यवसानप्रसङ्गात्, विच्छेदाभ्युपगमे त्वन्तिमावगमस्याप्रामाण्यादाप्रथममप्रमात्वापत्तेः । वास्तवतदर्थक्रियात्वस्य च दुर्निरूपत्वेन व्यवहारानर्हत्वात्,

---

निश्चयत्वादिः, एतादृशानेकविशेषकस्य वस्तुनो विशेषः कश्चिद्यल्लक्षणाधीननिरूपणविषयः, तस्य लक्षणस्य तदीयविशेषान्तरव्यावृत्तिफलकविशेषणघटितत्वावश्यम्भावेन विशेषाणां च परस्परव्यावृत्तिग्रहस्य परस्परव्यावृत्तस्वरूपाधिगममन्तरेणासम्भवेन दोषस्यात्माश्रयादेरप्युक्तरीत्याऽवश्यम्भाव इत्यर्थः । तत्रैव धावति = तत्र धावत्येव । यद्यपि व्यावृत्तिग्रहमादायात्माश्रयादिर्लक्षणमात्रे लक्षणसामान्यखण्डने पूर्वमुक्तः, तथाप्यनेकावान्तरधर्मकवस्तुनोऽवान्तरधर्मलक्षणे स्फुटावसरताऽऽत्माश्रयादेरित्यभिप्रायेणायं श्लोकः । लक्ष्यलक्षणयोः परस्पराधीनव्यावृत्तिमादायापि पूर्वग्रन्थयोजनसम्भवाच्चेति भावः ।

तत्र तद्व्याप्यविषयकत्वे सति तद्विषयकत्वमिति तृतीययथाश्रुतार्थे विकल्पयति व्याप्यशब्देनेति । बोधस्य वेति । वाशब्दः समुच्चये । अर्थक्रिया = कार्यम् । तत्सामग्री तदव्यवहितप्राक्क्षणावच्छेदेन तद्व्याप्या । पूर्वेति । स्वाप्नादिबोधस्य तत्कार्यादिविषयकत्वे सति तद्विषयकत्वसम्भवादिति भावः । नच तद्व्याप्यवद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वविवक्षायां नायं दोष इति वाच्यम्; तद्व्याप्यवद्विशेष्यकत्वं हि तद्व्याप्यावच्छिन्नविशेष्यताकत्वं वा वस्तुगत्या तद्व्याप्यवद्विशेष्यकत्वं वा ?, आद्ये उक्तदोषतादवस्थ्यमेव, धूमवान् वह्निमानिति स्वप्नादिबोधसम्भवात्, पर्वतो वह्निमानितिज्ञानस्याप्रमात्वापत्तेश्च । एवं धूमवान् पर्वतो वह्निमानिति ज्ञानस्य वह्न्यंशे प्रमात्वं यथा धूमावच्छिन्नविशेष्यताकत्वमादाय, तथा धूमांशे प्रमात्वं धूमव्याप्याज्ञानाद्यवच्छिन्नविशेष्यताकत्वमादायैव स्यात्, तच्च नोक्तज्ञाने इत्यध्यासिः, यत्र च तत्सम्भवः, तत्रापि धूमव्याप्यांशे प्रमात्वं धूमव्याप्यव्याप्यावच्छिन्नविशेष्यताकत्वेनैव स्यात्; तदभावे तु नेति कस्यापि ज्ञानस्यानन्ततत्तद्व्याप्यविषयकत्वस्यासम्भवेन सर्वांशे प्रमात्वं न स्यात्, व्याप्यांशे प्रमात्वानिरूपणे व्यापकांशेऽपि तदनिरूपणेन क्वाप्यंशे वा तन्न स्यादित्याह एकदेति । सर्वत्र व्याप्ये । क्रमाश्रयणे इति । तत्तत्प्रकारकज्ञानीयतत्तद्विशेष्यविशेष्यकतत्तद्व्याप्यप्रकारकप्रतीतीनां क्रमिकत्वमुपगम्येत्यर्थः । तथाच लक्षणं स्वावच्छेदकधर्मावच्छिन्नत्वस्वनिरूपितप्रकारताश्रयनिरूपितव्याप्याश्रयनिष्ठप्रकारताकत्वाभ्यां निश्चयीयविशेष्यतावृत्तिविशेष्यताकत्वमेव वक्तव्यम्, नच धूमवान् पर्वतो वह्निमानिति ज्ञानासङ्ग्रहः, वह्निनिष्ठप्रकारतानिरूपितविशेष्यताया धूमपर्वतत्वोभयावच्छिन्नत्वात्, धूमनिष्ठप्रकारतानिरूपितविशेष्यतायाश्च पर्वतत्वमात्रावच्छिन्नत्वादिति वाच्यम्; धूमवान् पर्वत आलोकवानित्यादिनिश्चयान्तरमादाय लक्षणसमन्वयसम्भवात् । एकस्मिन्नेव विषये = यत्किञ्चिद्विषयांशे ज्ञानस्य प्रमात्वनिश्चये इत्यर्थः, नहि वह्न्यंशे प्रमात्वं तद्व्याप्यांशे प्रमात्वनिश्चयं विना तद्व्याप्यांशे च प्रमात्वं तद्व्याप्यव्याप्यांशे प्रमात्वनिश्चयं विना शक्यनिश्चयम्, प्रमात्वप्रसङ्गतादवस्थ्यादिति भावः । पुरुषायुष इति । अचतुरविचतुरेत्यादिना प्राप्तस्यापि समासान्तस्याभावः समासान्तविधेरनित्यत्वात्समर्थनीयः । वस्तुगत्या तद्व्याप्यवद्विशेष्यकत्वविवक्षां निरस्यति वास्तवेति । वस्तुगत्या तद्व्याप्यीभूतार्थक्रियादिमद्विशेष्यकत्वस्येति तात्पर्यार्थः । दुर्निरूपत्वेनेति । प्रमात्वनिरूपणं विनेत्यादिः । व्यवहारेति । प्रमात्वव्यवहारेत्यर्थः । तद्वति तत्प्रकारकत्वपक्षोक्तदूषणानि चात्रानुसन्धेयानि । तद्व्याप्यार्थक्रियादिमत्त्वेन प्रतीयमानविशेष्यकत्व-

तथा प्रतीतिमात्रस्याप्रमासाधारण्यात्। नन्वेवं चतुर्थः पक्षोऽस्तु, तथाहि–अर्थक्रियाविषयकत्वं वाऽविसंवादित्वमिति, यथाह–'प्रमाणमविसंवादिज्ञानमर्थक्रियास्थितिश्चाविसंवादः" इतिः न, सामान्यतो विवक्षायां भ्रान्तावपि प्रसङ्गात्। प्रतीयमानरूपेणार्थक्रियाकारित्वमर्थस्य विवक्षितमिति चेन्न; दुरवधारणत्वात्। तदर्थक्रियादर्शनात्तदवधारणमिति चेन्न; विनाप्यर्थक्रियां तद्दर्शनसम्भवात्। अर्थक्रियाप्रमितिरभिधित्सितेति तु दूषितमेव, प्रमाया एव निरूप्यमाणत्वात्। अभिप्रायाविसंवादात्प्रमाणं सर्वमुच्यते इति चेन्न; तदाभिप्रायाविसंवादस्य स्वप्नादिप्रत्ययेऽपि सम्भवात्, कालान्तराविसंवादस्य च

विवक्षायां स्वाप्नादिबोधेऽतिव्याप्तिं स्मारयति तथेति। अर्थक्रियेति। अन्यथाख्यातिमते यद्विषयकत्वावच्छेदेन भ्रमत्वं तस्याप्यर्थक्रियाकारित्वेन न तन्मतेनायं ग्रन्थः, प्रातिभासिकविषयकज्ञानस्यैवार्थक्रियाकारित्वं नतु तद्विषयस्येति तथाऽनिर्वचनीयतावादिमते व्यावहारिकप्रमात्वस्योक्तरूपत्वसम्भवेऽपि न तस्यात्र पूर्वपक्षिता, अनिर्वाच्यवादित्वादेव। योगाचारमते भ्रमविषयस्यापि ज्ञानाकारत्वेन स्वोत्तरज्ञानजनकत्वेनार्थक्रियाकारित्वान्न तन्मतेनापि ग्रन्थोऽयम्, अपि तु सौत्रान्तिकवैभाषिकमतेनैव, यद्यपि तन्मतेऽपि भ्रमविषयस्य ज्ञानाकारतैवेति भ्रमस्यार्थक्रियाकारिविषयकत्वमेव, आलम्बनप्रत्ययविधया सर्वज्ञानं प्रत्यपि ज्ञानमात्रस्य कारणत्वात्, तथापि ज्ञानातिरिक्तकार्यकारिप्रकारकत्वविवक्षया भ्रमवारणसम्भवः, योगाचारमते ज्ञानातिरिक्ताप्रसिद्धावपि तन्मते तत्प्रसिद्धेः, परन्तु कामिन्यादिविषयकस्वप्नबोधेऽतिव्याप्तिर्दुर्वारैव, नहि भ्रमप्रकारस्य ज्ञानात्मकत्ववादे कामिन्यादिज्ञानस्यैव ज्ञानातिरिक्तकार्यकारित्वं नतु कामिन्यादेरिति शक्यमभिधातुमिति। भ्रान्तावितिति। भ्रान्तेर्ज्ञानातिरिक्तकार्यकारिताश्रयशुक्त्यादिविषयकत्वादिति भावः। अर्थस्येति। नचार्थपदस्य विशेष्यपरत्वे स्वविशेष्यतावच्छिन्नज्ञानातिरिक्तकार्यकारितावच्छेदकधर्मावच्छिन्नप्रकारताकत्वस्य, स्वप्रकारतावच्छेदकधर्मावच्छिन्नज्ञानातिरिक्तकार्यकारितावच्छिन्नविशेष्यकत्वस्य वा लाभेन घटवद्भूतलमित्यादावव्याप्तिः, विशेष्यताश्रयभूतलनिष्ठाया ज्ञानातिरिक्तकार्यकारिताया घटत्वेनानवच्छेदात्, प्रकारपरत्वे तु ज्ञानातिरिक्तकार्यकारितावच्छेदकधर्मावच्छिन्नप्रकारताकत्वस्य पर्यवसिततया रजतत्वादेरपि तादात्म्यभ्रमप्रकारतावच्छेदकस्य ज्ञानातिरिक्तकटकादिकार्यकारितावच्छेदकत्वादतिव्याप्तिरिति वाच्यम्; परमते रजतत्वादेरनुगतस्य धर्मस्याभावेन भ्रमविषयस्य च तस्य ज्ञानात्मकत्वेन कटकादिजनकतावच्छेदकत्वाभावेन प्रकारपरत्वेऽदोषात्। यदि तु रजताद्याकारपरिणतज्ञानस्योत्तरज्ञानं प्रति न रजतत्वेन कारणता अपि तु पूर्वज्ञानत्वेनैव, तदा ज्ञानात्मकरजतत्वस्य कस्यामपि जनकतायामनवच्छेदकत्वेन ज्ञानातिरिक्तपदं न देयम्। वस्तुतस्तु भ्रमविषयरजतत्वस्य पूर्वज्ञानत्वस्य च ज्ञानातिरिक्तस्यासद्भावे एकस्य कारणतावच्छेदकत्वं नापरस्येति न नियन्तुं शक्यम्। नच 'अयं घट' इत्यादिघटत्वादिनिष्ठानवच्छिन्नप्रकारताकप्रमित्यव्याप्तिः, तादृशधर्मावच्छिन्नविषयताकत्वस्यैव विवक्षणीयत्वात्, पुरोवर्तित्वादेर्ज्ञानातिरिक्तकार्यकारणतानवच्छेदकत्वेन भ्रमेऽनतिप्रसङ्गादिति दिक्। अभिप्रायाविसंवादः = सफलकृतिजनकेच्छाजनकत्वम्। सम्भवादिति। स्वाप्नप्रत्ययविषयीभूतायाः फलविशिष्टायाः कृतेः परमते ज्ञानात्मकत्वेनोत्पन्नत्वादित्यर्थः। प्राप्त्यादियोग्यता = हानोपादानान्यतरयोग्यता, बौद्धमते उपेक्षणीयस्यापि हेयान्तर्भावाभ्युपगमात्तद्विषयकप्रमित्यव्याप्तिर्न देशनीया, भ्रमविषयीभूतरजतादिकं तु ज्ञानात्मकत्वेन प्रतिपत्तृरूपत्वान्न हेयं नाप्युपादेयम्, भ्रमविषयीभूताधिष्ठानस्य यद्विष्ठाभ्युपगमेन हेयोपादेयान्यतरत्वेऽपि स्वनिष्ठविषयताया हेयोपादेयातिरिक्तनिष्ठविषयतायाश्च भिन्ना या विषयता तदनिरूपकत्वविवक्षायामदोषः, ज्ञानमात्रस्य स्वविषयकत्वेनासम्भववारणाय स्वनिष्ठविषयताया इति। नचैवं भ्रमप्रकार-

दुरवधारणत्वात्। एतेन प्राप्त्यादियोग्यता संवादार्थ इत्यपि निरस्तम्; दुराबाध इव चायं धर्मकीर्तेः पन्था इत्यवहितेन भाव्यमिहेति। इत्यविसंवादित्वखण्डनम्।

## अथाबाधितत्वादिखण्डनम्।

अबाधितानुभूतिः प्रमेत्यपि निरस्तम्, तदानीं बाधविरहस्यातिप्रसञ्जकत्वात्, कालान्तरेऽपि बाधविरहस्य च दुर्निरूपत्वात्, स्वतो बाधविरहस्यातिप्रसञ्जकत्वात्, सर्वजनबाधविरहस्य च दुरवधारणत्वादिति। तर्कसंशयविपर्ययस्मृतिव्यतिरिक्ता प्रतीतिः प्रमेत्यपि न, स्मृतिव्यतिरिक्तत्वखण्डनन्यायेन निरस्तत्वादिति।

जातिसङ्करमिच्छतश्च प्रमात्वलक्षणजात्यभिसम्बन्धात्प्रमेत्यपि दुर्लक्षणम्, अस्याज्ञातस्य तद्व्यवहारजनकत्वे प्रमायामप्रमाभ्रमसंशयौ न स्याताम्, दोषाभावसहकृतस्य

---

निष्ठविषयताया अपि स्वनिष्ठत्वेनातिव्याप्तिस्तदवस्थेति वक्तव्यम्; स्वनिष्ठविषयतापदेन ज्ञानत्वावच्छिन्नविषयताया विवक्षणीयत्वादिति दिक्। निरस्तमिति। योग्यताया उक्तरीत्या दुर्ज्ञेयत्वादिति भावः। एतेन सफलप्रवृत्तिजनकत्वं प्रमात्वमिति निरस्तम्; जनकत्वस्य योग्यत्वरूपत्वे प्रमात्वस्यैव तादृशयोग्यतावच्छेदकत्वात्प्रमात्वग्रहमन्तरेण न तादृशयोग्यत्वग्रहसम्भवः। नच जनकत्वमुपधायकत्वमेव विवक्षणीयम्, सर्वत्र प्रवृत्त्युपधाने मानाभावात्, अस्ति हि कस्यचित्पुंसः किञ्चिदिष्टसाधनं किञ्चिदनिष्टसाधनम्, किञ्चिच्चोभयविलक्षणमिति सार्वजनीनव्यवहारबलादुपेक्षणीयस्यावश्योपेयत्वादिति। दुराबाध इत्यादिकं सोपहासम्। अवहितेनेति। अवधानेन सहेत्यर्थः। भावे क्तः। तस्य कर्तरि सकर्मकस्यासम्भवात्। यत्तु—उत्पादविशेषः प्राप्तियोग्यताऽविसंवाद इति यदि धर्मकीर्तिः समाधत्ते तदा क्षणभङ्गभङ्गश्रमोन्मूलनीयोऽयं पक्ष इत्याह दुराबाध इवेति। तदपेशलम्—भ्रमविषयरजतादेरपि धर्मकीर्तिमते बहिरसत्त्वेऽपि ज्ञानात्मकतया सत्त्वेन क्षणिकतया चेतनमनपेक्ष्य कारणकूटाधीनोत्पत्तिस्वभावस्वरूपोत्पादविशेषापरपर्यायप्रतीत्यसमुत्पादालिङ्गितत्वादिति। विस्तरेण प्रतीत्यसमुत्पादविचारस्तु सत्यवसरे करणीय इति। इति खण्डनशारदायामविसंवादित्वखण्डनम्।

अबाधितेति। अबाधितत्वमनुभूतौ कालविशेषपुरुषविशेषानवच्छिन्नं भ्रमत्वज्ञापकज्ञानाविषयत्वं भ्रमत्वनिष्ठप्रकारतानिरूपितानाहार्यज्ञानीयविशेष्यतानाश्रयत्वमिति यावत्। अथवा तादृशानवच्छिन्नस्य तदभावप्रकारकप्रतीतिविषयत्वाभावस्याश्रये तदनुभवत्वमेव तत्प्रमात्वमबाधितेत्यादिना विवक्षितम्। एवञ्चात्रानवच्छिन्नत्वान्ताविवक्षायां तदानीमिति स्वत इति च दूषणम्। स्वस्य प्रतिपत्तुरित्यर्थः। तद्विवक्षायामपि कदाचित्किञ्चित्पुरुषीयतादृशभ्रमीयविशेष्यतानाश्रयत्वस्यानुभूतौ, तत्प्रकारकानुभवविशेष्ये च तदभावप्रकारकभ्रमविशेष्यत्वस्य सम्भवमभिप्रेत्य कालान्तरे इति सर्वजनेति च दूषणम्। उभयत्रापि प्रतीतौ प्रमात्वविवक्षणे त्वात्माश्रय इति भावः। संशयेति। वृक्षः कपिसंयोगी न वेति संशयस्य कोटिद्वयविरोधावगाहितया मूलावच्छिन्नो वृक्षः कपिसंयोगी नवेत्यस्य चैत्रावच्छेदेन भावाभावोभयावगाहितयाऽयथार्थत्वेन तद्भेदनिवेश आवश्यकः, संशयमात्रस्याप्रमात्वव्यवहारे नु सुतरामिति भावः।

जातिसङ्करमिति। सङ्करस्य जातिबाधकत्वमित्यर्थः। प्रमात्वं विहाय साक्षात्त्वं निर्विकल्पके, तस्य भ्रमप्रमाबहिर्भूतत्वोपगमात्, साक्षात्कारिभ्रमे वा, इदं रजतत्वस्य प्रमेत्यादिव्यवहारेण प्रकारांशमादायैव प्रमात्वव्यवस्थितेः, धर्म्यंशे याथार्थ्यमात्रसत्त्वात्रेऽपि प्रमात्वाव्यवहारात्। साक्षात्त्वं विहाय प्रमात्वमनुमित्यादौ, उभयोः समावेशस्तु साक्षात्कारिप्रमितौ। चाक्षुषत्वरासनत्वादिनाऽप्येवं सङ्करः। प्रमात्वेति। प्रमात्वेन लक्ष्यता प्रमात्वत्वेन च लक्षणता, अतएव "गुणानां च गुणत्वाभिसम्बन्ध" इति भाष्यसङ्गतिरिति भावः।

तथात्वे चाज्ञायमानभ्रमसंशयप्रमादिव्यवहारे ज्ञानमात्रावगमोदाहरणेऽपि तदापत्तेः। ज्ञातेनानेन लक्षणेन व्यवहारे च कथमिदमेव ज्ञातव्यमिति वक्तव्यम्, न तावत्प्रत्यक्षेण मानसेन, तथासति क्वचिज्ज्ञातायां प्रमायामप्रमाविपर्ययसंशयानवकाशादिः स्यात्, धर्मिवन्मनसैव निर्णीतत्वात्। चिह्नान्तरसापेक्षेण मनसा संवेदनम्, चिन्हेनैव वा तेन लक्षणीभूय ज्ञापनमित्यपि प्रत्याशामात्रम्, तच्चिन्हेनैव प्रमात्वजातिकल्पनाप्रतिक्षेपापत्तेः, तेषां नानात्वे च कानि तानीति वक्तव्यं स्यात्, तच्चिह्नानां यथोपन्यासं सर्वेषामेव दूषितत्वात्।

मङ्कारस्य जातिबाधकतानभ्युपगमेऽप्याह अस्येति। प्रमात्वस्येत्यर्थः। तद्व्यवहारेति। प्रमात्वव्यवहारेत्यर्थः। अप्रमाभ्रमसंशयौ = अप्रमात्वप्रकारकभ्रमसंशयौ। तथात्वे=उक्तव्यवहारजनकत्वे। अज्ञायमानभ्रमेत्यादि। अज्ञायमानो भ्रमत्वसंशयत्वप्रमात्वादिप्रकारकव्यवहारो यस्मिन् तत्र, भ्रमत्वादिनिष्ठप्रकारतानिरूपितज्ञानीयविशेष्यताशून्ये इति यावत्। ज्ञानमात्रावगमोदाहरणे = ज्ञानत्वप्रकारकज्ञानीयविशेष्यतावति ज्ञाने। तदापत्तेः = विशेष्यतया प्रमात्वप्रकारकव्यवहारापत्तेः, दोषाभावसहकृतस्याज्ञातप्रमात्वस्य सत्त्वात्। अप्रमाविपर्ययसंशयेति। अप्रमात्वप्रकारकविपर्ययसंशयेत्यर्थः। आदिना सकम्पप्रवृत्त्यनवकाशो गृह्यते। धर्मि = ज्ञानम्। वस्तुतस्तु योग्यव्यक्तिवृत्तित्वेन प्रमात्वस्य योग्यत्वेऽपि दोषबलात्संशयादिसम्भव इत्यवधेयम्। केचित्तु—एकस्यैव प्रमात्वस्य सर्वप्रतियोगिकत्वे रजतत्वाविषयकप्रमायामपीदं ज्ञानं रजतत्वप्रमेत्यापत्तिः। तत्र रजतत्वप्रतियोगिकत्वविशिष्टप्रमात्वाधारताविरहान्न तथा प्रत्यय इति चेत्तर्हि गुणे गुणान्यत्वविशिष्टसत्तेतिप्रतीतिवदत्र ज्ञाने रजतत्वप्रतियोगिकप्रमात्वमित्याधेयतावगाहिप्रतीतेरापत्तेः। वस्तुतस्तु तादृशाधारताया अतिरिक्तत्वोपगमे रजतत्वप्रतियोगिकत्वविशिष्टप्रमात्वस्यातिरिक्तत्वोपगमेन किमपराद्धम्, तस्यातिरिक्तत्वोपगमं विना तदाधारताया अतिरिक्तत्वोपगमस्य निर्मूलत्वात्, अनुपपद्यमानस्य स्वोपपादकमात्रकल्पकत्वात्। प्रतियोगिभेदेन प्रमात्वस्य भेदे तु नैकजातित्वम्, तासामनेकत्वे तु समूहालम्बनेऽनेकसमावेशार्थमवच्छेदकभेदः कल्पनीयः, तच्च न तत्तद्विषयित्वम्, अतिप्रसक्तत्वात्, अपि तु विशेष्यतासमानाधिकरणप्रकारकानुभवत्वादिकमेवेति तेनैवान्यथासिद्धिस्तत्तत्प्रमात्वस्य। न चाखण्डप्रमात्वस्य गुणजन्यतावच्छेदकत्वे लाघवात्तदभ्युपगमः, प्रमायां गुणजन्यत्वस्यानुपदं निरसनीयत्वात्, अखण्डधर्ममात्रस्य प्रतीतिसाक्षिकतया निरुक्तिविषयतामात्रेतुपोऽन्योन्याश्रयनिरस्तत्वाच्चेति प्राहुः। चिह्नान्तरेति। अन्तरपदं प्रमात्वापेक्षया। चिन्हं = व्यञ्जकं विशेष्यतासमानाधिकरणप्रकारकानुभवत्वादिकं तज्ज्ञानसहकृतेनेत्यर्थः। लक्षणीभूय = व्याप्यीभूय। तथाच हेतुविधयेत्यर्थः। यथोपन्यासं = यथोक्तरीत्या। वस्तुतस्तु निष्कृष्टप्रमात्वलक्षणानामग्रहेऽपि प्रमात्वव्यवहारस्यानुभविकत्वेन तेषां लिङ्गविधया तद्धेतुत्वं व्यञ्जकत्वं वाऽप्रामाणिकमेव, तल्लौकिकप्रत्यक्षजनकप्रत्यक्षविषयस्यैव तद्व्यञ्जकत्वात्। प्रामाण्यपरतस्त्वेति। अत्रायं निष्कर्षः-प्रायः प्रतीतीनां प्रमात्वस्यैव दर्शनेन तस्यौत्सर्गिकत्वमिव स्वतस्त्वमपि ज्ञप्त्युत्पत्त्योः। निश्चयत्वस्य विषयिताविशेषतया जातिविशेषतया वाऽगृहीताप्रामाण्यकस्य ज्ञानस्य प्रवर्तकतादिकल्पनापेक्षया निश्चितप्रामाण्यकस्य तस्य तादृशकल्पनायां लाघवेन दोषासमवहितस्वाश्रयविषयकग्रहत्वव्यापकनिश्चयत्वकत्वस्य प्रामाण्ये ज्ञप्तिस्वतस्त्वस्य मन्तुमौचित्यात्। ननु-ज्ञानग्रहे नियमेन प्रामाण्यभानसामग्रीविरहः। अथाज्ञाततया ज्ञानेऽभावेन साक्षिणा ज्ञानस्यावश्यं ग्राह्यतया विशेष्यप्रकारयोरिव तद्वैशिष्ट्यस्याप्यवगाहनात्, विशेष्यताप्रकारितावच्छेद्यावच्छेदकभावानां पूर्वमनुपस्थितत्वेऽपि व्यवसायलक्षणप्रत्यासत्तेस्तुल्यत्वात्, साक्षिग्राह्यत्वसम्भवात्। साक्षिणो नित्यत्वेन विशेषणज्ञानाजन्यप्रमात्वस्यापि संसर्गतयैव प्रविष्टत्वेन साक्षिग्राह्यत्वसम्भवात्। साक्षिणो नित्यत्वेन विशेषणज्ञानाजन्यतया तद्विषयकत्वस्यैव विशेषणज्ञानजनकत्वेनाभिमतैर्नियम्यतयाऽवश्यं वक्तव्यत्वाच्च। विशिष्टबुद्धित्व-

प्रामाण्यपरतस्त्वव्युदसितप्रस्तावे च विस्तरेण दूषयिष्यामः। एतेन शक्तिविशेषः प्रमात्वं

विशेषणज्ञानत्वाभ्यां कार्यकारणभावे मानाभावाच्च। नच साक्षिप्रत्यक्षस्य मानसप्रत्यक्षस्थानीयत्वेन मनसो बहिरस्वातन्त्र्ये साक्षिणोऽपि तथात्वमन्यथाऽनुभववैपरीत्यापत्तेरिति देश्यम्; व्यवसायस्योपनायकस्य सद्भावात्। उपनयसहकारेणापि मनसो बहिर्विषयकत्वानभ्युपगमे बाधबुद्ध्युपनीततदभाववद्विशेष्यकत्वभानेन तदभाववति तत्प्रकारकत्वरूपाप्रामाण्यग्रहादिर्भवदभ्युपगतोऽमामाअस्यमनुवीत। नच-प्रामाण्यवद्विशेष्यकत्वविशिष्टप्रामाण्यप्रकारकत्वरूपं प्रामाण्यं स्वगतं साक्षिग्राह्यं नवा, नाद्यः, साक्षिणः स्वविषयकत्वानङ्गीकारेण वैशिष्ट्ये च तस्यानुप्रविष्टत्वेन स्वगतप्रामाण्यग्रहणानुपपत्तेः, प्रामाण्यं स्वाश्रयग्राहकेण गृह्यते एवेत्यभ्युपगमाच्च, तादृशप्रामाण्यप्रकारकत्वरूपप्रामाण्यवद्विशेष्यकत्वविशिष्टप्रामाण्यप्रकारकत्वस्यापि साक्षिगतत्वेन तद्घटितप्रामाण्यान्तरस्यापि तथात्वेन च साक्षिणो विषयापर्यवसानप्रसङ्गाच्च, अनुभवविरोधाच्च। न द्वितीयः, अप्रतीतप्रामाण्यस्याशक्याभ्युपगमत्वात्। ज्ञानान्तरस्य निश्चितप्रामाण्यकस्यैव विषयनिश्चयरूपतया वाच्यत्वेनानवस्थानप्रसङ्गादिति—वाच्यम्; घटत्ववति घटत्वप्रकारत्वाद्यतिरिक्तप्रामाण्यानामज्ञाततया तादृशातिरिक्तत्वादिना रूपेण कदापि साक्षिणा ग्रहणसम्भवात्, ज्ञाततयाऽज्ञाततया वा सर्वं साक्षिभास्यमिति सिद्धान्तात्। साक्षिणि स्वात्मकज्ञानविषयकग्रहत्वस्यैवाभावेनोक्तप्रामाण्यानां विशिष्याग्रहणेऽपि निरुक्तज्ञप्तिस्वतस्त्वाभङ्गात्। साक्ष्यतिरिक्तानुव्यवसायस्य ज्ञाततायाः स्वविषयकत्वस्य चाप्रामाणिकत्वेन मुरारिभट्टप्रभाकरमतानां त्वसाङ्गत्यमेवेति चेन्न; सप्रकारकत्वघटितप्रमात्वस्य वेदान्त्यसम्मतत्वात्, समानविभक्त्यन्तपदद्वयजन्यतयाऽभ्युपगतानां निर्विकल्पकानामसङ्ग्रहात्। नच वेदान्तिमते भ्रमस्याविद्यावृत्त्यात्मकत्वेन तत्र ज्ञानत्वानभ्युपगमेन ज्ञानत्वमेव प्रमात्वमिति वाच्यम्; प्रमात्वस्य ज्ञानत्वसमनियतत्वेऽपि ज्ञानत्वानात्मकत्वात्, नहि ज्ञानत्वं प्रमापदमुख्यार्थः। नवा ज्ञानत्वग्रहस्य प्रवृत्तिहेतुत्वम्, अनभ्यासदशापन्नज्ञानेऽपि साक्षिणा भवन्मते ज्ञानत्वस्य ग्रहात्। अतएव भ्रमानभ्युपगन्त्रापि तद्वति तत्प्रकारकत्वस्यैव स्वतस्त्वं समर्थ्यते। नचाज्ञातविषयकत्वमेव प्रमात्वं स्वतो ग्राह्यम्, घटत्वेनेमं जानामीत्यत्र ज्ञानस्वरूपाज्ञानविरोधिस्वरूपस्य भानेन घटेऽज्ञाततायाः अपि भानसम्भवादिति वाच्यम्; संस्कारानुद्बोधदशायां पूर्वमनुभूतस्याप्यज्ञातत्वेन स्मृतेरज्ञातविषयकत्वपरिहाराय स्वकरणव्यापारोत्तरव्यवहितपूर्वक्षणे यदज्ञातं तद्विषयकत्वस्यैव प्रमात्वरूपतया वाच्यत्वेन तस्योक्तानुभवेऽभानात्। तावन्मात्रस्य ग्रहेऽपि ज्ञाने बाध्यविषयकत्वग्रहे प्रवृत्त्यनुदयेन तस्य ज्ञप्तौ स्वतस्त्वस्यानुपपादनीयत्वाच्च। असत्त्वापादकत्वरूपोपाधिविशेषाश्रयाज्ञानविषयत्वाभावप्रयोजकवृत्तिविशिष्टचित एव ज्ञानपदार्थत्वाच्च। नापि व्यवहारकालाबाध्यविषयकत्वमेव तद्घटितमेव वा प्रमात्वं स्वतः, मिथ्यात्वनिश्चयाविशेष्यत्वरूपाबाध्यत्वस्य साक्षिणा मानान्तरासहकृतेन ग्रहणासम्भवात्। नच मिथ्यात्वेन यदज्ञातं तद्विषयकत्वमेव प्रमात्वं स्वतो ग्राह्यम्, तद्ग्रहस्यैव प्रवृत्त्युपधायकत्वात्, अज्ञाततया च मिथ्यात्वविशिष्टस्य साक्षिणा ग्रहणसम्भवः, यथा च मिथ्यात्वज्ञानं पूर्वं नापेक्षणीयं तथोक्तमिति वाच्यम्; मिथ्यात्वमज्ञातवतोऽपि प्रवृत्तिदर्शनेन तत्पूर्वं ज्ञानग्रहे नियमेनाज्ञाततयापि तद्भानस्य शपथैकनिर्णेयत्वादिति चेन्न; निर्विकल्पकात्पूर्वं सविकल्पकस्याभ्युपगमेन सप्रकारकत्वघटितप्रमात्वस्यैव प्रवृत्त्युपधायकज्ञानग्रहविषयत्वोपगमे क्षत्यभावात्। वस्तुतस्तु सद्विषयकज्ञानत्वमेव प्रमात्वं स्वतो ग्राह्यम्, तद्ग्रहस्यैव प्रवर्तकत्वात्, सत्त्वं च न त्रिकालाबाध्यत्वं नापि व्यवहारकालाबाध्यत्वं येनोक्तरीत्या तस्य ग्रहणासम्भवः शङ्क्येत, अपि तु सामान्यादिसाधारणं व्यवहारकालाबाध्यत्वनियतमखण्डमेव, सन्तं घटं सत्त्वेन वा घटं जानामीति प्रतीत्या तस्यैवावगाहनात्, बाधात्पूर्वं भ्रमेऽपि तद्भानं निर्बाधमेवेत्यवधेयम्। नच—प्रामाण्यस्य संशया-

तयोः प्रमालक्षणमित्यपास्तम्; दुरवधारणत्वात् । इत्यबाधितत्वादिखण्डनम् ॥

## अथ प्रमालक्षणसामान्यखण्डनम् ।

यच्च किञ्चित्प्रमाया लक्षणमुच्यते तदज्ञातं ज्ञातमात्रं वा यदि तत्त्वव्यवहारकं तदाऽत्यापत्तिः, प्रमितञ्चेत्प्रमानवधारणे तस्य दुरवधारणता । माऽवधारि, वस्तुतस्तथेति चेन्न; वस्तुनो न तथैव किन्नेति वादिन्यनुत्तरापत्तेः, प्रमात्वनिरूपणवैयर्थ्यापाताच्च,

न्यथानुपपत्त्याऽस्वतस्त्वमिति-वाच्यम्; दोषविशेषस्य प्रमात्वनिश्चयप्रतिबन्धकताभ्युपगमेन समाहितत्वात् । नच-संशयस्य धर्मितावच्छेदकप्रकारकज्ञानजन्यत्वेन पूर्वं ज्ञानग्रहस्यावश्यकत्वे तत्र प्रामाण्यस्य भाने तत्संशयानुपपत्तिरिति-देशनीयम्; संशयान्यथानुपपत्त्यैव प्राचीनज्ञानग्रहेऽपि प्रामाण्याविषयकत्वस्य तदर्थं दोषविशेषस्य च कल्पनोपपत्तेः, संशये धर्मिविशेषभानं विषयिताविशेषरूपं जातिरूपं वा सम्भावनात्वापरपर्यायोत्कटत्वं च प्रति धर्मिज्ञानसामग्र्यैवैव नियामकतया अनन्यथासिद्धत्वमात्रकल्पनाप्रयुक्तलाघवज्ञानसम्भवेन धर्मितावच्छेदकप्रकारकज्ञानत्वेन संशयकारणतायां मानाभावात्, तव मते शरीरलाघवेऽपि विनिगमकाभाव एव, प्रत्युत संशयस्यापि धर्मिविषयकत्वेन ततः पूर्वं धर्मिज्ञानसामग्र्या निश्चितत्वेन धर्मिज्ञानस्य च मध्ये सन्दिग्धोत्पत्तिकत्वेन तत्त्वेन कारणतायां व्यभिचारसन्देहात्, परित्यज्य च निश्चिताव्यभिचारकं गृह्यमाणव्यभिचारकस्य कारणत्वकल्पनानौचित्यात् । प्रामाण्यनिश्चयस्तु दोषाभावस्यैवीयप्रवृत्तेः पुरा निष्कम्पप्रवृत्तौ निश्चितप्रामाण्यकस्य ज्ञानस्य कारणतां मन्वानानां प्राचीनतर्कनैयायिकानामप्यानुभविकः, किम्पुनरपरेषां प्रमात्वस्वतस्त्ववादिनाम् । तत्सामग्र्या उपवर्णितत्वेन तस्य दुर्वारत्वाच्च । एतेनागृहीताप्रामाण्यकस्यैव ज्ञानस्य प्रवर्तकता न तु निश्चितप्रामाण्यकस्य, प्रामाण्यनिश्चयस्य प्रवृत्तेः पूर्वं सांशयिकोत्पत्तिकत्वादिति नाशङ्कनीयम् । दोषस्तु भूयः प्रवृत्त्यभावरूपोऽनभ्यासः, भूयस्त्वं च त्रिचतुरादिसाधारणमपि न त्रित्वचतुष्ट्वादिरूपमपि तु प्रतीत्यनुगमादनुगतमेव । तच्चोपाधिर्वाऽन्यद्वा किञ्चिदिति तु वायसदशनानुसन्धानम् । एतेनानुगतप्रतिबन्धकस्याभावेनानन्ततत्तत्क्षणसम्बन्धानां प्रतिबन्धकताकल्पनापेक्षयाऽनुव्यवसायस्य प्रामाण्याग्राहकत्वकल्पनमेवोचितमिति परास्तम् ।

एवं जन्यप्रमात्वं न जन्यज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणतातिरिक्तकारणतानिरूपितकार्यतावच्छेदकं प्रमाणाभावादिति जन्यज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयातिरिक्ताजन्यत्वरूपोत्पत्तिस्वतस्त्वमपि । न चानित्यप्रमात्वं तादृशकारणतातिरिक्तकारणतानिरूपितकार्यतावच्छेदकमनित्यज्ञानत्वव्याप्यकार्यतावच्छेदकधर्मत्वादप्रमात्ववदिति वाच्यम्; अनित्यप्रमात्वगुणत्वयोरननुगतत्वेन कार्यताकारणतानवच्छेदकत्वात्, तत्प्रकारकज्ञानजनकसामग्र्या तत्प्रकारकत्वस्य तद्वद्विशेष्येन्द्रियसन्निकर्षादिना च तद्वद्विशेष्यकत्वस्य भाने सम्भवेन प्रमात्वस्यार्थसमाजग्रस्तत्वाच्च । अत एव घटीयप्रत्यक्षप्रमात्वादेरपि न भूयोऽवयवेन्द्रियसन्निकर्षादिजन्यतावच्छेदकत्वम् । अप्रयोजकत्वाच्च । अनित्यज्ञानत्वावच्छिन्नकारणकूटेनैवाकस्मिकत्वस्य परिहारेण तदापत्तेरलग्नकत्वात् । दोषस्याप्रमात्वप्रयोजकत्वेन तदभावस्याप्रमात्वविघटकतयैवान्यथासिद्धेर्न तज्जन्यत्वमपि । एतेन प्रमायाः स्वतस्त्वेऽप्रमापि स्वत एव स्यात्, अप्रमां प्रत्यन्वयव्यतिरेकाभ्यां दोषस्य हेतुत्वे प्रमां प्रति दोषाभावस्यापि हेतुत्वं स्यादित्यपास्तम् । अप्रमायाः सर्वमते दोषजत्वेन वेदान्तिमते तत्र ज्ञानत्वस्यैवानभ्युपगमेन च तस्या ज्ञानसामग्रीमात्रजन्यत्वविरहेण तज्जन्यत्वेनाप्रमायाः प्रमात्वं नापादनीयमिति । शक्तिविशेषः निष्कम्पप्रवृत्तिजनकतावच्छेदको भट्टादिसम्मतः । दुरवधारणत्वादिति । शक्तिमत्त्वावस्य तत्प्रतीतौ प्रमात्वनिर्णयं विनाऽनभ्युपगमनीयत्वात् । इति खण्डनशारदायामबाधितत्वादिखण्डनम् ।

वस्तुतस्तु प्रमयैव घटादितत्त्वव्यवहारोऽपि तर्ह्यस्त्वित्यास्तां विस्तरप्रसङ्गः । इति खण्डनखण्डखाद्ये प्रमालक्षणसामान्यखण्डनम् ।

तत्त्वव्यवहारकं = प्रमात्वस्य यथार्थव्यवहारजनकम् । अत्यापत्तिः = भ्रमादौ प्रमात्वव्यवहारस्य यथार्थत्वापत्तिः । माऽवधारिप्रमितत्वेन । तथा = प्रमितम् । तत्त्वव्यवहारः = वास्तवत्वव्यवहारः । इति शिवम् । इति खण्डनशारदायां प्रमालक्षणसामान्यखण्डनम् ।

## समाप्तं प्रमात्वखण्डनप्रकरणम् ॥



# अथ प्रमाणसामान्यखण्डनप्रकरणम् ।

## करणत्वखण्डनम् ।

एवं प्रमितेरनिरुक्त्या 'प्रमाकरणं प्रमाण'मित्यप्ययुक्तम्, करणार्थानिरुक्तेश्च । ननु कारकान्तरेऽचरितार्थस्य हेतुत्वं करणत्वम्, कर्तुर्हि करणं निष्पादयतः कारकान्तरे चरितार्थत्वम्, स्वरूपतोऽनिष्पादनेऽपि व्यापारवत्तया निष्पादनात्, तादृशस्य च तस्य करणत्वात्, एवं कर्मापि करणनिष्पादने चरितार्थम्, करणव्यापारो हि कर्मविषयो भवति, कर्माभावे विषयाभावात्करणव्यापार एव न निष्पद्यत इति तन्निर्वाहे तस्यापि चरितार्थत्वम्, एवमधिकरणस्यापि करणव्यापारनिर्वाहकत्वम्, सम्प्रदानापादानयोश्चासार्वत्रिकत्वम्, करणं तु सार्वत्रिकमेवेति कारकान्तरेऽचरितार्थः सार्वत्रिको हेतुः करणमिति; मैवम्, अस्तु तावदविचारितरमणीयमिदं व्याख्यानम्, अन्तरशब्दो हि यदि विशेषमात्र-

करणार्थेति । कथायां प्रमात्वनिरासापरिस्फूर्तौ करणत्वनिरसनेनैव प्रमाणपदार्थो निरसनीय इति भावः । कर्मविषयः = कर्मविषयकः, करणव्यापारविषयता च कर्मणि करणव्यापारजन्यफलाश्रयत्वप्रकारकेच्छाविशेष्यता । तन्निर्वाहे = करणव्यापारजनने । तस्य = कर्मणः । असार्वत्रिकत्वम् = क्रियामात्रानन्वयित्वम् । सार्वत्रिकमेवेति । यत्कार्यं तत्सकरणकमिति व्याप्तिः, अस्त्यादिक्रियास्वपि "आत्मा-त्मनात्मना बिभ्रदस्मीति व्यपदिश्यते" इत्युक्तेः सकरणकत्वमेवेति भावः । कर्मणोऽप्यसार्वत्रिकत्वेन हेतौ सार्वत्रिकत्वविशेषणेन व्यावृत्तावपि कर्त्रादिव्यावृत्त्यर्थं विशेषणान्तरम् । इदन्तु तत्त्वम्—कारकान्तरेऽचरितार्थत्वं कारकान्तरनिष्ठव्यापाराजनकत्वमिति व्यापाराजनकव्यापारजनकत्वमेव लक्षणम्, तत्क्रियाजनकाजनकः सन् तत्क्रियाजनको यस्तज्जनकत्वं तत्क्रियाकरणत्वमिति यावत्, व्यापारत्वस्याननुगतत्वात्, कर्त्रादिजन्यस्तत्क्रियाजनकस्तु व्यापारस्तत्क्रियाजनकस्य करणव्यापारस्य जनक इति कर्त्रादिव्यावृत्तिः । तत्क्रियाजनकजनकस्य कथं तत्क्रियाजनकत्वमन्यथासिद्धेरिति तु मूले एव परतः प्रतिविहितम् । तत्क्रियाजनको य इत्यत्र प्रयोजकसाधारणजनकत्वं वा वक्तव्यम् । एवमनुगमाभावे च तत्क्रियाकरणस्य क्रियामात्रसाधारण्याभावात्सार्वत्रिकत्वोपादानस्यासम्भवापादकत्वेनासम्भवात् । एवञ्चोक्तव्याप्तेरप्रयोजकत्वेऽपि न क्षतिः । तथाच प्राचीनमते व्यापारवत एव कारणस्य कारकत्वेन सम्प्रदानापादानयोर्व्यापारस्य, व्यापारत्वान्यथानुपपत्त्या तत्र तत्क्रियाजनकत्वस्य चावश्यम्भावेऽपि तस्य कथञ्चित्तत्क्रियाजनकजनकत्वमेव वा वक्तव्यम्, उपधेयसङ्करेऽप्युपाधीनामसाङ्कर्यादिति नयेन वा क्वचित्प्रतिविधातव्यमिति । अविचारितेति । अयम्भावः—यथाश्रुतं तावदसम्भव एव, क्रियाविशेषे करणस्यापि क्रियान्तरे कर्त्रादित्वेन कारकान्तरे चरितार्थ्यात्, उक्तरीत्या परिष्कारेऽपि सविकल्पकजनकसन्निकर्षस्येन्द्रियजन्यस्य सविकल्पकजनकनिर्विकल्पकजनकत्वेनेन्द्रियस्य सविकल्पककरणत्वानुपपत्तिः, स्वर्गादिजनकापूर्वस्य यागजन्यस्य स्वर्गादिजनकशरीरविशेषजनकत्वेन यागस्य स्वर्गादिकरणतानुपपत्तिश्च । नच—नेष्यत एव तत्रेन्द्रिययागयोः करणत्वम्, स्वजन्यगतकरणत्वस्य स्वस्मिन् विवक्षयैव तृतीयोपपत्तेः, सप्तमकारकत्वमेव च तस्य, षट्कारकगणनं तूपलक्षणमिति—वाच्यम्; लक्षणानुरोधेन लक्ष्यान्यथानयने मौढ्यात्, तत्क्रियाजनकाजनकत्वेन तत्क्रियाजनकनिष्ठजन्यतातिरिक्तधर्मावच्छिन्नजन्यत्वानिरूपकत्वविवक्षया तु न निस्तारः, उक्तादृष्टान्तेन ... पूर्वविशेषजन्यतया जन्यतावच्छिन्नत्वे मानाभावात् । करणत्वस्याननुगमे करणपदसमयग्रहानुपपत्तेश्च । अक्षयोगमादायैव कर्मण्यतिव्याप्तेश्च, तदव्यवहितोत्तरमेव फलोत्पत्तेस्तस्य तत्क्रियाजनकाजनकत्वस्यावश्य-

वचनस्तदा न व्यवच्छेदकः, नहि विशेषमपास्य कारकमात्रं केनचिज्जन्यते यद्व्यवच्छिद्येत, नापि चान्तरशब्दोऽन्यवचनस्तथा सति कस्मादन्यदिति विशेषानिर्देशे करणादिति समभिव्याहाराल्लभ्येत यथान्य आत्मा शरीरमन्यदित्यादौ, तथासति करणव्यतिरिक्तकारकाभिप्रायेण प्रयुक्तः स्यात्, तच्च न, करणस्यैवाद्यापि निरूप्यमाणत्वात्, अतिव्याप्तेश्च। नापि कर्तृकर्मणोः स्वरूपोपादानपरोऽयमन्तरशब्दः, ताभ्यामेवातिव्याप्त्यापत्तेः। नापि कर्तृकर्मणी अपेक्ष्यान्यदन्तरशब्दार्थः, वैयर्थ्यापातात्, कारकेऽचरितार्थ इत्येवोच्यताम्। नाप्यनधिकार्थ एवायमिति न प्रयोक्तव्योऽन्तरशब्दः; तथासति कारकजनकं हस्तादि करणं न स्यात्, व्यापारवद्धि कारणं कारकमुच्यते, अस्ति च स्थालीसंयोगादिव्यापारवतो वह्न्यादेस्तथात्वम्, अस्ति च हस्तादेस्तज्जनकत्वम्। नच हस्ताद्यकरणमेवाभ्युपेयम्, व्यापारवतः कारणत्वेन तत्कारकत्वस्यावश्याभ्युपेयत्वात्, कर्त्रादिषु दुरन्तभाव-

कत्वात्। कर्त्रादिव्यापारेऽपि तत्क्रियाजनकजनकत्वघटोभयाभावादिसत्त्वेनातिप्रसक्तेश्च, अधस्तात्तद्द्वारकप्रकारवारणादिति। विशेषमात्रेति। अनयोरन्तरं महदित्यादिवदिति भावः। मात्रशब्देनान्यार्थकताव्यावृत्तिः। अन्यः शरीरात्, अन्यदात्मन इति समभिव्याहारलभ्यम्। करणत्वस्यानुगमो वाऽननुगमो वा, आद्ये करणस्येति। करणत्वस्येत्यर्थः। तथाचात्माश्रयः, करणत्वावच्छिन्नभेदवतोऽप्रसिद्ध्याऽसम्भवश्च। अननुगमे त्वाह अतिव्याप्तेरिति। तत्क्रियाकर्त्रादेरपि तत्क्रियाकरणान्यतत्क्रियाकारकनिष्ठव्यापाराजनककारकत्वादिति भावः। उपधेयसङ्करेऽपीतिन्यायेनातिव्याप्त्याद्यापत्तिं तु स्वयमेव समाधास्यति। स्वभिन्नप्रकृतक्रियाकारकनिष्ठव्यापाराजनककारकत्वं प्रकृतक्रियाकरणत्वमित्युक्तौ तूक्तरीत्यैवातिप्रसक्त्यादिकमिति भावः। नाभ्यामिति। तयोरित्यर्थः। कारकान्तराचरितार्थ्यमिदानीं कर्तृनिष्ठव्यापाराजनकत्वमात्रं यदि तदा कर्मण्यतिव्याप्तिः, कर्मनिष्ठव्यापाराजनकत्वमात्रं यदि तदा कर्तर्यतिव्याप्तिः, कर्तृकर्मोभयनिष्ठव्यापारस्तु न कश्चिदिति तदुभयाजनकत्वनिवेशोऽशक्यः। यदितु स्वकर्तृनिष्ठव्यापाराजनकत्वस्वकर्मनिष्ठव्यापाराजनकत्वस्वकारकत्वैतत्त्रितयसम्बन्धैः प्रकृतक्रियाविशिष्टत्वं प्रकृतक्रियाकरणत्वमिति वा करणव्यापारे इव परस्परव्यापारेऽपि कारकान्तराणां निमित्तत्वम्; अत एवाधिकरणादावपि नातिव्याप्तिरिति वोच्यते तदाप्युक्तरीत्येन्द्रियादावव्याप्त्यादिकं द्रष्टव्यम्। वैयर्थ्येति। प्रकृतक्रियाकर्तृभिन्नत्वे सति प्रकृतक्रियाकर्मभिन्नस्य यः प्रकृतक्रियानुकूलो व्यापारस्तदजनकत्वविवक्षया हि कर्त्रादावतिव्याप्तिर्वार्यते, साच प्रकृतक्रियौपयिकव्यापाराजनकत्वविवक्षयैव शक्यवारणा, असम्भवस्तूभयत्रापि समानः, प्रकृतक्रियाकरणस्यापि प्रकृतक्रियाकर्तृकर्मभ्यां भिन्नत्वेन प्रकृतक्रियाकारकत्वेन च तादृशव्यापाराजनकत्वविरहादित्यन्तरशब्दवैयर्थ्यम्। कारकपदसमभिव्याहारेण प्रकृतक्रियेत्याद्यर्थलाभात्तद्वैयर्थ्यं नोक्तम्। अन्तरपदानिवेशेऽसम्भवमुद्भावयति तथा सतीति। कारकजनकं = कारकनिष्ठव्यापारजनकम्। कारकमिति। ग्रामादेर्व्यापारवत्त्वे मानाभावेन गमनादौ कर्मत्वादिकं न स्यादिति क्रियाजनकत्वं कारकत्वमिति मतेऽप्यव्यापृतस्याग्न्यादेर्न कारकत्वमिति भावः। व्यापारवत्कारणमिति करणलक्षणमुक्तमिति तु भ्रमः, प्राचीनग्रन्थान्तरेष्वपि तस्य कारकलक्षणतयोक्तत्वात्, कर्तर्यतिव्याप्तेरतिस्फुटत्वाच्च, अत एवासाधारण्यघटितं तत्करणलक्षणमित्यप्ययुक्तम्, कर्तुरप्यसाधारण्यात्, उपधेयसङ्करेऽपीति समाधानं तु निरसिष्यते। तज्जनकत्वं = वह्न्यादिनिष्ठव्यापारजनकत्वं, स्वनिष्ठव्यापारजनकत्वमादायासम्भवस्तु स्पष्टः। व्यापारवतः सतः, व्यापारवत्त्वे सतीति यावत्। दुरन्तेरिति। स्वातन्त्र्याभावेन कर्तृत्वस्य, धात्वर्थतावच्छेदकविक्लित्यादिफलानाश्रयत्वेन कर्मत्वस्य, प्रकृतक्रियाकर्मसम्बन्धितयाऽनभिप्रेतत्वेन सम्प्रदानत्वस्य, स्वाद्

त्वात् सप्तमकारकस्वीकारापत्तेः। नच व्यवधानात्तत्राहेतुत्वमेव तेषां किन्नाम हेतुहेतुत्वमिति; कर्तुरप्येवंप्रसङ्गात्, पुंव्यापाराद्देहस्पन्दादिस्ततः कुठारक्रियादिस्ततश्छिदेति परम्पराव्यवधानात्। सर्वेयं कर्तृव्यापारपरम्परा न तस्य हेतुतां हन्तीति चेत्; तुल्यम्। तस्मात्करणत्वेनावश्याभ्युपगन्तव्यहस्ताद्यव्यापकत्वादलक्षणमिदम्। एतेनापि कारकान्तरशब्दः कर्तृकर्मव्यतिरिक्तवचन इति पक्षो व्युदास्यः॥

कर्तृव्यापारविषयः करणमित्यपि न, शरीरचालनाय प्रयतमानस्य शरीरचलनक्रिया, क्रियाविशिष्टं वा शरीरं प्रयत्नलक्षणकर्तृव्यापारविषयीभवतीति तस्यां क्रियायां करणं स्यात्, न चैतच्छक्याङ्गीकारम्, भविष्यतः स्वं प्रति च कारकत्वानुपपत्तेः। नच साक्षात्कर्तृव्यापारविषय इति विशेषोपादानेऽप्यस्य परिहारः, साक्षाद्व्यापार्यमनःप्रभृतिक्रियायां प्रसङ्गतादवस्थ्यात्, अव्यापकत्वाच्च अथ तत्क्रियाहेतुस्तत्क्रियाकर्तृव्यापा-

तिक्रियाजन्यविभागाताश्रयत्वादिनाऽपादानत्वादेश्च हस्तादावसम्भवादिति भावः। नच कारकान्तरानधीनत्वे सति कारकस्वरूपस्यानन्यविवक्षया कर्तृत्वं स्यात्; हस्तः पचतीति प्रयोगनिर्वाहार्थमेव तत् हस्तेन पचतीति तु हेतुत्वबुबोधयिषया सम्भवदपि करणत्वबुबोधयिषया कथं स्यात्। स्वीकारापत्तेरिति। तथा च तस्य करणत्वमेव परिशेषात्मन्तव्यमिति भावः। तत्र = पाकादिक्रियायाम्। तेषां = हस्तादीनाम्। किन्नाम = अपि तु। तुल्यमिति। तत्तद्व्यापारस्य फलव्यवहितस्यापि तद्दशायां छिनत्तीत्यादिव्यवहारमनुरुध्यानन्यथासिद्धत्वं त्वया वाच्यं तच्च तुल्यम्, उक्तहस्तादिव्यापारदशायामपि पचतीति व्यवहारसत्त्वादिति भावः। प्रकृतक्रियाकर्तृभिन्नत्वे सतीत्याद्युक्तरीतावप्यसम्भवमाह एतेनेति। अपिनाऽन्तरपदवैयर्थ्यपरिग्रहः॥

विषयता यदि साध्यतारूपा व्यापारवत्त्वेन च करणस्यापि सा, तदा फले तद्विशिष्टे कर्मणि चातिव्याप्तिमाह शरीरेति। एतत् = चलनक्रियायाः स्वं स्वविशिष्टं च शरीरं प्रति करणत्वम्। भविष्यत फलस्य तद्विशिष्टस्य च कारकत्वानुपपत्तेः स्वं प्रति च स्वस्य कारकत्वानुपपत्तेः करणत्वस्य दूरोत्सारितत्वात्, कारकत्वादेः कार्याव्यवहितप्राक्क्षणवृत्तित्वघटितकारणताघटितत्वात् कार्यकारणभावस्य च भेदाधिष्ठानत्वात्। साक्षादिति। प्रकृतक्रियाकर्तृव्यापारजन्याजन्यत्वे सति तादृशव्यापारजन्यत्वं प्रकृतक्रियाकरणत्वम्, फलं तद्वत्त्वेन वा कर्म तु तादृशव्यापारजन्यकरणव्यापारजन्यमित्यनतिप्रसङ्ग इति भावः। अस्य = अतिव्याप्तिदोषस्य। मनः प्रभृतीति। मनःप्राणक्रिययोः कृतिजन्यत्वेन तज्जन्याजन्यत्वेन च फलयोस्तयोस्तद्विशिष्टयोश्चातिप्रसङ्ग इत्यर्थः। इदमुपलक्षणं तादृशव्यापारध्वंसेऽतिव्याप्तेरपि। ननु स्वकर्तृव्यापारजन्याजन्यत्वस्वकर्तृव्यापारजन्यत्वाभ्यां प्रकृतक्रियाविशिष्टव्यापारवत्त्वं प्रकृतक्रियाकरणत्वमिति विवक्षायां नोक्तदोषः, कर्मणः क्वचिन्निर्व्यापारत्वात् क्वचिच्च तद्व्यापारस्य कर्तृव्यापारजन्यकरणव्यापारजन्यत्वात्, कर्तृव्यापारस्य च स्वाजन्यत्वात्, फलध्वंसयोश्च निर्व्यापारत्वादित्यत आह अव्यापकत्वाच्चेति। कृत्यात्मककर्तृव्यापारजन्यचेष्टादिरूपव्यापारजन्यत्वात्कुठारादिव्यापारस्येति भावः। तत्क्रियाहेतुरिति फले तद्विशिष्टे च कर्मण्यतिव्याप्तिवारणाय। कर्तृव्यापारविषयत्वं च न कर्तृव्यापारसाध्यत्वम्, परमते नित्यस्य कालादेरपि कारणत्वेन 'ईश्वरव्यापारविषयः सर्वं कारणमि'त्यग्रिमग्रन्थासङ्गतेः, अपितु साध्यासाध्यसाधारणम्। तस्य कर्तृव्यापाराधीनव्यापारवत्कारणतारूपत्वे तु तावतैव फलतद्विशिष्टयोरतिव्याप्तिवारणेन विशेषणान्तरवैयर्थ्यापत्तेः। यदि तु विशेषणान्तरोपादानापेक्षयोपात्तविशेषणस्यैव परिष्कारौचित्यम्, तदाऽस्तु प्रकृतक्रियाकर्तृव्यापाराधीनव्यापारवत्कारणत्वं प्रकृतक्रियाकरणत्वम्, साक्षात्वा-

रस्य विषयस्तत्क्रियायां करणमिति मन्यसे; मैवम्, अनीश्वरवादेऽङ्कुरादीनामकरणकत्वप्रसङ्गात्, सुषुप्त्यनन्तरभाविन्याः प्रमायाः परिगणितकरणोपाधिभेदपरिसङ्ख्यातेषु प्रमेराशिषु बहिर्भावप्रसङ्गात्, अचेतनस्यापि कर्तृत्वे चातिप्रसङ्गात्। सेश्वरवादे त्वीश्वरव्यापारविषयः सर्वं कारणमिति नाकरणं कारणं स्यात्। ओमित्यभिधाने चाकारणमात्रं व्यवच्छेद्यमिति कारणं करणमित्येवोच्यतां वृथा विशेषणपूरणप्रयासः। अथ मन्यसे—न धर्म्यन्तरव्यवच्छेदाय विशेषणानि, किन्त्वेकस्यापि धर्मिणो रूपभेदेन करणपदाभिधेयतापदर्शनायेति; एवं तर्ह्येतद्रूपालिङ्गितस्य करणत्वाल्लक्षणोक्तिप्रवृत्तेन त्वया लक्ष्यमात्रमुक्तं भवेत्। न च लक्ष्यपदप्रवृत्तिनिमित्तमेव लक्षणार्थः, गन्धवत्त्वादेः पृथिव्याद्यलक्षणत्वापत्तेः। अपि चैवं वस्तुमात्रं करणमित्यभिधायैव किन्न करणपदप्रवृत्तिनिमित्तमुपादर्शि।

विवक्षणेन कुठारादौ नाप्रसङ्गः। कर्तृत्वं निष्प्रयासिवारणायाधीनान्तम्। यदि तु क्वचित्कर्मणोऽपि तथात्वम्, एवं कृतिवच्चेष्टाया अपि कर्तृव्यापारत्वेन कृत्यात्मकव्यापाराधीनचेष्टात्मकव्यापारवतः कर्तुरपि तथात्वम्, तदा प्रकृतक्रियाविशिष्टव्यापारवत्कारणत्वं विवक्षणीयम्, वैशिष्ट्यं स्वकर्तृव्यापाराधीनत्वस्वकर्तृवृत्तित्वस्वकर्मावृत्तित्वेतिसम्बन्धत्रयेणेति भावः। अकर्मकक्रियास्थले तृतीयसम्बन्धोऽनुपादेयः। अर्थाक्षसन्निकर्षस्याक्षव्यापारत्वे तस्य कर्मवृत्तित्वेनाव्याप्तिर्नाशङ्कनीया, अक्षमनोयोगस्यैवाक्षव्यापारत्वात्। मीमांसकादेः प्रतिवादित्वे आह **अनीश्वरेति**। **अङ्कुरादीनामिति**। अदृष्टद्वारकोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वेव कर्तृत्वव्यवहारात् जीवो न तत्र कर्ता, ईश्वरस्तु तथासम्भवन्नपि नाङ्गीक्रियत इति भावः। नन्वन्यत्रास्तु यथातथा, प्रकृतलक्षणेऽदृष्टाद्वारकत्वाघटितमेव कर्तृत्वं निवेश्यम्, किञ्च कार्यत्वे सकरणकत्वव्याप्तेरप्रयोजकत्वेनाङ्कुरादेरकरणकत्वेऽपि न क्षतिः, नचैवं रूपादिज्ञाने कार्यत्वान्यथानुपपत्तिबलादिन्द्रियसिद्धिर्न स्यात्; श्रुत्यादिनैव तत्सिद्धिसम्भवादित्यत आह **सुषुप्तीति**। अनन्तरशब्दोऽव्यवहितोत्तरपरः। परिगणिताः करणोपाधिभेदाः प्रमितिकरणतावच्छेदकधर्मा इन्द्रियत्वव्याप्तिज्ञानत्वादयस्तैः परिसङ्ख्यातेषु = तत्समसङ्ख्याकेषु, तच्चातुर्विध्यादिप्रयुक्तचातुर्विध्यादिकेष्विति यावत्। व्यक्तीनामनन्त्याद्राशिशब्दः। प्रत्यक्षत्वादिना रूपेण प्रमितीनां चतुर्विधत्वं पञ्चविधत्वं षड्विधत्वं वेति भावः। अपपरिबहिरिति समासविधानज्ञापकाद्बहिर्योगे पञ्चम्याः साधुत्वेऽपि ज्ञापकसिद्धस्यासार्वत्रिकत्वात्सप्तमी समर्थनीया। **प्रसङ्गादिति**। सुषुप्तिकालीनजीवस्य ज्ञानशून्यत्वेनाकर्तृत्वादीश्वरस्य चानभ्युपगमाल्लिक्तकर्तृव्यापारविषयत्वमादायेन्द्रियादौ करणत्वोपपादनासम्भवेन तज्जन्यज्ञाने प्रत्यक्षत्वादेरप्यनुपपत्तिः, अकरणकत्वात्, जन्यज्ञानस्य सकरणकस्यैव प्रत्यक्षादित्वादिति भावः। ज्ञानशून्यस्यैव जीवस्य कर्तृत्वमाशङ्क्याह **अचेतनस्येति**। अतिप्रसङ्गात् = ज्ञानशून्यतादशायामपि घटादिकर्तृत्वप्रसङ्गात्। सेश्वरवादे इत्यादिकं दूषणं यथाश्रुते स्पष्टम्। यदि तु पर्याप्त्यादेर्निरस्तत्वेन कर्तृवृत्तित्वादिप्रतियोगिकाभावस्य च केवलान्वयित्वेन कर्त्रादिसाधारण्यम्, तदा सर्वं कारणमित्यादौ कारणपदस्यासाधारणकारणपरतया यथाव्याख्यातसाधारणमर्यादम्। **स्यादिति**। असाधारणकर्तुर्विवक्षायां त्वनीश्वरवादोक्तदोष इति भावः। कारणं करणम् = तत्क्रियाकारणं तत्क्रियाकरणम्। **एकस्यापीति**। उपधेयसाङ्कर्येऽप्युपाधीनामसाङ्कर्यमिति भावः। एवं तर्हि = उक्तरूपस्य करणपदाभिधेयतावच्छेदकत्वे। लक्ष्यमात्रं = करणपदप्रवृत्तिनिमित्तम्। **भवेदिति**। तथा चार्थान्तरमिति भावः **लक्ष्यपदेति**। लक्ष्यवाचकपदेत्यर्थः। **निमित्तमेवेति**। तथाच प्रकृतोपयुक्तस्यैव कथनान्नार्थान्तरमिति भावः। लक्षणार्थः = लक्षणम्। क्वचिदेव प्रवृत्तिनिमित्तस्य लक्षणत्वं नतु सर्वत्रेत्यरुचेराह **अपिचेति**। वस्तुनस्तु रूपस्योक्तस्याननुगमेन शक्यतावच्छेद-

स्यादेवं यदि सर्वत्र वस्तुनि करणव्यवहारः स्यादिति चेत्तर्हि त्वदुक्तलक्षणमपि भवेद्यदि सर्वत्र कारणे करणव्यवहारः स्यादित्यपि पश्य नहि कर्तरि कर्मणि वा कस्यचित्करणव्यवहारः। कर्तरि तावदस्ति लोके 'प्रमाणमिह देवदत्त' इति शास्त्रेऽपि "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्या"दिति चेन्न;किमयं माणवकेऽग्निव्यवहार इव गौणो मुख्य एव वेति संशये यदि त्वत्परिकल्पितान्निमित्तान्मुख्यः स्यात्, ततः कर्मण्यपि स्यात्तत एव निमित्तादिति बाधदर्शनेन पारिशेष्याद्गौणतयैव तद्व्यवस्थापनाया युक्तत्वात्। अस्त्येव कर्मण्यपि तेन रूपेणेति चेन्न, न तावदयं शब्दोपदर्शनोदाहरणः शास्त्रलोकयोः, क्व दृश्यते घटं पश्यतीत्यर्थे घटेन पश्यतीति ?। यदि तु त्वच्चेतसि केवलं स्यात् तत्र

---

कत्वासम्भवः, न वा रूपभेदं विना लक्ष्यतावच्छेदकस्य लक्षणत्वं युक्तम्, अतएवानुमितिगादाधर्यां ज्ञानव्यक्तिविशेषवृत्तिजातित्वेन लक्षणता स्वरूपेण चानुमितित्वस्य लक्ष्यतावच्छेदकतेत्यभिधाय विरोधः परिहृतः, नवा करणपदप्रवृत्तिनिमित्तस्य लक्षणत्वे करणपदार्थत्वेन लक्ष्यतासम्भवः, शक्यतावच्छेदकस्याशक्यत्वात्, शक्यत्वेऽपि लक्ष्यतावच्छेदकासमनियतत्वेनालक्षणत्वात्। करणपदत्वं च न शक्त्या करणत्वविशिष्टविषयकबोधजनकत्वादन्यदिति लक्षणज्ञानं विना न लक्ष्यतावच्छेदकज्ञानमित्यन्योन्याश्रयः। कर्तरि कर्मणीति। तत्क्रियाया इत्यादिः। करणव्यवहार इति। तत्क्रियाकरणत्वव्यवहार इत्यर्थः। लोकव्यवहारानुरोधेव लक्ष्यलक्षणभावः अतएव ध्वन्यालोकलोचनेऽभिनवगुप्तपादैः "खड्गलक्षणं करोमीत्युक्त्वा आतानवितानात्मा प्राम्रियमाणः सकलदेहाच्छादकः सुकुमारश्चित्रतन्तुविचित्रः संवर्तनविवर्तनसहिष्णुरच्छेद्यकः सुच्छेद्य उत्कृष्टः खड्ग इति ब्रुवाणः परैः पटः खल्वेवंविधो भवति न खड्ग इत्युक्त्या पर्यनुयुज्यमान एवं ब्रूयात् 'ईदृश एव खड्गो ममाभिमत' इति तादृगेवैत"दित्युपहसितमिति भावः। तत्प्रामाण्यम् = पारलौकिकफलकस्य वैदिकविधिभागस्य प्रामाण्यम्, तादृशभागः प्रमाणमिति यावत्, आप्तप्रामाण्यात् = आप्तोक्तत्वादिति यावत् प्रवृत्तिसामर्थ्यानुमितप्रामाण्यकविपादिनाकमन्त्रनिचयवत् तादृशायुर्वेदवच्चेति न्यायसूत्रार्थः। अत्र प्रमातुरप्याप्तस्य प्रामाण्यमुक्तमिति भावः। गौणतया = प्रमाहेतुत्वरूपसदृशगुणप्रयुक्ततया। युक्तत्वादिति। अतएव विश्वनाथवृत्तौ "आप्तस्य प्रामाण्यात् = यथार्थोपदेशकर्तृत्वात्, आप्तं = गृहीतं प्रामाण्यं यत्र स वेदस्तादृशेन वेदत्वेन वे"ति व्याख्यातमिति भावः। एवं देवदत्तः प्रमाणमित्यत्रापि प्रमाणशब्दो निर्णायकपरो वा यथार्थवक्तृपरो वेति। काष्ठैः पचति, काष्ठानि पचन्तीत्यादावपि नैकक्रियायां करणस्य कर्तृत्वं कर्तुर्वा करणत्वं मुख्यम्, पच्यर्थक्रियाप्रचयान्तःपात्यवान्तरक्रियाभेदसद्भावाउज्वलनक्रियाकर्तृत्ववतामेव काष्ठानां पचिवाच्यसमूहकर्तृत्वारोपात्। तेनेति। तत्क्रियाहेतुत्वविशिष्टतत्क्रियाकर्तृव्यापारविषयत्वादित्यर्थः। अयम् = कर्मणि करणत्वव्यवहारः। शब्दस्योपदर्शनं यस्य, एवम्भूतमुदाहरणं यस्य सः। शास्त्रेति। "प्रमेया च तुलाप्रामाण्यव"दिति न्यायसूत्रे तत्क्रियाकर्मण एव तत्क्रियाकरणत्वं व्यवहृतमिति तु भ्रमः, यथाहि सुवर्णादिगुरुत्वपरिच्छेदकत्वात्तुलायां प्रमाणत्वव्यवहारः, तुलान्तरेण तदीयगुरुत्वपरिच्छेदेन तु तत्र प्रमेयत्वव्यवहारः, तथेन्द्रियादेरपि प्रमाणत्वप्रमेयत्वव्यवहार इति हि तदर्थः, तत्र च क्रिययोः कर्मकरणयोश्च भेदः स्फुट एव। तन्निष्ठकर्मत्वनिरूपकक्रियानिरूपितकरणत्वव्यवहारस्य तु तत्र गौणतया वक्तव्यत्वात्। यथा "बन्धुरात्माऽऽत्मनस्तस्य येनात्मैवात्मना जित"इत्यादौ। वस्तुतस्तु—आत्मा = कार्यकरणसङ्घातो येन वशीकृत आत्मनैव = विवेकयुक्तेन मनसैव, तस्यात्मनो मुमुक्षोर्जीवस्य आत्मा = बाह्यप्रवृत्तिरहितं मनः हितकरमित्येव तदर्थ इति भावः। क्वेति। यद्दर्शनक्रियानिरूपितं कर्मत्वमावरणभङ्गादिरूपधात्वर्थता-

नादरं विधातुमुत्सहामहे। प्रमेयमात्रं करणमिति वदतो वामवुद्धेर्मनसि परिवर्तमानं प्रमेयमात्रे एव करणव्यवहारास्तित्वमेवमनुरोद्धव्यं स्यादिति। घटेन पश्यतीत्याद्यनभिधानवशान्न प्रयोगः, नहि सर्वं लाक्षणिकं प्रयुज्यते इति चेन्न; मास्तु, तदभावे कोऽन्योऽस्ति तेषु करणव्यवहार इति वक्तव्यः स स्यात्, नचासौ शपथदर्शन इति॥

वच्छेदकफलाश्रयत्वरूपं दर्शनविषयत्वरूपं वा यदा यत्र घटे, न तदा तत्र तद्दर्शननिरूपितसाधकतमत्वम्, फलोत्पत्तौ व्यापारविगमेन फलोपधायकव्यापारवत्त्वरूपस्य तस्यासम्भवात्, उभयोर्विवक्षात्वेकर्तृकर्त्रैकस्यापि स्यात् मा चातिप्रसञ्जि केत्युक्तं कर्मत्वनिरासप्रस्तावे स्वप्रकाशवादे पुरा। निरुक्तकर्मत्ववति निरुक्तसाधकतमत्वारोपे तु घटेन पश्यतीति प्रयोगस्य भाक्तत्वमेव न तु मुख्यत्वम्। तथा च तद्दर्शनक्रियाकर्मत्ववति घटे तद्दर्शनक्रियाकरणत्वव्यवहारो मुख्यः स्यादिति मूलार्थः। एतेन—कर्मत्वकरणत्वयोः सामानाधिकरण्येऽप्यभेदाभावात्कर्मत्वेऽभिधेये कथं तृतीया स्यात्, करणत्वेऽभिधेये च कथं द्वितीया स्यात्, तत्र तयोरसाधुत्वात्, साधकतमत्वविवक्षायां तु घटेन पश्यतीति भवत्येव, स च न भाक्तः, मुख्येऽनुपपत्त्यभावादिति—निरस्तम्। प्रमेयमात्रे इति। यद्यपि प्रमेयत्वस्य चरमध्वंसादिसाधारण्यम्, तथापि करणत्वेनाव्यवह्रियमाणेऽपि तदभ्युपगन्तुश्चरमध्वंसादावपि तादृशे तदभ्युपगमो न पाण्डित्यनुदिति भावः। लाक्षणिकमिति। सूत्रसिद्धमित्यर्थः। अतिप्रसङ्गो नोद्धाव्योऽभिधानस्य समाश्रयादिति वैयाकरणोक्तेः, अतएव वचिरन्तिपरो न प्रयुज्यते इति। भङ्क्तुं प्रभुर्व्याकरणस्य दर्पं पदप्रयोगाध्वनि लोक एष इति च नैषधेऽप्युक्तम्। साधकतमत्वविवक्षायां च घटेन पश्यतीति लाक्षणिकमिति भावः। तदभावे = उक्तप्रयोगाभावे तेषु = कर्मादिषु। इदन्त्ववधेयम्—उक्तलक्षणघटकीभूतक्रियात्वं न धात्वर्थत्वं धातुत्वस्य क्रियावाचकत्वरूपत्वेऽन्योन्याश्रयापत्तेः, अन्यतमत्वस्य तु भेदकूटघटितत्वेनासर्वज्ञदुर्ग्रहत्वम्, वाच्यत्वसम्बन्धेन सङ्केतसम्बन्धेन वा धातुपदवत्त एव प्रकृतविषयत्वेन तेन सम्बन्धेन तद्वत्त्वस्यालक्षणत्वात्, सङ्केतेनैवोपपत्तौ धातुपदवाच्यत्वस्य स्वादावप्रामाणिकत्वाच्च वाच्यतादितदवच्छेदकयोरैक्यपर्यवसानाच्च। नच ण्वुलिनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकवत्त्वं तत्, तादृशोद्देश्यतावच्छेदकत्वेन लक्षणस्यापि धातुत्वस्य स्वरूपतो लक्ष्यतावच्छेदकत्वमविरुद्धमिति—वाच्यम्; तृजादिनिवेशेन विनिगमनाविरहात्। ण्वुल्तृजादिसकलकृत्प्रत्ययनिष्ठा विधेयता तु नैका काचिदिति सकलकृत्प्रत्ययोपादानस्याप्यसम्भवः कृत्प्रत्ययत्वेनोपादाने तु कृत्वप्रत्ययत्वयोरप्यनयैव रीत्या निरासावतारभाजनता, एवमेव लडाद्युपादानासम्भवोऽपि। क्रियात्वस्य धातुत्वस्य वाऽखण्डधर्मविशेषत्वे तु विषयवैलक्षण्यस्य प्रतीतौ प्रतीतिवैलक्षण्यस्य च विषये आयतमानत्वेनान्योन्याश्रयः। एवञ्च कृतिमत्त्वस्य रथादिसाधारण्याभावेन प्रकृतधात्वर्थप्रधानीभूतव्यापाराश्रयत्वस्यैव कर्तृत्वरूपतया वक्तव्यतया तस्यापि दुर्वचता, आश्रयतावच्छेदकनिरूपणापेक्षा च। एवमेव च वाच्यतासम्बन्धेन व्यापारपदवत्त्वस्याखण्डधर्मादेर्वा व्यापारलक्षणत्वेन धात्वर्थतावच्छेदकफलजनकत्वे सति धात्वर्थत्वस्यैव व्यापारत्वस्य वाच्यतया तस्यापि दुर्वचता, धातुत्वादिघटितत्वात्, व्यापारत्वस्यैव शक्यत्वे तदवच्छेदकत्वे चासङ्गतिः, अवच्छेदकान्तरञ्च दुर्वचम्। शक्यत्वत्वेनावच्छेद्यता स्वरूपतश्च व्यापारत्वस्यावच्छेदकतेति तु दुर्भणितिः, तथा सति भेदाभेदप्रसङ्गेनाद्वैतवादस्य शून्यवादस्य वाऽऽपत्तेर्बहुशोऽभिहितत्वात्। इच्छादिघटितशक्यत्वाप्रतीतावपि व्यापारत्वव्यवहारस्यानुभविकत्वाच्चेति। एतेन—यादृशार्थो विकरणविशिष्टयद्धातूपस्थाप्ययादृशार्थधर्मिकान्वयबोधनिरूपिततृतीयाज्ञानप्रयोज्यप्रकारताश्रयोऽनुभवसिद्धस्तादृशार्थस्तद्धातूपस्थाप्यतादृशार्थे करणत्वम्, यथा दात्रेण छिनत्तीत्यत्र धात्वर्थे छिदायां दात्रस्य व्यापारद्वारा जन्यत्वमिति—निरस्तम्;

क्रिययाऽयोगव्यवच्छेदेन सम्बन्धि कारणमित्यपि न । तथाहि—अयोगव्यवच्छेदो नाम योग एव पर्यवस्येदिति सम्बन्धेन सम्बन्धीत्युक्तं स्यादिति पौनरुक्त्यम् । यदा सम्बन्धीत्यनेन कालविशेषनियतसम्बन्धिताऽभिधीयते ततोऽन्यस्मिन्नपि काले सम्बन्धिताऽयोगव्यवच्छेदपदेन विवक्षितेति चेन्नैवम्; सम्बन्धीत्यनेन न कालविशेषनियता सम्बन्धिताऽभिहिता येन कालान्तरेऽलब्धसम्बन्धिताभिधानाय पदान्तरमुपादीयेत । अथोच्यते—सम्बन्धीत्यस्य सामान्यतोऽभिधायिनः कालविशेषनियतसम्बन्धमादायापि पर्यवसाने सार्थकत्वं भवत्येवेति कालान्तरेऽसम्बन्धितया व्यवतिष्ठमानं कर्त्राद्यपि करणं प्रसज्येत, तद्व्यवच्छेदाय कालान्तरे सम्बन्धिता पदान्तरेणाभिधीयत इति । नैवम्; तर्हि तेनापि कश्चिदेव कालान्तरे यदि सम्बन्धिताऽभिधीयते तदाऽपि तस्य सार्थकता सम्ब-

धातुत्ववद्धि करणत्वतृतीयात्वयोरपि पारिभाषिकयोरुक्तरीत्यैव दुर्वचत्वात् । लोके अन्यत्रादौ करणत्वाभिलापव्यवहारस्यादर्शनाच्च । व्युत्पत्त्यनुसारिणोऽनुभवस्य वस्तुव्यवस्थापकत्वाच्चेति ।

क्रियया = कार्येण सम्बन्धि । अयोगव्यवच्छेदोऽभावप्रतियोगित्वव्यवच्छेदः, व्यापकत्वमिति यावत्, शङ्खः पाण्डर एवेत्यत्रायोगव्यवच्छेदार्थकारेण शङ्खनिष्ठाभावाप्रतियोगित्वस्य पाण्डरत्वे प्रतीतेः । सम्बन्धान्वयभेदस्तृतीयार्थः । कार्यव्यापकत्वस्य कारकान्तरेऽपि सद्भावात्सम्बन्धित्वं सम्बन्धप्रतियोगित्वमेव विवक्षणीयम्, किन्तु स्वव्यापककार्यकत्वं सामग्र्यामतिप्रसक्तमिति स्वाव्यवहितोत्तरक्षणावच्छेदेन स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिकार्यको यो व्यापारस्तद्वत्कारणत्वं यदि विवक्ष्यते तदा व्यापाराधिकरणे करणे स्वोपधायकव्यापारवत्त्वसम्बन्धेनैव कार्यात्यन्ताभावस्यावृत्तितया वाच्यत्वात्तादृशव्यापारवत्कारणत्वस्यैव करणत्वमप्रतीचिती, एवं स्वव्यापककार्यकत्वमित्यत्रोक्तसम्बन्धेन व्यापकतायास्तादात्म्येन च व्याप्यतायाश्च विवक्षया सामग्र्यामतिप्रसक्तिवारणेऽपि । तस्माद्वस्तुविशिष्टकारणत्वं करणत्वम्, वैशिष्ट्यं स्वतादात्म्यस्वनिरूपितकार्यताविशिष्टनिरूपकताश्रयवृत्तित्वाभ्याम् । निरूपकतायां कार्यतावैशिष्ट्यं स्वावच्छेदकसम्बन्धावच्छिन्नस्वाश्रयनिष्ठनिरूपकतानिरूपिताधिकरणतावन्निरूपितत्व, स्वनिरूपितकारणतावच्छेदकसम्बन्धावच्छिन्नत्व, स्वाश्रयोपधायकव्यापाराव्यवहितप्राक्क्षणावच्छिन्नत्वेति सम्बन्धत्रयेण । अव्यवहितपूर्वकालवृत्तित्वसम्बन्धेन कार्यविशिष्टत्वस्यैव कार्योपधायकतापदार्थत्वेनास्य फलाव्यभिचारिव्यापारवत्कारणत्वेन करणलक्षणेन फलतोऽविशिष्टत्वेन तत्र वक्ष्यमाणेन फलानुपधायकव्यापारविशिष्टहस्ताद्यव्याप्त्यादिनैव दूषितमिदमिति द्रष्टव्यम् । परम्पराणां संसर्गताया अप्रामाणिकता, अननुगमः, उक्तरूपस्याज्ञानेऽपि करणत्वव्यवहारेण तस्यालक्षणत्वम्, अस्य व्युत्पत्त्यौपयिकत्वे तु व्यवहारौपयिकस्य लक्षणान्तरस्य वक्तव्यत्वापत्तिरित्येवमादिकं तु दूषणं स्पष्टमेव । यथाश्रुतं तु दूषयति तथाहीति । योग एवेति । अयोगशब्दो योगाभावपर इति भावः । कालविशेषनियतेति । कालविशेषावच्छिन्नेत्यर्थः । सम्बन्धोऽस्यास्तीत्येव सम्बन्धिपदव्युत्पत्तेरिति भावः । नेति । अयं दण्डसम्बन्धी भविष्यत्यभूद्वेत्यपि प्रयोगादिति भावः । कालान्तरे सम्बन्धितेति । पौनरुक्त्यस्यैवोद्भावितत्वेन तन्मात्रपरिहारे यत्नः, तेन स्वव्यापाराव्यवहितोत्तरक्षणे एव करणस्य फलसम्बन्धित्वेऽपि न क्षतिः । कालान्तरे इत्यस्य यावद्व्यापारसत्त्वमिति वार्थः । कर्त्रादेर्न यावद्व्यापारसत्त्वं फलसम्बन्धोऽपि तु करणस्येत्यभिमानः । स्वोपधायकव्यापारवत्त्वादिना फलवैशिष्ट्यलाभायायोगव्यवच्छेदपदम्, अन्यथा तादृशव्यापारजनकव्यापारवत्त्वादिना फलवैशिष्ट्यमादाय कर्त्रादावतिप्रसक्तिः स्यात्, सम्बन्धिपदं वा कारकत्वलाभार्थमन्यथा नित्यं स्वज्ञानं प्रतीश्वरस्य करणत्वं स्यादिति तु वक्तुं युक्तमासीत् । तेनापि = अयोगव्यवच्छेदपदेनापि । सम्बन्धिपदन्यायेन =

न्धिपदन्यायेन सामान्याभिधायिनो भवेदिति ततोऽपि कालान्तरेऽसम्बन्धव्यवच्छेदाय विशेषणान्तरमपि निवेशनीयं स्यात्। अथ यदा कदाचिदपि योऽयोगस्तस्य सर्वस्य व्यवच्छेदो विवक्षित इति; तर्हि सम्बन्धिपदे एवैषा विवक्षास्तु, कृतमधिकमुपादाय तद्विवक्षया। निषेधव्यवच्छेदेन सार्वत्रिकत्वलाभ इति चेन्न; निषेधव्यवच्छेदस्य विध्यनतिरेकार्थत्वेनाविशेषात्। तद्धर्मिकं सम्बन्धस्यासम्बन्धासामानाधिकरण्यं 'अयोगव्यवच्छेदेने'त्यनेनोच्यते इति चेन्न; तस्यापि सम्बन्धकाले तत्रासत्त्वोपगमात्। सर्वदेति चेन्न; यद्येवं नर्तिक करणासत्त्वकालेऽपि योग एव करणेन क्रियायाः ?। यावत्सत्त्वमिति चेत्तर्हि सम्बन्धीति व्यर्थम्, यावत्सत्त्वमयोगव्यवच्छेदेन यद्विशिष्टमुपलक्षितं वा तत्करणमित्येवास्तु, सम्बन्धीत्येव वा तथा विवक्ष्यतामित्युक्तमेव। अयमेवार्थः कयाऽपि कुसृष्ट्या सम्बन्धिपदसार्थकतामुपपाद्य यदि विवक्षितस्तदाप्युच्यते। कृत्तिकोदयक्रियायां रोहिण्यासत्तिरप्येवं करणं स्यात्, अनन्तरभाविनश्चतुर्दशस्य नक्षत्रस्योदयं प्रति पूर्वभाविचतुर्दश-

---

सम्बन्धिपदवत्। सार्वत्रिकत्वेति। नियमेन फलवत्त्वेत्यर्थः। सार्वदिकत्वेति पाठे तु यावद्व्यापारसत्त्वं फलवत्तेत्यर्थः। लाभ इति। ननु विवक्षामात्रेणेति शेषः। विध्यनतिरिक्तार्थत्वेन = विध्यनतिरिक्तत्वेन। अविशेषात् = उक्तफलवत्त्वरूपविशेषलाभाप्रयोजकत्वात्। तद्धर्मिकमिति। तदवच्छेदेनेत्यर्थः। तदा लक्ष्यपरामर्शः। निरूपकताविशेषो वाऽत्र धर्मिता। तथाच तत्फलसम्बन्धनिष्ठस्य स्वाभावसामानाधिकरण्यस्यानिरूपकत्वं तत्फलकरणत्वमित्यर्थः। कर्त्रादेस्तु फलसम्बन्धविरहदशायामपि व्यापृतत्वेनोक्तसामानाधिकरण्यनिरूपकत्वमेवेति भावः। फलसम्बन्धकालावच्छेदेन कर्त्रादेरपि तादृशनिरूपकत्वविरहितया तत्रातिव्याप्तिरित्याह तस्येति। तादृशनिरूपकत्वस्येत्यर्थः। तत्र = कर्त्रादावपि। इदमुपलक्षणम्—करणस्यापि व्यापारशून्यतादशायां तदाद्यक्षणे च फलविरहवत्तयोक्तसमानाधिकरण्यनिरूपकत्वेनासम्भवोऽपि द्रष्टव्यः। सर्वदेति। तादृशसमानाधिकरण्यानिरूपकत्वं तत्फलकरणत्वमिति शेषः। एवमग्रे यावत्सत्त्वमित्यत्रापि। व्यर्थमिति। यथाश्रुतेऽसम्भवस्याप्युपलक्षणमिदम्, यावद्व्यापारसत्त्वमिति विवक्षायामपि तं वक्ष्यति। विशिष्टमिति। कार्येणेत्यादिः। एतादृशयथाश्रुते कार्यविशिष्टत्वेन कारणत्वे आत्माश्रयाऽन्योन्याश्रयौ, कार्यवैशिष्ट्यस्य कारणतावच्छेदकावच्छिन्नसमवधानाधीनत्वादित्याशयेनोक्तमुपलक्षितमिति। उक्तनिरुक्तावेव तात्पर्यम्। कालिकव्याप्तिविवक्षया तत्कार्यव्याप्यसत्ताकत्वे सति तत्सम्बन्धित्वं वा तत्कार्यकरणत्वं विवक्षितम्। तेनाग्रिमदूषणपरग्रन्थस्य नासङ्गतिः। लाघवादाह सम्बन्धीत्येवेति। नित्ययोगेऽपि मतुपो विधानेनोक्तार्थलाभोपपत्तेरिति भावः। मतुपो नित्ययोगार्थकतायामयोगव्यवच्छेदपदस्य तात्पर्यग्राहकतयोभयसाफल्यमाशङ्क्याह अयमेवेति। कुसृष्ट्येति। कुकल्पनयेत्यर्थः। अर्थविशेषे पदान्तरतात्पर्यग्राहकस्यैव पदस्य तदर्थपरत्वौचित्यात्, अन्यथा तात्पर्यग्राहकतयाऽयोगव्यवच्छेदपदं प्रयुक्तमिति स्वकीयतात्पर्यग्राहकस्यापि विशेषणान्तरस्य प्रक्षेपापत्तावव्यवस्थाप्रसङ्गात्, अतएव यादिवाक्ये न लक्षणेति प्रवादस्यापि सङ्गतिरिति भावः। रोहिण्यासत्तिरिति। कृत्तिकोदयक्रियाकालीनत्वविशिष्टेत्यादिः। तेन रोहिण्यासत्तेः कृत्तिकोदयक्रियाव्यापकत्वेऽपि नासङ्गतिः। अतएव कृत्तिकोदयादहोरात्रज एवासन्नरोहिण्युदयोऽनुमीयते इति तत्र तत्रोक्तं सङ्गच्छते। तस्यास्तद्व्याप्यत्वे तु नियमेन रोहिण्यासन्नत्वेन कृत्तिकानामस्तमयानापत्तिः। अनन्तरेति। यथाऽनुराधापेक्षयाऽनन्तरभाविनः कृत्तिकानक्षत्रस्योदयसमये एव तत्पूर्वभाव्यनुराधास्तमयः। यद्यपि कृत्तिकाभरण्यश्विनीत्यादिक्रमेण गणने कृत्तिकापेक्षयाऽनुराधानां पञ्चदशत्वमेव, उत्तराषाढाश्रवणयोर्मध्येऽभिजितोऽपि सद्भावात्। अत-

सह्यनक्षत्रास्तमयस्य च करणत्वं स्यात्। नचैवमेव युक्तम्, यौगपद्येन कारणत्वानुपपत्त्या कारकत्वस्य दूरनिरस्तत्वेन करणत्वस्य सम्भावनानारोहात्। न च तत्र सम्बन्ध एव नास्ति; व्याप्तेः स्वभावसम्बन्धात्मिकाया दुरपह्नवत्वात्। अथ कार्यकारणभावः सम्बन्धो विवक्षितः; न, सामग्र्याः करणत्वापत्तेः। ओमिति चेत्; तत्किमोमित्यभिधायैव निर्वृत्तो भवान्? आकलितं किलास्माभिः सामग्र्यपि करणमित्यत्र न श्रद्दधतः प्रणवपूर्विकां श्रुतिमेव काञ्चित्पठित्वा श्रद्धापयिष्यति भवानस्मानिति।

न सामग्री कारणं किन्तु तदेकदेशो नानाभूतः प्रत्येकं तथा, सामग्री तु यदनन्तरं कार्यं भवत्येवेत्येतावन्मात्ररूपेति चेन्न एतादृशस्य सामग्रीलक्षणस्य करणेऽपि सत्त्वात्करणस्यापि सामग्रीत्वापातात्, क्रियाया विभागादौ विभागस्य च संयोगनाशादि प्रति तथात्वापत्तेः। यच्च प्रतिसामग्र्येकदेशं नियतप्रागभावादि कारणलक्षणमिष्यते तत्सामग्र्यामपीति कथं तदकारणता?। प्राक्कालमन्तर्भाव्य सामग्री, तादृश्याश्च तस्याः प्राक्सत्त्वमेव

एव मध्यगतनक्षत्रदर्शनेन तत्पश्चिमभाविनोऽष्टमस्यास्तमयः पूर्वभाविनश्चाष्टमस्योदयोऽनुमीयते इत्यन्यत्रोक्तम्, अन्यथा धनिष्ठाशतभिषेत्यादिक्रमेण गणने मध्यगतधनिष्ठापेक्षया कृत्तिकानामुदयमासादयन्तीनामष्टमत्वसम्भवेऽपि तदाऽस्तमयमासादयन्तीनामनुराधानां धनिष्ठाश्रवणोत्तराषाढेत्यादिक्रमेण गणने सप्तमत्वमेव स्यान्नत्वष्टमत्वम्। तथापि "उत्तराषाढतुर्यांशं श्रुतिपञ्चदशांशकम्। कथितं चाभिजिन्मानं पुराणगणकोत्तमै"रित्युक्त्याऽभिजितो नक्षत्रान्तरशेषत्वेन पृथग्गणनामनादृत्य चतुर्दशत्वाभिधानम्। एवञ्चोक्तोदयास्तमययोः कार्यत्वेन परस्परव्याप्यसत्ताकत्वेन च परस्परकारणतापत्तिः एवं तद्रूपादिव्याप्यसत्ताके तद्रसादावप्यतिप्रसङ्गो द्रष्टव्यः। स्वभावेति। अनौपाधिकेत्यर्थः। धूमवान् वह्नेरित्यादाविव प्रकृते नोपाधिरिति भावः। अनौपाधिकत्वनिरुक्तिस्त्वनुमानागमने वक्ष्यते। कार्येति। तत्कार्यव्याप्यसत्ताकत्वे सति तत्कार्यकारणत्वं तत्कार्यकरणत्वमित्यर्थः। सामग्र्या इति। सामग्र्यव्यवहितोत्तरक्षणावच्छेदेन कार्यस्य तद्व्यापकत्वात्। कालिकव्याप्तिविवक्षायाश्चारम्भत्रापादकत्वेनाशक्यत्वादिति, भावः। न श्रद्दधत इति। सामग्र्याः करणघटितत्वं न तु करणत्वं मानाभावात्, व्यापारवत्त्वेव करणत्वव्यवहारादिति भावः।

भवत्येवेत्यत्र क्रियासङ्गतस्यापि एवकारस्य ज्ञानं विषयं गृह्णात्येवेत्यादाविवायोगव्यवच्छेदोऽर्थो नत्वत्यन्तायोगव्यवच्छेदः, तथाच यदव्यवहितोत्तरक्षणावच्छेदेन व्यापिका यदुत्पत्तिस्तस्य तत्सामग्रीत्वमित्यर्थः। नचैवमेकक्षणावच्छिन्नोत्पत्तिकानां समानसामग्रीकत्वापत्त्याऽभेदापत्तिः, यदुत्पत्तिरित्यत्र स्वकार्योत्पत्तिरित्युक्तौ तु सामग्र्याः कारणत्वस्वीकारप्रसङ्गः, स्वघटककारणनिरूपितकार्यताविशिष्टस्योत्पत्तिरित्युक्तौ तु मूले परतः कारणादावतिव्याप्त्युद्भावनस्यासङ्गतिः, एवं कारणकूटस्यैव सामग्रीत्वपर्यवसानेन तस्य चानतिरिक्ततया सामग्र्यामपि कारणत्वप्रसङ्गतादवस्थ्यञ्चेति वाच्यम्; यत्समानाधिकरणेत्यस्यापि वक्तव्यत्वात्। करणे = फलोपधायकव्यापारवति। व्यापारशून्यत्वस्यापि निवेशे नेयमतिव्याप्तिरित्यतो व्यापारे तत्सत्त्वे एवाह क्रियाया इति। संयोगेति। पूर्वेत्यादिः। पूर्वं क्रिया ततो विभागस्ततः पूर्वसंयोगनाशस्तत उत्तरदेशसंयोग इति प्रक्रियामाश्रित्येदम्। अव्यवहितोत्तरत्वविवक्षामकुर्वन्तं प्रत्याह पदद्वयसाफल्यम्। आदिमेनादिना पूर्वसंयोगनाशादेरुत्तरेण चोत्तरदेशसंयोगादेः परिग्रहात्। तथात्वेति। सामग्रीत्वेत्यर्थः। एवञ्च सति स्वव्यापारान्यतरनिष्ठनियतपूर्ववर्तितावच्छेदकावच्छिन्नत्वोभयस्यैव सामग्रीपदार्थतया वक्तव्यत्वात् तस्य च कारणलक्षणाक्रान्तत्वात्करणलक्षणस्यातिव्याप्तिरित्यभिप्रायेणाह यच्चेति। प्राक्कालमन्त-

नास्तीति चेन्न, अत एव प्राक्कालस्याकारणत्वात् कारणसामग्र्यां तदनिवेशात्। अपि चैवं चिरवृत्तिमपि करणं न स्यात्, नहि यावत्सत्त्वं व्यापारवतोऽपि तस्य क्रियाजनकत्वम्, क्रियाऽकाले क्षणमपि तदनुवृत्तिनिषेधे प्रमाणस्य दुरुपन्यासतया संशयेनापि लक्षणासिद्धेः, प्रत्युत चिरस्थिरकरसंयोगे स्पृश्ये स्पर्शप्रमाकरणस्पर्शनेन्द्रियसंयोगस्थैर्यस्य मन्तुमुचितत्वात्। यावत्सत्त्वं च कारणमिति भाषायां सर्वस्मिन् तत्सत्त्वकाले कारणत्वमित्यर्थः नच कारणत्वस्य नियतपूर्वकालसम्बन्धात्मकस्य क्वचित्काले सत्त्वम्, कालं प्रति कालान्तराभावादिति। अथ क्रियया ऽयोगव्यवच्छेदेन सम्बन्धीत्यस्यायमर्थो यस्मिन् सति भवत्येव क्रियेति; कोऽस्यार्थः? किं यस्मादनन्तरं क्रियोत्पद्यते एव? उत यस्मिन् वर्तमाने क्रियोत्पद्यते एव? उत यस्मादनन्तरं क्रिया तिष्ठत्येव? उत यस्मिन् वर्तमाने

---

भाव्य = प्राक्कालघटिता। नास्तीति। प्राक्कालस्य प्राक्कालावृत्तित्वादिति भावः। अयमेव 'अत एवे'त्यस्यार्थः। यदि च कालविशेषनियतनत्तत्फलादौ तत्तत्कारणस्य यद्विशेषयोरितिन्यायेन च कार्यसामान्ये कालत्वेन कारणताया आवश्यकत्वेन स्वरूपसम्बन्धविशेषोऽन्यादृशी वा सा कालसाधारणी निरुच्यते उपाधिभेदाधीना व्यवस्था वाद्रियते तदा कालघटितसामग्र्यामपि सा दुर्वारैवेति भावः। यत्तु—प्रागभावेतरकादाचित्कयावत्कारणप्रागभावानाधारः कार्यप्रागभावाधारः क्षणः सामग्री, क्षणश्चाकारणम्, कालोपाधीनां ह्यधिकरणत्वेन कारणत्वम्, अधिकरणत्वञ्चानेककालावस्थायिनामेवेत्यकारणत्वाच्च सामग्र्यामतिव्याप्तिरिति; तदपेशलम्, क्षणस्याधिकरणत्वानभ्युपगमे कार्यप्रागभावाधारत्वोक्तेर्व्याहतत्वात्, क्षणस्य क्षणत्वादेरप्यनधिकरणतापातात्च, सामग्री क्षणिकेति व्यवहारापलापापाताच्च, सामग्रीपदयोगार्थत्यागे मानाभावाच्च, तादृशक्षणस्यानेककार्यसाधारण्येन घटकारणकूटीयत्वेन तस्य घटसामग्रीत्वोपगमे घटकारणकूटस्यैव घटसामग्रीत्वौचित्याच्चेति भावः। एतेन तदव्यवहितप्राक्क्षणवैशिष्ट्यं तत्सामग्रीति परास्तम्। ननु तत्कार्यव्याप्यसत्ताकत्वदले कालिकव्याप्तिविवक्षायां सामग्र्याः कारणत्वेऽपि न तत्रातिव्याप्तिः, स्वाव्यवहितोत्तरक्षणे एव तया कार्यजननादित्याशङ्क्य तादृशविवक्षाया असम्भवापादकत्वमाह अपिचेति। व्यापारवतोऽपीत्यनेन कालिकव्याप्तिविवक्षया तत्कार्यव्याप्यसत्ताकव्यापारवत्कारणत्वमपि न लक्षणमिति सूचयति। फलीभूतक्रियाविरहकालेऽपि करणव्यापारस्यानुवृत्तिः = सद्भावोऽस्तीति मया वाच्यम्, तन्निषेधे च प्रमाणं त्वया दुरुपन्यासमित्यर्थः। असिद्धेरिति। अत एवानुमितिग्रन्थे भट्टाचार्यैरतिव्याप्तेः सन्देहेनापि तद्वारकविशेषणदानौचित्यं समर्थितम्। अभ्युपेत्यवादश्चायं वस्तुतस्तु प्रकृतेऽसम्भवनिश्चय एव, व्यापारस्य तद्वतो वा क्रियाजनकत्वेन तदव्यवहितप्राक्क्षणे सद्भावावश्यम्भावादिति। क्रियाप्रागभावकाले व्यापारानुवृत्तिनिश्चयस्थलमाह प्रत्युतेति। चिरं स्थिरः करसंयोगो यत्र। स्पर्शप्रमाकरणं त्वगिन्द्रियं तद्व्यापारो विषयसंयोगः। उचितत्वादिति। तथा चासम्भवसन्देहेऽपि व्याप्तस्थले व्यापारसत्त्वेऽपि फलाभावेनाव्याप्तिर्निश्चितैवेत्यर्थः। सप्तमकारकस्वीकारस्त्वसङ्गत इत्युक्तम्। इति भाषायां = इतिवाक्यप्रतिपाद्यः। तत्सत्त्वेति। तदा लिलक्षयिषितव्यक्तिपरामर्शः। स्वसत्ताव्यापककारणताकत्वमित्यत्र कारणता यद्युपधायकता, तदाऽसम्भव उक्तरीत्या, यदि योग्यता तदा कारणान्तरातिव्याप्तिरिति तु तत्त्वम्। तेन पूर्वकालसम्बन्धघटितस्य कारणतात्मकत्वे, कालस्य विशेषणतया निवेशमनादृत्योपाधितया निवेशे, उपाध्यात्मकस्थूलकाले तदात्मकसूक्ष्मकालवृत्तेरुपगमे वा नासङ्गतिः। उत्पद्यते एवेति। यदव्यवहितोत्तरक्षणत्वव्यापिका स्वकार्योत्पत्तिरित्यर्थः। द्वितीये यत्कालत्वव्यापकत्वं निवेश्यम्। एवमुत्तरत्रापि। सामग्र्या इति। क्रियादेरप्युपलक्षणम्, तस्य स्वाव्यव-

क्रिया तिष्ठत्येव ?। नाद्यः, सामग्र्याः करणत्वप्रसङ्गात्, हस्तादीनामकरणत्वप्रसङ्गात्, सुखदुःखादेः प्रमेयस्यापि प्रमाकरणत्वप्रसङ्गात्। नच प्रमेयमपि प्रमायाः करणं स्यादेवेति वाच्यम्; तत्र तथाव्यवहारस्य कस्यचिदप्यसिद्धेः। नापि द्वितीयः, स्पृश्येन सह स्थिरसंयोगस्य स्पार्शनेन्द्रियस्याव्यापनात्, तत्सत्त्वेऽपि व्यासक्तौ तेन प्रमानुत्पादात्। नापि तृतीयः, सामग्र्यादेः करणत्वप्रसङ्गात्, उत्पत्तेः स्थिरे कारणत्वप्रसङ्गाच्च। नापि चतुर्थः सहस्थायिनां करणत्वप्रसङ्गात्।

अथ क्रियायाऽयोगव्यवच्छेदेन सम्बन्धित्वं करणत्वमित्यस्यायमर्थः, व्यापारवतः फलाव्यभिचारित्वमिति। मैवम्; हस्ताद्यव्यापनात्। कश्चायं तद्व्यापारो नाम ? किं

---

हितोत्तरक्षणे विभागाद्युत्पादकत्वात्। सामग्रीक्रियादिभिन्नत्वनिवेशेऽप्याह हस्तादीनामिति। सतमकारकशङ्काशक्तिभयेन तेषां करणत्वेनावश्योपगन्तव्यानामपि कदाचिद्व्यापारवत्त्वेऽपि फलानुत्पादकत्वादिति भावः। भेदकूटस्यैव निवेश्यत्वेनोपलक्षणमिदमसर्वज्ञदुर्ज्ञेयत्वस्यापि। तत्कार्यसामग्रीसमवहितत्वतत्कार्याव्यवहितप्राक्क्षणावृत्तित्वोभयाभाववत्कारणत्वविवक्षायां नोक्तदोषः, उक्तहस्तादिषु सामग्रीसमवहितत्वाभावप्रयुक्तोभयाभावसत्त्वादित्यत आह सुखेति। प्रमाऽत्र साक्षात्कारः। उपलक्षणमिदं कर्त्रादावतिव्याप्तेरपि। प्रमेयं = तत्प्रमाविषयः। प्रमायाः = तत्प्रमायाः। स्थिरः संयोगो यस्य। क्षणिकसंयोगस्यातीन्द्रियत्वेन तद्गतस्वव्यापारसद्भावानिर्णयेन व्यापारवतापीन्द्रियेण फलं न जन्यते इत्यस्यालाभात्स्थिरत्वोक्तिः संयोगस्य। व्यासक्तिः = ज्ञानान्तरानुत्पादप्रयोजको मनःसंयोगविशेषः। सामग्र्यादेरित्यादिना क्रियासुखादेः परिग्रहः, तदनन्तरं विभागसाक्षात्कारादिरूपकार्यस्यावश्यम्भावात्। उत्पत्तेरित्यादिकं यदव्यवहितोत्तरक्षणत्वव्यापिका यत्कार्यस्थितिस्तत्तस्यां करणमिति यथाश्रुतार्थे, नतु कारणत्वस्यापि निवेशे। एवं सहस्थायिनामित्यादिकमपि। स्थिरे = उत्पत्त्यनन्तरस्थायिनं प्रति। एतेन क्षणिकपदार्थव्यावृत्तिः। सहेति। कारणत्वविवक्षायामप्ययमभवो द्रष्टव्यः।

व्यापारवत इति। तत्फलाव्यभिचारिव्यापारवत्कारणत्वं तत्फलकरणत्वमित्यर्थः। निर्व्यापारत्वेन सामग्र्यादावतिप्रसङ्गः। तत्फलाव्यभिचारित्वं न कालिकम्, व्यापाराद्यक्षणे फलविरहेणासिद्धेः, अपितु तत्फलाव्यवहितप्राक्क्षणवैशिष्ट्यमेव। हस्तादीनि। हस्तादेर्ज्वलनादिव्यापारे सत्यपि पाकस्य कदाचिदनुत्पत्त्या तद्व्यापारे फलाव्यवहितप्राक्क्षणवैशिष्ट्याभावादव्याप्तिः। नच—तत्र तस्याकरणत्वमेव, हस्तेन पचतीत्यादिप्रयोगस्य हेतुतृतीययैव निर्वाहात्, हेतुत्वस्य योग्यतासाधारण्यात्, पाके हस्तकरणकत्वबोधयिषया तादृशप्रयोगस्तु फलानुपधानस्थले न प्रामाणिक इति—वाच्यम्; हस्तादेः कर्त्रादावन्तर्भावासम्भवेन करणताया एवोपेतव्यत्वादित्युक्तत्वात्। एवं व्यासङ्गस्थले त्वगादिसंयोगस्य फलानुपधायकत्वेन त्वगादेः स्पार्शनादिकरणत्वानुपपत्तिः, ज्ञानादावात्मादेः करणत्वापत्तिश्च, तत्र तद्व्यवहारस्य कापि दर्शनेनेष्टापत्त्यनवकाशात्। अत एवाव्यवहितपूर्वत्वसम्बन्धावच्छिन्नप्रतियोगिव्यधिकरणफलाभावविशिष्टान्यत्कारणत्वं करणत्वमिति—निरस्तम्, सामग्र्यामतिप्रसक्तेश्च। अतएव तत्कार्यसामग्रीव्यासव्यापारवत्कारणत्वं तत्कार्यकरणत्वमित्यपि न युक्तम्; फलानुपधायकव्यापारे सामग्रीव्यासत्वस्याप्रामाणिकत्वात्, कारणमात्रस्य करणकुक्षिनिक्षेपेण परम्परया कारणतावच्छेदकतापत्त्या कारणतानुपपत्तिप्रसङ्गाच्च। अतएव तत्कार्यसामग्रीव्यासत्वतत्कार्यानुपधायकत्वोभयाभाववद्व्यापारवत्कारणत्वं तत्कार्यकरणत्वमित्यपि नाशङ्कनीयम्; हस्तादावव्याप्त्युद्धारेऽप्युक्तदोषात्, कर्त्रादावतिव्याप्तेश्च, अननुगमस्तु प्रसिद्ध एव दोषः। कार्यताकारणतयोर्निरासश्चतुर्थे वक्ष्यते, व्यापारतामिदानीं निराचष्टे कश्चेति। स्वजन्यत्वस्वजन्यजनकत्वाभ्यां

तज्जन्यं कारणम् ? उत तदाश्रयं कारणम् ?। नाद्यः, लिङ्गपरामर्शे तदसम्भवात्। पक्षे प्रथमधूमादिदर्शनस्य व्याप्तिस्मृतिद्वारा द्वितीयलिङ्गपरामर्शं जनयतः कारणत्वमेष्टव्यम्, एवञ्च परमार्थतो व्याप्यस्य स्वरूपेण प्रमितिर्द्वितीयव्यापारतत्परामर्शव्यापारिकाऽनुमानमिष्यत इति चेन्न; अन्यतो जाताग्निधूमादिव्याप्तिस्मृतौ सत्यां पक्षगतप्रथमधूमादिदर्शनस्य तद्व्यापारकत्वासिद्धेः। तत्राप्युभयकर्मजसंयोगवत्तदपि कारणमिति चेन्न; अभावादिसा

---

स्ववृत्तित्वस्वजन्यजनकत्वाभ्यां वा वस्तुविशिष्टत्वमित्याशयेन विकल्पद्वयम्। करणकर्मादावतिव्याप्तिवारणायोभयत्र प्रथमः सम्बन्धः। लिङ्गपरामर्शस्यानुमितिकरणतोपगन्तृप्राचीनमतेन दूषणमाह लिङ्गेति। तदसम्भवात् = निरुक्तव्यापारवत्त्वासम्भवात्, लिङ्गपरामर्शाव्यवहितोत्तरक्षणे ह्यनुमित्युत्पत्तिरिति संस्कारस्तज्जन्योऽपि नानुमितिजनकः; अनुमित्युत्पत्तिक्षण एवोत्पन्नत्वादिति न स व्यापारः, तर्कस्तु धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादिति व्याप्तिग्राहको वा, पर्वतो यदि निर्वह्निः स्यान्निर्धूमः स्यादिति परामर्शग्राह्याभावापादको वा कथञ्चिदसम्भवदनुमितिजनकताकोऽपि न परामर्शजन्य इति न सोऽपि व्यापार इति भावः। वक्ष्यति चैतदुपरिष्टात्स्वयमेव। शङ्कते पक्षे इति। प्रथमेति दर्शनान्वयि। चरमलिङ्गपरामर्शस्य करणतामेव न मन्महे, येन निर्व्यापारतया सा भज्येत, किन्तु स व्यापारः. करणता तु तज्जनकस्य प्रथमस्य पक्षधर्महेतुदर्शनस्येति भावः। व्याप्तिस्मृतिद्वारा द्वितीयलिङ्गपरामर्शं व्यापारं जनयतः = द्वितीयलिङ्गपरामर्शरूपव्यापारजनकव्याप्तिस्मृतिजनकत्वे सति तादृशपरामर्शजनकस्य। तथाच चरमपरामर्शरूपव्यापारजनने व्याप्तिस्मृतेः प्रथमलिङ्गदर्शनव्यापारतालाभेनाग्रिमदूषणग्रन्थसामञ्जस्यम्। एवं च = प्रथमलिङ्गदर्शनस्य व्याप्तेः स्मृतिजनकत्वेन तद्विषयकत्वे च। परमार्थतः = वस्तुगत्या व्याप्यस्य स्वरूपेण धूमत्वादिना प्रमितिः = व्याप्यतावच्छेदकतया पूर्वं गृहीतो यो धर्मस्तत्प्रकारिका प्रतीतिरिति यावत्, तेन धूलीपटलादौ धूमत्वादिभ्रमजन्यायाः वस्तुतो वह्निमद्विषयकाया अनुमितेर्नाकरणत्वापत्तिः। द्वितीयेत्यादि। तदा लिङ्गपरामर्शः। व्याप्तिविशिष्टस्य पक्षे वैशिष्ट्यावगाही, व्याप्तिविशिष्टे वा पक्षधर्मतावैशिष्ट्यावगाही यो द्वितीयपरामर्शस्तद्व्यापारिकेत्यर्थः। पक्षविशेष्यकादिव व्याप्यविशेष्यकादपि परामर्शादनुमित्युत्पत्तेर्व्याप्यपक्षोभयवैशिष्ट्यावगाहिनिश्चयत्वेनानुमितिहेतुत्वादिति भावः। अनुमानम् = अनुमितिकरणम्। अन्यतोजातेति। अदृष्टाद्युद्बोधकाधीनोत्पत्तिकेत्यर्थः। सत्यां = कल्प्यमाणसिद्धायाम्, तद्व्यापारकत्वासिद्धेः = चरमपरामर्शरूपव्यापारजनने व्याप्तिस्मृतिव्यापारकत्वासिद्धेः। प्रथमलिङ्गपरामर्शस्य व्याप्तिस्मृतिं प्रति हेतुत्वाभावे तद्द्वारा चरमपरामर्शं प्रत्यपि हेतुत्वासम्भवेन न तद्व्यापारकतया करणत्वसम्भव इति भावः। ननु सम्भेदे नान्यतरवैयर्थ्यमिति न्यायेन मल्लयोः संयोगस्योभयकर्मजत्ववदुक्तस्मृतेरपि पक्षे प्रथमलिङ्गदर्शनादृष्टाद्युभयजत्वमेवेति नोक्तदोष इत्याशङ्कते तत्रेति। अदृष्टाद्युद्बोधकाधीनोत्पत्तिकव्याप्तिस्मृतावित्यर्थः। तदपि = पक्षे प्रथमलिङ्गदर्शनमपि। हेतुरिति। अन्यत्र व्याप्तिस्मृतिं प्रति तस्य हेतुतायाः क्लृप्तत्वादिति भावः। पक्षे लिङ्गदर्शनस्य तादृशस्मृतेः पुरा वर्तमानत्वे उक्तन्यायेन तस्य तद्धेतुतायाः सम्भवेऽपि तदभावकालिकतादृशस्मृतेस्तज्जन्यताया असम्भवदुक्तिकतया तस्य करणत्वानुपपत्तेः, अतएव चरमपरामर्शात्मकव्यापारजनने व्याप्तिस्मृतेर्व्यापारत्वाविवक्षायामपि न निस्तारः, प्रकारान्तरेण व्याप्तिस्मृतौ विशिष्टवैशिष्ट्यबोधसामग्रीसद्भावेन प्रथममेव व्याप्तिविशिष्टपक्षयोर्वैशिष्ट्यावगाहिनिश्चयोत्पत्तिसम्भवेन मध्ये व्याप्यविषयकलिङ्गदर्शनकल्पनाया निर्बीजत्वादित्यभिसन्धायाह अभावादीति। आदिना सम्बन्धसादृश्यादि। तेषां नित्यं प्रतियोगिसापेक्षत्वञ्च प्रतियोगिविशेषितत्द्बोधानां विशिष्टवैशिष्ट्यबोधात्मकतानियमेन प्रतियोगितावच्छेदकप्रकारकज्ञानजन्यज्ञानविषयतया

पेक्षविशिष्टप्रतिपत्तिवत्प्रागुपजातवह्निव्याप्तधूमस्मृतेः प्रथममपि योऽसौ वह्निव्याप्तः सोऽयं धूम इति परामर्शोपपत्तेः। नित्यसापेक्षेऽर्थेऽस्तु तथा, नान्यत्र प्रथमं तथेति चेन्न; प्रागुक्ततत्कारणोपपत्तौ नान्यत्रैवमिति नियमे प्रमाणस्याभावात्। तस्य व्यापाराभावान्नानुमित्युत्पादकत्वमेवेति चेत्, स्यादप्येवं यदि व्यापारवतः करणत्वमित्येव सिद्धं स्यात्। तत्र धूमादिनिर्विकल्पकस्य तद्व्यापारकस्य करणत्वमिति चेन्न; नित्यसङ्घटितार्थवद्विनाऽपि निर्विकल्पकं सविकल्पकोत्पत्तेरविरोधेन त्वदुक्तप्रक्रियानियमे प्रमाणाभावात्। नित्यसङ्घटितेष्वपि निर्विकल्पकं मंस्यत इति चेन्न; कारणान्तरादेव तदुपपत्तौ तत्र निर्वि-

---

स्वप्रतियोगितावच्छेदकप्रकारकत्वव्याप्याभावत्वादिप्रकारिताकविशेष्यिताकत्वेन। प्रागिति प्रथममिति च व्याप्यविषयलिङ्गदर्शनं विनैवेत्यर्थकम्। अयमिति पक्षधर्मतालाभाय। आकारे नादरः, वह्निव्याप्यधूमवान् पर्वत इति पक्षविशेष्यकस्यापि परामर्शस्य सम्भवात्। तथा = अभावत्वादिनाऽभावादिदर्शनानपेक्षप्रतियोगितावच्छेदकप्रकारकज्ञानाधीनज्ञानविषयता। अन्यत्र = सम्बन्धाद्यन्यमात्रपदार्थे, प्रथमं तथा = स्वदर्शनानपेक्षस्वविशेषणतावच्छेदकप्रकारकज्ञानाधीनज्ञानविषयता। अभावत्वादिनाभावादेः सप्रतियोगिकत्वेनैवानुभवेन प्रतियोगितावच्छेदकप्रकारकज्ञानस्य केवलाभावादिदर्शनाधीनोत्पत्तिकस्य प्रतियोगिविशेषिताभावबोधहेतुत्वं न वक्तुं शक्यते, अभावत्वादिनाऽभावादिबोधस्य प्रतियोग्यविषयकस्याप्रसिद्धत्वात्, अत एव तादृशबोधस्य निर्विकल्पकत्वानभ्युपगमः, पक्षे लिङ्गदर्शनस्य तु व्याप्यविषयकस्यापि सम्भवेन व्याप्तिविशिष्टवैशिष्ट्यावगाहिबोधात्प्राक् तस्य कल्पयितुं शक्यत्वेन तत्सापेक्षस्यैव विशेषणतावच्छेदकव्याप्तिप्रकारकस्मरणस्य व्याप्तिविशिष्टवैशिष्ट्यावगाहिबोधाधायकत्वमित्यभिमानः। तं निराकरोति प्रागुक्तेति। विशिष्टवैशिष्ट्यबुद्धित्वविशेषणतावच्छेदकप्रकारकनिश्चयत्वाभ्यां हि कार्यकारणभावो नान्यथा मानाभावात्, एवं च लिङ्गदर्शनस्य व्याप्तिमविषयीकुर्वाणस्य सम्भवेऽपि तत्सम्भवस्योक्तस्थले तत्कल्पनायामप्रयोजकत्वेन तेन विनैवोत्पन्नया व्याप्तिस्मृत्या विशिष्टवैशिष्ट्यबोधोत्पत्तिर्निराबाधेति भावः। तस्य = उक्तस्मृत्यधीनपरामर्शस्य नानुमित्युत्पादकत्वमेव, अनुमित्युत्पादकव्यापारस्याभावात्, नहि तादृशपरामर्श एव तत्र व्यापारः, व्यापारिणः प्रथमपक्षधर्मदर्शनस्याभावे तत्र तथात्वस्य वक्तुमशक्यत्वात्, नच व्याप्तिस्मृतेरेव तत्र व्यापारित्वम्, तस्यां करणताया निरसिष्यमाणत्वात्, नच चरमपरामर्शस्य कश्चिद्व्यापारः, तदव्यवहितोत्तरक्षणेऽनुमितेरेवोत्पत्तेरभ्युपगमादिति भावः। तत्र = अनुमितौ। तद्व्यापारकस्य = व्याप्तिविशिष्टपक्षोभयवैशिष्ट्यावगाहिनिश्चयव्यापारकस्य। नित्यसङ्घटितत्वं निरुक्तनियमापेक्षत्वमेव। विनाशीत्यादेस्तात्पर्यमुक्तम्। अविरोधेन = उपपन्नत्वेन। त्वदुक्तेति। नहि सविकल्पकानुभवत्वेन निर्विकल्पकत्वेन च कार्यकारणभावः, अभावादिबोधे व्यभिचारात्, विशिष्टबुद्धित्वेन विशेषणबुद्धित्वेन च कार्यकारणभावस्यानभ्युपगमे निर्विकल्पकस्याप्यसिद्धिप्रसङ्गात्, तदभ्युपगमे तु वह्निव्याप्यो धूम इत्यद्दष्टाद्यधीनस्मृत्यैवोक्तनिश्चयोपपत्तौ तत्र निर्विकल्पककल्पनायां मानाभावात्। किञ्च निर्विकल्पकमुक्तस्मृतेः पूर्वं चोत्तरं वा कल्प्येत, नाद्यः, तदेन्द्रियसन्निकर्षानियमात्, तादृशस्मृत्यनन्तरमुत्पत्स्यमानविशिष्टनिश्चयं प्रति तस्यानुपयुक्तत्वाच्च। न द्वितीयः, पूर्वं व्याप्यादेरुपस्थितत्वेन विशिष्टज्ञानसामग्रीसत्त्वेन तद्विषयकस्यैव धूमज्ञानस्य तदा वाच्यत्वेन तस्य निर्विकल्पकत्वानुपपत्तेः। वस्तुतस्तु घटज्ञानाद्घटविशिष्टबुद्धेर्वारणाय विशिष्यैव कार्यकारणभावस्य वक्तव्यत्वेन न निर्विकल्पके किमपि मानमिति ध्येयम्। नियमे = सत्त्वे। मंस्यते इति। तथा च व्यभिचाराभावेन प्रकृतेऽपि निर्विकल्पककल्पनसम्भव इति भावः। कारणान्तरात् = प्रतियोगितावच्छेदकप्रकारकज्ञानात्। तदुपपत्तौ = प्रतियोगि-

कल्पककल्पनायां प्रमाणाभावात्, प्रत्युत तत्सङ्घटनस्य स्वभावाननिरेकेणोपगमात्। तथापि यत्किञ्चित्तज्जनकं तदेव तत्रानुमितिकरणमास्तामिति चेन्न; तथेन्द्रियादेरनुमितिकरणत्वा-

विशिष्टाभावादिबोधोत्पत्तौ। अनुभवानुसारेणाभावादौ स्वप्रतियोगितावच्छेदकप्रकारकत्वव्याप्याभाव-त्वादिप्रकारिताकविशेष्यिताकत्वस्योपगन्तव्यत्वे तत्र निर्विकल्पकज्ञानं नोपयुज्यते. उपयुज्यते तु प्रति-योगितावच्छेदकप्रकारकज्ञानम्, तच्च सविकल्पकमेव, ततः परं हि न निर्विकल्पकसम्भवः, विशिष्टबोध-स्यैव सामग्रीसत्त्वात्; नवा ततः पूर्वम्, अनुपयोगात्मानाभावाच्च। अतएवोक्तं कुसुमाञ्जलौ "अवच्छेद-ग्रहध्रौव्या"दिति। अभावत्वप्रकारकबोधस्य प्रतियोगिविषयकत्वनियमादिति तदर्थः। उक्तं च चिन्तामणौ "सप्रतियोगिकोऽभावोऽनुभूयते न तु तन्मात्रम्, अतोऽभाववित्तिवेद्यत्वं प्रतियोगिनः प्रतियोगिज्ञाना-धीनज्ञानत्वं चाभावस्यानुभवसाक्षिकं गोसादृश्यव"दिति। तदाह प्रत्युतेति। तत्सङ्घटनस्य = अभा-वादौ प्रतियोगिविषयकज्ञानविषयत्वस्य भवद्भिः स्वभावाननिरेकेण = नियमेनोपगमात, तथाचाभावादौ निरुक्तप्रकारिताकविशेष्यिताकत्वस्योपगमः पर्यवस्यति। एवञ्चाभावत्वप्रतियोगित्वयोरनुपस्थितयोरेवा-भावबोधविषयत्वं स्वीकार्यं पूर्वं तदुपस्थापकाभावादिति भावः। तज्जनकं = व्याप्तिविशिष्टपक्षोभय-वैशिष्ट्यावगाहिनिश्चयजनकम्। तत्र = प्रथमपक्षधर्मदर्शनानपेक्षव्याप्तिस्मृतिस्थले। आस्तामिति। तथा च तत्र क्लृप्तस्यैव करणत्वमनुमितिमात्रे कल्पनीयमिति भावः। तथेन्द्रियादेः = तादृशनिश्चय-जनकेन्द्रियादेः। आदिना व्याप्तिज्ञानलिङ्गयोः परिग्रहः। ननु यद्यपि लिङ्गं न करणम्, अती-तादिसाधारण्याभावादित्यग्रे मूले एव वक्ष्यमाणत्वात्। अभावज्ञानार्थं प्रतियोगिज्ञानस्यावश्यकत्वेन तत्र धूमध्वंसादेर्लिङ्गत्वानौचित्यात्, शाब्दस्मृत्याद्यात्मकपरामर्शं प्रति लिङ्गस्याकारणत्वात्तद्व्यापारकतया कर-णत्वासम्भवाच्च, अन्येन, परामृश्यमानलिङ्गात्परामर्शरहितान्यपुरुषस्यानुमितिप्रसङ्गवारणाय तत्तत्पुरुषी-यानुमितिं प्रति तत्तत्पुरुषपरामर्शविषयलिङ्गत्वेन कारणताया वक्तव्यत्वेनानन्तकार्यकारणभावकल्पना-पत्तेश्च। नहि समवायेनानुमितिं प्रति लिङ्गस्य स्वप्रकारकपरामर्शसमवायित्वसम्बन्धेन हेतुता शक्य-वचना, परामर्शस्य कारणतावच्छेदकसंसर्गघटकतापत्तेः। नापि व्याप्तिज्ञानं करणम्, तत्र यद्यपि कार्य-कारणभावस्यात्मनिष्ठप्रत्यासत्त्या कल्पनीयत्वेन नानन्त्यम्। नापि परामर्शस्य स्मरणात्मकत्वस्थले विशेषणतावच्छेदकप्रकारकज्ञानविधया व्याप्तिग्रहस्य तद्धेतुत्वप्रयुक्तानुपपत्तिः, तत्र प्राचीनव्याप्त्यनुभव-स्यैव संस्कारद्वारा परामर्शहेतुत्वात्, विशिष्टव्याप्तेरनुपस्थितावपि विशेष्ये विशेषणमिति न्यायेन पराम-र्शादनुमितिस्थलेऽपि नियतपूर्वोपस्थितिकव्याप्तिघटकाभावत्वादितत्तत्पदार्थज्ञानत्वेनैव कारणत्वसम्भवात्, तथापि व्याप्तिप्रकारकज्ञानस्यानुभवात्मकपरामर्शं प्रति कारणता विशेषणतावच्छेदकप्रकारकज्ञानत्वेनैव वाच्या, नचैतद्युक्तम्, प्रत्यक्षत्वादिविशेषरूपेण क्लृप्तकार्यकारणभावैरेव निर्वाहे तथाकार्यकारणभावस्या-प्रामाणिकत्वात्, विशिष्यैव तद्विश्रान्तेरुक्तत्वाच्च। किञ्च पक्षधर्मताज्ञानानन्तरं व्याप्तिस्मृत्यैव यत्रानु-मितिर्जाता, तत्र परामर्शव्यापारमादाय तस्याः करणतोपपादनासम्भवः। स्मृत्यात्मकपरामर्शस्थले क्लृप्तत्वादत्रापि व्याप्तिस्मृत्यनन्तरं परामर्शः कल्पनीय इति ब्रुवाणस्य तु ममाद्यपक्षधर्मताज्ञानोत्तरं व्याप्तिस्मृत्यैवानुमितिरुत्पन्नेति वदन्तं प्रति किमुत्तरं स्यादते मौनात्। सर्वत्र तत्कल्पने गौरवात्। परा-मर्शोत्तरं तत्प्रत्यक्षवारणायानुमितिसामग्र्याः प्राबल्यस्य त्वयाऽपि वक्तव्यत्वेन विशिष्टवैशिष्ट्यबोधस्य सामग्रीसद्भावेन सोऽपि स्यादित्यस्य वक्तुमशक्यत्वात्, तस्माद्व्याप्तिज्ञानं कारणमित्येव युक्तम्, व्याप्यता-वच्छेदकप्रकारकज्ञानस्य विशिष्टवैशिष्ट्यबोधस्य वा कारणतासमर्थनं तु दुराग्रहमात्रमिति व्यापारस्य दुर्विवेकत्वेन। धूमलिङ्गकपरामर्शाव्यवहितोत्तरपर्वतपक्षकवह्निसाध्यकानुमितित्वावच्छिन्नं प्रति परामर्शस्य

पत्तिरित्यलमतिविस्तरेणेति । शब्दश्रोत्रसन्निकर्षस्य च श्रोत्रव्यापारत्वप्रसङ्गात्, तथा च श्रोत्रस्य शब्दप्रतिपत्तावकरणत्वप्रसङ्गात्, सन्निकर्षो हीन्द्रियव्यापार उच्यत इति, व्यापारान्तरञ्च तस्य क्षणिकमसिद्धम्, स्थिरे चोक्त एव दोषः । शब्द एव तद्व्यापारः

विशिष्टविषयकत्वेन व्याप्तेस्तद्घटकपदार्थानां च विशेषणविषयकत्वेन कारणता वाच्या, नच विशिष्टविषयकत्वेन कारणत्वे केवलविशेषणादिविषयकत्वेन कारणत्वसम्भवः, व्याप्यधर्मपुरस्कारेण कारणतासम्भवे व्यापकधर्मस्यान्यथासिद्धत्वादकारणत्वादित्यपि वदन्ति । तथापि नेन्द्रियस्यानुमितिकरणत्वे किञ्चिद्बाधकम्, उक्तं हि शिरोमण्यादिभिः—"अस्तु मनस एवानुमितिकरणत्वम्, मनःसंयोग एव च जन्यज्ञानमात्रे व्यापारः, जन्यात्मविशेषगुणत्वावच्छिन्नं प्रति मनस्त्वेन करणतायाः क्लृप्तत्वात् । अतएव—ज्ञानत्वेनानुमितित्वावच्छिन्नं प्रति जनकता, अतिप्रसङ्गस्तु विशेषसामग्र्या वारणीय इति मतमप्यनादेयम् । मानसत्वप्रयोजकं तु न मनोऽसाधारणकारणकत्वं येनानुमितेर्मानसत्वं प्रसज्येत । किं तर्हि तत्प्रयोजकमिति चेत्; प्रयोजकं किं कारणं वा, कार्यं वा व्यापकं वा व्याप्यं वा, मानसत्वावच्छिन्नोत्पत्तिनियामकं वा, नाद्यम्, मानसत्वस्य जातित्वेन नित्यत्वात्, द्वितीयं तु मानसत्वविषयकप्रत्यक्षम्, तृतीयं तु प्रमेयत्वादि, तुरीयं तु मानससामग्रीजन्यत्वादि, पञ्चमं तु मानसत्वावच्छिन्नसामग्री"तीति रमणीयोऽनुमितेर्मनःकरणकत्वमार्ग इति चेन्न; मनोऽसाधारणकारणकज्ञानत्वस्य सुखादिज्ञाने प्रत्यक्षत्वव्याप्यत्वदर्शनेनानुमितेस्तत्त्वे प्रत्यक्षत्वापत्तेः, नच तथाव्याप्तावप्रयोजकत्वम्; अनौपाधिकत्वस्यैव प्रयोजकत्वात्, हेतोर्निरुपाधेः पक्षधर्मत्वे च बाधस्यानवकाशात्, एवञ्च प्रत्यक्षप्रमाणात् पार्थक्येनानुमानप्रमाणविभागभङ्गोऽपि भवताम् । नच करणैक्येऽपि करणताभेदेनैव प्रमाणभेदः, सच निरूपकभेदात्, निरूपिका च प्रत्यक्षप्रमितिक्रियाऽनुमितिक्रिया चेति वाच्यम्; उक्तरीत्याऽनुमितेः प्रत्यक्षत्वापत्तौ निरूपकभेदोपपादनानुपपत्तेः । किञ्च क्रियाभेदः सामग्रीभेदाधीन इति निर्विवादम्, किन्तु सामग्रीभेदोऽपि तद्घटकभेदेन परवानेव, तद्घटकेषु च प्राधान्यात्साधकतमकारकस्य तद्भेदेनैव प्रमाणविभागः समुचितः । व्याप्यत्वज्ञानस्य च कारकतामात्रेदुषः करणातिरिक्तान्तर्भावासम्भवाच्च । वस्तुतस्तूक्तरीत्या प्रत्यक्षत्वापादनवत्तदवच्छिन्नसामग्रीकत्वस्याप्यनुमितावापादनीयतया सामग्रीभेदोऽपि न स्यात्, तस्य क्रियाभेदेनैव कल्पनीयत्वादित्यवधेयम् । व्याप्तिविषयकोद्बुद्धसंस्कारपक्षधर्मताज्ञानयोरनुमितिहेतुत्वमिति तु न युक्तम्; संस्कारजन्यज्ञानत्वेनानुमितेः स्मृतित्वापत्तेः, अतएव प्रत्यभिज्ञाया अप्यंशे स्मृतित्वमनुमन्यन्ते, संस्कारोद्बोधे स्मृतेर्भव्याच्च, व्याप्तिज्ञानस्य परामर्शस्य वा स्मरणात्मकत्वस्थले तस्यापि कारणताकल्पने गौरवाच्च, कथञ्चिदुद्बुद्धसंस्कारव्याप्तिज्ञानयोः संस्कारोद्बोधकव्याप्तिज्ञानयोर्वैकशक्तिमत्त्वेन कारणताकल्पनेऽपि तद्व्यापारस्य दुर्निरूपत्वाच्च प्रस्तुतकरणलक्षणसङ्गतिः, करणस्य सव्यापारत्वनियमानभ्युपगमेऽपि फलोपधायकत्वस्यैव करणलक्षणस्य वक्तव्यत्वात्तस्य च निरस्तत्वादिति । तदेतत्सर्वं सूचयन्नाह अलमतिविस्तरेणेति । प्रसङ्गादिति । समवायस्य नित्यत्वाभ्युपगमेन श्रोत्राजन्यत्वादिति भाव । सन्निकर्षः = विषयेण सन्निकर्षः । तेन मनसा श्रोत्रसन्निकर्षस्यानित्यत्वेऽपि न क्षतिः । उच्यते इति । सच प्रकृते नित्य इति शेषः । क्षणिकम् = अनित्यम् । स्थिरे = नित्ये समवाये । शब्दः = कर्णावच्छिन्नशब्दः, तस्यैव कर्णावच्छिन्नगगनात्मकश्रोत्रजन्यत्वात् । तद्व्यापार इति । शब्दतद्ध्वंसयोः साक्षात्कारजनने इत्यादिः । शब्दसाक्षात्कारे जनयितव्ये शब्दस्य व्यापारतां निराकुरुते तस्येति । कर्मत्वेन = विषयतया कार्यतावच्छेदकत्वेन । करणकोटिबहिर्भावात् = करणतावच्छेदकत्वासम्भवात्, कारणत्वासम्भवादित्यपि द्रष्टव्यम् । तत्करणकबोधविषयत्वस्य तद्व्यापारत्वव्याप्तेस्तत्क्रियाकर्मत्वस्य तत्क्रियाकरणतानवच्छेदकत्वव्याप्तेश्च नय-

किन्न स्यादिति चेन्न; तस्य कर्मत्वेन करणकोटिबहिर्भावात्। क्वचित्तयोरेकत्वेऽपि का-र्यातिरिति चेन्न; शब्दबुद्धौ कार्यायामुपधायकत्वेन प्रविष्टस्य शब्दस्य करणव्यापारतया करणकोटावपि प्रवेशनेऽंशतोऽपि नियम्यनियामकत्वविरोधापत्तेः। घटादिबुद्धौ चक्षुरा-देश्चक्षुर्घटादिसंसर्गव्यापारवत्त्वेऽपि सममिदमिति चेत्; किन्नः स्यात्। तथा च—

बाधेऽदृढेऽन्यसाम्यात्किं ? दृढेऽन्यदपि बाध्यताम्।

---

नादिकरणकबोधकर्मणि रूपादौ दृष्टत्वादिति भावः। अत्राप्रयोजकत्वमाशङ्कते क्वचिदिति। अत्रेदम्बो-ध्यम्, यथा परामृश्यमानलिङ्गस्य करणत्वे परामर्शस्य करणतावच्छेदकत्वेन व्यापारत्वासम्भवमनुमेनिरे शिरोमण्यादयः, तथा व्यापारत्वेनाभ्युपगतं शब्दं प्रति शब्दविशिष्टत्वेन न कारणता। स्वं प्रति स्वा-वच्छिन्नजनकत्वानुपपत्तेः। नच शब्दप्रत्यक्षं प्रति शब्दविशिष्टत्वेन श्रोत्रस्य कारणत्वेऽपि शब्दं व्यापारं प्रति रूपान्तरेण जनकत्वं स्यादिति वाच्यम्; रूपान्तरं हि नाकाशत्वेन घटितम्, तस्य शब्दसमवा-यित्वादिरूपत्वात्तद्घटितरूपेण शब्दं प्रति कारणत्वानुपपत्तेः. नचान्यदपि सुवचम्। अष्टद्रव्यातिरिक्त-द्रव्यत्वेन कारणत्वेऽतिप्रसङ्गात्, मानाभावाच्च। यथाच शब्दप्रत्यक्षं प्रत्यपि शब्दविशिष्टत्वेन कारणत्वं न सम्भवति तथा वदन्नेवाप्रयोजकत्वशङ्कां निवारयति शब्दबुद्धाविति। उपधायकत्वेन = विष-यतया विशेषणत्वेन। करणकोटावपि = करणतावच्छेदकतयापि। कारणकार्ययोरैक्याभावादाह अंशत इति। स्वरूपसम्बन्धविशेषात्मा प्रयोज्यप्रयोजकभावो नियम्यनियामकत्वशब्देनाभिहितः। विरोधः = एकत्रानुपपत्तिः। तथाच स्वं यदि स्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकं स्वनिष्ठजनकताकजन्य-तावच्छेदकं वा स्यात्स्वभिन्नं स्यादित्यर्थः। यथा कारणतावच्छेदकावच्छिन्नसमवधानाधीनत्वेनान्योन्या-श्रयात् कार्योत्पत्तेर्न कारणतावच्छेदकान्तःपातिता तार्किकैरनुमन्यत इति व्यक्तं पक्षतागादाधर्याम्। तथा कार्यतावच्छेदकावच्छिन्नस्यैव कारणतावच्छेदकावच्छिन्नोत्तरत्वस्य वक्तव्यत्वात् कारणतावच्छेदकस्य कारणस्य वा स्वोत्तरत्वासम्भवेन न कार्यतावच्छेदकत्वं युज्यते। अतएव "कारणस्य कार्यतावच्छेदकत्वा-नुपगमा"दिति मङ्गलवादे दिनकरेणाप्युक्तम्। एवञ्चाव्यवहितोत्तरत्वसम्बन्धेन तल्लिङ्गकपरामर्शविशिष्टा-नुमितिं प्रति तल्लिङ्गकपरामर्शः कारणमित्यादिरीत्या कार्यकारणभावकल्पनमप्रामाणिकमेव, तथा सति तत्क्षणाव्यवहितोत्तरकार्यं प्रति तत्क्षणः कारणमितिरीत्यापि तत्कल्पनं किन्न रोचयेः, एवं च जितं सौगतैः, प्रस्थितं च कार्यकारणभावान्तरैः, आपतितं च लोकव्यवहारविरोधैः। सामान्यकार्यकारणभावस्य च विशेषकार्यकारणभावमूलकत्वाद्विफलत्वेन प्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितकारणतायाश्शब्दत्वेन शब्द-प्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितकारणतां विनाऽनुपपत्तेः। सामान्यकार्यकारणभावमात्रसत्त्वे च घट-प्रत्यक्षस्य पटादप्यापत्तेः। एवं च सामान्यकार्यकारणभावो निष्फलो नवेत्यन्यत्। शब्दप्रत्यक्षस्य कार्यत्वे विषयतासम्बन्धेनैव शब्दस्य तदवच्छेदकता, सम्बन्धान्तरेण कार्यतावच्छेदकतास्थले चोक्तरीति-रिति पक्षपातस्तु विषयविषयिभावानुपपत्तिजीवातुकसिद्धान्तकैर्नैवानुमोदनीयः। तथा च स्वं प्रति स्वघटितरूपेणेव स्वघटितरूपावच्छिन्नं प्रति स्वस्य कारणता कल्प्यमानापि न युक्तिमर्हतीति भावः। जात्यु-त्तरत्वाभिमानेनाशङ्कते घटादीति। इदम् = एकस्य जन्यताजनकतयोरवच्छेदकत्वानुपपत्तिरूपं दूषणम्। घटविषयकचाक्षुषत्वावच्छिन्नं प्रति घटसंयोगत्वेन कारणतया घटस्य जन्यतायां जनकतायाञ्चावच्छेद-कत्वात्, सम्बन्धभेदेनैकस्यापि जन्यताजनकतयोरवच्छेदकत्वं न दुष्यतीति तु प्रकृतेऽपि समानमिति भावः। किञ्चिदप्यवस्थापयतां न जात्युत्तरं किञ्चिदित्यभिप्रेत्याह किमिति। नः = अनिर्वचनीयवादि-नाम्। स्यात् = छिन्नं स्यात्। अस्मदुक्तं दूषणमदृढं वा दृढं वेति विकल्प्याह बाधे इति। अदृढत्व-

क्व ममत्वं मुमुक्षूणामनिर्वचनवादिनाम् ॥ ३३ ॥
तथाहि मिथिलानाथो मुमुक्षुर्निर्ममः पुरा ।
आहेदं मिथिलादाहे न मे किञ्चन दह्यते ॥ ३४ ॥ इति ।

नापि द्वितीयः, लिङ्गपरामर्शस्यानुमितावकरणत्वप्रसङ्गात्, निर्विकल्पकस्यापि तस्योपगमे सविकल्पकानाश्रयत्वात्, अतद्धेत्वाश्रयस्य तद्धेतुव्यापारत्वे चात्यापत्तेः ।

किञ्च, फलाव्यभिचारित्वं किं तस्मिन्नेव काले फलसत्त्वनियमः ?, उत तदनन्तरं फलसत्त्वनियमः ? । नाद्यः, कारणस्य पूर्वभाविताया अवश्यं वक्तव्यत्वात् । न द्वितीयः, आनन्तर्यं यद्यव्यवहितानन्तर्यं विवक्षितं तदा यत्किञ्चिद्व्यापारवतः करणत्वपक्षे हस्तादेरकरणत्वापातः, आफलव्यापारवतस्तु तथात्वे कर्त्रादिष्वतिव्याप्तिः । अथ व्यवहित-

---

साभासत्वम् । अन्यसाम्यात् = प्रकृतातिरिक्ते दोषाभाससत्त्वोपन्यासात्किम् । तथा सति दोषस्याभासताया एव दुरुपपादत्वौचित्यादिति भावः । इदन्त्ववधेयम्, शब्दतद्ध्वंससाक्षात्कारयोः शब्दस्य व्यापारत्वसम्भवेऽपि शब्दप्रागभावसामान्याभावयोः साक्षात्कारे न तस्य व्यापारत्वसम्भावनाऽपि, तयोरपि साक्षात्कारस्य प्रामाणिकत्वेनापलापानुपपत्तेः । तस्मात्तत्र कर्णशष्कुलीसंयोगस्य व्यापारत्वेऽन्यत्रापि तथैव, श्रोत्रमनसोःसंयोगस्यैव वा सर्वत्र व्यापारतेति नियम्यनियामकभावविरोधस्यात्र पक्षेऽसम्भवेन पूर्वोक्तानुमितौ व्यापाराव्यवस्थैव दूषणं सारमिति ।

स्ववृत्तित्वस्वजन्यजनकत्वाभ्यां वस्तुविशिष्टत्वं व्यापारत्वमिति कल्पं विकलयति नापीति । प्रसङ्गादिति । परामर्शजन्यजनकानां परामर्शावृत्तित्वादिति भावः । चक्रभ्रमणादेर्दण्डादाववृत्तित्वात्तत्राव्याप्तेश्चेदलक्षणमिदम्, वृत्तितावच्छेदकस्यानुगतसम्बन्धस्याभावात्, जनकताया वृत्तिनियामकत्वाभावात् । प्रथमलक्षणे एव पर्यवसानाच्च । निर्विकल्पकस्य पूर्वं निरस्तत्वेऽप्यभ्युपेत्यवादेनाह निर्विकल्पकस्येति । तस्य = लिङ्गज्ञानस्य । उपगमे = अनुमितिकरणत्वोपगमे । ननु प्रथमसम्बन्धानुपादाने लिङ्गनिर्विकल्पकजन्यजनकस्य सविकल्पकस्य लिङ्गनिर्विकल्पकव्यापारत्वसम्भव इत्यत आह अतद्धेत्वाश्रयस्येति । व्यापारतावच्छेदकसम्बन्धेन तद्धेतुत्वसम्बन्धस्येत्यर्थः । तद्धेतुजन्यस्येति यावत् । तथाच परस्परजन्यजनकतया सहकारिमात्रस्य परस्परव्यापारत्वप्रसङ्ग इति स्वजन्यत्वसम्बन्धनिवेशस्याप्यावश्यकत्वे प्रथमलक्षणखण्डनावतार इति भावः ।

किञ्चेत्यादि । फलसत्ताऽभाववत्कालावृत्तिव्यापारवत्कारणत्वमित्याद्यार्थः । स्वाव्यवहितोत्तरक्षणवृत्तिकभेदप्रतियोगितानवच्छेदकफलकव्यापारवत्कारणत्वमिति द्वितीयार्थः । भेदप्रतियोगितावच्छेदकता कालिकेन । अव्यवहितानन्तर्यम् = अव्यवहितोत्तरत्वम्, तच्चक्षणे स्वाधिकरणक्षणध्वंसानधिकरणत्वस्वाधिकरणत्वाभ्यां तदधिकरणक्षणध्वंसविशिष्टत्वम् । तदेति । अत्रोक्तलक्षणे व्यापारस्थाने यत्किञ्चिद्व्यापारेति निवेश्य नाव्याप्तिर्दीयते, सर्वस्य करणव्यापारस्य स्वाव्यवहितोत्तरक्षणवृत्तिभेदप्रतियोगितानवच्छेदकफलकत्वाभावेन यस्य कस्यचिदेव तथात्वात् । अपितु तादृशफलकप्रथमव्यापारककारणत्वं लक्षणमभिप्रेत्य । आफलव्यापारेत्यग्रिमकल्पे तु तादृशफलकयत्किञ्चिद्व्यापारककारणत्वमिति लक्षणे कर्त्रादावतिव्याप्तिर्दर्शितेति । आफलव्यापारः = फलाव्यवहितप्राक्क्षणवर्तिव्यापारः । अतिव्याप्तिरिति । कर्त्रादेरपि फलाव्यवहितप्राक्क्षणवर्तिव्यापारस्योक्तभेदप्रतियोगितानवच्छेदकफलकत्वात् । अथेति । स्वाव्यवहितोत्तरेत्यस्य स्थाने स्वाधिकरणक्षणध्वंसाधिकरणेत्येव वक्तव्यम्, तथाच प्रथमव्यापारनिवेशेऽपि हस्तादौ नोक्तरीत्याऽव्याप्तिः, फलाधिकरणक्षणस्य प्रथमव्यापाराधिकरणक्षणध्वंसाधिकरणत्वात्, किन्तु

स्याप्यानन्तर्यं विवक्षितम्, तथापि यत्किञ्चिद्व्यापाराभिप्रायेऽन्तरायसम्भवाद्धस्ताद्य-व्याप्तिः, आफलव्यापाराभिप्राये च व्यवधानासम्भवात् कारकमात्रं करणमित्युक्तं स्यात्। व्यापारवतश्च तत्फलाव्यभिचार इति किं तद्व्यापारस्य फलाव्यभिचारित्वम्? व्यापार-विशिष्टस्य वा?। नाद्यः, हस्ताद्यकरणत्वापातात्। अत एव न द्वितीयः, यागादेः स्वर्गा-द्यकरणत्वापाताच्च, अपूर्ववाक्यार्थत्ववादिनापि चरमं यागस्य फलकरणत्वाभ्युपग-मादिति।

अथोच्यते—यद्वानेव करोति तत्करणम्, यद्वानेव प्रमिमीते तत्प्रमाणम्। मैवम्,

---

यत्र प्रथमव्यापाराधिकरणक्षणध्वंसाधिकरणेऽपि क्षणे प्रतिबन्धकविशेषात्फलं नोत्पन्नम्, तत्राव्याप्तिः, कारकस्य हस्तादेः करणातिरिक्तेऽन्तर्भावासम्भवेनालक्ष्यत्वाभ्युपगमानुपपत्तेः, नहि कारकत्वमपि क्रियो-पधायकत्वरूपं येन तत्र तत्र स्यादित्याह **तथापीति**। यत्किञ्चिद्व्यापाराभिप्राये = प्रथमव्यापारस्यो-त्तलक्षणेऽनुप्रवेशे। अन्तरायसम्भवात् = प्रतिबन्धकसम्भवात्। यत्किञ्चिद्व्यापारस्य लक्षणघटकत्वे तु फलाव्यवहितप्राक्क्षणवर्तिनः कारकान्तरीयव्यापारस्यापि तादृशप्रतियोगितानवच्छेदकफलकतयाऽति-व्याप्तिः, उपधेयसङ्करेऽपि न्यायेन प्रत्यवस्थानाशक्यतया निवेदनादित्यनुशयेनाह **आफलेति**। **तद्व्या-पारस्येति**। फलाव्यभिचारिव्यापारवत्कारणत्वमित्यर्थः। अस्य प्राङ्निरस्तत्वेऽपि विकल्पे न्यूनता-परिहाराय पुनरभिधानम्। **व्यापारविशिष्टस्येति**। फलाव्यभिचारित्वे सति व्यापारविशिष्टकारणत्व-मित्यर्थः। **पाताच्चेति**। अपूर्वात्मकयागव्यापारस्य फलाव्यवहितप्राक्क्षणवृत्तित्वेऽपि यागस्यापूर्व-विशिष्टस्य तृतीयक्षणवृत्तिध्वंसप्रतियोगिनोऽतथात्वादिति भावः। ननु "कार्येऽसद्घटिताकारे करणत्वेन सम्मतः" इत्युक्तेः प्रभाकरमतेऽपूर्वं प्रति यागस्य करणत्वेन तदव्यवहितप्राक्क्षणवर्तित्वेन च न स्वर्गाद्य-करणतापत्तिर्दोषः, नच यागस्यापूर्वजनने निर्व्यापारतया नापूर्वनिरूपितस्यापि करणत्वस्य सम्भव इति देश्यम्, परमापूर्वं प्रत्येव करणतामासेदुषस्तस्योत्पत्त्यपूर्वव्यापारकत्वादितिशङ्कां नित्याधिकारे फलका-मिनोऽनधिकारित्वेनापूर्वस्यैव साध्यतया तत्प्रत्येव धात्वर्थस्य करणत्वेऽपि कामाधिकारे फलकामिन एव नियोज्यत्वेन फलकरणतामुपेयुष एव धात्वर्थस्य नियोगविषयतया यागे स्वर्गाद्यकरणतापातो दोष एवेत्य-भिप्रायेण परिहरति **अपूर्ववाक्यार्थत्ववादिनेति**। स्वर्गकामो यजेतेत्यादिवाक्यात् स्वर्गकामकर्तव्य-त्वप्रकारकबोधविषयीभूतं यागविषयकं कार्यमितिशाब्दबोधं स्वीकुर्वतेत्यर्थः। **चरममिति**। उक्तशाब्द-बोधानन्तरमित्यर्थः। यागस्य फलकरणत्वाभ्युपगमात् = यागविशेष्यकफलकारणत्वप्रकारकार्थिकबोधम-भ्युपगम्य यागे कारकान्तरात्मकत्वानुपपत्त्या करणत्वाभ्युपगमात्। अयम्भावः—वेदे क्रियाभिन्ने एव धर्मिणि कार्यत्वेन रूपेण शक्तिनिर्णयः, एवं च लोके क्रियाया एव धर्मित्वेन धातुत एव च तस्या लाभ-सम्भवेन कार्यत्वे धर्मे लिङादेर्लक्षणेत्यन्यत्। तथाच शक्तिग्रहपदार्थस्मृतिशाब्दबोधानां समानप्रकारकत-यैव कार्यकारणभावात् प्रथममज्ञातस्याप्यपूर्वस्य कार्यत्वेन रूपेण शाब्दविषयत्वस्य नानुपपत्तिः। किन्तु कामिनः प्रथमं काम्याव्यवहितसाधने एव कर्तव्यत्वप्रकारकबोधोदयेनापूर्वे कार्यत्वेन रूपेण तथाबोधो-दयेऽपि व्यवहितसाधने यागे प्रथमं न तथाबोधः, अपितु कार्यत्वावच्छिन्नविशेष्यताकोक्तबोधानन्तरमेव यागः स्वर्गकारणमिति बोधः, ततःपरं तु यागः कर्तव्य इति बोधः स्वर्गकामिन औचित्यावर्जित इति। केचित्तु चरमयागस्येति समस्तपाठमनुरुध्याग्नेयादिषु पूर्वपूर्वयागजन्यावान्तरापूर्वविशिष्टस्यान्तिमयागस्य फलकरणत्वाभ्युपगमादिति व्याचक्षते।

**यद्वानेवेति**। यत्सम्बन्धिताव्याप्यं यत्क्रियाकर्तृत्वं तत्त्वं तत्क्रियाकरणत्वमित्यर्थः। कर्तृत्वश्रौ-

आत्मधर्मध्वंसादीनामकरणानां प्रमाणत्वप्रसङ्गात्। येन क्रियाकारणेन युक्त एव प्रमिमीत इति चेन्न; सुखादिप्रमितौ तत्करणव्यापारस्यापि करणत्वप्रसङ्गात्। श्रोमिति चेन्न; अव्यापारतयाऽकारकत्वेन तद्विशेषकरणभावानुपपत्तेः। व्यापारवतापीति चेन्न; एवं हि व्यापारवत एव करणत्वं न स्यात्. नहि व्यापारवतस्तस्य व्यापारान्तरवत्त्वास्ति। अथ व्यापारवतो व्यापारांशमपहाय करणत्वम्, तत्र चास्त्येवेदं लक्षणम्, यस्य करणत्वमस्ति तस्य व्यापारवत्त्वमप्यस्तीति व्यापारवत्करणमुच्यते इति। न; पदमुद्यम्य निपात्य च प्रक्षालयतः स एव हि करणं स्यात्।

किञ्च, किं तस्य करणत्वमिति लक्ष्यभूतस्यावश्यं वक्तव्यत्वाद्युक्तलक्षणवत्त्वमेव तत् स्यात्तदात्माश्रयापातः स्यात्। स्वरूपमिति चेत्; स्वरूपस्य प्रतिकरणं भिन्नतयैक-

---

व्यापकत्वम् एवं परतोऽपि। आत्मेति। आत्मधर्मस्य सुखादिविशेषस्य क्रियाविशेषकर्तृत्वदशायां तद्ध्वंसप्रागभावयोश्च तत्तद्भेदप्रमेयत्वादिनाच क्रियामात्रकर्तृत्वदशायां प्रमातरि क्रियान्तरकर्तरि च यथासम्भवं नियमेन सद्भावादतिप्रसङ्गः। यत्पदार्थे प्रकृतक्रियाकारणत्वनिवेशे तदकारणेष्वनतिप्रसङ्ग इत्याह येनेति। क्रियाकारणेनेति। तत्प्रमाकारणेनेत्यर्थः। प्रमिमीते = तत्प्रमाकर्ता। तत्त्वं तत्प्रमाकरणत्वमिति शेषः। अदृष्टादावतिप्रसङ्गभङ्गाय कारणपदेनासाधारणकारणमेव ग्राह्यम्' सुखादिप्रमिताविति प्रमितिमात्रस्योपलक्षणम्, करणसामान्यलक्षणनिरासपरत्वे तु कार्यमात्रस्य। करणं मनःप्रभृति। व्यापारो मनःसंयोगादिः इदमुपलक्षणं सहकारिमात्रे सामग्र्यां चातिप्रसङ्गस्य। न च यत्प्रकृतक्रियाकारणसम्बन्धित्वव्याप्यमित्यत्र सम्बन्धित्वस्य करणतावच्छेदकसम्बन्धेन विवक्षायामनतिप्रसङ्ग इति वाच्यम्; सम्बन्धस्य न करणतावच्छेदकत्वेन निवेशः, आत्माश्रयात्, सर्वस्यापि सम्बन्धस्य क्वचित्क्वचित्करणतावच्छेदकत्वसम्भवेनातिप्रसङ्गतादवस्थ्याच्च। अपि तु विशिष्यैव। तथापि तु यत्क्रियायां करणतावच्छेदकसम्बन्धस्यैव व्यापारतावच्छेदकत्वं तत्र व्यापारादावतिप्रसङ्गो दुर्वार एव। "स्वव्यापारे हि कर्तृत्वं सर्वत्रैवास्ति कारके" इत्यभियुक्तोक्तेर्व्यापारवत्कारणं कारकमिति प्राचीनसिद्धान्तमनुसृत्याह अव्यापारतयेति। तादृशसिद्धान्तमनभ्युपगच्छतस्तु मते तत्र तत्राव्यापारतयाभ्युपगतानामेव करणतयाऽऽत्ममनःसंयोगस्यैव सुखादिसाक्षात्कारे करणत्वस्य वक्तव्यत्वेन तत्र सुखादेरपि करणतापत्तिः, समवायेनैवात्मनि संयोगसुखाद्योर्वृत्तेः। अत्रेष्टापत्तेरनवसर इत्यादि पुरा। यद्व्यापारवत्प्रकृतक्रियाऽसाधारणकारणसम्बन्धित्वव्याप्यं प्रकृतक्रियाकर्तृत्वमिति विवक्षया प्राचीनमतानुसारेणातिप्रसङ्गं वारयति व्यापारवतेति। कर्त्रादेस्तादृशकारणत्वेऽपि करणतावच्छेदकसम्बन्धेन तादृशसम्बन्धित्वविवक्षायां तत्रानतिप्रसङ्ग इत्यभिमतः। व्यापारान्तरवत्ता = व्यापारवत्ता। तदुक्तमुदयनाचार्यैः कुसुमाञ्जलौ "नहि व्यापारवन्तं व्यापार आश्रयते आत्माश्रयत्वा"दिति। व्यापारविशिष्टे व्यापारवत्तानुपपत्तावपि व्यापारोपहिते करणतयाभिमते व्यापारवत्ता सम्भवति विशेषणस्येवोपाधेर्विधेयान्वयित्वाभावादित्याशङ्कते अथेति। सः = पटः। करणतावच्छेदकसम्बन्धेन तादृशसम्बन्धित्वविवक्षायां मूकरीत्या सुखादावतिव्याप्तिः। सर्वत्र च कर्त्रादेः करणतावच्छेदकसम्बन्धेनैव कारणत्वमित्यस्यासम्भवदुक्तिकत्वेन तत्राप्यतिव्याप्तिर्द्रष्टव्या। व्यापारे कर्तृवृत्तित्वकर्मावृत्तित्वयोर्निवेशादिनातिव्याप्तिवारणे तु प्राङ्निरस्तेष्वेव लक्षणेषु पर्यवसानम्।

तस्य=करणत्वेनाभिमतस्य। लक्ष्यीभूतस्येति। लक्ष्यतावच्छेदकरूपेणेति शेषः। अवश्यमिति। अन्यथेतरभेदानुमाने आश्रयासिद्धेरिति भावः। तदेति। विधेयांशेऽधिकावगाहितयोपनयवाक्यात्प्राग्बोधासम्भवेऽपीति शेषः। आत्माश्रयेति। तद्विशिष्टे तस्य वृत्तौ तत्रापि तद्वृत्तेः प्रसक्त्येतर-

परित्यागेनापरत्र लक्षणं गतमित्यतिव्यापकं स्यात्, नहि चक्षुषः स्वरूपं श्रोत्रस्येति। किञ्चैवमिन्द्रियादेः प्रमाणत्वं न स्यात्, अतद्वतोऽप्यनुमात्रादेः प्रमातृत्वात्। नासौ प्रत्यक्षमिति चेन्न; नेदमपि हि प्रत्यक्षमात्रस्य लक्षणं भवता क्रियते। ननु यद्यपीन्द्रियादेर्विशेषतो व्यावृत्तिः, तथापि तज्जातीयकरणमात्रतया तज्जातीयमात्रस्याव्यावृत्तिरेव, न ह्यनुमित्यादावप्यकरणजातीयवान् प्रमिमीत इति। न; करणतया साधारणभावस्याद्यापि निर्णेतुमशक्यत्वात्।

अथ यां प्रमां यद्वानेव जनयति तस्यां तत्करणमिति; मैवम्, कौपीनाच्छादनादेरपि करणत्वप्रसङ्गात्। यज्जातिकामितिचेन्मैवम्, परोक्षजातीयां प्रमां लिङ्गवानेव शब्दवा-

---

भेदानुमाने स्वरूपासिद्धेरापत्तिरिति तदुपहिते तद्वृत्तिर्वक्तव्या, तथाचोपाधित्वविशेषणत्वयोर्विरुद्धत्वेन तस्य विशेषणत्वासम्भवे क्वापि स्वाश्रयोद्देश्यकविधेयान्वयित्वानुपपत्तिः। एवं लक्ष्यतावच्छेदकज्ञानस्य पूर्वमावश्यकत्वेन लक्षणाभिधानवैफल्यम्। किं करणमिति पृष्टे करणं करणमित्यस्योन्मत्तप्रलापत्वात्। उक्तलक्षणान्यजानतोऽपि किं करणमिति प्रश्नदर्शनेन तेषां लक्ष्यतावच्छेदकताया असम्भवदुक्तिकत्वाच्च। यथा च करणपदार्थत्वेनापि न लक्ष्यतोपपादनसम्भवस्तथोक्तमधस्तात्। अभ्युपेत्यवादेन तु किञ्चैवमित्यादिना दूषणान्तरं वक्ष्यति। अतिव्यापकमिति। उक्तलक्षणस्यानुगतत्वाभ्युपगमेनेदम्, वस्तुतस्तु तस्याननुगतयत्तादिघटितत्वेनाननुगम एव दूषणं सारम्। न स्यादिति। यद्यपि यथाव्याख्याते नायं दोषः, तथाप्यनुगतव्यवहारानुरोधेनानुगतलक्षणे यतनीयम्। नच यत्ताद्यघटितं क्रियाकर्तृत्वव्यापकसम्बन्धिताकव्यापारवदसाधारणकारणत्वमेव लक्षणमस्तु, क्रियात्वादिकञ्च कथञ्चिदनुगतं मन्तव्यमिति वाच्यम्; कस्यापि कारणस्य सम्बन्धितायाः क्रियासामान्यकर्तृत्वव्यापकत्वविरहेणासम्भवप्रसङ्गात्, तदिदमाह अतद्वत इति। इन्द्रियाद्यन्यतमासाधरणकारणकव्याभाववत्क्रियाकर्तुरित्यर्थः। तेन वस्तुत इन्द्रियादेः सत्त्वेऽपि नासङ्गतिः। असौ = तादृशाभाववत्क्रिया। अनुगमपक्षं विस्मृत्येयमाशङ्का। अनुगमपक्षं स्मारयन्नाह नेदमिति। तादृशसम्बन्धिताकव्यापारवदसाधारणकारणजातीयत्वं विवक्षणीयमिति नासम्भव इत्याशङ्कते नन्विति। अप्रसङ्गातिप्रसङ्गयोर्व्युदासाय करणत्वेनैव साजात्यस्य विवक्षणीयत्वादात्माश्रय इत्याह करणतयेति। साधारणभावस्य = साजात्यस्य। इदमुपलक्षणम्, उक्तलक्षणस्यानुगतत्वमभिमन्यमानेन सम्बन्धितायास्तत्तत्सम्बन्धैरनिवेशनीयत्वेन कारकान्तरेष्वतिव्याप्तेरिति, एवञ्च कारकत्वव्याप्यधर्मवत्त्वेन साजात्यविवक्षयापि न निस्तारः।

उक्तासम्भवादिव्युदासायागत्या यत्तद्घटितमेव लक्षणमादरणीयम्, यत्तादेश्चानुगतत्वमेव वाच्यम्, कथमन्यथा यत्तद्भ्यां गृह्यमाणाया व्याप्तेः सामान्यमुखत्वसङ्गतिरित्याशयेनाशङ्कते अथेति। वस्तुतस्तु यत्तादेरनुगतत्वे पूर्वयत्पदेन यादृशव्यक्तेर्ग्रहणं तादृश्या एवोपरितनेन तत्पदेनेत्यत्र नियामकाभावेनातिप्रसङ्गभङ्गाय शब्दस्वाभाव्यरक्षणाय चाननुगतत्वमेव तस्य, सामान्यमुखत्वे तु यत्तद्भ्यां गृह्यमाणाया व्याप्तेर्न मानमिति द्रष्टव्यम्। यत्प्रमाकर्तृत्वं यत्सम्बन्धित्वव्याप्यमित्यत्र द्वितीययत्पदार्थे प्रकृतक्रियाकारणत्वादिविवक्षणे पूर्वोक्तदिशैव दोषः, सम्बन्धित्वस्य सम्बन्धविशेषैर्विवक्षणे चाननुगमः, तथाऽविवक्षायां त्वाह कौपीनेत्यादि। गुह्याच्छादनादेरित्यर्थः। करणत्वेति। प्रमाविशेषे इत्यादिः। यज्जातीयप्रमासामान्यकर्तृत्वं यज्जात्यवच्छिन्नसम्बन्धित्वव्याप्यमित्यभिधाने प्रमाविशेषकर्तृताव्यापकसम्बन्धिताके आच्छादनादौ नातिप्रसङ्ग इत्याशङ्कते यज्जातिकामिति। प्रमां यद्वानेवेत्यादिकमनुषज्यते। लिङ्गेत्यादि शयमानस्य करणत्वमते। लिङ्गवत्ता च स्वविशेष्यकव्याप्यत्वप्रकारकज्ञानसमवायितया, न तु शब्दवत्तेव

नैव या जनयतीतिनियमाभावात्तस्याकरणत्वप्रसङ्गात्। साक्षात्कारित्वानुमितित्वादयो जातिभेदा विवक्षिता इति चेन्न; प्रत्येकमुपादाने भागाव्याप्तेः, सम्भूयोपादाने सर्वाव्याप्तेः, अनियमेनोपादाने च लक्षणाननुगमापातादिति। यदभावात्कर्तृकर्मणी क्रियां न जनयतस्तत्करणम्, तेन यदभावात्प्रमातृप्रमेये प्रमां न जनयतस्तत्प्रमाणमिति लक्षणमित्यपि न युक्तम्, किं प्रमातृप्रमेये सती यत्र न जनयतः, उतासती अपि। आद्येऽतीतानागतानुमानादिकरणाव्याप्तिः। नापि द्वितीयः, प्रमातृप्रमेययोरपि प्रसङ्गात्, यथाहि चक्षुराद्यभावा-

---

स्वज्ञानसमवायितया। तेन शब्दादेरपि क्वचिल्लिङ्गत्वेन लिङ्गजातीयत्वेन च न ग्रन्थासङ्गतिः। यद्वा लिङ्गपदं लिङ्गत्वपरम्, लिङ्गत्वं च व्याप्यत्वमिति तत्प्रकारकज्ञानवानेवेत्यर्थः। एवं शब्दपदमपि शब्दज्ञानपरम्। उपमित्यादिकरणस्याप्युपलक्षणमिदम्। अपरोक्षप्रमां प्रति त्विन्द्रियजातीयस्यैव करणत्वात्तत्राव्याप्तिर्नोद्भाविता। ननु परोक्षत्वेन साजात्यमादाय न दोषः, साजात्यस्याऽस्य साक्षात्कारित्वानुमितित्वादिना विवक्षितत्वादित्याशङ्कते साक्षात्कारित्वेति। अत्र साक्षात्कारिप्रमात्वावच्छिन्नकर्तृत्वं यज्जातीयत्वावच्छिन्नसम्बन्धिताव्याप्यं तत्प्रमाणमित्येवं लक्षणे प्रत्येकं साक्षात्कारित्वादिनिवेशो लक्ष्ये च प्रमासामान्यस्य निवेशो यदि विवक्षितस्तदाह प्रत्येकमिति। उक्तकर्तृत्वे व्याप्तिज्ञानत्वाद्यवच्छिन्नसम्बन्धिताव्याप्यत्वस्य, अनुमितिप्रमात्वावच्छिन्नकर्तृत्वे चेन्द्रियत्वाद्यवच्छिन्नसम्बन्धिताव्याप्यत्वस्याभावेनैकैकप्रमाणसङ्ग्रहेऽपि न प्रमाणचतुष्टयसङ्ग्रह इति भावः। साक्षात्कारिप्रमात्वानुमितिप्रमात्वादिचतुष्टयावच्छिन्नकर्तृत्वं यज्जातीयत्वावच्छिन्नसम्बन्धिताव्याप्यं तत्प्रमाणमिति विवक्षायामसम्भवः, तादृशकर्तृत्वस्येन्द्रियत्वाद्यवच्छिन्नसम्बन्धित्वविरहादित्याह सम्भूयेति। साक्षात्कारिप्रमात्वावच्छिन्नकर्तृत्वं यज्जातीयत्वावच्छिन्नसम्बन्धिताव्याप्यं तत्साक्षात्कारिप्रमाकरणमित्येवं लक्ष्यलक्षणयोर्विशिष्य निवेशे नोक्तदोष इत्यत आह अनियमेनेति। विशिष्येत्यर्थः। लक्षणाननुगमो लक्षणस्य प्रमाणचतुष्टयसाधारण्याभावः। एतेन साक्षात्कार्याद्यन्यतमप्रमात्वावच्छिन्नकर्तृत्वं यज्जातीयत्वावच्छिन्नसम्बन्धिताव्याप्यं तत्प्रमाणमित्यपि निरस्तम्; कर्त्रादावतिप्रसक्तेः। लक्ष्ये प्रमासामान्यकरणत्वनिवेशस्यासम्भवापादकत्वेन यत्किञ्चित्प्रमाकरणत्वनिवेशे यत्किञ्चित्त्वस्याननुगतस्याभावेनाननुगमतादवस्थ्यात्। अन्यतमत्वस्याखण्डस्यान्योन्याश्रयपराहतत्वेन सखण्डस्य च भेदानुयोगिप्रतियोगिविधया सकलप्रपञ्चघटितत्वेनासर्वज्ञदुर्ज्ञेयत्वात्। प्रमात्वस्य च विषयभेदभिन्नमूर्तिकत्वेन नानुगमवार्तापि। ज्ञानकरणत्वेन लक्ष्यत्वे साक्षात्कारित्वाद्यन्यतमावच्छिन्नकर्तृत्वविवक्षायामपि व्याप्त्यादेः साध्यादिभेदभिन्नमूर्तिकतया तज्ज्ञानत्वावच्छिन्नसम्बन्धित्वव्याप्यत्वस्य तादृशकर्तृत्वेऽभावादिति। यदभावादिति। यद्व्यापारवदसाधारणकारणासमवधानप्रयुक्तस्तत्प्रमाकर्तृकर्मनिष्ठस्तत्प्रमोपधायकत्वाभावस्तस्य तत्प्रमायां करणत्वमित्यर्थः। व्यापारेऽतिव्याप्तिवारणाय व्यापारवदिति। असाधारणकारणत्वं तु कार्यत्वानवच्छिन्नकार्यताकत्वमदृष्टादेर्व्युदासाय। तत्प्रमाकर्तृकर्मनिष्ठ इति विशेषणम्, तेन तयोरनतिविवक्षणीयम्। प्रमातृप्रमेययोः समवधानलाभार्थं तत्प्रमाकर्तृकर्म- व्याप्तिरिति भावः। किमित्यादि। यद्व्यापारवदसाधारणकारणासमवधानप्रयुक्ता तत्प्रमाकर्तृकर्मसमवधानकालिकी तत्प्रमानुत्पत्तिस्तस्य तत्प्रमाकरणत्वमिति प्रथमविकल्पार्थः। तत्प्रमाकर्तृकर्मसमवधानकालिकीत्यस्य स्थाने तत्प्रमाकर्तृकर्मासमवधानकालिकीति निवेश्य द्वितीयविकल्पार्थो द्रष्टव्यः। यद्व्यापारवदसाधारणकारणासमवधानप्रयुक्ता यत्प्रमानुत्पत्तिस्तस्य तत्प्रमाकरणत्वमिति तृतीयोऽपि विकल्पो बोद्धव्यः। तत्प्रमानुत्पादप्रयोजकाभावप्रतियोगित्वे सति कार्यतानवच्छिन्नकार्यताकत्वे च सति व्यापारवत्त्वं तत्प्रमाकरणत्वमिति यावत्। आद्ये इति। नचाद्यकल्पे कर्मपदानुपादाने नायं दोष इति वाच्यम्;

त्प्रमा न जायते, तथा प्रमातृप्रमेययोरप्यभावात्, अन्यथा तयोः कारणत्वमेव न स्यात्। एतेन सामान्यतोऽभिधानं प्रत्युक्तम्; अस्मदादिकर्तृसापेक्षेश्वरकर्तृके चास्मदादिज्ञानेऽस्मदादिकर्तृकरणत्वापत्तेः। एवञ्च सति प्रकारभेदेनापि प्रमाणप्रमात्रादिव्यवस्थासमर्थना कृता न स्यात्, येनैव रूपेण कर्तृत्वादिना तस्य प्रमायामन्वयस्तेनैव तद्व्यतिरेकस्य प्रमानुत्पत्तौ प्रयोजकत्वादिति।

चरमव्यापारवत्त्वं करणत्वमित्यपि न; व्यापाराभावाल्लिङ्गपरामर्शस्याकरणत्वापातात्। नच सविकल्पकव्यापारवतो निर्विकल्पकस्य तत्र प्रामाण्यम्; केवलविकल्पनीय-

---

तथासति साक्षात्कारकर्मण्यतिव्याप्तेः। प्रसङ्गादिति। एवञ्च कालिकान्तवैयर्थ्यमपीति भावः। तृतीयकल्पं निराचष्टे एतेनेति। कर्त्रादावतिव्यापकत्वेनेत्यर्थः। व्यापारे कर्त्राद्यवृत्तित्वविवक्षणे तूक्तं स्मरणीयम्। सामान्यतः = तादृशसमवधानकालिकत्वतादृशसमवधानाभावकालिकत्वाभ्यां विनिर्मुक्तम्। ननु तत्प्रमाकर्तृसमवधानकालिकस्तत्प्रमाकर्मभिन्नयद्व्यापारवदसाधारणकारणासमवधानप्रयुक्तस्तत्प्रमानुत्पादस्तस्य तत्प्रमाकरणत्वमिति विवक्षणे न कर्तृकर्मणोरतिव्याप्त्यादिकमत आह अस्मदादीति। कर्तृके इति। ईश्वरस्य कार्यमात्रं प्रति कर्तृत्वादिति भावः। अस्मदादिसमवेते घटादिज्ञाने। कर्तृकरणत्वापत्तेः = कर्तुः करणत्वापत्तेः। अस्मदादिकं विनाऽस्मदादिसमवेतप्रमाया ईश्वरेणानुत्पादनात्। प्रकारभेदेनापि = उपाधिभेदेनापि। उपधेयसाङ्कर्येऽप्युपाधीनामसाङ्कर्यादिति परसिद्धान्तादिति भावः। साङ्कर्यमभेदः। व्यवस्था = व्यपदेशभेदः। न स्यादिति। प्रमाणादिव्यपदेशभेदो हि प्रमाणत्वादिभेदेन, सच प्रमाणताद्यवच्छेदकभेदेन वा प्रमाणत्वत्वादिभेदेन वा, नाद्य इत्याह येनैवेति। एतेन प्रमाणताप्रमातृतावच्छेदकयोरैक्यप्रतिपादकस्य येनैवेत्यादिग्रन्थस्योक्तव्यवस्थाखण्डनपरत्वासम्भवादसङ्गतिः, तादृशव्यवस्थायाः प्रमाणत्वप्रमातृत्वभेदेनैव प्रयोज्यत्वात्तस्य च स्फुटत्वादिति नाशङ्कनीयम्। कर्तृत्वादिनेति। आत्मत्वादिनेत्यर्थः। कार्यत्वावच्छिन्नं प्रति द्रव्यत्वेनेव प्रमात्वावच्छिन्नं प्रत्यात्मत्वेन तार्किकमते समवायिहेतुतेत्याशयः, घटं प्रति कपालत्वेनेव तु तत्प्रमां प्रति चैत्रत्वादिना सेत्यभिप्रायेणादिपदमुपात्तम्। तस्य = अस्मदादेः। प्रमायामन्वयः = प्रमातृता। तत्प्रमाकर्त्रीश्वरसमवधानकालिके तत्प्रमानुत्पादे चैत्रत्वादिनैव चैत्राद्यभावस्य प्रयोजकतया तेनैव रूपेण प्रमाकरणतापर्यवसानात्, प्रमातृत्वस्यापि च तद्रूपावच्छिन्नत्वात्, नहि तत्प्रमानुत्पादप्रयोजकाभावप्रतियोगित्वघटितोक्तरूपेण तत्प्रमाकरणता शक्यवचना, तादृशरूपस्यैव करणतात्मकतया स्वस्य स्वावच्छिन्नत्वप्रसङ्गात्। द्वितीये तु प्रसक्तिरनवस्थायाः, स्वरूपभेदस्यापि वैधर्म्याविनाभूतत्वादिति भावः। ननु तत्प्रमाकर्तृसमवधानेत्यत्र कर्तृसामान्यस्य विवक्षितत्वादस्मदादेरपि तदन्तर्भावात्तत्समवधानकालिकेऽनुत्पादेऽस्मदाद्यसमवधानस्य प्रयोजकतानुपपत्तेर्नोक्तातिव्याप्तिरिति चेन्न; तथापि तत्प्रमीयत्किञ्चित्कर्मणो भेदस्य निवेशे नानाविषयकप्रमितिकर्मणां करणत्वापत्तिः, तत्प्रमीयकर्मसामान्यभेदनिवेशे तु स्मृत्यन्यत्वखण्डनोक्तदिशोभयाभावादिकमादायातिप्रसक्तिस्तत्तद्वारकविशेषणोपादानेऽनवस्थानादिति। एवं कर्मण्यतिप्रसक्तिं सूचयितुमेव प्रमाणप्रमात्रादीत्यत्रादिपदमुपात्तमिति।

लिङ्गपरामर्शस्येति। व्याप्तिज्ञानादेः करणता तु निरस्तेति भावः। सविकल्पकव्यापारवत इति। न कर्मधारयान्मत्वर्थीय इत्यस्यौत्सर्गिकत्वमिति भावः। तत्र = लिङ्गपरामर्शस्य करणत्वमते। प्रामाण्यम् = अनुमितिकरणत्वम्। केवलेत्यादि। अभावत्वादिना रूपेण सविकल्पनैकवेद्याभावादिविषयकपरामर्श इत्यर्थः। निरुक्तत्वमत्रैव प्रस्तावे एतत्। तदनुपपत्तेः = निर्विकल्पकत्वानुपपत्तेः; तथा च व्यापकाभावादिना व्याप्याभावाद्यनुमानं न स्यादित्यर्थः। उपलक्षणमिदम्, स्मृत्यात्मकपरामर्शस्य निर्वि-

लिङ्गविषये तदनुपपत्तेः, संस्कारादिपर्यन्तानुसरणे चानुमितेस्तज्जन्यत्वे प्रमाणाभावात्, कार्यहेतोश्च कारकाव्यापारत्वात् । अपि चाज्ञानकरणव्यापानात् । ननु लिङ्गमेव परामर्शव्यापारवत्तया करणमिति युक्तम्; अनुमितानुमानादौ परामर्शस्यालिङ्गजत्वेन तद्व्यापारत्वानुपपत्तेः ।| आप्तोक्त्यादिभिस्तत्रासीद्धूम' इति प्रतीत्या 'तदा तत्र वह्निरप्यासी'दिति यदनुमानं तत्रासत्त्वाद्धूमस्य परामर्शव्यापारवत्तया करणताया दूरनिरस्तत्वात् । किञ्च, यत्किञ्चिदपेक्षया, चरमव्यापारवत्त्वस्य सर्वकारकसाधारण्यात्,सर्वकारकापेक्षया चरमव्यापारवत्त्वस्य स्वापेक्षया चरमत्वानुपपत्त्या सर्वत्रासिद्धेः। कर्त्रपेक्षयेति चेन्नः कर्तृधर्मि-

कज्ञानजन्यत्वेन तेनानुमित्यनापत्तेः । संस्कारादिपर्यन्तानुसरणे = संस्कारस्य तर्कस्य वा परामर्शव्यापारत्वाङ्गमे । संस्कारः परामर्शजन्योऽपि नानुमितिजनकः, अनुमित्युत्पत्तिक्षणे पूर्वोत्पन्नत्वादिति न स व्यापारः, तर्कस्तु भवत्वनुमितेर्जनको मा वा, परामर्शेण स्वजन्य एवेति न सोऽपि व्यापार इति भावः । कार्यहेतोश्चेति कारकाजन्यस्याप्युपलक्षणम्, तज्जन्यस्य तज्जन्यजनकस्यैव तद्व्यापारत्वादिति । अपि चेत्यादि । प्रत्यक्षे इन्द्रियस्याज्ञातस्यैव करणत्वेनाज्ञातकरणकज्ञानत्वस्य प्रत्यक्षत्वनियतत्वेनानुमितेरपि परामर्शकरणकत्वे तथात्वेन प्रत्यक्षत्वापत्तिरित्याशयः । इदमापाततः—ज्ञायमानलिङ्गादेरनुमित्यादिकरणतोपगमेऽज्ञातकरणकज्ञानत्वस्य प्रत्यक्षत्वनियतत्वेऽपि परामर्शादिस्तथात्वोपगमेऽपि तस्य प्रत्यक्षत्वनियतत्वस्यानभ्युपगमनीयत्वात्, अप्रयोजकत्वाच्च । ज्ञाताकरणकज्ञानत्वं च तन्मते प्रत्यक्षत्वनियतमपि नानुमित्यादावित्यतिप्रसङ्गः, तस्मात्पूर्वोक्तमेव दूषणं सारम् । लिङ्गमेवेति । विशिष्टे कारणताग्राहकमानेन विशेषणेऽपि कारणताग्रहाल्लिङ्गपरामर्शस्य कारणत्वे लिङ्गस्य कारणताया अवश्यम्भावेन परामर्शव्यापारकत्वेन तस्य करणत्वसिद्धिः, परामृश्यमानत्वेन तस्यानुमितिहेतुत्वेऽपि परामर्शं प्रति विषयतयैव हेतुत्वमिति न विरोधः, फलव्यापारौ प्रत्येकरूपेण हेतुतायां मानाभावादिति । यत्र परामर्शोऽनुमितिशाब्दस्मृत्याद्यन्यतमात्मकः, प्रत्यक्षात्मकोऽपि वा लिङ्गांशे न लौकिकविषयताशाली, तत्र नादात्म्येन विषयत्वेन कारणतानिरूपितकार्यताया लौकिकविषयतासम्बन्धेनावच्छिन्नत्वात् लिङ्गस्य परामर्शजनकताया न तद्द्वारा करणतासम्भव इत्याह अनुमितानुमानादाविति । अनुमितमेवानुमानं = लिङ्गं = व्याप्यादिमत्तया प्रतीतमिति यावत्, अनुमानपदस्यानुमितिकरणार्थकत्वे तु व्याघातः । आदिना शाब्दादिप्रतीतं लिङ्गं ग्राह्यम् । तद्व्यापारवत्त्वानुपपत्तेरित्यन्वयः । तादृशस्थलमुदाहरति आप्तेति । आसीदिति । अतीतानागतस्थले धूमप्रमनागतेऽतीन्द्रिये श्रुत्याद्यनुमापके आचाराद्यनुमितिस्थल्यादौ च द्रष्टव्यम् । इति भावः । तत्रेति । धूमप्रागभावयोर्लिङ्गत्वसम्भवेऽपि शाब्दाद्यात्मकपरामर्शव्यापारकत्वासम्भव इति भावः । तत्रेति । करणताया इत्यन्वयः । अधिकं तूक्तम् । चरमत्वं व्यापारे फलोपधायकत्वं वा विवक्षितं व्यापारीजनकत्वं वा, उभयमपि निरस्तमेवेति प्रकारान्तराणि विकल्प्य निराकुरुते किञ्चेति । यत्किञ्चिदपेक्षया चरमव्यापारवत्त्वमिति । व्यापारोत्तरव्यापारशून्यकारणत्वमिति यावत् । सर्वकारकापेक्षया चरमव्यापारवत्त्वं = प्रकृतक्रियोपयिकयावद्व्यापारोत्तरव्यापारवत्कारणत्वम् । स्वापेक्षया चरमत्वानुपपत्त्या = स्वकीययावद्व्यापारापेक्षया स्वव्यापारे उत्तरत्वानुपपत्त्या । सर्वत्रासिद्धेः = असम्भवापत्तेः । कर्त्रपेक्षयेति । प्रकृतक्रियाकर्तृव्यापारोत्तरव्यापारवत्कारणत्वं वा प्रकृतक्रियाकर्तृव्यापारोत्तरचरमत्वं विवक्षितमिति शेषः । प्रकृतक्रियाकर्तृयावद्व्यापारोत्तरव्यापारवत्कारणत्वं वा प्रकृतक्रियाकरणत्वं विवक्षितम्, आद्ये कर्तृधर्मीति । द्वितीये व्यापारवदित्यादि । कर्तृव्यापारापेक्षयोत्तरत्वविवक्षायामित्यर्थः । तृतीये यावदित्यादि । कर्तृयावद्व्यापारापेक्षयोत्तरत्वविवक्षापक्षेऽन्यादि । कर्तृकव्यापारापेक्षयेत्यर्थः ।

मात्रापेक्षया विवक्षितत्वे कर्तरि प्रसङ्गनादवस्थ्यात्, व्यापारवत्कर्त्रपेक्षाभिप्राये च कर्तरि स एव प्रसङ्गः, एकव्यापारवत्कर्त्रपेक्षयाऽपरापरकर्तृव्यापारस्य चरमव्यापारत्वात्, यावद्व्यापारवत्कर्त्रपेक्षापक्षे तु विवक्षितमपि करणं न स्यात्; आफलसिद्धेः कर्तृव्यापाराविरामात्। व्यापारस्य विच्छेदे तद्धेतुलक्षणप्रक्षीणतापत्तेः। यद्व्यापारानन्तरं कारकान्तरं न व्याप्रियते तच्चरमव्यापारमिष्टमिति चेन्न; सेश्वरपक्षे कर्तृव्यापाराविरामात्तदानन्तर्यासिद्धेस्तत्करणत्वापातात्, अनीश्वरपक्षे चाक्षयोगादिभिरेव सव्यापारे कर्म-

पक्षे इत्यर्थः। ननु फलाव्यवहितप्राक्क्षणे न कर्तुर्व्यापारः, अपि तु करणस्येति तत्क्षणवृत्तिकरणव्यापारस्य कर्तृयावद्व्यापारोत्तरत्वेन नासम्भव इत्यत आह व्यापारस्येति। कर्तृव्यापारस्येत्यर्थः। विच्छेदे = फलाव्यवहितप्राक्क्षणेऽनभ्युपगमे। तदा कर्तृपरामर्शः। हेतुलक्षणस्यानन्यथासिद्धत्वघटितस्य कर्तृगतत्वानुपपत्तेः, करणव्यापारोत्पादनेनैव तस्यान्यथासिद्धत्वात्, स्वव्यापारेण हि स्वस्यानन्यथासिद्धिर्न तु परकीयव्यापारेणापीति भावः। यदि तु करणव्यापारस्यापि कर्तृजन्यत्वेन 'तज्जन्यजनकत्वेन च तद्व्यापारत्वम्, अतएव "सर्वेयं कर्तृव्यापारपरम्परा न तस्य हेतुतां हन्तीति" मूले एव प्रागुक्तमिति कश्चिद्ब्रूयात्तदा सुतरामसम्भवः। न व्याप्रियते = प्रकृतक्रियौपयिकव्यापाररहितम्। चरमव्यापारमिति बहुव्रीहिः। सेश्वरेति। ननु ज्ञानादेरीश्वरव्यापारस्य नित्यत्वेन ध्वंसात्मकतद्विरामाप्रसिद्धावपि तदधिकरणक्षणध्वंसाधिकरणक्षणवृत्तित्वरूपं तदानन्तर्यं प्रसिद्धमेव; अथ तद्ध्वंसाधिकरणकालवृत्तित्वस्य तदानन्तर्यात्मकतां विवक्षित्वेश्वरव्यापारानन्तर्याप्रसिद्ध्यभिधानम्, तदाप्युक्तलक्षणेऽनुयोगिन्येव यत्तायाः प्रविष्टत्वेनेश्वरव्यापारानन्तर्याप्रसिद्धौ यत्पदेनेश्वरस्योपादानासम्भवेन तत्राभितयाप्यभिधानमसङ्गतमेव; यदि च नित्यज्ञानादेर्जन्यत्वघटितव्यापारत्वमेव न, अस्मदादिव्यापार एव चेश्वरजन्यत्वेन तज्जन्यजनकत्वेन च तद्व्यापारो विवक्षितः, तदा महाप्रलयानभ्युपगन्तृमते जन्यव्यापारपरम्पराया अविरामेऽपि प्रकृतक्रियौपयिकव्यापारविरामस्य सद्भावेन तत्तच्चरमव्यापारानन्तरं प्रकृतक्रियायां कारकाणामव्यापृतत्वेन यथाश्रुते यत्पदेन करणमिवेश्वरमुपादायातिप्रसङ्गस्यातिस्पष्टत्वेन व्यापाराविरामाद्यभिधानमसङ्गतमेवेति चेन्न, प्रतियोगिनि यत्ता, व्यापारत्वं च नित्येऽपि ज्ञानादौ तज्जन्यजनकत्वरूपम्, आनन्तर्यञ्च तद्ध्वंसाधिकरणकालवृत्तित्वरूपमिति वदन्तं प्रतीत्थमभिधानात्, एवं हीश्वरस्य व्यापारानन्तर्याप्रसिद्धौ यत्पदेन तदनुपादानेन प्रकृतक्रियौपयिकस्वव्यापारोत्तरतादृशव्यापारकं यद्यत्तदन्यप्रकृतक्रियाकारणत्वस्य तत्र निर्बाधत्वात्। अथ सहकारिण्यतिप्रसक्तिव्युदस्तये तज्जन्यत्वे सति तज्जन्यजनकत्वमेव तद्व्यापारत्वम्, स्थितेऽपि कारणे तदुत्तरत्वस्य कार्ये व्यवहारेण च तदधिकरणक्षणध्वंसाधिकरणक्षणवृत्तित्वमेव तदुत्तरत्वम्, नचैवमपि दण्डादेर्व्यापारस्यापि निर्दिष्टदिशेश्वरीयत्वेनेश्वरीयव्यापारोत्तरव्यापाराप्रसिद्ध्या तादृशव्यापारकान्यत्वेनेश्वरे साधारणकारणान्तरे चातिप्रसक्तिस्तदवस्थेति देशनीयम्, असाधारण्यविवक्षयैव तद्वारणात्। ईश्वरादिव्यावृत्तव्यापारतावच्छेदकसम्बन्धादरे च तत्तद्व्यापारे ईश्वरीयत्वाद्यनुपपत्तेः। न च कुठारादिव्यापारस्याप्यनेकव्यक्तिकत्वेन छिदौपयिकस्वीययत्किञ्चिद्व्यापारोत्तरतादृशव्यापारकत्वेनाव्याप्तिः, यावद्व्यापारोत्तरत्वनिवेशस्तूक्तरीत्यैवासम्भवाद्यापादक इति वाच्यम्, एतद्दोषवारणायैव मूले 'कारकान्तर'मित्यत्रान्तरपदमुपात्तम्, तथासति निरुक्तलक्षणे स्वव्यापारोत्तरव्यापारे स्वातिरिक्तगतत्वस्य लाभादित्याशङ्कायामाह अनीश्वरपक्षे चेति। चकारेण सेश्वरपक्षोपग्रहः। अक्षार्थसंयोगो ह्यक्षस्येवार्थस्यापि व्यापार इति स्वव्यापारोत्तरस्वातिरिक्तीयव्यापारकान्यत्वमर्थेऽपीत्यतिव्याप्तिरिति भावः। यदि श्रोत्रसाधारण्यमनुरुन्धानैर्नार्थांशसम्बन्धस्य प्रत्यक्षे व्यापारतानुमन्तव्या, अपितक्षमनोयोगस्यैव, तदा-

स्यपि प्रसङ्गात्, छेद्यादेर्हि करणसंयोगादिव्यापारश्रम एवेति कुतस्तद्व्यवच्छेदः। हस्ताद्यव्याप्तेश्चेति।

अनन्तरफलं करणमित्यपि न, अविशेषितानन्तर्यस्य सर्वकारणसाधारण्यात्, अव्यवहितानन्तर्यस्य व्यापारापेक्षस्य यागाद्यव्यापनात्, व्यापारापेक्षस्य च हस्ताद्यव्यापनात्, व्यापारपरम्परापेक्षस्य सर्वकारकव्यापनात्। किञ्च, तत्कार्यो यदि क्रियाहेतुस्तद्व्यापार इष्यस्तदेन्द्रियकार्यो लिङ्गपरामर्शोऽनुमितिक्रियाहेतुरितीन्द्रियकरणिकाऽनुमितिः स्यात्। अथ हेतोः सतः कार्यः क्रियाहेतुस्तद्व्यापारः, तथा सति चानुमित्यहेतोरिन्द्रि-

र्यसंयोगमादायपर्यवसितिरप्याप्तिरिव तद्व्यापारपदेनाश्रमनोयोगमादायाश्रयेऽव्याप्तिरपि. तद्व्यापारानन्तरं विषयव्यापारस्य सद्भावात्। ननु योगाद्याश्यत्वादिपदं किमित्युपात्तम्, समवायस्य नित्यत्वेनाव्यापारतया समवायसंयुक्तसमवायादेरनेनोपादानासम्भवाद्विशेषणतायाश्च स्वरूपात्मकतयाऽर्थाजन्यत्वादित्याशङ्क्याभिप्रायमाह छेद्यादेरिति। प्रक्षालनादिकमादिनाऽऽदेयम्, करणसंयोगादीत्यादिनाऽऽधारसंयोगादिकम्। चरमः = स्वजन्यजनकसामान्याभाववान्, प्रतियोगिता पूर्ववृत्तित्वसम्बन्धावच्छिन्ना। आफलव्यापारानुपरमे कर्तृपर्यन्तमव्याप्तिरिदं दृश्या। ननु लक्षणे प्रकृतक्रियाऽसाधारणकारणपदेन प्रकृतक्रियावाचकधात्वर्थानाश्रयीभूतासाधारणकारणस्य प्रकृतक्रियाकर्तृकर्मभिन्नासाधारणकारणस्य वा विवक्षायां न कर्तृकर्मणोरतिव्याप्तिः, तयोर्धात्वर्थव्यापारफलान्यतराश्रयत्वादित्यत आह हस्तेति। क्रियैपयिकत्वस्य क्रियोपधायकत्वरूपस्य हस्तव्यापारे तदुत्तरत्वस्य तादृशव्यापारेऽप्रसिद्ध्याऽसम्भवापादकत्वेन विवक्षितुमशक्यतया हस्तादेः कारकान्तरानन्तर्भाविण्डनया स्वव्यापारोत्तरकारकान्तरव्यापारकतया चाव्याप्तिरित्यर्थः।

अनन्तरफलमिति बहुव्रीहिः। फलविशिष्टमसाधारणकारणमित्यर्थः, अत्र वैशिष्ट्यं किं स्वप्राक्कालवृत्तित्वेन वा स्वाव्यवहितप्राक्कालवृत्तित्वेन वा, स्वाव्यवहितप्राक्कालवृत्तिव्यापारकत्वेन वा सम्बन्धेन विवक्षितम्, तत्राद्ये अविशेषितेति। अव्यवहितत्वेनाविशेषितेत्यर्थः। द्वितीयेऽव्यवहितेति। व्यापारापेक्षस्य = व्यापारानिरूपितस्य। अव्यापनात् = अव्याप्तिप्रयोजकत्वात्। यागादेः क्षणिकतया स्वर्गाव्यवहितप्राक्क्षणावृत्तित्वात्। तृतीये व्यापारत्वं किं तज्जन्यमात्रवृत्ति वा तज्जन्यजन्यादिसाधारणं वा, आद्ये व्यापारापेक्षस्येति। हस्तादिव्यापाराव्यवहितोत्तरक्षणे पाकाद्यनुत्पत्तेस्तद्योक्तसम्बन्धेन फलविशिष्टत्वादित्यर्थः। द्वितीये व्यापारपरम्परेत्यादि। परम्परया यो व्यापारस्तन्निरूपितस्य, तत्प्रयोज्यस्य तज्जन्यजनको यस्तन्निरूपितस्येति यावत्. तेन व्यापारधारायाः फलाव्यवहितप्राक्कालवृत्तित्वासम्भवेऽपि न क्षतिः। प्रयोज्यत्वं जन्यजन्यादिसाधारणं विवक्षितम्, एवञ्च पाकाव्यवहितप्राक्क्षणवर्तिनो यस्य कस्यचिद्व्यापारस्यापि हस्तव्यापारत्वेनाव्याप्तिविरहेऽपि तादृशव्यापारे कारकान्तरीयत्वस्यापि सत्त्वे-नातिव्याप्तिर्दुर्वारैव। यत्र प्रतिबन्धकविशेषवशात्फलमेवानुत्पन्नं तत्राव्याप्तिस्तु पूर्वमभ्यधायि। यथा तत्प्रयोज्यत्वं तज्जन्यत्वं वा तद्व्यापारत्वमिति पक्षे इन्द्रियस्य परामर्शव्यापारकतयाऽनुमितिकरणत्वप्रसङ्गः, तथा तज्जन्यजनकत्वगर्भितपक्षे मनस एवेन्द्रियस्य चक्षुरादिव्यापृतौ परामर्शजनकत्वसम्भवात्, तथा तज्जन्यजनकत्वगर्भितव्यापारत्वपक्षेऽपि सः, नहि नियतान्यथासिद्धान्वयव्यतिरेकावनुमितिमात्रे नेन्द्रियस्य स्त इति निरूपयितुमाह किञ्चेत्यादि। यो यत्कार्यो यां क्रियां जनयति स तत्क्रियायां तद्व्यापार इति लाभाय क्रियाहेतुरिति अन्यथा सामान्यतः क्रियाहेतुत्वनिवेशस्य निष्प्रयोजनत्वात्। परामर्शपदं सादृश्यज्ञानादेरनुमितिपदञ्चोपमित्यादेरप्युपलक्षणम्। प्राप्तेति। नच अव्यवहितविशेषगुणत्वावच्छिन्नं प्रति मनस्त्वेन करणत्वोपगमेऽनुमित्यादेरिन्द्रियकरणकत्वमिष्टमेवेति वाच्यम्, "तथेन्द्रियादेरनुमितिकरणत्वापत्ति"रिति

यस्य कुतः करणत्वं स्यादिति; मैवम्, किं तद्धेतुत्वं यन्नास्त्यनुमिताविन्द्रियस्य। नियतपूर्वभावित्वमिति चेत्, अस्ति तावत्पूर्वभावित्वम्, नियतत्वमपि यदि कारणतायां प्रयोजकमिच्छसि तदा भवतैव यतितव्यं केनचिद्रूपेणेन्द्रियादेर्नियतत्वं प्रति, अन्यथा लिङ्गेन्द्रियादेः परस्परव्यभिचारित्वादकरणिकैव प्रमा स्यात्। मनःसंयोगादेरेव तथात्वे चाप्रमासाधारण्यम्। अपि चानादेरकरणत्वापातः, यत्सामान्ये यत्सामान्यं प्रयोजकं तद्विशेषे

---

तद्विशेषस्य तन्त्रत्वात्। तज्जन्यजनकत्वगर्भं व्यापारत्वमाशङ्कते अथेति। हेतोः = तत्क्रियाहेतोः। क्रियाहेतुः = तत्क्रियाहेतुः। तदा तत्क्रियाहेतोः परामर्शः। नियतेत्यादि स्वरूपसम्बन्धविशेषादिरूपकारणताया अप्युपलक्षणम्, तस्या अपि तु नैयत्यादिघटितकारणतावत्त्वेनोपगन्तव्यत्वान्नेन्द्रियेऽनुमितिनिरूपितायास्तस्या उपपादने उपपादकान्तरापेक्षेति नोत्तरग्रन्थन्यूनता। नियतत्वमपि = व्यापकत्वमपि। यदीयनादरात्, अन्यथासिद्धवारणायानन्यथासिद्धत्वस्य निवेशनीयत्वेऽपि लाघवेनानियतान्यथासिद्धानां नियतत्वनिवेशेनैव वारणौचित्यात्, अन्यथाऽधिकभेदनिवेशापत्त्या गौरवात्, अतएव "पूर्वसम्बन्धनियमे हेतुत्वे" इति स्वयमेव पूर्वमुक्तम्। भवता = समर्थनपक्षावलम्बिना। केनचिद्रूपेणेति। यद्यपि प्रमाणत्वं न तद्रूपम्, प्रमात्वावच्छिन्नकार्यतानिरूपितकरणतायाः प्रमाकरणत्वावच्छिन्नत्वे कार्यस्य कारणकोटौ प्रवेशापत्तेः, प्रमाया उपलक्षणतया निवेशेऽपि करणतायाः करणतावच्छिन्नत्वासम्भवात्, तथापीन्द्रियव्याप्तिज्ञानाद्यन्यतमत्वं तत्सम्भवति, अन्यतमत्वं चाखण्डमुपगन्तव्यम्। लिङ्गेति। व्याप्यत्वेन ज्ञायमानेत्यादिः, तथा च व्याप्तिज्ञानेत्यर्थः। परस्परेति। प्रमात्वावच्छिन्नं प्रतीत्यादिः। प्रमा = प्रमात्वावच्छिन्नम्। गुणजन्यत्वनियतस्य प्रमात्वस्येश्वरज्ञानेऽभावाज्जन्यतावच्छेदकत्वसम्भवः, अनित्यप्रमात्वमेव वा जन्यतावच्छेदकं वक्तव्यम्, बाधकं विना च कार्यमात्रवृत्तिधर्मस्य जन्यतावच्छेदकत्वनियमः, अन्यथाऽनुगतकार्यस्याकस्मिकत्वापत्तेः, एतन्मूलक एव च "यद्विशेषे यद्विशेषस्य प्रयोजकता तत्सामान्ये तत्सामान्यस्ये"ति नियमः। यद्यपि प्रमात्वं विषयभेदभिन्नत्वेनाननुगतमेव, तथापि घटत्ववति घटत्वप्रकारकानुभवत्वमेव कार्यतावच्छेदकम्; तच्च घटप्रत्यक्षानुमित्यादिसाधारणमेव, एवञ्च प्रत्यक्षत्वाद्यवच्छिन्नकार्यतानिरूपितकरणता यथेन्द्रियत्वादिनाऽवच्छिद्यते, तथोक्तानुभवत्वावच्छिन्नकार्यतानिरूपितकरणता नेन्द्रियत्वादिनाऽवच्छेत्तुं शक्या, इन्द्रियत्वाद्यवच्छिन्नकरणताककार्यतावतो ज्ञानस्य प्रत्यक्षत्वादिविशेषधर्मावच्छिन्नत्वनैयत्येन तादृशानुभवसामान्यस्य प्रत्यक्षत्वाद्यापत्तेः, नच न्यूनवृत्तेरवच्छेदकत्वम्, नचेन्द्रियत्वादिकं व्याप्तिज्ञानादौ वर्तते, नच मनसो ज्ञानमात्रे मनस्त्वेनाव्यभिचारेऽपीन्द्रियत्वेनाव्यभिचारः, ज्ञानमात्रस्य प्रत्यक्षत्वापत्तेः, नवा तादृशानुभवत्वावच्छिन्नकार्यतानिरूपितकरणतावच्छेदकत्वं मनस्त्वे शक्यशङ्कमपि, अतिप्रसक्तत्वात्, अतएव नात्ममनःसंयोगत्वादृष्टत्वादावपि, नच गुणत्वे तत्, प्रमात्वपरतन्त्रवादेऽनित्यप्रमात्वावच्छिन्नकार्यतानिरूपितकारणतायास्तदवच्छिन्नत्वसम्भवेऽपि तादृशकार्यतानिरूपितकरणतायास्तदवच्छिन्नत्वासम्भवात्, विशेषयोः कार्यकारणभावस्य सामान्यावच्छिन्नकार्यकारणभावनियतत्ववत् कार्यकरणभावस्यापि सामान्यावच्छिन्नकार्यकरणभावनियतत्वात्, गुणत्वस्याननुगतस्याभावाच्च, कथञ्चिदनुगतत्वेऽपि वाऽनित्यप्रमात्वेन रूपेणानुमितिं प्रति गुणत्वेन रूपेण विशेषणविशिष्टविशेष्यसन्निकर्षस्यापि कारणतापत्त्याभीष्टसिद्धिः। तथात्वे = प्रमाकरणत्वाभिधाने। अप्रमासाधारण्यमिति। तथाचातिप्रसक्ततया न मनःसंयोगत्वादिकं प्रमात्वावच्छिन्नकार्यतानिरूपितकरणतावच्छेदकमिति भावः। विशेषसामग्र्यातिप्रसङ्गवारणसम्भवेनातिप्रसक्तस्याप्यवच्छेदकत्वमुपेत्याप्याह अपि चेति। यत्सामान्ये इत्यादि। यद्धर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदको यो धर्मस्तद्धर्मव्याप्यस्यैव तद्-

एव तद्विशेषे प्रयोजकत्वनियमदर्शनात्, ततो येन केनापि रूपेणेन्द्रियस्य प्रमायां नियतत्वमुपपाद्यते तेन रूपेण प्रसङ्गोपपत्तिः। अथ प्रमात्वे तत्प्रयोजकं नानुमितित्वादाविति चेत्, निरुपाधिकत्वाविशेषेणोक्तार्थानाधिक्यात्, सामान्यप्रयोजकत्वेन विशेषत्यागानवकाशात्, अन्यथा व्यक्तेरकरणत्वापत्तेः।

अथान्यत्रास्तु यद्वा तद्वा करणम्, प्रमाविवक्षितजातिविशेषव्यपदेशकं प्रमाणम्,

-----

त्वावच्छिन्नकार्यताव्याप्यकार्यतानिरूपितकरणतावच्छेदकत्वमिति नियमदर्शनादित्यर्थः। एवञ्च यथेन्द्रियत्वस्य प्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकत्वे तद्व्याप्यचक्षुष्ट्वादेरेव प्रत्यक्षत्वावच्छिन्नकार्यताव्याप्यचाक्षुषत्वाद्यवच्छिन्नकार्यतानिरूपितकारणतावच्छेदकत्वं दृश्यते, तथा मनःसंयोगत्वादेः प्रमात्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकत्वे तद्व्याप्यतत्तन्मनःसंयोगत्वादेरेव प्रमात्वावच्छिन्नकार्यताव्याप्यप्रत्यक्षत्वाद्यवच्छिन्नकार्यतानिरूपितकरणतावच्छेदकत्वं स्यात्, नत्विन्द्रियत्वव्याप्तिज्ञानत्वादेरिति भग्नो भवतां प्रमाणविभाग इति भावः। प्रसङ्गोपपत्तिः = इन्द्रियस्यानुमितिप्रभृतिकरणत्वापत्तिः। तत् = इन्द्रियव्याप्तिज्ञानाद्यन्यतमत्वम्। कार्यतावच्छेदक प्रत्येव कारणतावच्छेदकस्य प्रयोजकत्वम्, प्रत्यक्षत्वानुमितित्वादिकं तु न तादृशान्यतमत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकमिति तादृशान्यतमत्वेन रूपेणेन्द्रियस्यानुमित्यादिकं प्रति करणत्वेऽपि न तस्य प्रत्यक्षत्वापत्तिरिति न प्रमाणविभागभङ्ग इति भावः। वृक्षत्वावच्छिन्नसामग्र्या शिंशपात्वावच्छिन्नसामग्रीमनपेक्ष्य न वृक्षत्वावच्छिन्नं जन्यते, शिंशपात्वावच्छिन्नसामग्र्या च वृक्षत्वावच्छिन्नसामग्रीमनपेक्ष्य न शिंशपात्वावच्छिन्नमिति दर्शनेन व्यापकधर्मावच्छिन्नव्याप्यधर्मावच्छिन्नकारणानां परस्परप्रयोज्यप्रयोजकत्वमवश्यमन्तव्यम्, अन्यथा तेषां परस्परमेलनस्यानुपयोगापत्तेः, अतएव प्रत्यभिज्ञायां स्मरणत्वानुभवत्वप्रयोजकसामग्र्योः परस्परप्रयोज्यप्रयोजकत्वमाश्रित्य साङ्कर्यं प्रागुक्तम्, तदिहापि प्रमात्वप्रयोजकस्य प्रत्यक्षत्वादिप्रयोजकस्य च समवधाननियतौ परस्परप्रयोज्यप्रयोजकत्वमङ्गीकार्यमेव अन्यथा प्रत्यक्षत्वादिप्रयोजकमनपेक्ष्यैव प्रमात्वं प्रयुज्येत, व्यापकत्वं च प्रमात्वमिव प्रत्यक्षत्वादिकमपि प्रत्यविशिष्टमेव तादृशान्यतमत्वस्य, वृक्षत्वप्रयोजकस्येव वृक्षत्वमिव शिंशपात्वादिकमपि प्रति, तथा चोक्तान्यतमत्वमनुमित्यादौ प्रत्यक्षत्वप्रयोजकं भवेदेवेत्यभिप्रेत्याह निरुपाधिकत्वाविशेषेणेति। उक्तान्यतमत्वस्य प्रमात्वमिव प्रत्यक्षत्वादिकमपि प्रति व्यापकत्वेनेत्यर्थः। व्यापकता च स्वावच्छिन्नजनकतानिरूपितजन्यतासम्बन्धेन। उक्तार्थानाधिक्यात् = अस्मदुक्तप्रसङ्गरूपार्थस्य निरासे भवदुक्तेरसामर्थ्यात्। विशेषेति। विशेषप्रयोजकत्वेत्यर्थः। अन्यथा = सामान्यप्रयोजकस्य विशेषप्रयोजकत्वानुपगमे। अकरणत्वापत्तेः = करणराहित्यापत्तेः, अनुत्पत्त्यापत्तेरिति यावत्, फलोपधायकस्यैव करणत्वात्। सामान्यप्रयोजकस्य विशेषाप्रयोजकत्वे विशेषप्रयोजकस्य सामान्यप्रयोजकसमवधानानपेक्षित्वात्तादृशस्य च तस्याभावस्यैव एवंसामान्याद्विशेषो न प्रयुज्येतैव, अतएव न सामान्यमपि, 'निर्विशेषं न सामान्य'मिति न्यायादिति भावः। यदि तु सामान्यप्रयोजकस्य विशेषप्रयोजकसापेक्षस्यैव सामान्यविशिष्टविशेषप्रयोजकत्वम्, इन्द्रियत्वेनैव चेन्द्रियं प्रत्यक्षत्वप्रयोजकम्, तथा चोक्तान्यतमत्वेनेन्द्रियत्वेनाप्यनुमित्यादाविन्द्रियस्य कारणत्वे एव तत्र प्रत्यक्षत्वमापद्येत, अनुमित्यादौ मनस इन्द्रियस्य कारणत्वेऽपीन्द्रियत्वेन न तस्य तद्विशेषविनिगमकत्वमनुमित्यादौ प्रत्यक्षत्वाननुभव एवेत्युच्यते तदा करणलक्षणे पूर्वोक्तदोषेष्वेव निर्भरो द्रष्टव्यः।

यद्वा तद्वा = यत्किञ्चित्। प्रमाविवक्षितेति। प्रमागतत्वेन विवक्षितेत्यर्थः। जातिविशेषः = प्रत्यक्षत्वानुमितित्वादिस्तद्व्यतमव्यपदेशः प्रत्यक्षमिदं ज्ञानमनुमानमिदं ज्ञानमित्याद्याकारो ज्ञानाभि-

चतस्रः खल्विमाः प्रत्यक्षादिप्रमितयो भिन्नबुद्धिव्यपदेशभाजः, न च प्रमाता प्रमेयं वा तद्भेदहेतुः, प्रमाणानि तु यथायथं चतसृष्वसाधारणानीति भिन्नबुद्धिव्यपदेशनिबन्धनानीति; मैवम्, विवक्षितपदं तावल्लक्षणे भण्डालेख्यमिव, पुरुषेच्छानामनियतविषयत्वात्, अर्थजत्वस्य साक्षात्कारित्वं प्रतीन्द्रियजत्वाविशिष्टतयाऽर्थस्यापि करणत्वप्रसङ्गात्। आप्तोक्तौ कर्तुरपि शाब्दप्रमाजातिविशेषकत्वेनातिप्रसङ्गात्। अतिमित्युत्तरे च पूर्वोक्तमिति। विवक्षितजातिभेदोपयिकत्वेन प्रमित्यसमवायिकारणविशेषकं प्रमाणमित्यप्यत एव प्रत्युक्तमिति। इति खण्डनखण्डखाद्ये करणत्वखण्डनम्।

---

लापात्मको व्यवहारस्तत्त्वावच्छिन्नप्रयोजकत्वमित्यर्थः। भिन्नेति। भिन्नौ बुद्धिव्यपदेशौ तद्विषया इत्यर्थः। व्यपदेशोऽत्राभिलापमात्रम्, बुद्धेः पृथगुपादानात्। तद्भेदहेतुः = उक्तविलक्षणव्यवहारत्वावच्छिन्नप्रयोजकम्। एकस्यापि प्रमातुःप्रत्यक्षत्वादितत्तद्धर्मावच्छिन्नानेकप्रमितिसमवायित्वेन प्रमेयस्य च तादृशानेकप्रमितिविषयत्वेन साधारण्यम्, इन्द्रियादेस्तु नेन्द्रियत्वादिना तादृशानेकप्रमितिकारणत्वम्, अपितु प्रत्येकमेव प्रत्यक्षत्वादिकं प्रतीति भावः। भण्डालेख्यमिवेति। सन्तानविषयकप्रश्नोत्तरतया पुत्रो न पुत्रीति विप्रलम्भकलेखनवदित्यर्थः। यथा तत्र विवक्षावशात्तत्र उभयत्रान्वयसम्भवान्न सन्ततिविशेषनिश्चयस्तथा प्रकृतेऽपि विवक्षितानिश्चये न लक्षणनिश्चय इति भावः। ननु प्रत्यक्षत्वाद्यन्यतमविषयकव्यवहारत्वावच्छिन्नप्रयोजकत्वं वा तदन्यतमावच्छिन्नजन्यताकजनकत्वं वा वक्तव्यं तत्राह अर्थजत्वस्येति। यथेन्द्रियजन्यत्वं प्रतिसन्धाय प्रत्यक्षत्वव्यवहारस्तथाऽर्थजन्यत्वं प्रतिसन्धायापीति सम्भवत्यर्थेऽपि तादृशप्रयोजकत्वं जनकज्ञानविषयत्वरूपम्, सामान्यतोऽर्थान्यत्वनिवेशस्त्वसम्भवापादकः। एवं प्रत्यक्षत्वावच्छिन्नं प्रतीन्द्रियत्वेनेव विषयत्वेनापि कारणतेति भावः। एवं सन्निकर्षादिरूपव्यापारेऽप्यतिप्रसक्तिर्द्रष्टव्या। इदमुपलक्षणं प्रयोजकताजनकतावच्छेदकरूपवत्त्वस्यावश्यनिवेश्यत्वेन प्रत्येकमिलितविकल्पेऽव्याप्त्यसम्भवयोरप्यापत्तेः। वक्तृतयाऽऽसमवेतस्यापि शाब्दप्रमात्वव्यवहारेण तत्राप्यतिव्याप्तिमाह आप्तेति। तत्तत्प्रमात्वव्यवहारप्रयोजकतत्तद्गुणेऽप्यतिव्याप्तिर्बोध्या। पूर्वोक्तमिति। "आप्तप्रामाण्या"दिति व्यवहाराणां गौणतोक्ता पुरा। विवक्षितेति। प्रमाणतत्वेनेत्यादिः। जातिविशेषः प्रत्यक्षत्वादिकः, भेदपदस्य विशेषार्थकत्वात्। तृतीयान्तस्य विशेषकमित्यनेनान्वयः। प्रमितित्वावच्छिन्नकार्यतानिरूपितासमवायिकारणताया अवच्छेदकमात्ममनःसंयोगत्वं दोषासमवहितं वा तत्, प्रत्यक्षप्रमितित्वाद्यवच्छिन्नकार्यतानिरूपितकारणतायास्त्ववच्छेदकमिन्द्रियव्याप्तिज्ञानादिविशिष्टं तत्, अनतिप्रसक्तत्वात्, एवञ्च प्रत्यक्षप्रमात्वाद्यन्यतमावच्छिन्नकार्यतानिरूपितासमवायिकारणतावच्छेदकत्वमेव प्रमाणत्वम्, अवच्छेदकता च स्वप्रतियोगिकसंयोगानुयोगिसमवेतत्वस्वसमवायिसमवेतत्वान्यतरसम्बन्धेन, तेनात्मनि तन्मनःसंयोगत्वे च नातिप्रसङ्गः, तत्राद्यसम्बन्ध इन्द्रियं सङ्गृह्णाति, द्वितीयस्तु व्याप्तिज्ञानादिकम्। विशिष्टस्य कारणत्वेऽसति बाधके विशेषणेऽपि कारणतोपगमात् स्वतन्त्रान्वयव्यतिरेकशालित्वाच्च न कारणतावच्छेदकत्वेऽपीन्द्रियादेरकारणत्वप्रसङ्ग इति भावः। अत एवेति। प्रत्यक्षप्रमायामिन्द्रियविशिष्टस्येवार्थविशिष्टस्याप्यात्ममनःसंयोगस्य कारणतासम्भवेनाद्यसम्बन्धावच्छिन्नावच्छेदकतामादायार्थेऽतिप्रसङ्ग इत्यर्थः। इदमुपलक्षणम्, प्रमास्वस्यानुगतस्यार्थसमाजग्रस्तस्य प्रमात्वखण्डनशेषे कथितदिशा कार्यतावच्छेदकत्वासम्भवो नितरां तु प्रत्यक्षादिप्रमात्वस्येत्यपि द्रष्टव्यम्। इति खण्डनशारदायां करणत्वखण्डनम्॥

## समाप्तं प्रमाणसामान्यखण्डनप्रकरणम्।

# अथ प्रत्यक्षखण्डनप्रकरणम् ।

## लक्षणप्रयोजनखण्डनम् ।

एवं विशेषतोऽपि प्रमाणलक्षणानि प्रतिवक्तव्यानि; तथाहि—"प्रत्यक्षमिन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारी"त्याहुः, किमर्थमिदमुच्यते ? किं सजातीयविजातीयव्यवच्छिन्नतत्प्रतीत्यर्थम् ? उत साक्षात्कारित्वप्रतीतये तच्चिन्होपदर्शनमिदम् ? उत व्यवहारार्थम् ? उत प्रत्यक्षादिशब्दप्रवृत्तिनिमित्तावधारणार्थम् ? उतान्यकिञ्चिदर्थमेव ?; नाद्यः, तथाहि—किं 'सजातीये'ति प्रत्यक्षत्वेन साजात्यमपेक्षितम् ? रूपान्तरेण वा ?; नाद्यः, तस्माद्व्यवच्छेदावधेः सजातीयाद्व्यावृत्तत्वे व्यवच्छेदकत्वानुपपत्त्या व्यावृत्तत्वस्वीकारेणाव्यापकत्वात् । नापि द्वितीयः, विजातीयपदोपादानवैयर्थ्यात्, अस्ति हि प्रमेयत्वादिना सर्वसाजात्यम् । अथ प्रमाणत्वादिना विशेषेण साजात्यं विवक्षित्वेदमुच्यते, तर्हि लक्ष्यस्यापि प्रमाणत्वेन साजात्याद्व्यवच्छेद्यकोटिप्रविष्टतया सङ्ग्राह्याभावप्रसङ्गः ।

कथायां प्रमाणानां सामान्यलक्षणनिरासापरिस्फूर्तौ तद्विशेषलक्षणनिरासैरेव प्रत्ययस्थातथ्यमन्यथा तु तैरपीत्यभिप्रायेणाहैवमित्यादि । इन्द्रियार्थसन्निकर्षोत्पन्नमव्यभिचारिज्ञानं यथार्थप्रत्यक्षं तत्करणत्वञ्च प्रत्यक्षप्रमाणत्वमिति पूरणसंवलितार्थः, तेन न प्रमाणलक्षणखण्डनप्रतिज्ञाव्याहतिः । करणतानिरूपकनिरासे च करणस्यार्थान्निरास इति नासङ्गतिरुपरितनग्रन्थस्य । अत्र च यथाक्रुतेऽनुमित्यादिव्यावृत्तये आद्यं दलम्, भ्रमव्यावृत्तये द्वितीयम्, अव्यभिचारित्वं हि याथार्थ्यम्, आत्ममनःसंयोगजन्येच्छादिव्यावृत्तये तृतीयम् । अधिकं परतो वक्ष्यते । तत्प्रतीत्यर्थम् = प्रत्यक्षप्रमाणप्रतीत्यर्थम् । तच्चिन्हेति । साक्षात्कारित्वज्ञाप्येत्यर्थः । अन्यथा व्यञ्जकापरपर्यायचिह्नशब्दस्यैव लौकिकप्रत्यक्षजनकप्रत्यक्षविषये प्रसिद्धत्वादसङ्गतिश्चतुर्थ्यन्तस्य । प्रतीतिशब्दो न लौकिकप्रत्यक्षपरः, "साक्षात्कारित्वानुमानस्ये"त्यग्रिमग्रन्थासङ्गतेः । साक्षात्कारित्वञ्चात्र प्रघट्टके न लौकिकविषयितावि‌शेषः, अपितु लौकिकालौकिकसाधारणं प्रत्यक्षत्वमेवेति द्रष्टव्यम् । उतान्येति । पञ्चमप्रकारसम्भावनाप्रयुक्तन्यूनतासम्भावनानिवर्तनायैवेतत्, वस्तुतस्तु पञ्चमप्रकारोपदर्शनाशक्यतां वक्ष्यति । तस्मादित्यादि । लक्षणस्य तादृशव्यावृत्तिप्रतियोगिभिन्नप्रत्यक्षविशेषवृत्तित्वे इत्यर्थः । व्यवच्छेदकत्वानुपपत्त्येति । व्यावृत्तिप्रतियोग्यवृत्तिधर्मस्यैव व्यावृत्त्यनुयोगिव्यावर्तकत्वादन्यथा प्रमेयत्वादेरपि व्यावर्तकत्वप्रसङ्गादिति भावः । व्यावृत्तत्वस्वीकारेण = व्यावृत्तिप्रतियोगिप्रत्यक्षविशेषावृत्तित्वेनैव स्वीकार्यत्वेन लक्षणस्य प्रत्यक्षप्रमासामान्यसाधारण्यासम्भवाल्लक्ष्यतावच्छेदकरूपेण साजात्यं नाभिधानीयमिति भावः । रूपान्तरं किं प्रमात्वं वा तदतिरिक्तं वा, द्वितीये विजातीयेति । वैयर्थ्यादिति । सजातीयपदेनैव विजातीयसङ्ग्रहसम्भवादिति भावः । इदमुपलक्षणम्—"तर्हि लक्ष्यस्यापी"त्यग्रिमग्रन्थानुसारेण साजात्यस्य भेदगर्भतया इदानीमप्रतीत्या लक्ष्यस्यापि प्रमेयत्वादिना स्वसजातीयतया सङ्ग्राह्याभावप्रसङ्गोऽपि द्रष्टव्यः । आद्यमाशङ्कते अथेति । लक्षणसामान्यखण्डनीयविषयकत्वाद्विचारस्यास्यादिपदेन प्रमाणभिन्नलक्षणे विभज्यमानतावच्छेदकं रूपं ग्राह्यम् । व्यवहितत्वात् = व्याप्यत्वात् । तद्भिन्नत्वतद्गतधर्मवत्त्वाभ्यां वस्तुविशिष्टत्वमेव साजात्यमिति भावः । एवं तर्हि = विजातीयपदेनेव सजातीयपदेनापि लक्ष्यान्यस्यैव ग्रहणे । उच्यतामिति व्याघातादिति भावः । यदाचेत्यादिकं दूषणं तु सजात्याभिधानेऽपि, तत्प्रतीतये लक्ष्यान्यत्वस्य प्रत्येतव्यत्वान् । अग्रत इति । अनवधेयवचनतापरिहाराय प्रतिपाद्ये जनेऽवश्यापेक्षणीयाया लक्षणजिज्ञासाया

लक्ष्यस्य यत्प्रमाणत्वादिभिः सजातीयं तद्व्यवच्छेद्यम्, नच लक्ष्यस्य लक्ष्यं सजातीयम्, षष्ठ्यर्थस्य भेदव्यवहितत्वादिति चेत्, एवं तर्हि लक्ष्यापेक्षया भिन्नाद्व्यवच्छेद इत्येवोच्यताम्, कृतं प्रमाणत्वादिना साजात्येन प्रकृतानुपयोगिना वर्णितेन, यदा च लक्ष्यादन्यत्वं परेषामवगतं तदा परस्मादन्यत्वमपि लक्ष्यस्यार्थादवगम्यत इति सिद्धमग्रत एव लक्षणप्रयोजनमिति वैयर्थ्यमेव स्याल्लक्षणाख्यानस्येति ।

अस्तु वा विवक्षावैचित्रीवशात्कथमपीदृशमभिधानम्, तथापि न तावदनेन लक्षणेनानवगतेनैव व्यवच्छिन्नप्रतीतिसम्भवः, अतिप्रसङ्गात् । नापि ज्ञातेन, दुरवधारणत्वात्, न तावदिन्द्रियार्थसन्निकर्षोत्पत्तिः प्रत्यक्षा, अप्रत्यक्षविशेषणत्वात्, नापि कार्येण लिङ्गेन

लक्षणज्ञानेऽलक्ष्यव्यावृत्तिज्ञानजनकत्वरूपेष्टसाधनताज्ञानाधीनत्वादिति भावः । लक्षणप्रयोजनमिति । लक्ष्यान्यत्वस्य प्रतियोगितावच्छेदकं हि न प्रमेयत्वादिकमसम्भवात्, नापि लक्ष्यालक्ष्यसाधारणं रूपान्तरं ज्ञानत्वादिकम्, तदवच्छिन्नप्रतियोगिताकभेदस्यानुमित्यादावलक्ष्येऽवृत्तेस्ततो व्यावृत्तिग्रहानुपपत्तेः, अपि तु लक्ष्यस्यासाधारणमेव रूपम् . तादृशमपि च न लक्ष्यतावच्छेदकन्यूनवृत्ति, लक्ष्यतावच्छेदकाधिकरणादपि भेदग्रहापत्तेः, तथाच तदवच्छिन्नप्रतियोगिताकभेदस्यालक्ष्येषु प्रतीतौ तदवच्छिन्नानुयोगिताकस्यैवालक्ष्यभेदस्याभीष्टस्यान्यथानुपपत्त्या सिद्धिः । तदवच्छिन्नप्रतियोगिताकभेदावच्छिन्नप्रतियोगिताकभेदस्य तदवच्छिन्नानुयोगिताकस्य सिद्धावपि तत्तदसाधारणरूपावच्छिन्नप्रतियोगिताकभेदस्य न सिद्धिरिति तु न वदितुं युक्तम्, लक्षणप्रतीतावपि तदसिद्ध्यापत्तेः, समाधानं तु समानमिति । नचानुमित्यादिव्यावृत्तिफलं प्रत्यक्षलक्षणमित्येवमेव प्रयोजनप्रतीतिरपेक्षणीयेति वाच्यम्; नुगतानतिप्रसक्तरूपं विनाऽऽदिशब्दाप्रवृत्तेरनुमित्याद्यनुगमकरूपस्य प्रत्यक्षव्यावृत्तस्यैव वक्तव्यत्वात्, अन्यथाऽसङ्कुचितेनादिपदेन प्रत्यक्षस्याप्युपग्रहे तस्यापि व्यवच्छेद्यत्वापत्तेरिति भावः ।

विवक्षावैचित्रीति । लक्ष्यान्यस्यैव लक्ष्यसजातीयविजातीयतया विवक्षेत्यर्थः । ईदृशमभिधानम् = 'सजातीयविजातीयव्यवच्छिन्नलक्ष्यप्रतीत्यर्थं लक्षण'मित्यभिधानम् । 'यदाचे'त्यादिनोक्तं दूषणं वस्तुतो लक्ष्यान्यस्यैव लक्ष्यसाजात्यादिनाऽभिधाने न सप्रसरमित्यभिमानेनेदम् । वस्तुतस्तु तत्रापि दूषणमुक्तमस्त्येव, वैजात्यस्य तद्वृत्तिधर्मवत्त्वरूपस्य भेदाघटितत्वेऽपि भेदप्रतीत्यविनाभूतप्रतीतिकत्वादिति । अतिप्रसङ्गादिति । लक्षणमजानतोऽपि व्यावृत्तिधीप्रसङ्गात्, लक्षणनिरूपणवैफल्यप्रसङ्गाच्चेत्यर्थः । दुरवधारणत्वमुपपादयति न तावदिति । यद्यपि व्यावृत्तत्वेनैव लक्षणज्ञानस्यापेक्षणीयत्वात्तस्य लक्षणान्तरज्ञानाधीनत्वेनानवस्थादिकमिति सर्वत्रैव दुरवधारणता शक्या वक्तुम्, विवेचितञ्चैतल्लक्षणसामान्यखण्डने, तथापि प्रकृतेऽतीन्द्रियघटितत्वेनापि दुरवधारणता सम्भवत्येवेत्यभिप्रायेणेदम् । अप्रत्यक्षेति । यद्यपि विशेषणयोरिन्द्रियतत्सन्निकर्षयोरिव विशेष्यीभूतोत्पत्तेरप्यतीन्द्रियत्वम्, इन्द्रियस्य चार्वाकादिमतगोलकात्मकतायास्तात्पर्यटीकादौ निरस्तत्वेनातीन्द्रियत्वे तत्सम्बन्धस्यापि तथात्वात्, सम्बन्धिनोर्योग्यत्वे एव तस्य योग्यत्वात्, उत्पत्तेरप्याद्यक्षणसम्बन्धरूपत्वात्, तथापि कार्यत्वमेवोत्पत्तिशब्देन विवक्षितम्, तच्च तन्निष्ठान्यथासिद्ध्यनिरूपकत्वे सति तद्व्याप्यत्वमिति भावेनाप्रत्यक्षविशेष्यत्वं नाभाणि । वस्तुतस्तु साध्याभाववदवृत्तित्वादिरूपव्याप्यत्वस्यस्यापि नैन्द्रियकत्वम्, साध्याभावाधिकरणत्वस्यातीन्द्रियसाधारणत्वादिति वक्ष्यतेऽनुमानमानभङ्गे । इन्द्रियत्वस्य साक्षात्कारकरणत्वात्मकत्वेनान्योन्याश्रयस्तु न दर्शितः, तदीयनिरुक्त्यन्तरस्यापि सम्भवात्, वक्ष्यते चैतत् । न चेन्द्रियादिकमुपनीतमेव विशेषणतया प्रत्यक्षे भासताम्, उपनयस्य मानान्तरमूलकत्वात् । अस्तु प्रकृतेऽपि मानान्तरमिति चेत्तत्राह नापी-

तदनुपपत्त्या वा तदवगमः, ताभ्यां सामान्यतः कारणमात्राक्षेपेण कारणगतानुगतरूपासिद्धावेकरूपलक्षणासिद्धेः। कार्यस्यैकजात्यादेकजातीयकारणसिद्धिरिति चेत्, तर्हि कार्यगतैकजात्यस्य पूर्वमवश्यप्रत्येतव्यत्वाङ्गीकारे तत एव सजातीयविजातीयव्यवच्छेदप्रतीतिरस्तु कृतमनया पारम्पर्यकुसृष्ट्या। नन्वेतावतापि न प्रकृतलक्षणखण्डनं भवत्यव्याप्तेरतिव्याप्तेर्वाऽनुद्भावनात्। मैवम्, प्रथमभावितयाऽवश्यानुष्ठेयतया च लघोरुपायात्साध्यसिद्धौ भवन्त्यां चरमभावितयाऽवश्यानुष्ठेयत्वाभावेन च गुरावुपाये प्रवर्तमानस्य तवैवेदं दोषोद्भावनं प्रदीपे प्रदीपं प्रज्वाल्य तमोनाशाय यतमानस्येव पुंसः। नहि तत्र दीपान्तरस्य कश्चिद्दोषः, किन्तु तथाकारी पुरुष एव पर्यनुयोज्यः। सर्वसाधनसा-

ति। कार्येण = प्रत्यक्षबोधेन। लिङ्गता तादात्म्येन। तदवगमः = इन्द्रियतत्सन्निकर्षावगमः। ताभ्यां = अनुमानार्थापत्तिभ्याम्। **सामान्यत इति।** कार्यत्वस्य सकारणकत्वेनैव व्याप्तेरिति भावः। कारणानुगमं विना कार्यानुगमस्याकस्मिकत्वप्रसङ्गादनुगतधर्मावच्छिन्नकार्यतात्वलिङ्गेन जन्यप्रत्यक्षत्वावच्छिन्नकार्यतायामनुगतधर्मावच्छिन्नकारणतानिरूपितत्वसाधने इतरबाधसहकारेणेन्द्रियत्वावच्छिन्नकारणतासिद्धौ तत्सन्निकर्षस्यापि प्रतीतिसम्भवः, इन्द्रियसन्निकर्षत्वेनापि कारणत्वादित्याशङ्कते **कार्यस्येति।** ऐकजात्यात् = अनुगतधर्मावच्छिन्नत्वात्। **प्रतीतिरस्त्विति।** जन्यप्रत्यक्षत्वेनेवेन्द्रियार्थेत्यादिलक्षणेनापि नित्यप्रत्यक्षं न सङ्गृह्यते, अस्तु वा प्रत्यक्षत्वस्यातिप्रसक्तस्यापि जन्यतावच्छेदकत्वम्, क्षत्यभावात्, जन्यमात्रस्य स्वावच्छिन्नत्वे चात्माश्रयात्, वस्तुतस्तु प्रत्यक्षत्वमीश्वरज्ञानेऽप्रामाणिकमेव, अतएव—"अनुभवत्वजातेरीश्वरज्ञानवृत्तित्वे मानाभावः, एवं प्रत्यक्षत्वस्यापि, नच तत्र प्रत्यक्षत्वानङ्गीकारे तस्य जन्यमात्रं प्रत्युपादानविषयकलौकिकप्रत्यक्षत्वेन हेतुत्वानुपपत्तिरिति वाच्यम्; उपादानप्रत्यक्षहेतुतायां लौकिकविषयतायाः प्रत्यासत्तित्वावश्यकत्वेन ज्ञानत्वस्यावच्छेदकत्वसम्भवादनगवज्ज्ञाने प्रत्यक्षत्वानङ्गीकारेऽपि क्षतिविरहात्, लौकिकविषयतायाः प्रत्यक्षत्वव्यमात्रनिरूपितत्वे मानाभावादीश्वरज्ञाने प्रत्यक्षत्वव्यवहारस्य लौकिकविषयिताश्रयनिबन्धनत्वेनौपचारिकत्वा"दित्यादिकं परामर्शप्रकरणे गदाधरभट्टाचार्यैरुक्तम्, लक्ष्यतावच्छेदकस्यालक्षणत्वे च प्रत्यक्षत्वेनाभिमतव्यक्तिविशेषमुपादाय तद्व्यक्तिवृत्त्यनुभवत्वव्याप्यजातित्वेनैव प्रत्यक्षत्वस्य लक्षणत्वसम्भवः, तद्व्याप्यत्वं तु तद्भिन्नत्वगर्भमिति भावः। **पारम्पर्येति।** पूर्वं प्रत्यक्षत्वावच्छिन्नकार्यताज्ञानं तत इन्द्रियत्वेन्द्रियसन्निकर्षत्वावच्छिन्नकारणताज्ञानं ततः परमिन्द्रियार्थेत्यादिलक्षणज्ञानमिति परम्परा, तस्याः कुसृष्टित्वं गौरवग्रस्ततया। **अव्याप्तेरित्यादि** दोषान्तरस्याप्युपलक्षणम्। प्रथमभावितया = प्रथमोपस्थिततया। कदाचित्प्रथमोपस्थितस्यापि लघोर्धर्मस्य न लक्षणान्तरवैयर्थ्यापादकत्वमित्यत आह **अवश्यानुष्ठेयतयेति।** अवश्यप्रत्येतव्यतयेत्यर्थः। कार्यताया अवच्छेदकधर्मप्रतीतिसापेक्षप्रतीतिकत्वादिति भावः। तथाच नियमेन धर्मापेक्षणीयोपस्थितिकत्वस्य जन्यतावच्छेदकधर्मे लाभेन इतरभेदानुमितिमुपदधानस्य तस्य स्वोपस्थित्यधीनोपस्थितिकलक्षणान्तरान्यथासिद्ध्यापादकत्वं निराबाधमेवेति भावः। **प्रदीप इति।** नन्वेवं पुरुषस्य दुष्टत्वेऽपि द्वयोर्लक्षणत्वमुपपन्नमेव, स्वसमानाधिकरणलघुभूतधर्मान्तरघटितत्वाभावेन वैयर्थ्यानवकाशादित्यत आह **सर्वेति।** वस्तुतस्त्वित्यादिः। साधनं = लिङ्गत्वेनाभिमतं, लक्षणमपीतरभेदानुमाने साधनमेव। दोषः = अभिमतप्रमित्यनुत्पादप्रयोजकत्वम्। तच्च कचिज्ज्ञानस्येवाज्ञातस्यापि। स्वप्रयोजकत्वञ्च स्वप्रयोजकज्ञानविषयत्वान्यतरसम्बन्धेन तादृशानुत्पादवैशिष्ट्याभिधाने नाननुगमः। सम्भवन्नेवंविधोलघूपायोऽवश्यापेक्षणीयप्रागुपस्थितिको व्याप्यो धर्मो यस्य = यदपेक्षया तस्य भावः। स्वसमनियतधर्मविष-

धारणोऽयं दोषो यत्सम्भवदेवंविधलघूपायत्वं नाम, स्वरूपासिद्धिरिव सर्वप्रमाणानाम्। तस्मान्मा भूदतिव्याप्त्यादिर्दोषः, सामान्यदोषादेवेदं लक्षणं दुष्टमिति।

एतेन द्वितीयोऽपि निरस्तः, साक्षात्कारित्वावगममन्तरेण तदवगमानुपपत्तेः, तदवगमाद्यस्य प्रतीतावन्योन्याश्रयप्रसङ्गः। अस्तु वाऽन्यदपि किञ्चिदिन्द्रियजत्वे लिङ्गं तथापि तदेव साक्षात्कारित्वाविनाभूततया प्रत्यक्षलक्षणमुपन्यस्यतां सन्निहितप्रतिपत्तिकत्वात्। न च तदवश्यं व्यापकं वक्तव्यम्, लिङ्गस्य तद्व्याप्यत्वेनैवोपपत्तेरिति चेन्न;

यकोपस्थितिजन्योपस्थितिकत्वमिति यावत्। स्वरूपासिद्धिः = तत्तद्देशावृत्त्यभावप्रतियोगित्वम्, तत्तद्देशश्च प्रत्यक्षे गोलकमनुमितौ पक्ष इत्येवं विशिष्यैव द्रष्टव्यः। प्रमाणानाम् = प्रमाणत्वेनाभिमतानाम्। हेत्वाभासखण्डनप्रकरणेऽपि "स्वरूपासिद्धिः सर्वप्रमाणसाधारणो दोष" इति वक्ष्यति. तथा चान्यथासिद्धत्वरूपं वैयर्थ्यमस्येवेत्यौचित्यं प्रथमोपस्थितस्यैव लक्षणतायाः, अन्यथा सम्भवति लघौ गुरावच्छेदकत्वानभ्युपगमोऽपि न स्यादिति भावः। **मा भूदिति।** प्रौढिवादेनेदम्, यथाश्रुते दूषणान्तरस्य सद्भावात्, तथाहि—आत्ममनः सन्निकर्षस्याप्यर्थेन्द्रियसन्निकर्षत्वेन तज्जन्यस्मृतावतिव्याप्तिः, अर्थपदेन स्वविषयविवक्षणेऽप्यात्मविषयकानुमित्यादौ सा, इन्द्रियकरणकत्वविवक्षायामपि सा तदवस्था, शिरोमण्यादिभिरनुमित्यादेर्मनःकरणकत्वाभ्युपगमादिति इन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकधर्मवत्त्वे सति प्रमात्वमिति तु निरसिष्यते। एतेन—व्यर्थविशेषणत्वमपि यदा न साधनदोषः, तज्ज्ञानस्यानुमितितत्कारणान्यतरानुत्पादाप्रयोजकत्वात्, पुरुषस्य तु तन्नाधिकेनैव निग्रहात्, तदा लक्षणान्तराधीनसिद्धिकस्यापि तदघटितस्य लक्षणस्यादुष्टतायां का कथा, नहि लक्षणस्यैकस्योपस्थित्यनन्तरं कदापि लक्षणान्तरमितरभेदं नानुमापयति, अन्ततोऽनुमितस्यैव तत्सम्भवात्, नच तदुपधानं लक्षणलक्षणम्, अपि तु लक्ष्यतावच्छेदकसमनैयत्यम्, न च जन्यतातदवच्छेदकयोर्मसमनैयत्यम्, न च सम्भवति लघावित्यपि नाप्रयोजकम्, एवञ्च जन्यतावच्छेदकप्रतीतिदशायां जन्यताया लक्षणत्वं किमिति न स्यादिति—कुचोद्यस्य नावसरः। **एतेनेति।** साक्षात्कारित्वप्रतीतेरुक्तलक्षणप्रतीतिहेतुताव्यवस्थापनेनेत्यर्थः। **तदवगमेति।** इन्द्रियार्थेत्यादिलक्षणावगमेत्यर्थः। अस्य = साक्षात्कारित्वस्य। अन्यदपि = विषयत्वावच्छिन्नकारणताकज्ञानत्वादि। **इन्द्रियजत्वे इति।** इन्द्रियार्थसन्निकर्षजत्वमिवेन्द्रियत्वावच्छिन्नजत्वमपि प्रकृतलक्षणघटकं सम्भवतीत्याशयेनेदम्। एवमग्रेऽपि। **लिङ्गमिति।** तथाच तेनानुमितेन्द्रियजत्वघटितलक्षणस्य साक्षात्कारित्वप्रत्यायकत्वोपगमे नान्योन्याश्रय इति भावः। यद्यपीन्द्रियप्रतीत्यनन्तरमेव तज्जत्वमुक्तलिङ्गेनानुमीयते, इन्द्रियमेव तु साक्षात्कारित्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकावच्छिन्नतया सिद्ध्यतीति प्रागुक्तम्, कार्यतावच्छेदकञ्च लाघवात् साक्षात्कारित्वमेव, न तु विषयत्वावच्छिन्नकारणताकज्ञानत्वादिकम्, एवञ्चेन्द्रियजत्वं साक्षात्कारित्वप्रतीत्यधीनप्रतीतिकमेवेत्यन्योन्याश्रयो दुर्वारः। इन्द्रियजत्वघटितमेव च न साक्षात्कारित्वम्, इन्द्रियानुपनये साक्षात्करोमीत्यनुव्यवसायाभावापत्तेः। यदि च साक्षात्करोमीत्यनुव्यवसायगोचरीकृतेनैवेन्द्रियजत्वग्रहस्तदा 'साक्षात्कारित्वप्रतीतये प्रकृतलक्षणमि'ति बालस्यैवालापः। तथापि लाघवाद्यप्रतिसन्धानदशायां विषयत्वावच्छिन्नकारणताकज्ञानत्वादेर्जन्यतावच्छेदकत्वग्रहेणेन्द्रियादिप्रतीतिसम्भव इत्यभिमानः। अविनाभूततया = समव्याप्ततया, अन्यथा लक्षणत्वानुपपत्तेः। ननु विषयत्वावच्छिन्नकारणताकज्ञानत्वं न विशिष्टलौकिकालौकिकसाधारणसाक्षात्कारित्वसमनियतम्, लौकिकप्रत्यक्षं प्रत्येव विषयत्वेन कारणत्वादिति चेन्न, अतिप्रसक्तस्याप्यवच्छेदकत्वं सर्वांशे च किमपि न लौकिकं प्रत्यक्षमिति मते विषयत्वेन यत्किञ्चिद्विषयस्यैव

यत्र लिङ्गमव्यापकत्वान्नास्ति तत्रेन्द्रियजत्वस्य प्रमाणाभावात्प्रत्येतुमशक्यत्वेन कथं ततः साक्षात्कारित्वावगमः ?। यदा तु क्वचित्प्रत्यक्षजातीये एव प्रमाणाभावादिन्द्रियजत्वमनवधारणीयतया साक्षात्कारित्वव्यापकत्वेनानवगतमपि लक्षणम्, तदा किमपराद्धं लिङ्गान्तरेणाव्यापकेन। अथ यत्र तदिन्द्रियजत्वे लिङ्गं नास्ति तत्र लिङ्गान्तरात्प्रत्येतव्यम्; तथापि तदेवास्तां साक्षात्कारित्वे लिङ्गं कृतमिन्द्रियजत्वानुमानपूर्वकं तदनुमानकल्पनया।

कारणतामभ्भवेनोक्तकारणताकज्ञानत्वस्य लौकिकालौकिकसाधारणत्वात्, विषयताशब्देन विशेष्यताया विवक्षासम्भवाच्च, जन्यत्वे सति ज्ञानाकारणकज्ञानत्वादेर्वा समनियतलिङ्गताया उक्तत्वादिति भावः। शङ्कते नचेति। नहीत्यर्थः। तद् = इन्द्रियत्वावच्छिन्नजनकताकजन्यताया लिङ्गम्, न त्ववच्छेदकम्, तस्य समनैयत्यात्। व्यापकं = तादृशजन्यतासमनियतम् साक्षात्कारित्वस्य समनैयत्यं स्वार्थिकं प्रत्येतव्यम्, तस्यैव लक्ष्यतावच्छेदकत्वात्। लिङ्गस्य = लिङ्गत्वस्य, धर्मविशेषनिष्ठस्य तदनुमितिजनकतावच्छेदकत्वस्येति यावत्। तदिति। साध्यत्वेनाभिमतेत्यर्थः। उक्तजन्यत्वानुमानस्य न विषयत्वावच्छिन्नकारणताकज्ञानत्वादिनैवोक्तरीत्येश्वरज्ञानव्यावृत्तसाक्षात्कारित्वसमनियतेन सम्भवः, अपि तु जन्यत्वसमानाधिकरणज्ञानाजन्यज्ञानत्वादिनापि, तद्धि विशेषणज्ञानजन्ये प्रत्यक्षेऽवर्तमानतया साक्षात्कारित्वासमव्याप्तमिति तेनेन्द्रियजत्वानुमानदशायां साक्षात्कारित्वसमनियतस्य धर्मान्तरस्य प्रथममनुपस्थिततया प्रकृतस्य लक्षणत्वोपपत्तिरिति भावः। लिङ्गस्य स्वाधिकरणतया प्रतीत एव साध्यानुमापकताया अतिप्रसङ्गभङ्गाय वाच्यतया जन्यत्वे सति ज्ञानाजन्यज्ञानत्वस्य विशिष्टप्रत्यक्षेऽसद्भावे निरुक्तेन्द्रियजत्वमपि तत्राप्रामाणिकम्, प्रतिवादिवाक्यस्यापि मानान्तरोत्थापकतयैव प्रामाण्यात्, अन्यथा लक्षणाभिधानं विनैवेतरव्यावृत्तिप्रत्यायनापत्तेः, एवं चेन्द्रियजत्वेन साक्षात्त्वप्रतीत्यसम्भवो विशिष्टप्रत्यक्ष इति प्रत्यक्षमात्रे साक्षात्त्वप्रत्ययफलकत्वं प्रकृतलक्षणाख्यानस्य न निर्वाहितमिति प्राह यत्रेति। इन्द्रियजत्वस्येति। षष्ठ्यर्थो विषयत्वं प्रमाणघटकप्रमितावन्वेति। ततः = निरुक्तेन्द्रियजत्वात्, प्रकृतलक्षणाद्वा। प्रत्यक्षजातीये = विशिष्टप्रत्यक्षे अनवधारणीयतयेत्यन्वयः, तत्र हेतुः प्रमाणाभावादिति। व्यापकत्वेन = समव्याप्तत्वेन। यद्यपि विशिष्टप्रत्यक्षेऽनुव्यवसायबलात्साक्षात्कारित्वप्रतीतौ तत्रेन्द्रियजत्वाप्रतीतावपि व्यभिचारग्रहाभावे समव्याप्तत्वावगमसम्भवस्तथापि जन्यत्वविशिष्टज्ञानाजन्यज्ञानत्वस्येन्द्रियजत्वानुमापकतास्थले प्रतिवादिनोपन्यस्ते साक्षात्कारित्वस्य विशिष्टप्रत्यक्षे प्रतीतावप्यन्द्रियजत्वाप्रतीतिसम्भवेन व्यभिचारग्रहसम्भव इति भावः। किमपराद्धमिति। विशिष्टप्रत्यक्षेऽनवगतयोस्तज्ज्ञानत्वेन्द्रियजज्ञानत्वयोर्द्वयोरेव प्रत्यक्षत्वसमनैयत्यानवगमतौल्ये प्रथमोपस्थितस्यैव लक्षणतौचित्येति भावः। लिङ्गान्तरेण = जन्यत्वविशिष्टज्ञानाजन्यज्ञानत्वेन। अव्यापकेन = साक्षात्त्वासमनियतेन। यत्र = विशिष्टप्रत्यक्षे, तत् = उक्तज्ञानत्वं लिङ्गं। लिङ्गान्तरं यद्यपि विषयत्वेन विषयजन्यज्ञानत्वं जन्यत्वे सति ज्ञानाकरणकज्ञानत्वादिकं वा न विवक्षितं सम्भवति, समनैयत्योक्त्या दत्तोत्तरत्वात्, 'प्रत्येकमव्यापकत्वे' त्यग्रिमग्रन्थासङ्गतेश्च। नापि साक्षात्करोमीत्यनुव्यवसायविषयज्ञानत्वम्, तस्य निर्विकल्पकावृत्तित्वेनाग्रिमग्रन्थसङ्गतावपि साक्षात्कारित्वलिङ्गतानौचित्यात्, अत एव न निर्विकल्पकान्यजन्यप्रत्यक्षत्वं विशिष्टविषयकजन्यप्रत्यक्षत्वं वा, व्यभिचाराधारकत्वेन जन्यप्रत्यक्षत्वातिरिक्तांशवैयर्थ्याच्च, तथापि निर्विकल्पजन्यज्ञानत्वमनुमित्याद्यन्यविशिष्टज्ञानत्वं वाऽनुमित्यादेर्लिङ्गादिकरणकत्वमते ज्ञाताकरणकविशिष्टज्ञानत्वं वेन्द्रियजत्वे लिङ्गं सम्भवत्येवेति भावः। तदनुमानेति। साक्षात्कारित्वानुमानेत्यर्थः। द्वयमिति। जन्यत्वविशिष्टज्ञानाजन्यज्ञानत्वं निर्विकल्पक-

अथ तथालिङ्गद्वयं प्रत्येकमव्यापकतया न लक्षणम्, इन्द्रियजत्वं तु तथात्वाल्लक्षणमिति चेन्न; साक्षात्कारित्वानुमानस्य लक्षणप्रयोजनस्योभाभ्यामेव सिद्धेः कृतं व्यापकेन तेन।

नापि तृतीयः, स ह्येवंरूपः—यदिन्द्रियार्थसन्निकर्षजनितं तत्'प्रत्यक्ष'मिति व्यवहर्तव्यमिति; अयमप्यर्थोऽनुपपन्नः, लक्षणस्य ज्ञातुमशक्यत्वात्, साक्षात्कारित्वाच्च तद्वगमे साक्षात्कारित्वमेवास्तु व्यवहारनियमनिदानमव्यवहितप्रतिपत्तिकत्वादित्यावेदितम्। अतएव न चतुर्थः, कल्पनागौरवदोषश्चाधिकः। नापि पञ्चमः, तादृशस्य दर्शयितुमशक्यत्वात्।

एतेन "भासमानाकारेन्द्रियसम्प्रयोगजं प्रत्यक्ष"मित्यपि निरस्तम्। किञ्च, प्रमाणविशेषलक्षणमिदं प्रमाणलक्षणोपसङ्गृहीतस्य कियतः सङ्ग्राहकं कियतश्च प्रतिक्षेपकं

---

जन्यज्ञानत्वादिकमेवेत्यर्थः। अव्यापकतया = साक्षात्कारित्वासमनियततया। तेन = इन्द्रियजत्वेन।

जनितमिति। यथार्थज्ञानमिति शेषः। प्रत्यक्षमिति। यथार्थप्रत्यक्षमित्यर्थः। एतत्कल्पखण्डनं च प्रकारान्तरेणापि परतः "प्रत्यक्षतया व्यवहर्तव्या इति व्यवहारस्य किं विषयभेदो विशेषः, उत शब्दभेदः" इत्यादिना करिष्यति। अत एवेति। साक्षात्कारित्वस्य प्राक्प्रत्येतव्यत्वेन तस्यैव प्रत्यक्षादिशब्दप्रवृत्तिनिमित्तत्वौचित्यादेवेत्यर्थः। न परमुपस्थितिकृतमेव लाघवमपि तु शरीरकृतमपि, साक्षात्कारित्वस्याखण्डत्वात् तादृशस्यैव च सति सम्भवे शक्यतावच्छेदकत्वम्, न तु गुरोः, अन्यथा गव्यशब्दस्य गोसदृशान्त्वं गगनशब्दस्य चाष्टद्रव्यातिरिक्तद्रव्यत्वं शक्यतावच्छेदकं स्यादित्याह कल्पनेति।
एतेनेति। इन्द्रियसम्प्रयोगजन्यतायाः साक्षात्कारित्वेनैवावच्छेद्यतया तत्प्रतिपत्त्यधीनप्रतिपत्तिकत्वेन तस्यैवेतरभेदानुमितिव्यवहारौपयिकतया लक्षणतौचित्येनेत्यर्थः। एवञ्चैतादृशलक्षणानां साक्षात्कारिताचिन्हत्वप्रवृत्तिनिमित्तत्वयोरनभ्युपगमेऽपि न क्षतिः। भासमानेति। स्वप्रकारीभूतार्थानुयोगिकेन्द्रियप्रतियोगिकसम्प्रयोगजन्यं ज्ञानं यथार्थप्रत्यक्षमित्यर्थः। इदं रजतमितिभ्रमे प्रकारीभूतरजतेनेन्द्रियासम्प्रयोगान्नातिप्रसङ्गः, इन्द्रियत्वावच्छिन्नप्रतियोगिकसम्प्रयोगत्वेन कारणताविवक्षणाच्चात्मानुमादौ न स इति। साक्षात्कारित्वस्य प्रतीतिदशायां तत्समनियतोक्तजन्यत्वस्य तदवच्छेदकधर्मवत्त्वस्य वा लक्षणत्वसम्भव इत्यादेरीरितरीतेरुक्तावप्याह किञ्चेति। अत्रेन्द्रियपदमकिञ्चित्करम्, सम्प्रयोगत्वञ्च षोढासाधारणं दुर्वचम्, संयोगाद्यन्यतमजन्यत्वेनेतरभेदसाधने व्यर्थविशेषणत्वञ्चेत्यपि द्रष्टव्यम्। प्रमाणपदं प्रमापरम्। प्रमाणलक्षणेति। प्रमासामान्यस्य विशेष्यावृत्त्यप्रकारकानुभवत्वादिलक्षणेत्यर्थः। कियतः = यथार्थप्रत्यक्षस्य। आश्रयतान्वयि निष्ठत्वं षष्ठ्यर्थः। सङ्ग्राहकत्वमाश्रयताया निरूपकत्वम्, प्रतिक्षेपकत्वं तु तदनिरूपकत्वम्। कियतः = भ्रमस्य यथार्थानुमादेश्च। व्यभिचारिणो भ्रमस्य, निवृत्तिः = प्रमात्वानाश्रयत्वम्। भासमानस्येति। सद्रजतमिदमित्यादिभ्रमे सत्तेदन्तादेरपि प्रकारतेति भावः। ननु लौकिकालौकिकसाधारणसम्प्रयोगस्यैव निवेश्यतया तस्य रजतेऽपि सत्त्वात्किमिति सत्तादिपर्यन्तानुधावनम्, एतल्लक्षणस्य 'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्ष"मिति मीमांसासूत्रीयवृत्तिकारारतत्सत्पदव्यत्यासायत्तव्याख्यानरूपत्वेऽपि न निस्तारः, प्राभाकरैरुपनीतभानानभ्युपगमेऽपि भट्टैस्तदभ्युपगमादिति व्यक्तं प्रामाण्यवादगादाधर्यादाविति चेन्न; अलौकिकसन्निकर्षानियम्याया एव साक्षात्करोमीतिधीसाक्षिकविषयताया रजते सद्भावेनोपनीतभानस्येन्द्रियसम्प्रयोगत्वेनाहेतुत्वात् दोषस्यैव रजतभाननियामकताया वक्तव्यत्वात्, उपनीतांशे प्रत्यभिज्ञायां तत्तांशे इव स्मृतित्वस्यैव वक्तुं शक्यत्वाच्चेति यावदंशे प्रत्यक्षत्वं तावदंशे लौकिक एव सन्निकर्षोऽपेक्षणीय इति भावः। विशेषेति। स्वप्र-

वक्तव्यम्, प्रमाणलक्षणेन च व्यभिचारिणो निवृत्तिः प्रदर्श्यते, तथा च सति यथाश्रुतमिदमलक्षणम्. व्यभिचार्यपि हि भासमानस्य सत्तादेराकारस्येन्द्रियसंयोगादुत्पद्यते। अथ विशेषाभिप्रायेणेदं लक्षणं वाच्यं, तथाप्यसङ्गतिः; तथाहि–किं कियन्मात्रभासमानेन्द्रियसम्प्रयोगजत्वं विवक्षितम्? उत यावद्भासमानेन्द्रियसम्प्रयोगजत्वम्?। आद्ये व्यभिचार्यव्यवच्छेदः, निर्विकल्पासङ्ग्रहश्च।

नापि द्वितीयः, विकल्पासहत्वात्, तथाहि–किं भासमानताविशिष्टस्येन्द्रियसम्प्रयोगः? उत भासमानतोपलक्षितस्य?। नाद्यः, पूर्वं भासमानत्वाभावात्, कारणस्य च पूर्वभावित्वात्। द्वितीये लटोऽविवक्षितार्थत्वं वा? विवक्षितार्थत्वं वा? नाद्यः, तथाहि–याव-

प्रकारीभूतविशेषानुयोगिकेत्यादि लक्षणं वाच्यम्, सत्तादिकञ्च न विशेष इत्यनतिप्रसङ्ग इति भावः। यद्यपि प्रमेयत्वादिकमपेक्ष्य सत्तादिकमपि विशेष एव, प्रमेयत्वसत्ताद्रव्यत्वादितत्तद्धर्मभिन्नत्वेन तु विशेषोपादानं न सम्भवति, सत्तादिप्रकारकप्रमेष्वतिप्रसक्तेः, तथाप्यनाहार्याप्रामाण्यज्ञानानास्कन्दितयादृशधर्मप्रकारकनिश्चयत्वं यद्विशेष्यकभ्रमत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्ति तादृशधर्मस्यैव तत्तदीयविशेषत्वविवक्षायां सत्तेदन्त्वादेर्न विशेषत्वसम्भव इति। तथाहीति। किं स्वप्रकारीभूतयत्किञ्चिद्विशेषानुयोगिकेत्यादिकं विवक्षितं लक्षणम्, उत स्वप्रकारीभूतयावदनुयोगिकेत्यादिकमिति विकल्पार्थः। आद्ये इति। अयम्भावः–उक्तविशेषत्वघटकीभूतं भ्रमत्वमनुगतं वाऽननुगतं वा, आद्ये न तादृशो धर्मः कश्चिद् यद्विषयकनिश्चयोऽनाहार्यत्वाद्याक्रान्तोऽपि किञ्चिद्विशेष्यकमपि भ्रमत्वावच्छिन्नं प्रतिबध्नीयात्, द्वितीये तु नेदन्त्वादेर्वारणम्, योगाचाराभिमतस्यान्यादृशस्य वाऽनिदमात्मकत्वग्रहस्य शुक्त्यादौ तार्किकादिमते भ्रमत्वमवासवत इदन्त्वप्रकारकतादृशनिश्चयसामान्यप्रतिबध्यत्वादिति। विस्तरस्तु विशेषत्वदुर्वचतायाः सम्यक्त्वखण्डने प्राक्कृतः। निर्विकल्पेत्यादि। निर्विकल्पकस्य प्रकारताऽप्रसिद्धेः स्वपदेन तदुपादानानुपपत्तेरिति भावः। प्रकारतास्थाने विषयत्वविवक्षायां तु पूर्वोक्तमेव दूषणं सारम्। अथवा वस्तुमात्रावगाहित्वमेव निर्विकल्पस्य नतु किञ्चिद्विशेषावगाहित्वमपीतिमते विषयत्वविवक्षायामपि दूषणमिदमभिहितम्।

पूर्वमिति। स्वविषयताविशिष्टेन्द्रियसम्प्रयोगस्य जनकतयोक्तलक्षणघटकत्वे स्वस्मात्प्राक् स्वविषयताया असम्भवेन तद्विशिष्टस्याप्यभाव इत्यसम्भवप्रसङ्गः। विषयतायां स्वीयत्वानिवेशे तु पुरुषान्तरस्येश्वरस्य वा ज्ञानीयविषयताया वैशिष्ट्यस्य प्राक्सम्भवेऽपि सुदृढोऽसम्भवः, तादृशविषयतायाः प्रपञ्चमात्रे स्वयावदनुयोगिकसन्निकर्षजत्वस्य क्वचिदप्यभावादिति भावः। लट इति। शानच्स्थानिन इत्यर्थः। एतच्च– आदेशानां बहुत्वेन लाघवाल्लत्वस्यैव शक्ततावच्छेदकत्वम्, आदेशेन लकारस्य स्मरणाच्च शाब्दबोधः, स्थान्यादेशभावमप्रतिपद्यमानस्य त्वादेशे शक्तिभ्रमादेव स इति मताभिप्रायेण। वस्तुतस्तु शानजाद्यादेशानां शक्तताग्रहस्थले तद्घटितानुपूर्वीज्ञानस्य तदधीनोपस्थितिसहकृतस्य शाब्दधीकारणतायाः क्लृप्ततया श्रूयमाणतया च तेष्वेव शक्तिरित्यनौचित्यमित्यन्यत्र विस्तरः। एवञ्च स्वीयविषयतोपलक्षितयावदनुयोगिकेत्यादिकं वा, वर्तमानकालावच्छिन्नविषयतोपलक्षितयावदनुयोगिकेत्यादिकं वा लक्षणमिति विकल्पार्थः। विषयताया ज्ञानसमसमयत्वाद्द्वितीयकल्पं तस्यां स्वीयत्वं नोपात्तम्। विज्ञानं = यथार्थविज्ञानं, आत्मनि = आत्मविषयकम्, लक्ष्यतावच्छेदकं हि सामान्यतो यथार्थप्रत्यक्षत्वमेव भवतोक्तम्, नतु स्वविषयांशे इति भावः। एवञ्चात्मपदं पटादेरप्युपलक्षणम्। तदीयाविषयत्वात् = तदीयविषयत्वेनाननुभवात्, तेन 'न चे'त्यादि प्रतिज्ञया न पौनरुक्त्यम्। प्रमाणस्य =

न्द्भासमानाकारेन्द्रियसम्प्रयोगजमपि भवति "घटोऽय'मिति विज्ञानं नन्वात्मनि प्रत्यक्षम्, आत्मनस्तदीयाविषयत्वात्, प्रमाणस्य च विषयनियतत्वाद्यत्र प्रामाण्यं तत्रैव विषये तद्विशेषस्य प्रत्यक्षत्वस्य वक्तव्यत्वात्, अन्यथा घटास्तित्वे 'घटोऽय'मिति प्रत्यक्षं प्रमाणयतः किमुत्तरम् ? । नन्विदमुत्तरम्—घटविज्ञानं न पटे प्रत्यक्षम्, नहि तदिन्द्रियसन्निकर्षेणोत्पन्नमिति । तत्किमात्मेन्द्रियसन्निकर्षजं घटविज्ञानमात्मनि प्रत्यक्षमेव । कथमेवं स्यात्, आत्मेन्द्रियसन्निकर्षाद्घटज्ञानस्योत्पादेऽप्यात्मनोऽनवभासमानत्वादिति चेन्न, भासमानेत्यत्र लटोऽविवक्षितार्थत्वपक्षमाश्रित्येदं भवतोच्यत इति स्मर्तव्यम्, अस्ति ह्यात्मनो भासमानत्वं कदाचित्केनचित्, अन्यथाऽप्रमेयत्वप्रसङ्गात् । उक्तलक्षणकं स्वविषये प्रत्यक्षं नत्वन्यत्रापीति चेन्न; स्वशब्देन यदि ज्ञानमात्रं विवक्षितं तदा स दोषस्तदवस्थः, अथ

प्रमात्वस्य ।तद्विशेषस्य = प्रमात्वव्याप्यस्य प्रत्यक्षत्वस्य = यथार्थप्रत्यक्षत्वस्य । आत्मेन्द्रियेति । इन्द्रियं मनः । तदिन्द्रियसन्निकर्षजत्वस्य तद्विषयकत्वनियामकत्वे घटोऽयमिति प्रत्यक्षस्य पटविषयकत्वासम्भवेऽप्यात्मविषयकत्वं प्रसक्तमेव । स्वविषयतोपलक्षितो यो यस्तदिन्द्रियसन्निकर्षत्वावच्छिन्नजन्यज्ञानत्वं तद्विषयकयथार्थप्रत्यक्षत्वमिति विवक्षायामुक्तप्रत्यक्षाविषयीभवदात्मेन्द्रियसन्निकर्षजत्वमादाय नातिप्रसङ्गः, अयं घट इति प्रत्यक्षे आत्मानुयोगिकेन्द्रियत्वावच्छिन्नप्रतियोगिकसन्निकर्षत्वेनाकारणत्वाच्चेति यद्यपि, तथापि स्वत्वस्यानुगमे स्वविषयत्वस्य प्रपञ्चमात्रे सत्त्वेनासम्भवस्य, अननुगमे तु तस्यैव प्रसङ्गोऽस्त्येवेति भावः । अनवभासमानत्वात् = वर्तमानकालावच्छिन्नविषयताऽनाश्रयत्वात्, सर्वज्ञस्य मयाऽनभ्युपगतत्वेनायं घट इति ज्ञानकालिकासर्वज्ञज्ञानीयविषयतानाश्रयत्वस्य च तत्तज्जीवात्मनि सम्भवेन तादृशविषयताश्रयेन्द्रियसन्निकर्षजत्वस्य तद्विषयकत्वनियामकत्वोपगमे तत्तदात्मनि नातिप्रसङ्ग इत्याभासः । एतेन—अनवभासमानत्वादित्यस्य 'अयं घट इति प्रत्यक्षाविषयत्वा'दित्यर्थकत्वे वर्तमानकालावच्छिन्नत्वाविवक्षायामपि स्वविषयताश्रयो यो यस्तदनुयोगिकेत्यादिकल्पे प्रकृतातिप्रसङ्गभङ्गसम्भवेन 'लटोऽविवक्षितार्थत्वपक्षमाश्रित्ये' त्युत्तरग्रन्थासङ्गतिः । उक्तकल्पमनाश्रित्योत्तानार्थ एव दोषदाने तु वर्तमानकालावच्छिन्नत्वविवक्षायामपि स्वीयत्वस्योक्तरीत्याऽनुपादेयत्वेनायं घट इति ज्ञानाविषयत्वेऽपि तत्कालिकपुरुषान्तरज्ञानीयविषयताश्रयत्वेनात्मन्यतिप्रसङ्गस्य सत्त्वेन तदसङ्गतिरेव, अयं घट इति प्रत्यक्षे आत्मानुयोगिकेन्द्रियत्वावच्छिन्नप्रतियोगिकसन्निकर्षत्वेनाकारणत्वात्तादृशरूपेण कारणतानिरूपकस्यैव च प्रत्यक्षस्यात्मविषयकत्वमित्येवमुक्तातिप्रसङ्गवारणं तु वर्तमानकालावच्छिन्नत्वाविवक्षायामपि तुल्यमिति—नाशङ्कनीयम् । उक्तलक्षणकमिति । स्वविषयतोपलक्षितो यो यस्तदनुयोगिकत्वविशिष्टेन्द्रियत्वावच्छिन्नजनकताकज्ञानमित्यर्थः । लक्षणलक्ष्यतावच्छेदकघटकस्वत्वस्यानुगतत्वे आह स्वशब्देनेत्यादि । स दोषः = घटज्ञानस्यात्मविषयकत्वप्रसङ्गः, आत्मनोऽपि स्वविषयत्वात् । यदि लक्षणे स्वत्वमननुगतं लक्ष्यतावच्छेदके चानुगतं तदाऽव्याप्तिः, यदि तु लक्षणे तदनुगतं लक्ष्यतावच्छेदके चाननुगतं तदाह अथेति । अतिव्याप्तिरिति । यावत्पदं विस्मृत्येदम्, अन्यथा स्वत्वस्यानुगतत्वे स्वविषयतोपलक्षितत्वस्य निखिलप्रपञ्चे सत्त्वेन तदनुयोगिकेन्द्रियसन्निकर्षत्वावच्छिन्नजनकत्वाप्रसिद्धेरसम्भवस्यैव वक्तव्यत्वादिति । लक्ष्यमेवेति । प्रत्यक्षत्वावच्छिन्नस्यैव लक्ष्यत्वमित्याशयः । असाधारणस्वरूपं = स्वविषयकप्रत्यक्षत्वं, लक्ष्यत्वेन = लक्ष्यतावच्छेदकत्वेन । अन्यस्वरूपम् = अन्यनिष्ठम् । साधारणं रूपं = प्रत्यक्षत्वं । तदिति । भवतैवासाधारणीकृतमित्यन्वयः । पदं = पदार्थम् । ननु समभिव्याहृतपदोपस्थाप्यस्यैव स्वपदबोध्यत्वात्तादृशेन्द्रियसन्निकर्षत्वावच्छिन्नजनकताकज्ञानं स्वविषयप्रत्यक्षमित्यत्र ज्ञानान्तरस्य साधारण्ये स्वपदा-

अन्यक्तिरपेक्षिता तदा लक्ष्यस्वरूपस्यासाधारणतया तत्परित्यागेन लक्षणस्यान्यत्रापि गतत्वादतिव्याप्तिः, व्यक्त्यन्तरस्य लक्षणाश्रयस्यैकव्यक्त्यभिहितलक्ष्यीभूतासाधारणरूपत्वाभावात्। व्यक्त्यन्तरमपि लक्ष्यमेव, अलक्ष्ये च लक्षणस्य गमनादतिव्याप्तिरिति चेन्नः यदेकत्रासाधारणस्वरूपं लक्ष्यत्वेन निरूप्यते भवता, न तदन्यस्वरूपम्, अतः कथं 'तदपि लक्ष्य' मित्यपिशब्देनानेकं साधारणीकृत्य समुच्चेतुं शक्यम्, यदपि साधारणं रूपं तद्व्यक्त्यन्तरव्यवच्छेदकं स्वविषयपदं विशेषणं प्रक्षिपता भवतैवासाधारणीकृतम्, स्वशब्दस्य ज्ञानमात्रार्थत्वे दोषस्योक्तत्वात्, स्वत्वस्य चानुगतस्वरूपस्य निर्वक्तुमशक्यत्वात्, अन्यथाऽन्यव्यक्तिविषयस्यान्यत्र तथात्वापत्तेः।

नापि द्वितीयः पक्षः, विकल्पासहत्वात्, किं सम्प्रयोगापेक्षया वर्तमानत्वम्, अथ

---

र्थस्यापि साधारण्यमिति नोक्तदोष इत्यत आह स्वशब्दस्येति। ज्ञानेति। उक्तजनकताकेत्यादिः। प्रकारस्युत्क्रमेणाशक्यत्वाच्चेत्यन्वयः। स्वपदार्थतावच्छेदकं स्वत्वं न जातिः, सामान्यादावपि सद्भावात्, नाप्यखण्डोपाधिः, प्रतीतिविशेषसाक्षिकतयैव निरूप्यत्वेनान्योन्याश्रयापत्तेः, स्वावृत्तित्वे स्वत्वविषयकत्वस्यासङ्ग्रहेण स्ववृत्तित्वोपगमे आत्माश्रयाच्च, यदि च समभिव्याहृतपदोपस्थाप्यतावच्छेदको धर्म एव स्वत्वं तदापि नानुगतम्, एकस्मिन् ब्राह्मणे ब्राह्मणान्तरमातृदर्शनकर्तृत्वे ब्राह्मणः स्वमातरं न पश्यतीति प्रयोगप्रामाणिकताया अनुभवस्य चानुरोधेन व्यक्तिविशेषपरामर्शकतायाः स्वपदे वाच्यत्वे च नानुगमवार्तापि, यथेष्टविनियोगयोग्यत्वमपि स्वत्वं नानुगमाय स्वस्मिन्, ज्ञानघटदेवदत्तादीनां विनियोगस्य यथेष्टत्वस्य चानैक्यात्, योग्यतावच्छेदकानिर्णये सर्वस्यापि सर्वविनियोगयोग्यत्वोद्भावनस्य सावसरत्वाच्च, स्वीययथेष्टविनियोगयोग्यताया आत्माश्रयापादकत्वादिति भावः। अनुगमे बाधकान्तरमाह अन्यथेति। तथात्वेति। स्वत्वेत्यर्थः। एतेन स्वत्वस्याननुगतत्वे तत्पुरस्कृत्य प्रवृत्तायाः सामान्यव्याप्तेर्विलोप इति तस्यानुगतत्वमेव वाच्यम्, स्वत्वविषयकमन्यस्ये लक्षणसङ्गमनार्थं सोढव्य आत्माश्रयः, अन्यथाऽनवस्थानात्, अनवस्थापेक्षयाऽऽत्माश्रये लाघवात्, यदाह बौद्धाधिकारदीधितिः—"अन्योन्याश्रयचक्रकानवस्थानामन्यतमप्रसङ्गे लाघवादात्माश्रयस्यैवोपगमा"दित्यपि निरस्तम्; आत्माश्रयोपगमेऽपि तस्यादोषत्वोपगमासम्भवाच्च, सामान्यव्याप्तिविलोपविभीषिकाया वैतण्डिकं प्रति प्रदर्शनानर्हत्वाच्च, स्वत्वस्य संसर्गकुक्षिनिक्षेपेणापि तत्समर्थनसम्भवाच्च, कयोरपि साध्यसाधनजातीययोर्व्यभिचाराग्रहे उपस्थितयाऽन्यसाध्यसाधनजातीयव्याप्तिग्रहबलादेवागृहीतव्याप्तिकसाधनविशेषस्य साध्यविशेषानुमापकत्वोपपत्तेश्च। अधिकं तूपमानोपमाने शारदायां वक्ष्यते।

लडर्थविवक्षापक्षे स्वाश्रयक्षणावच्छिन्नस्वीयविषयतोपलक्षितयावदनुयोगिकेन्द्रियसन्निकर्षावच्छिन्नजनकताकजन्यताशालिज्ञानत्वविवक्षणे वैयर्थ्यमवच्छिन्नान्तस्य, प्रथमपक्षोक्तदोषोन्मेषश्च, स्वाश्रयक्षणावच्छिन्नविषयतोपलक्षितेत्यादिविवक्षायामपि दुर्वारोऽसम्भवः, सर्वज्ञाभ्युपगमेऽपि तत्तत्पुरुषीयज्ञानीयतादृशविषयताश्रयत्वस्य प्रायः सर्वत्र सत्त्वात्। सम्प्रयोगे स्वत्वविवक्षया स्वाश्रयक्षणावच्छिन्नविषयतोपलक्षितयावदनुयोगिकाश्च सम्प्रयोगस्तावच्छिन्नेत्यादिकमप्यभिधानं नातिक्रामत्यसम्भवम्। अत्रैव पक्षे विषयतायां स्वजन्यज्ञानीयत्वस्याप्युपादाने स्वत्वाननुगमाभ्युपगमेऽसम्भवासम्भवेऽप्यवच्छिन्नान्तस्य वैयर्थ्यमस्त्येव। दूषणान्तरं त्वाह प्रथम इति। सम्प्रयोगस्य कतिपयक्षणावस्थायित्वे कचिद्यपि तज्जन्यज्ञानीयविषयतायास्तदाश्रयक्षणावच्छिन्नत्वं सम्भवति तथापि निर्विकल्पकस्य सविकल्पकस्य वोत्पत्तिक्षणे सम्प्रयोगस्य विनाशे तज्जन्यज्ञानीयविषयतायास्तदाश्रयक्षणावच्छिन्नत्वास-

यत्किञ्चिदपेक्षया, प्रथमे विशेषणत्वपक्षान्न विशेष इत्युक्तदोषापत्तिः। द्वितीये तु लटोऽविवक्षितार्थत्वमेव स्यात्, व्यवच्छेद्ययोर्भासितभासिष्यमाणयोरपि तदा भासमानत्वस्वीकारात्। इन्द्रियसम्प्रयोगानन्तरं भासमानत्वमपेक्षितम्, अतो विवक्षितार्थत्वमिति चेन्न; आत्मनोऽपीन्द्रियसंयोगानन्तरं भासमानत्वमस्ति, नहि स यदा मनसा गृह्यते तदा नेन्द्रियसंयोगानन्तरम्। नेन्द्रियसंयोगमात्रं विवक्षितं, किन्नाम? यदनन्तरं भासमानतोत्पत्तिरिति चेन्न; तदनन्तरमपि भासमानतोत्पत्तेः। भासमानतान्तरं तत्, नत्विदं भासमानत्वमिति चेन्न; अव्याप्तिप्रसङ्गात्, एकभासनमात्रव्यवस्थिततत्वाल्लक्षणस्य। अथ मन्यसे—यद्भासनं यस्य विषयस्येन्द्रियसम्प्रयोगादुत्पन्नं तत्तत्र प्रत्यक्षं प्रमाणमिति निरुक्तौ न दोष इति। मैवम्, यद्भासनं 'घटोऽय'मिति यस्य विषयस्य = आत्मन इन्द्रियेण सह सन्निकर्षादुत्पन्नं तद्भासनं तस्मिन्नात्मनि प्रमाणं स्यात्। नात्मा तस्य विषयः, तत्कथमेवं स्यादिति चेत्, नहि भवता तदीयविषयस्येत्युक्तम्, किन्तु सामान्यतो विषयस्येति, तेनेदमभिहितम्। यदि तु तदीयताविशेषणमुपादत्से भवान् तदा यदि तच्छब्देन ज्ञानजातीयमात्रपरामर्शस्तदा स दोषस्तदवस्थः, यदि तु ज्ञानव्यक्तिविशेषपरामर्शस्तदाऽव्यापकत्वम्, प्रतिज्ञानं तच्छब्दार्थस्य भेदात्, नहि यत्त्वं तत्त्वं वा किञ्चिदनुगतं रूपमस्ति। अत एवात्मविषयत्वानुयोगवत्त्रिपुटीप्रत्यक्षवादिनि घटज्ञान-

---

म्भवेनाव्याप्तिरित्यर्थः। न विशेष इति। यावल्लक्ष्यासङ्ग्राहकत्वांशे इत्यादिः। अन्यथा विशेषणत्वपक्षेऽसम्भवोऽत्र त्वव्याप्तिरिति विशेषसद्भावेनासङ्गतिः। यथाश्रुतं तु स्वीयाद्यक्षणावच्छिन्नत्वस्य विषयतायां विवक्षायामेव शोभते। द्वितीये इति। वर्तमानकालावच्छिन्नत्वमात्रस्य विषयतायामुपादानपक्ष इत्यर्थः। तदा = स्वभानकाले। स्वीकारादिति। तथाच वैयर्थ्यं सामान्यतो वर्तमानकालावच्छिन्नत्वनिवेशस्य, असम्भवश्चेति, भावः। इन्द्रियेति। निर्विकल्पकसविकल्पकोभयसङ्ग्रहार्थमानन्तर्यं द्वितीयादिक्षणसाधारणं तदधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणावृत्तित्वरूपम्, तदधिकरणक्षणध्वंसाधिकरणक्षणवृत्तित्वस्य तूपादाने वाऽनुपादाने वा विषयतायां सम्प्रयोगजन्यज्ञानीयत्वस्यानुपादानेऽसम्भवोऽन्यथा तु वैयर्थ्यमित्युक्तमेव। तथाच सम्प्रयोगे स्वत्वविवक्षया स्वोत्तरक्षणावच्छिन्नविषयतोपलक्षितयावदनुयोगिकेत्यादिकं लक्षणं वाच्यमित्यर्थः। नहीति। संयोगानन्तरमिति। 'गृह्यते' इत्यनुषज्यते। उक्तलक्षणकमिन्द्रियसम्प्रयोगोत्तरक्षणावच्छिन्नविषयतावति प्रत्यक्षमित्यभिधानेऽन्यविषयकप्रत्यक्षस्यान्यत्र प्रत्यक्षत्वप्रसङ्गः स्पष्टः, असम्भवापादकत्वेन यावत्त्वस्यानुपादेयत्वात्। एवञ्च भ्रान्तावतिप्रसक्तिरित्यन्यत्। स्वविषये प्रत्यक्षमित्येवं लक्ष्योक्तिस्तु निराकृता। गूढाभिसन्धिराशङ्कते नेन्द्रियेति। गूढाभिसन्धिः परिहरति तदनन्तरमिति। आत्मप्रत्यक्षजनकसम्प्रयोगानन्तरमित्यर्थः। परोऽभिसन्धिमुद्घाटयति भासमानतान्तरमिति। इदमिति। विषयतायां स्वजन्यज्ञानीयत्वमुपादेयमिति भावः। एवं च यावत्त्वस्याप्युपादानसम्भव इति। एवं सति स्वोत्तरक्षणावच्छिन्नत्वविवक्षावैयर्थ्यम्, अननुगमप्रसङ्गश्चेत्यभिसन्धिं स्फोरयति खाण्डनिकोऽव्याप्तीति। न हीति। उक्तरीत्या स्वत्ववदिदं ज्ञेयम्। प्रभाकरमतेऽयं घट इत्यस्य स्थाने घटत्वेनेममहं जानामीत्याकाराया एव ज्ञानज्ञेयज्ञातृविषयिकाया वित्तेरभ्युपगमेन कस्यचिज्ज्ञानस्यात्मविषयकत्वापादनं नानिष्टमित्याशङ्क्याह अत एवेति। विषयविशेषस्य नियन्तुमशक्यत्वादेवेत्यर्थः। अनुयोग आपत्तिः। त्रिपुटी = ज्ञानज्ञेयज्ञातारः। तदर्थं = उक्तानुयोगवारणार्थं। यदिति। यदनुयोगिकेत्यर्थः। प्राभाकरेण

स्य घटादौ प्रत्यक्षतया प्रामाण्यानुयोगो द्रष्टव्यः। तदर्थं 'यदिन्द्रियार्थसन्निकर्षोत्पन्न' मिति विशेषणप्रक्षेपे यत्तच्छब्दस्यासाधारणयादव्याप्त्यापत्तेः। यदि तु यत्तच्छब्दार्था-वनुगतौ स्यातां पुनरप्यन्यत्र 'घटोऽय' मिति ज्ञानस्य प्रत्यक्षत्वेन प्रमाणता प्रसज्येत।

अथान्यव्यतिरिक्ते इति विशेषणं प्रक्षिपसि, तदाऽऽत्मविषयस्य प्रत्यक्षता न स्यात्, तच्छब्देनानुगतार्थाभिधाने व्यवच्छेदकत्वाभावाद्घटज्ञानस्य पटे प्रत्यक्षतया प्रामाण्यं प्रसज्येत। एतेन "इन्द्रियार्थसन्निकर्षोत्पन्नमव्यभिचारि प्रत्यक्ष" मित्यत्रापि दोषोऽयमुक्तो द्रष्टव्यः, तादृशस्यापि ज्ञानस्य विषयान्तरे प्रत्यक्षत्वेन प्रामाण्यप्रसङ्गात्। यस्यार्थस्य सन्निकर्षाद्यदुत्पद्यते तत्तत्र प्रत्यक्षतया प्रमाणमित्यभिधाने तु यच्छब्दतच्छ-ब्दसाधारणासाधारणार्थाभिधानविकल्पोक्तदोषप्रसङ्गः। अव्यभिचारिपदं च व्य-र्थम् नहि शुक्तौ रजतज्ञानं रजतेन्द्रियसन्निकर्षादुत्पन्नम्। संस्कारलक्षणप्रत्यासत्ती रजतेऽप्यस्तीति चेन्न, रजतत्ववैशिष्ट्ये पुरोवर्तिनस्तदभावात्, तस्मिन्नेव चांशेऽप्रामाण्यं नतु रजतत्वमात्रे, तस्यान्यत्र सत्त्वात्।

---

प्रमानभ्युपगमाद्घटमभानस्यादिकमनिवेश्यम्। यत्तच्छब्दस्येति। पूर्वमप्राभाकरं प्रतीदानीं तु प्राभा-करं प्रत्युक्तमित्यपौनरुक्त्यम्।

विशेषणमिति। लक्ष्यदले इति शेषः। स्वविषयीभूतं यद्यत्तदीयेन्द्रियसन्निकर्षजन्यं ज्ञानं तत्तद्भिन्ने प्रत्यक्षं नतु तद्भिन्ने इति न घटसन्निकर्षजन्यज्ञानस्य घटभिन्ने पटादौ प्रत्यक्षत्वापादनसम्भव इत्यर्थः। प्रभाकरमते घटमहं जानामीति ज्ञानं ज्ञातृज्ञानांशे नेन्द्रियार्थसन्निकर्षजन्यम् अनुमित्यादेरपि ज्ञातृज्ञानांशे प्रत्यक्षत्वेन तद्विषयकत्वावच्छेदेन ज्ञानाजन्यत्वस्यैव ज्ञानानां तद्विषयकत्वावच्छेदेन प्रत्यक्षत्वनियामक-त्वादिति वक्ष्यते। एवञ्चात्र तदिन्द्रियसन्निकर्षजन्यज्ञानस्य तद्भिन्ने प्रत्यक्षत्वानभ्युपगमे ज्ञातृज्ञानविषयक-त्वावच्छेदेन प्रत्यक्षत्वानुपपत्तिरित्याह तदिति। आत्मपदं ज्ञानस्याप्युपलक्षणम्, तथा च ज्ञातृज्ञानवि-षयकत्वावच्छेदेनेत्यर्थः। एतच्च तत्ताया अननुगममभिप्रेत्य, तथैव तद्भिन्नत्वप्रसिद्धिसम्भवात्। तस्या अनुगमे तु तत्तावच्छिन्नप्रतियोगिताकभेदस्याप्रसिद्धावुक्तलक्ष्यदलस्यैवाप्रसिद्धिः स्यादिति तदिन्द्रिय-सन्निकर्षजन्यज्ञानस्य तद्विषयकत्वावच्छेदेन प्रत्यक्षताया वक्तव्यत्वे घटज्ञानस्य पटविषयकत्वप्रसङ्गस्तद-वस्थ इत्याह तच्छब्देनेति। साधारणासाधारणेति। अनुगतानुगतेत्यर्थः। यत्तद्भ्यां लक्षण-करणे इदं रजतमिति भ्रमस्य प्रकारतत्संसर्गांशे न प्रत्यक्षप्रमात्वप्रसङ्गः, तदीयसन्निकर्षाजन्यत्वात्, इदमीयसन्निकर्षजन्येऽपीदमंशे प्रत्यक्षप्रमात्वमपि तस्येष्टमेवेत्यभिप्रायेणाह अव्यभिचारीति। ननु लौकिकसन्निकर्षाभावेऽपि प्रकारे तत्संसर्गे चान्यत्र प्रतिपन्नेऽलौकिकसन्निकर्षोऽस्त्येवेति तदंशे प्रत्यक्ष-प्रमात्ववारणायाव्यभिचारिपदं फलवदेवेत्याह संस्कारेति। प्राचीनमते संस्कारस्योपनाय-कत्वादिदम्, नव्यमते तु ज्ञानेति द्रष्टव्यम्। रजते इति। तत्संसर्गे इत्यपि द्रष्टव्यम्। यद्यप्यलौकिकसन्निकर्षो न प्रामाणिक इत्युक्तम्, लौकिकसन्निकर्षश्च न प्रकृते, तथाप्युपेत्यैवाह रजतत्ववैशिष्ट्ये इति। इदं रजतमित्यत्रेदमनुयोगिको रजतप्रतियोगिकस्तादात्म्यसंसर्गो रज-तत्वप्रतियोगिकसमवायो वा भासते तस्य चालीकत्वान्न प्रागनुभव इति कथं तदुपनयसम्भवः। नहि शुक्तिगतेदन्ता रजते, तस्याः प्रतिव्यक्तिविश्रान्तत्वात्। एवञ्चेदंसंसृष्टरजतरजतत्वान्यतरात्मकविशिष्ट-स्यासन्निकृष्टत्वाभिप्रायेणापि "विशिष्टरूपेण भ्रमविषये मया तदुपगमा"दिति मूले प्रागुक्तं द्रष्टव्यम्। अत एव "इदं रजतमित्येवंरूपं वस्तु न कुत्रचित्। न शुक्तौ रजतज्ञानं नेदन्ता रजतेऽस्ति नः" ॥ इति

अथ साक्षात्कारित्वं प्रत्यक्षलक्षणमुच्यते तदा साक्षात्कारिविभ्रमेऽपि प्रसङ्गः। अथाव्यभिचारित्वविशेषितं तल्लक्षणमिति वा भेदाग्रहव्यतिरिक्तविभ्रमाभावो वेति चेन्न, विकल्पासहत्वात्, किमवगतमिदं लक्षणं फलहेतुः, अनवगतं वा। न तावच्चरमः, तदभिधानवैयर्थ्यप्रसङ्गात्। अभिधानस्य ज्ञानोत्पादोपयोगित्वात्, तस्य चानवगतस्यैव फलसाधकत्वाभ्युपगमात्। आद्ये किमन्यस्मादवगमः? उत त्वदीयाल्लक्षणवाक्यात्? यद्यन्यस्मात्, कृतममुना लक्षणाभिधानप्रयासेन, अभिधानस्यास्य ज्ञानोत्पादातिरिक्तप्रयोजनाभावात्, तस्य चान्यत एव सिद्धेः। अन्त्ये किं त्वदभिधानमाप्तोपदेशतया साक्षात्कारित्वं बोधयति? उत लिङ्गादिभावेन?, न तावच्चरमः, त्वद्वचनस्य साक्षात्कारित्वाविनाभावादेर्दर्शयितुमशक्यत्वात्। नापि प्रथमः, वादिनं प्रति भवत आप्तत्वासिद्धेः। सिद्धौ हि प्रतिज्ञामात्रादेव साध्यसिद्धेर्हेत्वाद्यभिधानमनर्थकं सर्वत्र स्यात्।

---

बृहदारण्यकवार्तिकेऽप्यन्यथाख्यातिखण्डनतयोक्तम्। रजतज्ञानं = ज्ञायमानं रजतं। रजते हट्टस्थे शुक्तिगतेदन्ता नास्तीति तदर्थः। मात्रे इति। नापि रजतनिष्ठे रजतरजतत्वयोः संसर्गे इति शेषः। अन्यत्र सत्त्वेऽप्यत्रासत्त्वेन तदंशे भ्रमत्वं तु तदीये तद्देशसंसर्गांशे एव पर्यवसन्नमिति भावः। संसर्गस्यानलीकत्वेऽपि व्यधिकरणप्रकारकत्वेन भ्रमत्वोपपादनं तु न युज्यते, तथाहि—शुक्तौ रजतत्वसंसर्गोऽस्ति न वा, आद्ये तद्वति तत्प्रकारकत्वेन प्रमात्वं दुर्वारम्, अन्यथा रजतेऽपि रजतत्वधियः प्रमात्वं न स्यात्। द्वितीये तु स्यादेवालीकत्वम्। अन्यत्र प्रसिद्धेन रजतत्वसंसर्गेण रजतत्वारोप इति चेत्, रजतत्वसंसर्गस्य प्रसिद्धिस्तत्संसर्गवत्येव वाच्या, अन्यथातिप्रसङ्गात्, तत्संसर्गश्च स्वरूपात्मक एव, अन्यथाऽनवस्थानात्, तथाच रजतत्वसंसर्गस्य शुक्तेश्च स्वरूपसत्त्वे शुक्तावपि सोऽभ्युपेय एवेति कथं न प्रमात्वप्रसङ्गः। सम्बन्धान्तरमन्तरेण विशिष्टप्रमितिजनकत्वाभावान्न तत्स्वरूपयोः सम्बन्धत्वमिति चेत्, प्रमात्वस्यैवापाद्यमानत्वेन विशिष्टप्रमितिजनकत्वाभावस्य पूर्वं निर्धारणासम्भवात्, आपादकनिरासेन ह्यापत्तेः परिहारो नत्वन्यथा। एवञ्च वस्तुतो रजतत्वसंसर्गाभाववत्तयाभिमतेऽपि रजतत्वसंसर्गसंसर्गस्य दुर्वारत्वेन तत्र रजतत्वप्रतीतेः प्रमात्वनिवारणमशक्यमेवेति भ्रमप्रमाव्यवस्था संसर्गानलीकत्ववादे न सम्भवत्येवेति।

प्रभाकरमतेनाह भेदेति। भेदाग्रहव्यतिरिक्तस्य = अगृहीतभेदकज्ञानद्वयव्यतिरिक्तस्य। विभ्रमस्य = विसंवादिप्रवृत्तिजनकज्ञानस्याभावो मन्तव्य इत्यर्थः। तादृशज्ञानद्वयव्यतिरिक्ते न विसंवादिप्रवृत्तिजनकज्ञानत्वमिति यावत्। तेन न सिद्धसिद्धिव्याहतिः। विवेचितं मतमेतद्गुरु प्रमुष्टतत्ताकस्मृतिखण्डने। एवञ्च न भ्रान्तावतिप्रसक्तिरित्यर्थः। इतरव्यावृत्तिमितिर्व्यवहृतिर्वा फलम्। चरम इति। चरमविकल्पखण्डने न बहु वक्तव्यमिति प्रथमं तत्खण्डनम्। अप्रयोजकज्ञानुक्रमेणैव खण्डनम्, चरमस्मृत्युपारूढस्यापि प्रथमं निरासजिज्ञासासम्भवादिति। तस्य = लक्षणस्य। तस्य = ज्ञानोत्पादस्य। लिङ्गादीत्यादिनाऽन्यथानुपपत्त्युपमाने ग्राह्ये। अविनाभावादेरित्यादिनोपपाद्यत्वसादृश्ये। बोध्यत्वसम्बन्धेन त्वद्वचनं न साक्षात्कारित्वव्याप्यम्, घटादेरपि कदाचित्त्वद्वचनबोध्यत्वेन व्यभिचारात्, नापि वचनविशेषस्तथा, साक्षात्कारित्वे एव व्यभिचारात्, बोध्यतासम्बन्धेन पक्षधर्मताप्रतीतेः शाब्दबोधाद्यागसम्भवेन तस्य प्रागावश्यकत्वे लिङ्गादिविधया बोधकताया अकिञ्चित्करत्वाच्च, अनुव्यवसायस्य 'शाब्दयामी'त्यस्यैव सत्त्वादिति भावः। भवतः = लक्षणवादिनः, हेत्वादीत्यादिनोदाहरणादिवाक्येनाभिधीयमानव्याप्त्यादिकं ग्राह्यम्। सर्वत्र = कथायां शास्त्रे च।

अन्यतः = प्रत्यक्षादिना। प्रत्यक्षव्यवहारेति। प्रत्यक्षत्वप्रकारकव्यवहारेत्यर्थः। एवमग्रेऽपि। इतर-

अथ मन्यसे, यः साक्षात्कारित्वमन्यतो जानाति, प्रत्यक्षव्यवहारनिदानतया च न जानाति, तं प्रति प्रत्यक्षव्यवहारनिदानत्वमस्य ज्ञाप्यते लक्षणवादिना, तच्चानुमानभावेनैव, नाप्तोपदेशतया, अत एव च लक्षणं केवलव्यतिरेक्यनुमानमाचक्ष्महे; तद्यथा–श्रावणादिप्रमितयः साक्षात्कारिप्रमितयो वा प्रत्यक्षत्वेन व्यवहर्तव्याः साक्षात्कारिप्रमितित्वात्, न यत्प्रत्यक्षतया व्यवह्रियते न तत्साक्षात्कारि यथानुमितिः, तथा चैताः, तस्मात्तथा। एतदनुमानप्रतिपादकञ्च वाक्यं नाप्तवाक्यत्वेन प्रयुज्यते वादिना, किन्तु व्याप्त्यादेः प्रतिपन्नस्यैव स्मारकं पूर्वाप्रतिपन्नस्यैव वा जिज्ञासोत्पादनद्वारेणेदानीमेव वादिनि प्रमाणोत्पादकमित्युक्तदोषानवकाश इति। न, 'प्रत्यक्षतया व्यवहर्तव्या' इति व्यवहारस्य किं विषयभेदो विशेषः ?, उत शब्दभेदः ?, आद्ये यद्यसौ विषयविशिष्टव्यवहारं नाज्ञासीत्, कथं साक्षात्कारिणि तस्य स्वकर्तव्यतां लक्षणवाक्यादप्यवगच्छेत्,

---

प्रवृत्तिप्रत्यायकत्वं न लक्षणानां यथा, तथा प्रपञ्चितं लक्षणसामान्यखण्डने इत्याशयेनात्र व्यवहारनिदानत्वमेव निरसितुमाशङ्क्यते इत्यवधेयम्। अस्य = साक्षात्कारित्वस्य। केवलव्यतिरेकि–व्यतिरेकसहचारमात्रगृहीतव्याप्तिकं, व्याप्तिश्च सा प्राचीनमतेऽन्वयनिरूपिता नव्यमते तु व्यतिरेकनिरूपितेत्यन्यत्। हेत्वभावे साध्याभावव्यापकताग्रहे व्यापकाभावेन हेत्वात्मना साध्यात्मनो व्याप्याभावस्यानुमितिसम्भवः, तदिदमाहुः– "अन्वयेनैव व्यतिरेकव्याप्तेर्गमकत्व"मितीति भावः। श्रावणादीत्यसङ्कुचितेनादिपदेनानुमित्यादेरपि ग्रहणं माभूदित्यनुगतातिप्रसक्तरूपस्य वाच्यत्वे तस्यैव पक्षतावच्छेदकत्वमुचितमित्याशयेनाह साक्षात्कारिप्रमितय इति। साक्षात्कारिप्रमितित्वादिति। व्यतिरेकसहचारेण पक्षेऽन्वयव्याप्तिरेव गृह्यत इत्युदयनाचार्यमते सिद्धसाधनेनानुमित्यनुदयप्रसङ्गेन पक्षतावच्छेदकस्य हेतुत्वं यद्यप्यनुचितम्, तथापि व्याप्तिग्रहस्य पक्षविशेष्यकसाध्यप्रकारकत्वाभावेन समानाकारसिद्धेरेव च प्रतिबन्धकत्वेन यथञ्चित्समर्थनीयम्। व्यतिरेकव्याप्तेरनुमित्यौपयिकत्वमते तु नेयमाशङ्कापीति भावः। प्राचीनमते व्यतिरेकसहचारस्य नव्यमते च व्यतिरेकव्याप्तेरुपदर्शकमुदाहरणवाक्यं प्रयुङ्क्ते न यदिति। तथा चैता इति। व्यतिरेकव्याप्तेरनुमित्यौपयिकत्वमते 'नच तथैताः' 'तस्मान्न तथे'ति प्रयोगः शोभते। अनुमानेति। व्याप्तिपक्षधर्मताविशिष्टलिङ्गेत्यर्थः। एवञ्च 'नाप्तोपदेशतये'त्यत्र धर्मिणि साध्यज्ञापकत्वं नाप्तोपदेशतयेत्युक्तम्, अत्र तु व्याप्त्यादिज्ञापकत्वं न तथेत्यपौनरुक्त्यम्। पूर्वेति। विषयत्वं षष्ठ्यर्थो जिज्ञासायामन्वेति प्रमाणे च। प्रमाणं प्रमितिः सा च शाब्दबोधो वा तदनन्तरभावी चरमपरामर्शो वा न्यायप्रयोज्य एवेति प्रयोजकत्वमेवोत्पादकत्वमुक्तम्। इष्टसाधनताज्ञानजन्याया अपि जिज्ञासाया कथञ्चिद्वाक्यसापेक्षत्वमभिप्रेत्य 'जिज्ञासोत्पादने'ति कथितम्, विप्रतिपत्तिवाक्याधीनसाध्यतदभावकोटिकसंशयाधीनैकतरकोटिजिज्ञासायां हि प्रतिज्ञावाक्यप्रयोगे कुत इत्यादिहेतुव्याप्त्यादिजिज्ञासाक्रमेण हेतूदाहरणादिवाक्यप्रयोगस्ततश्च शाब्दबोधद्वारा चरमपरामर्श इति भावेन व्याप्त्यादिप्रमितेः कथञ्चिज्जिज्ञासासापेक्षतां मन्वानेन 'द्वारेणे'त्युक्तम्। प्रतिज्ञावाक्यजबोधस्य साध्यसिद्ध्यात्मकत्वेऽपि 'वाद्युपन्यस्तप्रमाणेनानुमिनुया'मित्यनुमित्सायामनुमितिसम्भवेन न चरमपरामर्शकल्पनाऽपि विफलेति। प्रतिवादिन आप्तत्वानिश्चयेन तदीयवाक्यजबोधस्य नानुमित्युपधायकतेति तदनन्तरमनुमित्युपधायकस्य मानसपरामर्शस्योपगम इत्यादिकं त्वन्यत्र द्रष्टव्यम्। उक्तेति। प्रतिज्ञामात्रादेव साध्यसिद्धेरित्याद्युक्तेत्यर्थः। इतिव्यवहारस्य = इत्येतत्साध्यघटकव्यवहारस्य विशेषः = व्यावर्तकः 'प्रत्यक्षतये'त्यनेनोक्तः किं विषयविशेषः उत शब्दविशेष इत्यर्थः। व्यवहारे प्रत्यक्षत्वात्मकधर्मविशेषप्रकारकत्वं वा प्रत्यक्षशब्दवाच्यत्वप्रकारकत्वं वा विवक्षितमिति भावः। शक्य इति। अयम्भावः–अ

नह्यविदिताग्निरनुमानादप्यग्निसम्बन्धं बोधयितुं शक्यः। अथाज्ञासीत्, तदा ज्ञातज्ञापनवैयर्थ्यात् लक्षणरूपमनुमानं निष्प्रयोजनम्। अथ सामान्यतो जानात्यस्ति कश्चिद्विषयः प्रत्यक्षव्यवहारस्य, विशेषतस्तु न जानाति, तं प्रतीदमुच्यते। न, किं सामान्यतो निमित्तवत्तां व्यवहारमात्रस्य जानाति ? उत व्यवहारविशेषस्य ?, आद्ये प्रकृतानुपयोगः, व्यवहारविशेषस्य चिन्त्यमानत्वात्। द्वितीये किंकृतोऽयं व्यवहारस्य विशेष इति विकल्पितपक्षानुप्रवेशमन्तरेण न निस्तारः।

---

भावसाध्यकव्यतिरेकिणा शक्यमप्रसिद्धमपि साधयितुम्, 'धूमव्यापको वह्निः, वह्न्यभाववांश्चाय'मित्यादिधिया धूमाभावस्य सिद्धिर्हि प्रागप्रतीतस्याप्यानुभविकी, यथा वा पृथिवीत्वाभावे तादात्म्येन जलादिव्यापकत्वग्रहे पृथिवीत्वेन जलादिभेदस्याप्रसिद्धस्यैव सिद्धिः, नच प्रकृतेऽभावसाध्यकत्वम्, न चेयं रीतिः परार्थानुमाने शक्यशङ्कापि, यदाह मणिकारः—'अयञ्च व्यतिरेकिप्रकारः स्वार्थे एव, परं प्रति साध्याप्रसिद्ध्या प्रतिज्ञाद्यसम्भवा'दिति। ज्ञातेति। प्रत्यक्षत्वप्रकारकव्यवहारस्य सविशेष्यकस्यैव ज्ञेयत्वादिति भावः। निष्प्रयोजनमिति। न हि परार्थानुमानस्थलीयोऽपि त्रयोदशसु प्रत्येकं त्रयोदशभेदप्रसिद्ध्याद्यभिधानक्रमोऽत्र सावसरः, भावसाध्यकत्वादेवास्य, नच—पक्षैकदेशे साध्यप्रसिद्धिः, अन्वयाप्रतिसन्धानदशायाञ्च व्यतिरेकयुपन्याससम्भव इति—वाच्यम्; एवं सति प्रत्यक्षत्वप्रकारकव्यवहारनिदानत्वं साक्षात्कारित्वे प्रतीतमेवेति लक्षणाभिधानवैफल्यमेव। नहि कश्चित्साक्षात्कारिव्यक्तिमन्तर्भाव्य साक्षात्कारित्वे तादृशव्यवहारनिदानत्वग्रहे व्यभिचाराग्रहदशायां साक्षात्कारिप्रमितित्वावच्छेदेन न तद्ग्रहसम्भवो येन तदर्थमपि भवदभिधानमुपासनीयं भवेत्। अन्यथा भवदभिधानादपि तदनुपपत्त्यापत्तेः। ननु साक्षात्कारित्वप्रत्यक्षत्वप्रकारकव्यवहारविषयत्वे जानन्नपि तयोः समानासमानासीनतायामपरिचित एव जनोऽस्माकं प्रतिपाद्यः, 'प्रत्यक्षत्वप्रकारकव्यवहारः किञ्चिद्विशेष्यक' इत्येवमपि साध्यप्रसिद्धौ प्रकृतानुमानसम्भवादित्याह अथेति। विशेषतः = तादृशव्यवहारः साक्षात्कारिविशेष्यक इत्येवम्। निमित्तवत्तां = विषयवत्तां। व्यवहारमात्रस्येति। यद्यपि शङ्काग्रन्थे 'प्रत्यक्षव्यवहारस्ये'त्युक्तम्, तथापि तत्र प्रत्यक्षत्वप्रकारकत्वं विवक्षितं नवेति भावः। विशेष इति। अयम्भावः—विशिष्टबुद्धेर्विशेषणविषयकत्वनियमात्प्रत्यक्षत्वप्रकारकव्यवहारविषयकबुद्धेः प्रत्यक्षत्वविषयकत्वं तावदावश्यकम्, घटत्वादिप्रकारकप्रामाणिकव्यवहाराणाञ्च घटत्वाद्याश्रयविशेष्यकताया एव दर्शनेन प्रत्यक्षत्वप्रकारकव्यवहारस्य प्रत्यक्षत्वाश्रयविशेष्यकत्वज्ञानमौचित्यावर्जितम्, प्रत्यक्षत्वाश्रयस्तु क इति जिज्ञासामनाय साक्षात्कारि प्रत्यक्षमिति भवता लक्षणवाक्यमभिधानीयम्, साक्षात्कारित्वमनुमित्यादिगतत्वेन ज्ञातवतस्तु न लक्षणवाक्यप्रतिपाद्यता, अतिप्रसङ्गात्, किन्तु तद्व्यावृत्ततयैव ज्ञातवतः, एवञ्च साक्षात्कारित्वस्यावृत्तित्वग्रहाभावे 'साक्षात्कारि प्रत्यक्ष'मितिमितिसामग्र्या निष्पन्नत्वात्सा भवन्ती केन वार्यते। तथाच साक्षात्कारित्वे प्रत्यक्षत्वस्य सामानाधिकरण्यस्यापि परिचये प्रत्यक्षत्वप्रकारकव्यवहारविशेष्यत्वस्यापि सामानाधिकरण्यमतेरनिवार्यत्वादुक्तरीत्या साक्षात्कारित्वावच्छेदेन तद्ग्रहसम्भव इति क्वावकाशो लक्षणाभिधानानामिति। ननु वाक्यार्थज्ञाने पदार्थज्ञानस्यापेक्षणीयत्वात्पदार्थस्य लक्षणत्वस्थले लक्षणमितरव्यावृत्तमवगच्छत एव लक्षणवाक्यप्रतिपाद्यता पर्यवस्यति, यथा गन्धस्य पृथिवीलक्षणत्वे, साक्षात्कारित्वस्य वा प्रत्यक्षलक्षणत्वे, व्यामुग्धलक्ष्यज्ञानञ्च प्रागावश्यकमेव, एवञ्चेदृशस्थले विशिष्टबोधसामग्रीसत्त्वाद्गन्धवती पृथिवी साक्षात्कारि प्रत्यक्षमित्यादिबोधो लक्षणाभिधानात्प्रागपि सम्भवंस्तद्वैयर्थ्यमावहतु, वाक्यार्थस्य लक्षणत्वस्थले तु तस्य प्राग्ग्रहस्यानपेक्षणीयत्वाल्लक्षणवाक्यादेव तत्प्रतीतौ न कथमपि तद्वै-

एतेन सर्वस्यैव लक्षणस्य स्वीकारः परास्तनीयः, तथाहि—

नात्यापस्त्या प्रमामात्रात्ते तेऽर्थाः स्वीक्रियोचिताः ।
तद्धियस्तदुरीकारे स्वाश्रयं कश्चिकित्सतु ॥ ३५ ॥
अथान्यः स विशेषश्चेत्तद्धीत्वं कश्चिदिष्यते ।
दत्तः साकारवादाय विष्टरः स्पष्टमेव तत् ॥ ३६ ॥
अर्थादुत्थास्नवो धर्मा नानुमात्वादयो यथा ।
तद्धीत्वमपि तद्धृत्स्यादित्यर्थोऽनर्थमाविशेत् ॥ ३७ ॥

पदार्थपदकत्वमिति चेन्न; वाक्यार्थात्मकलक्षणस्यापीतरव्यावृत्ततयाऽनवगतौ लक्ष्यव्यावर्तकताया अनतिप्रसक्तव्यवहारप्रयोजकताया वाऽसम्भवेन त्वद्वाक्यात्तस्य प्रतीत्यनन्तरं विपक्षव्यावृत्त्यवगमोऽवश्यमपेक्ष्यः, न च विपक्षावृत्तितद्धर्मात्मकताया लक्षणे ग्रहे तत्सम्भव इति तत्तद्विशेषग्रहाय लक्षणान्तरापेक्षायामनवस्थापत्तेरिति यथैव रीत्या वाक्यार्थात्मकलक्षणस्येतरव्यावृत्त्यादिप्रतीतिस्तथैव लक्ष्यस्यापि साऽस्त्विति तादृशलक्षणस्याप्यभिधानं व्यर्थमेव। किञ्च तादृशलक्षणस्यानधिगतपदकृत्यस्य लक्ष्यव्यावृत्तिबुद्ध्यादिप्रयोजकत्वमधिगतपदकृत्यस्य वा, आद्ये लक्ष्यज्ञानमिव लक्षणज्ञानमपि व्यावृत्तधर्मेयेति तस्य व्यावृत्तिबुद्ध्याधायकत्वं नानुमोदामहे. द्वितीये तु लक्ष्यतावच्छेदकावच्छिन्नस्येतरव्यावृत्ततयाऽनधिगमेऽतिव्याप्त्यव्याप्त्यादिवारकत्वरूपपदकृत्याधिगमस्यासम्भवदुक्तिकत्वेन प्रागेव तदीयेतरव्यावृत्त्याधिगमस्यापेक्षणीयत्वेन लक्षणाभिधानवैफल्यं स्पष्टमेव, तस्य लक्षणज्ञानाधीनत्वोपगमे परस्पराश्रयापत्तेः ।

एतेन = वक्ष्यमाणेनापि, अग्रिमा रीतिरस्याः परिग्रहः । लक्षणस्येति । इदं प्रमेयमात्रस्योपलक्षणम् । प्रमामात्रात् = यस्याः कस्याश्चित्प्रतीतेः प्रमात्वसिद्धितः । स्वीक्रियेति । सत्यत्वेनेत्यादिः । अत्यापत्त्येति । घटविषयकप्रतीतेः प्रमात्वसिद्धितो नरविषाणादेरपि सत्यत्वेनाभ्युपगमप्रसङ्गादित्यर्थः । तद्धियः = घटविषयकप्रमातः, घटविषयकप्रतीतेः प्रमात्वसिद्धित इति यावत् । तदुरीकारे = घटस्य सत्यत्वेनाभ्युपगमे । घटविषयकप्रतीतेः प्रमात्वसिद्धौ घटस्य सत्यत्वसिद्धिः, ततश्च घटविषयकप्रतीतेः प्रमात्वसिद्धिः, अन्यथाऽसत्संसर्गविषयकत्वमुपेयुषां प्रमाणमपि प्रमात्वापत्तेरित्यन्योन्याश्रयः । घटप्रतीतेः प्रमात्वसिद्धिद्वारा तु घटस्य सत्यत्वसिद्धिरात्मानमेवापेक्षते इत्याशयेन स्वाश्रयमित्युक्तम् । स्वाश्रयं चिकित्सतु = घटो यदि स्वाधीनसत्यत्वसिद्धिकः स्यात्स्वभिन्नः स्यादितिप्रसङ्गमाभासीकरोतु । आपादकस्य दृढत्वादिति भावः । अथेति । अन्यः = बहिर्विषयानिरूपितः । तद्धीत्वं = तत्तद्धीगतो विषयिताविशेषः । साकारवादाय = ज्ञानस्य साकारत्ववादाय । विष्टरः = आसनम् । तत् = उक्ततद्धीत्वम् । अनुमिनोम्युपमिनोमीत्यादिप्रतीतिसिद्धा अनुमितित्वोपमितित्वादयो ज्ञानगता धर्मा यथा अर्थादुत्थास्नवो न = विषयनिरूपिता न । साक्षात्कारित्वस्य स्वयंजन्यज्ञानत्वरूपत्वे लौकिकविषयिताविशेषरूपत्वे वा विषयनिरूपितत्वमेवेति तत्त्योपात्तम् । स्यात् = यदि बहिर्विषयानिरूपितं स्यात्, इति = तदा बहिर्विषयोऽर्थः अनर्थमाविशेत् = युक्तिविरुद्धः स्यात्, ज्ञानातिरिक्तो न स्यादिति यावत् । अयम्भावः—यद्युक्तस्वाश्रयप्रसङ्गभयात् ज्ञानातिरिक्तविषयानिरूपितमेव विषयिताविशेषं ज्ञाने स्वीकृत्य ततः सत्यत्वेनार्थसिद्धिरित्युच्यते तदा घटादेर्ज्ञानाकारत्वोपगमेनैवोपपत्तौ ज्ञानातिरिक्तस्य सार्वजनीनानुभवविषयस्यापलापप्रसङ्गः, घटपटाद्यंशे ज्ञानानां वैचित्र्यानुभवस्य विषयिताविशेषैरेवोपपत्तेः, शक्यते हि 'ज्ञानं यदि स्वातिरिक्तानिरूपितविषयिताविशेषाश्रयः स्यात्स्वमात्रविषयकः स्या'दिति वक्तुम्, तथाचाप्रतीतोऽर्थः कथं सत्यत्वेनाभ्युपेयेत । तस्माद्बहिर्विषयनिरूपित एव विषयिताविशेषो वक्तव्य इति सत्यत्वेन बहिर्विषयसिद्धिसापेक्षप्रमात्व-

सोऽपि वा धीविशेषः किं स्वीकार्यस्तद्धियं विना ।
एवञ्च सोऽपि सोऽपीति नान्तः सोपानधावने ॥ ३८ ॥
समस्तलोकशास्त्रैकमत्यमाश्रित्य नृत्यतोः ।
का तवास्तु गतिस्तत्तद्वस्तुधीव्यवहारयोः ॥ ३९ ॥
उपपादयितुं तैस्तैर्मतैरशकनीययोः ।
अनिर्वक्तव्यतावादपादसेवा गतिस्तयोः ॥ ४० ॥

नापि द्वितीयः, तथाहि—अयमनुमानार्थः स्यात्—श्रावणादिप्रतिपत्तयः प्रत्यक्षशब्दाभिधेयाः साक्षात्कारित्वादित्यादिः, सोऽपि न, यद्यसाक्षात्कारिण्यनुमानादौ तच्छ-

---

सिद्ध्यैव सत्यत्वेन वहिर्विषयसिद्धिरित्युक्तदोषः, नहीदानीं प्रमात्वस्यान्यथासिद्धिश्शक्तुं शक्यत इति । साकारवादिनं प्रत्यप्याह सोऽपीति । धीविशेषः = तत्तद्धीगतो विषयितविशेषः । स्वीकार्य इति । सत्यत्वेनेत्यादिः । तद्धियं विना = तादृशविशेषविषयकधियः प्रमात्वसिद्धिं विना । एतेन ज्ञानातिरिक्तापलापिनो मते ज्ञानस्य स्वविषयत्वोपगमेनानुव्यवसायसमानाकारतया तदीयविषयितविशेषस्यापि तत्र भानावश्यकत्वेनानवस्थाप्रसङ्गासङ्गतिर्न देशनीया । उक्तमतेऽपि सत्यत्वेन कस्यचित्पदार्थस्योपगमाय तद्धियः प्रमात्वसिद्धिरावश्यकी, अन्यथा ज्ञाने वहिष्ट्वस्याभ्युपगमापत्तेरिति भावः । यदि तु विषयिताविशेषात्मकविषयानिरूपित एव कश्चिद्विषयिताविशेषस्तज्ज्ञाने स्वीक्रियते तद्बलादेव च विषयस्य विषयिताविशेषस्य सत्यत्वेन सिद्धिरित्युच्यते तदोक्तरीत्यैव विषयीभूते विशेषे ज्ञानात्मनि न मानम्, इष्टापत्तौ च विषयिताविशेषान्तरे प्रथमविशेषसाधकतया स्वीकृते उक्तरीत्यैवान्योन्याश्रयोद्भावने तद्वारणे च पूर्वपूर्वविशेषलोपस्य विषयिताविशेषान्तरोपगमस्य च प्रसङ्ग इत्यनवस्थामाह एवञ्चेति । सोपानधावने = उत्तरोत्तरविषयिताविशेषोपगमे । यदि तु न कोऽपि विशेषो ज्ञानात्मा, ज्ञानमेव तु केवलम्, तदा घटज्ञानं पटज्ञानमितिविलक्षणानुभवानुपपत्तिः, नहि भवता वेदान्तिवदनिर्वचनीयं तत्तत्पदार्थसार्थमुपेत्यानुभवोपपादनं शक्यम्, ज्ञानातिरिक्तस्यालीकत्वोपगमात्, एवञ्च ज्ञानस्य स्वविषयत्वेऽपि सत्यत्वेन तत्सिद्धिस्तस्य स्वांशे प्रमात्वसिद्धिमपेक्षमाणा स्वाश्रयं सावसरयत्येवेति भावः । लक्षणं लक्षणाभाववति वा वर्तते लक्षणवति वा, आद्ये व्याघात, अन्त्ये त्वात्माश्रयः, यथाचोपाधिपक्षेऽपि नात्माश्रयपरिहारसम्भवस्तथोक्तं भेदभङ्गे पुरा, आधारतावच्छेदकं च यदि लक्षणान्तरं तदाऽन्योन्याश्रयादिकमित्यपि लक्षणसामान्यखण्डनरीतिर्द्रष्टव्या । गलितगर्वस्य पृच्छा समस्तेत्यादिका । लोकशब्देनानिर्वचनीयवादिव्यतिरिक्तो ग्राह्यः, शास्त्रशब्देन चानिर्वचनीयताप्रतिपादकशास्त्रातिरिक्तम् । ऐकमत्यमाश्रित्य = सम्प्रतिपत्तिविषयीभूय । नृत्यतोः = निर्बाधमिव प्रतीयमानयोः, सम्प्रतिपन्नाबाध्यताकयोरिति यावत् । तव = प्रमेयमात्रनिरासिनो मते। गतिः = उपपादनरीतिः । उत्तरयति उपपादयितुमिति । तदुक्तम्—"इह जन्मनि केषाञ्चिन्न तावदुपपद्यते । योग्यवस्थागतानां तु न विद्मः किं भविष्यती"ति । उपपद्यते इति । वस्तुधीव्यवहारद्वयमिति प्रपञ्च इति वा शेषः प्रकृत उपयुज्यते । किमिति । योगिना हि ब्रह्म चिन्तनीयमिति तदवस्थायां ब्रह्मोपपद्यते न स्वयं पूतिकूष्माण्डायितो द्वैतानर्थसार्थं इति भावः । वादपादसेवा तु वादाभ्युपगमपर्यवसन्ना ।

'उत शब्दभेद'इति विकल्पं प्रत्याह नापीति । अनुमानार्थः = न्यायाकारः । अत्र साध्येऽनादिसङ्केतः प्रविष्टः, तेन नामकरणव्युत्पत्तिकस्यचिज्जनस्यापि प्रत्यक्षशब्दाभिधेयतया सपक्षत्वेन तद्व्यावृत्ततया नासाधारण्यं हेतोराशङ्कनीयम् । अन्वयव्यतिरेकाभ्यामेव वाच्यवाचकभावग्रहपर्यवसानाय प्रकारान्तरं

ब्दाप्रयोगमात्रात्साक्षात्कारिणि तच्छब्दप्रयोगः क्रियते तर्हि शशविषाणजवगडादिशब्द-प्रयोगोऽपि साक्षात्कारिणि कर्तव्य एवाविशेषात्। अथ जवगडदशादिशब्दाः सामान्यतोऽर्थवत्तया न प्रसिद्धाः, क्वचिदप्रयोगात्; शशविषाणादिशब्दा असद्विषया एवेति प्रसिद्धाः; प्रत्यक्षादिशब्दास्तु सद्विषयवत्तया सामान्यतः सिद्धाः, प्रत्यक्षमस्तीत्यादिप्रयोगदर्शनादित्यस्ति विशेष इति; मैवम्, एतेनापि विशेषेण चाक्षुषादिशब्दानामव्यवच्छेदात् तेषामपि साक्षात्कारिप्रमामात्रे प्रयोगप्रसङ्गः। साक्षात्कारित्वे सत्यपि श्रावणादौ चाक्षुषादिशब्दानामप्रयोगो न त्वेवं प्रत्यक्षादिशब्दानामिति विशेष इति चेत्; एवं तर्हि 'यत्र साक्षात्कारित्वं नास्ति तत्र प्रत्यक्षशब्दप्रयोगो नास्ति, यत्र साक्षात्कारित्वमस्ति तत्र सर्वत्रास्ती'ति यो जानीते तं प्रति लक्षणाभिधानमिति स्यात्, स च व्यवहारान्तरवदन्वयव्यतिरेकाभ्यामेव वाच्यवाचकभावमवधारितवानिति व्यर्थं लक्षणम्। एतेनानुमित्यादिव्यवच्छिन्नतया व्यवहर्तव्यमित्युक्तानुमानसाध्यतयाऽभिधीयमानमपास्तं वेदितव्यम्। पूर्वप्रतिपन्नमेव वाच्यवाचकभावं लक्षणाभिधानेन स्मार्यते इति चेन्न; अवगतसमयस्य

तावन्निराचष्टे यद्यीति। तदा प्रत्यक्षपरामर्शः। अविशेषात् = असाक्षात्कार्यवाचकत्वाविशेषात्। सामान्यतः = सामान्यतोऽपि, किञ्चिद्धर्मावच्छिन्नशक्यताकत्वेनापि, तत्तद्धर्मावच्छिन्नशक्यताकत्वेन तु दूरे। असद्विषया इति। विकल्पाभ्युपगन्तृपक्षे केवलालीकबोधकत्वम्, अन्यथाख्यातिपक्षे तु बाधितसंसर्गबोधकत्वम्, तदुक्तं शब्दशक्तौ–"शशविषाणादिकः शब्दोऽपि शशीयत्वादिना विषाणादेरन्वयबोधमादधानस्तादृशविषयताकबोधजनने सार्थक एव परन्त्वयोग्य" इति। सामान्यतः सद्विषयवत्तया = किञ्चिद्धर्मावच्छिन्नशक्यताकतया। विशिष्य शक्यतावच्छेदकनिश्चयस्तु प्रकृतानुमानेनेति भावः। विशेष इति। अत्र योग्यार्थकत्वे सत्यसाक्षात्कार्यवाचकस्यैव साक्षात्कारिसामान्यवाचकत्वमिति नियम इति भावः। चाक्षुषादिशब्देषु व्यभिचारमाह एतेनेति। एवं तर्हि = साक्षात्कारित्वावच्छेदेनैव यस्य शब्दस्य प्रयोगस्तस्य साक्षात्कारित्वावच्छिन्नशक्यताकत्वे। यत्रेति। अस्य प्रकृतानुमानोदाहरणवाक्यत्वाभावेऽपि यद्यपि वैपरीत्येनैव भावाभावयोर्व्याप्यव्यापकभावोपदर्शनसङ्गतिः, तथापि समनैयत्येनान्यथाप्यभिधाने न क्षतिरिति भावः। जानीते इति। अन्यथोक्तरीत्या जवगडादिशब्दाभिधेयत्वस्यापि साक्षात्कारिणि प्रसङ्गात्, नहि भवताऽऽप्तविधया लक्षणवाक्यं प्रयुज्यते, नवा भवता साक्षात्कारित्वात्मकलक्षणादन्यो हेतुरुच्यते येन भवद्वाक्यादेव साक्षात्कारिशक्तिप्रमाजन्यलक्षणाग्रहाजन्यप्रत्यक्षपदजन्यशाब्दबोधविषयत्वरूपः, साक्षात्कारित्वावच्छेदेन प्रत्यक्षपदप्रयोगविषयत्वप्रतीतिरिति स्यात्। नवा तादृशहेतोरवश्याभिधानीयत्वे अन्वयव्यतिरेकग्राहिणस्य लक्षणतयाऽभिधानं न विफलम्, अभिधानेऽपि च तादृशहेतोः कथन्तानिवृत्तयेऽन्वयव्यतिरेकयोरपि निरूपणीयत्वात्, तथाचान्यत्रैव प्रत्यक्षशब्देऽपि पर्यालोचनीयौ, अन्यथा त्वदुक्तिमात्रेण जन्यजनकभावस्याश्रद्धेयत्वात्, एवञ्च लक्षणाभिधानस्याप्तोपदेशमार्गेण ताभ्यां सङ्गनिग्रहे पश्चादभिधीयमानं लक्षणं न प्रयोजनालम्बि, उक्तज्ञानवाञ्छ्वानभ्युपगमपक्षे उपायस्योपायान्तरादूपकत्वन्यायावतारोऽपि नेति। तदाह सचेति। अनुमित्यादिव्यवच्छिन्नत्वस्याज्ञाने स्वित्यर्थः। व्यवहारेति। व्यवह्रियमाणेऽर्थः। वेदितव्यमिति। तज्ज्ञाने तु तत्प्रकारको व्यवहारस्तदाश्रयविशेष्यकविशेषणाज्ञानेन तद्विशेषितव्यवहारज्ञापनानुपपत्तेः, वाच्यवाचकभावमिति। अर्थविशेषितव्यवहार इति ज्ञानमौचित्यप्राप्तमित्यादिकमुक्तरीत्या द्रष्टव्यम्। स्मार्यते इति। जन इति शेषः। "बुद्धिहारस्याप्युपलक्षणमिदम्। एवमुत्तरग्रन्थेऽपि समयादिपदम्। अवगतसमयस्येति अवगतशब्दार्थसम्बन्धयोरशक्यकर्मणाञ्च निर्जरद्वये"ति वैयाकरणोक्तेरिति भावः।

प्रत्ययाशब्दादेव तत्स्मरणसम्भवात् व्यर्थता लक्षणाभिधानस्य स्यात्। अवगतशब्दार्थसम्बन्धः शब्दादेव स्मरन् यदि लक्षणेन स्मार्यते, तदा लक्षणवाक्यगतपदकदम्बार्थस्मरणार्थमपि लक्षणमभिधानीयमविशेषात्, एवं तल्लक्षणवाक्येऽपीत्यपर्यवसानं स्यात्।

ननु प्रतिवादिनं प्रति लक्षणाभिधानं नार्थवत्, तेन वाद्यातभावानङ्गीकारात्. किन्तु शिष्यार्थं लक्षणमुच्यते शास्त्रे, स हि शास्त्रस्य कर्तारमाप्तमेव मन्यते, तस्माच्छिष्यं प्रत्याप्तवचनत्वेनैव लक्षणवाक्यमर्थं प्रतिपादयिष्यति गुरुणा गीयमानम्—यस्त्वया साक्षात्कारिशब्दार्थः प्रतीतः स एव प्रत्यक्षशब्दार्थ इति चेन्मैवम्, यदि वादिनं प्रति न शास्त्रं किन्तु शिष्यं प्रति, तदा प्रतिज्ञामात्रादेवाप्तवचनाच्छिष्यस्यार्थनिश्चयोत्पत्तेर्हेत्वाद्यभिधानमनर्थकमापन्नं शास्त्रे। अथ भवतु तत्प्रतिवादिनमपि प्रति शास्त्रे वाक्यं यत्र हेत्वाद्युपात्तम्, लक्षणवाक्यं तु शिष्यमेव प्रति प्रयोजकं प्रतिपन्नशास्त्रकारासभावमिति मन्यसे; तदप्यनुपपन्नम्, शास्त्रान्तरसाध्यत्वादस्यार्थस्य, अस्ति शास्त्रं समयस्य ग्राहकं मुनिभिः प्रणीतं नामलिङ्गानुशासनव्याकरणादि। यदि च शास्त्रान्तरसाध्योऽर्थो भवदीयशास्त्रस्य विषयस्तर्हि प्रकृतिप्रत्ययविभागेन साधनमपि शब्दानां कुतो न व्युत्पाद्यते? लिङ्गं वा शब्दानां कुतो नाभिधीयते? तदज्ञानेऽपि पराजयो जायते एव। अथवाऽस्तु

---

सम्बन्ध इति षान्यपदार्थप्रधानम्। ननु शब्दादिव लक्षणादपि ज्ञाताद्वाच्यवाचकभावस्य व्यवहारस्य च स्मरणसम्भवे विनिगमकं दुर्लभमत आह अवगतशब्देति। शब्दात् = लक्ष्यवाचकशब्दात्। लक्षणेन = लक्षणाभिधानेन। लक्षणवाक्यानां स्वरूपमात्रपरत्वप्रकारस्त्वद्वैतसिद्ध्यादौ द्रष्टव्यः।

प्रतिपन्नशास्त्रकाराप्तभावं शिष्यमित्यन्वयः। प्रयोजकं = उपयुक्तम्। अस्यार्थस्य = वाच्यवाचकभावबोधरूपस्य लक्षणाभिधानप्रयोजनस्य। विभागेन = विभागप्रदर्शनपूर्वकम्। साधनं = साधुत्वं। व्युत्पाद्यते = निर्णीयते। ननु कथौपयिकपदार्थव्युत्पादनमेवास्मच्छास्त्रसाध्यमिति शब्दसाधुत्वादिकं न तत्र प्रदर्शितमित्यत आह तदज्ञानेऽपीति। साधुशब्दाज्ञानेऽपीत्यर्थः। अपशब्दप्रयोगस्यावाचकपदप्रयोगात्मकनिग्रहस्थानान्तर्गतत्वादिति भावः। ननु वाच्यवाचकभावप्रदर्शनस्य शास्त्रान्तरेष्वपि बहुश उपलम्भात्तत्रापि पर्यनुयोगोऽयं सावकाशः, समाधानं तु समानमेवेत्यत आह अथवेति। व्युत्पादनमत्रार्थप्रदर्शनम्। असंशयत्वात् = संशयाविषयत्वात्। वाऽऽदीनाम् = वाप्रभृतिनिपातानाम्। अनुप्राससौष्ठवाय प्रादीनामिति चादीनामिति वा नोक्तम्। अन्वयव्यतिरेकाभ्यां तावत्तत्तदर्थे तत्तत्पदवाच्यत्वमित्युत्सर्ग इति समुच्चयादौ चादिशक्तिरेव वक्तव्या, शब्दशक्तिस्वाभाव्यात्तु शोभनः समुच्चय इति वच्छोभनश्चेत्यस्य नापत्तिः। साक्षात्क्रियते इत्यादौ च साक्षात्पदेन फलस्य धातुना च तदनुकूलव्यापारस्य प्रतीतावपि स्वसंयुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचकत्वेन सकर्मकत्वोपपत्तेः। व्युत्पत्तिवैचित्र्याच्च नामार्थधात्वर्थयोरत्र भेदान्वयोपगमेऽपि न क्षतिः। एवञ्च "साक्षात्प्रत्यक्षतुल्ययो"रित्यादिशक्तिग्राहकस्वरसोऽपि। उपसर्गाणां वाचकत्वे तु यद्यपि 'अनुभूयते' इत्यस्य सकर्मकत्वमुक्तरीत्यैवोपपद्यते, उपसर्गार्थधात्वर्थयोर्भेदान्वयश्च। तथापि तेषां क्रियागतविशेषावबोधकतया स्वातन्त्र्येणाप्रयोगात्, क्वचित्तथाप्रयोगेऽपि क्रियाध्याहारात्, प्रभवतीत्यादौ प्रोपसर्गबलात् प्रकृष्टभवनस्य प्रस्मरतीत्यादौ च विस्मरणस्य प्रतीत्यान्वयव्यतिरेकयोरप्यव्यवस्थितत्वाच्च क्लृप्तशक्तिकस्य धातोः शक्ततायामवच्छेदकत्वमेवोपसर्गाणां युक्तं ननु शक्तत्वम्, गौरवात्, उक्तं च निरुक्ते "न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः, नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ती"ति। निर्बद्धाः =

व्याकरणादिविषयं विहाय नामव्युत्पादनं कथमपि भवच्छास्त्रविषयः, तदापि न्यूनतरत्वमस्मिन् विषये भवदीयशास्त्रस्य, बहूनि नामानि विद्यन्ते कोशान्तरवर्तीनि, कुतो न व्युत्पादितानीति। अथास्मिन् शास्त्रे येषां शब्दानामुपयोगस्तेषामनेन व्युत्पादनं न सर्वेषामित्युच्यते; तथापि यथैकवाक्यगतस्य पदस्य लक्षणव्युत्पादनमेवं तल्लक्षणवाक्यगतपदस्यापीत्यपर्यवसानमापतितं शास्त्रस्य, तत्तल्लक्षणवाक्यप्रयोगे एव तेषां तेषां पदानां शास्त्रे जातोपयोगत्वात्। अथ नानालक्षणप्रणेतृणां वादिनां विप्रतिपत्तेः प्रत्यक्षादिशब्दार्थ एव व्युत्पाद्यते संशयनिरासाय, नान्योऽसंशयत्वादिति मन्यसे; तथाप्यनुपपत्तिः, अस्ति हि वादिनां चाऽऽदीनामर्थे वाच्यताद्योत्यताविवादः, अस्ति च छिदुरादिपदानामर्थे कर्मकर्तृत्वाकर्मकर्तृत्वे विवादः, अस्ति च भावशब्दस्य स्वरूपसत्त्वसत्तासामान्याद्यर्थत्वे, अस्ति चाधिकरणशब्दार्थस्य पतनप्रतिबन्धकत्वसमवायित्वादौ, एवमन्यस्मिन्नपि बृहौ पदार्थे जाग्रति विप्रतिपत्तयः, तत्तल्लक्षणानि कस्मान्नोक्तानि ? तदास्तामेकत्र विस्तराभिनिवेशः। इति लक्षणप्रयोजनखण्डनम् ॥

---

नामाख्याताभ्यां वियुक्ताः। एवञ्चात्र नामार्थधात्वर्थयोः साक्षाद्भेदान्वयानुपपत्तिव्युत्पत्तेरपि न सङ्कोच इति केचित्। "साक्षात्प्रत्यक्षतुल्ययो"रित्यादेर्द्योत्यार्थमादायैवोपपत्तेरुपसर्गेष्विव चादिष्वपि तात्पर्यग्राहकतयैवान्वयव्यतिरेकयोरुपक्षयाच्च सर्वेषां निपातानां द्योतकत्वमेवेत्यपरे। शक्तिग्राहकतया प्रसिद्धानां तात्पर्यग्राहकतयैवोपक्षीणतोपगमे बहुविप्लवापत्तेः, प्रकर्षेऽभावे च शक्तस्यापि भवत्यादिसमभिव्याहारे प्रकर्षबोधकताया: स्मरणिसमभिव्याहारे चाभावबोधकताया उपपत्तेश्च सर्वेषां वाचकत्वमेव, तदुक्तं निरुक्ते "उच्चावचाः पदार्था भवन्तीति गार्ग्यः, तद्य एषु पदार्थः प्राहुरिमे तमि"त्यन्ये। 'सर्वेषां वाचकत्वमेव', 'द्योतकत्वमेव', 'प्रादीनां द्योतकत्वमेव', 'चादीनां वाचकत्वमेवे'ति न कोऽपि नियमः, अपि तु क्रियागतविशेषबोधकातिरिक्तनिपातानां वाचकत्वं तदन्यस्य द्योतकत्वमेव, अतएव 'पर्वतादा' इत्यादौ पर्वतादर्वाक्त्वादिप्रतीतिरित्येके। छिदुरेति। "विदिभिदिच्छिदेः कुर"जिति विहितस्य कुरचः कर्मकर्तरि शक्तिः, तथाच स्वयमेवच्छिद्यते इति छिदुर इति केचित्। भाष्यादौ तथानुक्तत्वात्कर्तर्यपि प्रयोगदर्शनाच्च कर्तरि तस्य शक्तिरित्यपरे। एवं केचित्सरोऽपि कर्मकर्तरि वा कर्तरि वा शक्तिरिति। स्वरूपसत्त्वेति। एवञ्चाभावेऽपि भावः, अभावोऽपि वा भाव इति भावः। सत्तासामान्येति। "भावोऽनुवृत्तेरेव हेतुत्वात् सामान्यमेवे"ति कणादसूत्रादिति भावः। आदिना सिद्धावस्थापन्नो धात्वर्थः, तदितरावृत्तिः सकलतद्वृत्तिधर्मः, द्रव्यादिषडन्यतमः, अभिप्रायः, मनोवृत्तिविशेषो रत्यादिश्च गृह्यते। एते सर्वे एव भावपदशक्याः, विनिगमकाभावात्। अथवा कश्चिच्छक्योऽपरे लक्षणादिना बोध्या अनेकार्थत्वस्यान्याय्यत्वादिति विवाद इत्यर्थः। पतनप्रतिबन्धकत्वेति। संयोगेनाधिकरणमभिप्रेत्येदम्। समवायित्वेति। समवायेनाधिकरणमभिप्रेत्य। आदिना सम्बन्धान्तरावच्छिन्नाधेयतानिरूपिताधिकरणत्वमतिरिक्तपदार्थविशेषः समवायश्च गृह्यते. परस्पराधाराधेयभावव्यवहारप्रसङ्गवारणाय संयोगेनाधारताया: संयोगात्मकतामनुपेत्यातिरिक्तपदार्थतोपगमात्। समवायस्य तु द्वित्वे मानाभावेन तेन सम्बन्धेनाधारताया नव्यैः समवायात्मकतोपगमात्। एवञ्चोक्तरीत्यैवाधिकरणपदस्य नानार्थत्वं चैकार्थकत्वं वेति विवादः। तिङां कृतौ वा कर्तरि वा, लिङादेरिष्टसाधनत्वे वा कार्यत्वावच्छिन्ने वा भावनायां वा, धातोः फले वा व्यापारे वोभयत्र वा शक्तिरित्यादिविवादमभिप्रेत्याह एवमिति। बहौ = विपुले, अनेकस्मिन्नित्यर्थस्तु कथञ्चित्तात्पर्यतो लभ्यः, अन्यथा सङ्ख्यापरत्वे एकवचनासङ्गतेः। सङ्ख्यापरतायां तत्सङ्गता-

## अथ साक्षात्कारित्वखण्डनम् ।

किञ्च तत्साक्षात्कारित्वम् ? । सविशेषणार्थप्रकाशत्वमिति चेन्न, सविशेषणत्वस्योपलक्षणत्वेऽनुमानादिव्याप्तिः, विशेषणत्वे च यदि विशेषणशृङ्खलाया विश्रान्तिस्तदा शेषवि-

---

षय्यन्वये शिष्टकल्पनापत्तेरिति । कस्मादिति । यत्तु निःश्रेयसहेतुतत्त्वज्ञानविषयीभूतपदार्थनिरूपणमेव न्यायशास्त्रसाध्यमिति निपातादर्थविचारो न कृत इति; तदसत्, एवं सतिच्छन्दादेरपि तत्र निरूपणं न स्यात्, परम्परया तस्य निःश्रेयसोपयोग इति तु वाच्यतावोरयनाविचारं विहाय प्रकृतेऽपि समम्, वेदार्थनिर्णयोपयिकत्वाविशेषात्तद्विचारस्य । अन्यथाऽन्यत्रापि तदकरणापत्तेः, जात्याकृतिव्यक्तयः पदार्थ इत्यादिसूत्राणामसाङ्गत्यापत्तेश्चेति । ननु यदुचितं प्रतिपदमौ तद्विचारितं मुनिना, स्वतन्त्रेच्छश्च स नियोगपर्यनुयोगी नार्हति "नामूया कर्तव्या यत्रानुगमः क्रियते" इति नीतेश्चेति चेदस्त्वेवं कथमपि, तथापि निश्चितशाब्दाकारासम्भावं सत्यपि लक्षणवाक्योपयोगोऽनुपपन्न एव, तथाहि—मुनिभिरुक्तं यथाश्रुतं लक्षणं दुष्टं वाऽदुष्टं वा, चरमे नव्यानां तत्परिष्करणवैयर्थ्यापत्तिः । आद्ये यथार्थोपदेष्टुरेवाप्तत्वान्मुनेराप्तत्वव्याहतिः, यदाहुः—"आप्तो नामानुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान् रागादिवशादपि नान्यथावादी"ति । नच—मुनेराप्तत्वाभावेऽपि तेन रूपेण तद्विशेष्यकनिश्चयवतस्तल्लक्षणवाक्यश्रवणाधिकारितेति—वाच्यम्, लक्षणवाक्यश्रवणस्य हि लक्ष्यव्यावृत्त्यादिप्रतीतिरेव फलं स्यात्, यदि च वस्तुनो दुष्टस्यापि लक्षणस्य लक्ष्यव्यावृत्तिप्रमितियथार्थव्यवहारौपयिकत्वं, तदा भवत्कीं तल्लक्षणपरिष्कृतिकृतिं नोचितां प्रतीमः, यथाश्रुतलक्षणेऽपि तत्तद्व्यावृत्तिफलकविशेषणोपादानव्यर्थतापत्तेश्च । नच—यथाश्रुतलक्षणं दुष्टत्वेन जानन्तं प्रत्यस्माकं परिष्कारः, तदन्यं प्रति तु यथाश्रुतमेव व्यावृत्तिधियमादधातु यथार्थां तादृशव्यवहारञ्चेति—वाच्यम्; अव्याप्त्यादिना दुष्टत्वेन लक्षणप्रतीतेरितरव्यावृत्तलक्ष्यतावच्छेदकावच्छिन्नप्रत्ययं विनाऽनुपपत्त्या तादृशपुरुषं प्रति भवत्परिष्कारसाफल्यानुपपत्तेः, नच तादृशप्रत्ययं विना तत्तत्पदकृत्याधिगमः, नचानधिगतपदकृत्यं लक्षणं तादृशप्रत्ययमाधातुमीष्टे इत्युक्तम् । पदार्थमात्रं तु न क्वापि लक्षणम्, सम्बन्धविशेषावच्छिन्नतत्तद्विशिष्टनिरूपकतानिरूपितसम्बन्धितायाः अवश्यमतिप्रसङ्गवारणाय वक्तव्यत्वात् । एतेन—स्वयमेव सन्दूष्य भूष्यते परार्थमिति—परास्तम्; किञ्च भवतोऽपि यथार्थलक्षणदूषणायापेक्षणीयस्तादृशप्रत्ययो यथाश्रुतलक्षणाद्वा, अन्यस्माद्वा, उभयथाऽपि परस्यापि तत एव सोऽस्तु लाघवात्, सति तस्मिन् व्यवहारकर्तव्यताज्ञापनस्यापि वैफल्यात्, उपायत्वदुर्निरूपतायाश्च सर्वत्र समानत्वात् । दुष्टलक्षणाधीनतादृशप्रत्ययस्य च भ्रमत्वे तदनुसारेण रच्यमानः परिष्कारोऽपि शुद्धः स्यादिति न विश्वासिमः, प्रमात्वे तु न परिष्कारकरणमुपयुक्तमित्युक्तम् । यदि च व्यवहारादेव लक्ष्यमितरव्यावृत्तिमन्तमवगत्य तल्लक्षणपरिष्क्रियाऽऽद्रियते, तदा व्यवहारेण कश्चिदसाधारणधर्मस्ते उपस्थापितो नवा, नचेन्न व्यावृत्तिग्रहस्य सम्भवः, तस्य प्रतियोगितानुयोगितावच्छेदकधर्मज्ञानसापेक्षत्वात् । आद्ये च तादृशधर्मस्याव्याप्त्यादिना दुष्टत्वं वाऽदुष्टत्वं वोभयथाऽपि प्रत्युक्तमेवेति । एवञ्च बुद्धिवैशद्याधानातिरिक्ते न लक्षणनिरूपणोपयोग इति न लक्ष्यव्यवस्थितिस्तेनेति । इति खण्डनशारदायां लक्षणप्रयोजनखण्डनम् ॥

तत्साक्षात्कारित्वमिति । येन प्रत्यक्षत्वप्रकारकव्यवहारार्हतादिकं साध्यते इति शेषः । तत्सखण्डमिति मत्वा निर्ब्रूते सविशेषेति । प्रकाशत्वम् = ज्ञानत्वम् । सविशेषणत्वस्य = विशेषस्य । उपलक्षणत्वे = विषयितया ज्ञानानन्वयित्वे । व्याप्तिरिति । वस्तुनो विशेषवतस्तत्रापि भानात् । विशेषणत्वे = विषयितया ज्ञानान्वयित्वे । यद्यपि विशेषविषयकज्ञानत्वविवक्षायामपि ज्ञानमात्रेऽतिप्रसङ्गः,

शेषस्य बोधे प्रत्यक्षलक्षणक्षीणत्वेनाऽऽमूलमप्रत्यक्षत्वापातः, यत्रविश्रान्तिस्तदा तादृशस्यैव व्याप्तिग्रहादनुमायामपि तादृशसिद्धिरिति साक्षात्कारित्वापत्तिः। अथाननुगमात्तत्र न तदनुमा, तर्हि तदनुगतप्रतीत्याद्यनुपपत्तिः, व्यक्तेरनुमानादसिद्ध्यापत्तिश्च। यथाहि व्यक्तिं विना सामान्यस्य, तथा तावन्तं विशेषं विना व्यक्तेरप्यनुपपत्त्यविशेषात्। यदि

नहि वह्नित्वादिकं न विशेषः, नवेदन्त्यादिकम्, अनाहार्याप्रामाण्यज्ञानानास्कन्दितयद्रूपविषयकनिश्चयत्वं यद्विशेष्यकभ्रमत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्ति तस्य तद्विशेषत्वमिति स्वसम्प्रदायादरूम्, नहि कोऽपि धर्मस्तादृशो यद्विषयकस्तादृशोऽपि निश्चयः किञ्चिद्विशेष्यकमपि भ्रमसामान्यं प्रतिबध्नीयात्। कश्चित्कश्चिद्विशेष इत्येवं सङ्ग्रहस्यनिग्रसञ्जक एव, कस्यचिदेव विशेषस्य निवेशात्तु प्रसञ्जयस्यापत्तिम्, नच विशेषानुगमे रीत्यन्तरम्। अथानुमित्याद्यपेक्षया प्रत्यक्षे विशिष्यैव तत्तदर्थपरिस्फुरणमिति सार्वजनीनम्, तथाच स्फुटं भातीत्यादिप्रतीतिसाक्षिकविषयताविशेषनिरूपकत्वमेव साक्षात्कारित्वमत्र विवक्षितमिति चेन्न, तादृशविषयताविशेषस्य प्रतीत्यैव निरूप्यत्वेनान्योन्याश्रयापत्तेः प्रतीतिवैलक्षण्यस्य विषयवैलक्षण्याधीनत्वात्। विषयसद्भावसिद्धिं विना तादृशप्रतीतेः प्रमात्वेनानिर्णीतायाः वस्त्वभ्युपगमानादरत्वेनाप्यन्योन्याश्रयाच्च। दुर्निरूपञ्च विषयतामात्रमिति वक्ष्यते। तथापि निरासरीत्यन्तरं शिक्षयितुमाह यद्वीति। विशेषशृङ्खलायाः = विशेषे विशेषान्तरपरम्परायाः। शेषविशेषस्य बोधे = निर्विशेषविशेषविषयकत्वावच्छेदेन। पात इति। विशिष्टविषयकत्वावच्छेदेन प्रत्यक्षत्वं हि विशेषणविषयकत्वावच्छेदेन तद्विना न निर्वहति, तदंशे प्रत्यक्षत्वञ्च भवता तदीयविशेषांशे प्रत्यक्षतायामेव वक्तव्यम्, एवञ्च चरमविशेषांशे प्रत्यक्षत्वानुपपत्तौ तद्विशिष्टविशेषांशेऽपि तदनुपपत्तिरेवेति घटीयादिविशेषांशे तदभावे घटांशेऽपि तन्न स्यादिति भावः। तादृशस्यैव व्याप्तिग्रहात् = अनन्तविशेषावच्छिन्नेनैव निरूपितायाः व्याप्तेः प्रत्यक्षात्। सिद्धिरिति। भानमित्यर्थः। येन रूपेण व्यापकताग्रहस्तेन रूपेणैवानुमितौ साध्यस्य भानादिति भावः। इदमुपलक्षणं शाब्दादावप्यतिप्रसङ्गस्य, अनन्तविशेषवत्त्वेन घटादेः प्रत्यक्षविषयत्वे घटपदं कम्बुग्रीवादिमति शक्तं शक्तिभ्रमाजन्यलक्षणाग्रहाजन्यतद्विषयकशाब्दधीजनकत्वादित्याद्यनुमित्या शक्तिग्रहस्याप्यनन्तविशेषविषयकस्यैव वक्तव्यत्वेन शाब्दस्यापि तथात्वस्य दुर्वारत्वात्। तत्र = तेषां विशेषाणामनुगमकरूपाभावाच्च तद्विषयकानुमितिः, वह्नित्वं हि व्यापकतावच्छेदकं रूपं वह्निव्यक्तीनामनुगमकं न तु तद्विशेषतद्विशेषादीनामिति कथं वह्नित्वेन रूपेणानन्तविशेषाणामनुमितिविषयता सम्भवेत्, नच लाघवज्ञानादिविरहदशायां व्यापकतावच्छेदकातिरिक्तरूपेणानुमितिरिति भावः। तर्हि = विशेषपरम्परानुगमकरूपाभावे। तदनुगतेति। विशेषपरम्पराविषयकानुगतप्रत्यक्षात्मकप्रतीतितदभिलापानुपपत्तिः। प्रत्यक्षेऽनन्तविशेषाणां भानं यद्यभ्युपेयते तदा तेषामनुगमकमपि रूपं किञ्चित्कथञ्चिदास्थेयम्, प्रातिस्विकरूपेण तेषां भानाभ्युपगमस्यानुभवविरुद्धत्वात्, अयं घट इत्यादौ घटत्वगतविशेषादेरपरिस्फुरणात्, एवञ्च भासमानरूपस्यैव कथञ्चित्साक्षात्क्वचिच्च परम्परयाऽनुगमकताया वाच्यत्वे प्रत्यक्षस्येवानुमितेरपि तेन रूपेण निःशेषविशेषविषयकत्वे साक्षात्कारित्वापत्तिरस्त्येवेति भावः। नन्वेवं भासमानस्य घटत्वादेरेव विशेषपरम्परानुगमकत्वेऽपि प्रत्यक्ष एव तेन रूपेण तावद्विशेषभानं स्वीकार्यं नत्वनुमित्यादौ, कल्पनायाः फलबलमूलत्वात्, प्रत्यक्षानुमित्यादेर्ज्ञानस्य च 'साक्षात्करोमि' 'अनुमिनोमी'त्यादिप्रत्ययसिद्धत्वादित्यतो दोषान्तरमाह व्यक्तेरिति। आपत्तिमेव स्फोरयति यथेति। अनुपपत्त्यविशेषादिति। तथाच सामान्यप्रकारिकाया अनुमितेस्तदाश्रयव्यक्तिविषयकत्वमिव व्यक्तिविषयिकायास्तस्यास्तावद्विशेषविषयकत्वमभ्युपेयम्, अ-

च प्रतीत्यपर्यवसानाभावात्पक्षधर्मतया नानन्तविशेषसिद्धिरिति मन्यसे तदा प्रतीतापर्यवसानात्तद्बुद्धिः साक्षात्प्रकाशः स्यात् । अप्रतिपद्यमानानन्तविशेषप्रकाशकल्पनाच्चैकाकिसाक्षात्त्वनामकविशेषकल्पनैवाल्पत्वाच्छ्रेयसितरा, साक्षात्त्वव्यवहारान्यथानुपपत्तेः कल्पनाबीजस्य तावतापि चरितार्थत्वादिति कृत्वा । तत्कल्पनापि नात एव । विस्तरश्चात्र वक्ष्यते । विशेषश्च यदि व्यवच्छेदस्तदा निर्विकल्पकाव्याप्तिः, यदि च तदितरविश्वव्यान्यथा तु व्यक्तिविषयकत्वमपि नानुमन्तव्यम् ।

ननु नैतद्युक्तम्, अनुपपत्तिर्हि प्रतीतेर्वा प्रतीतस्य वेति द्वयी, तत्र धूमविषयकप्रतीतेर्हुताशनाविषयिण्या हुताशनज्ञानानियतायाश्च दर्शनेन प्रतीतस्य धूमस्यैव हुताशनं विनाऽनुपपत्तिरिति द्वितीया, जातिव्यक्त्योस्तु तुल्यवित्तिवेद्यत्वनियमेन जातिविषयकप्रतीतेर्व्यक्त्यविषयिकाया अदर्शनेन *प्रतीतेरेवानुपपत्तिरिति प्रथमा, नियमस्तु जातिनिष्ठा समवायसम्बन्धावच्छिन्ना प्रमीया प्रकारता तत्समवायिव्यक्तिनिष्ठविशेष्यतानिरूपितैवेति* । कालिकेन घटो गोत्ववान्, गोत्वेनेमं जानामीत्यादिबोधीयप्रकारतायां व्यभिचारवारणाय समवायसम्बन्धावच्छिन्नेति । भ्रमीयप्रकारतायां तद्वारणाय प्रमीयेति । एवं च सामान्यप्रकारिकाया अनुमितेस्तत्समवायिविषयकत्वमास्ताम्, व्यक्तिप्रतीतेस्तु तद्गतविशेषपरम्परामविषयीकुर्वत्या अपि दर्शनेन प्रतीताया व्यक्तेरेव विशेषपरम्परां विनाऽनुपपत्तेर्वक्तव्यत्वेनानुमित्या तत्परम्पराऽनवगाहनेऽपि क्षत्यभावाच्च तस्याः साक्षात्कारित्वापत्तिरित्याशङ्क्याह **यदीति** । अपर्यवसानमनुपपत्तिः । **पक्षधर्मतयेति** । *धूमस्य पर्वतवृत्तितया ज्ञानाया वह्नित्वेन पर्वतीयवह्निमितिप्रयुक्त्यैव चरितार्थ्यादिति* भावः । प्रतीतापर्यवसानात्तद्बुद्धिः = प्रतीतवह्निव्यक्त्यनुपपत्तिप्रसूताधीनतावद्विशेषविषयकार्थापत्त्यात्मकबुद्धिः । **स्यादिति** । तस्या अनन्तविशेषविषयकत्वाभावस्य कथमपि वक्तुमशक्यत्वादिति भावः । एतत्सर्वमनन्तविशेषाभ्युपगमेनोक्तम्, वस्तुगतिमनुरुध्याधुनाऽभिदधाति **अप्रतिपद्यमानेति** । अननुभूयमानेत्यर्थः । प्रत्यक्षेऽपि वह्नित्वेनाप्यनन्तविशेषान् जानामीत्यप्रत्ययात्, किञ्चिद्धि वस्तु स्वत एव व्यावृत्तमित्यनुभवानुरोधित्वाच्चेति भावः । अल्पत्वात् = लाघवात् । **श्रेयसीति** । घरूंतिहृस्वः । अनन्तविशेषकल्पनामपेक्ष्येन्द्रियजज्ञानत्वादेः *साक्षात्त्वात्मकताकल्पना लघुत्वात्प्रशस्या, ज्ञानाकरणकज्ञानत्वादेस्तथात्वकल्पना तु* लाघवात् नित्यप्रत्यक्षस्यापि सङ्ग्राहकत्वाच्च श्रेयसी, साक्षात्त्वस्याखण्डधर्मस्य कल्पना तूक्तहेतुद्वयात्साक्षात्करोमी'ति व्यवहारोपपादकत्वाच्च श्रेयसितरेति भावः । तदाह **साक्षात्कारित्वेति** । तावतापि = तावतैव = साक्षात्त्वस्याखण्डधर्मस्य ज्ञाने कल्पनेनैव । इन्द्रियत्वज्ञानाकरणकत्वाद्यनुपस्थितिदशायामपि साक्षात्करोमीति प्रतीतेरिति भावः । इति कृत्वा श्रेयसितरेत्यन्वयः । नन्वस्तु साक्षात्त्वस्याखण्डस्यैव *कल्पनेत्यत आह* **तत्कल्पनापीति** । *अत एव = तदुपपाद्योपपादकस्य ततोऽन्यस्यावश्यकल्पनीयस्य* सद्भावादेव । जातेर्व्यञ्जकनियतत्वेन व्यञ्जकस्य कस्यचिदवश्यवाच्यत्वेन तेनैवानुगतव्यवहारोपपत्तेर्जातिकल्पना व्यर्था, क्लृप्ते व्यञ्जके विषयिताविशेष एवानुगतत्वकल्पनौचित्यात् । अथास्त्वेवमेव. चाक्षुषत्वादेर्व्यञ्जकत्वोपगमे तु तत्र नानुगतत्वकल्पनासम्भवोऽपीति चेन्न, कल्प्यमानस्यापि जातिविशेषस्य व्यञ्जकस्य वाऽनिर्वचनीयताया आवश्यकत्वेन तयैव तत्तद्व्यवहारोपपादनस्योचितत्वात् सत्यधर्मकल्पनानवकाशात् । *नह्यखण्डमित्येतावता लक्षणनिवृत्तिः, अलीकत्वप्रसङ्गात् । नच प्रतीतिविशेषविषयत्वं लक्षणं सम्भवतीत्युक्तं बहुशः*, न च व्यञ्जकस्य चाक्षुषत्वादेर्न व्यञ्जकान्तरापेक्षा, न च वक्ष्यमाणरीत्या कस्यापि धर्मस्यानुगतत्वसम्भवो येन व्यञ्जकस्याननुगतत्वेन न जात्यन्यथासिध्द्यापादकत्वमित्याशङ्कयेतेति भावः । वक्ष्यते इति । अत्रैव प्रकरणे साङ्कर्यादिकं वक्ष्यते इत्यर्थः । व्यवच्छेदः=व्यावृत्तिः ।

वृत्तस्वरूपप्रकाशात्सोऽपि तथा, तदा दूरात् सामान्यप्रत्यक्षस्याप्रत्यक्षत्वापातः, तत्र जगद्वैलक्षण्यप्रकाशे संशयाद्यनुपपत्तेः । यदि तत्रापि प्रतिपत्त्यादिव्यवच्छेदमात्रप्रकाशाद्विशेषप्रकाशत्वमेव तदाऽनुमित्यादिव्याप्तिः ।

अथेन्द्रियकरणकानुभवत्वम् । तत्र साक्षात्कारिधीकरणस्यैवेन्द्रियत्वेनान्योन्याश्र-

---

निर्विकल्पकेति । यद्यप्ययं घट इति सविकल्पेऽपि व्यावृत्तिर्न स्फुरति, अत एवापोहवादनिरासः, विशिष्टज्ञानानन्तरं तु व्यावृत्तिधीरित्युक्तं वैशिष्ट्यस्य सम्बन्धात्मकतामभिप्रेत्य "विशेषणं हि नागृहीतं नाप्यगृहीतविशेष्यसम्बन्धमन्यव्यावृत्तिबुद्धिमाधत्ते, परन्तु विशेष्ये गृहीतसम्बन्धम्, स एव च ग्रहो विशिष्टबुद्धिस्तदधीना तु पश्चात्तनीतरव्यावृत्तिबुद्धिरिति तत्त्व"मिति सन्दर्भेण बौद्धाधिकारशिरोमण्यादौ, तथापि "अतद्व्यावृत्तिर्वैशिष्ट्य"मिति किरणावल्युक्तनयेन सविकल्पेऽव्याप्तिर्नोक्ता अयं घट इत्यत्र घटत्ववैशिष्ट्यस्य भानात्, घटत्वस्य भावात्मकस्यापि भानाभ्युपगमेन च नापोहवादप्रसङ्ग इति भावः । यद्यप्येवमनुमित्यादावतिव्याप्तिरपि वक्तुमुचिता, तथापि विशेषशब्देन स्वविषयेतरविश्वव्यावृत्तेर्विवक्षणेऽनुमित्यादौ च तज्ज्ञानानभ्युपगमे न तत्रातिव्याप्तिरित्याशयेन सा नोक्ता । यदीति । तदा निर्विकल्पकविषयपरामर्शः । सोऽपि = निर्विकल्पकोऽपि बोधः । तथा = निरुच्यमानसाक्षात्कारित्वाश्रयः । उत्तरग्रन्थासाङ्गत्यापत्त्याऽत्र वस्तुनो व्यावृत्तिमतः प्रकाशो न विवक्षितः, अपि तु व्यावृत्तेरेव, निर्विकल्पकस्य तद्विषयकत्वं च प्राचीनानां केषाञ्चित्सम्मतमेव, अत एव "ज्ञानाभावस्यापि स्वरूपेण भेदादिवन्निर्विकल्पकसिद्धस्ये"ति तत्त्वप्रदीपिकायामप्युक्तम् । अभावत्वादिनाऽभावस्य सविकल्पकैकवेद्यत्वेऽपि स्वरूपेण प्रतियोग्यविशेषितरूपेण निर्विकल्पकविषयत्वोपगमे न किमपि बाधकम्, प्रतियोगिविशेषितरूपेणैव तद्बोधस्य प्रतियोगितावच्छेदकप्रकारकज्ञानजन्यतया विशिष्टवैशिष्ट्यावगाहित्वं नत्वन्यादृशस्येति भावः । सामान्यप्रत्यक्षस्य = साधारणधर्मप्रत्यक्षस्य । स्वविषयेतरविश्वव्यावृत्त्यविषयकत्वादिति शेषः । संशयादीति । अस्य निर्विकल्पकत्वाभावेन स्वरूपतो व्यावृत्तिविषयकत्वमुपगम्य संशयभ्रमोपपादनासम्भवादिति भावः । यदि तूच्चत्वाहत्वादिसाधारणधर्मदर्शनस्य स्थाणुपुरुषाद्यभेदसंशयाद्याधायकत्वेनैव तद्व्यावृत्तिविषयकत्वाभावः कल्प्यते, अन्यथा प्रतिबन्धकसद्भावेन तादृशसंशयाद्यनुत्पत्त्यापत्तेः । प्रतिपत्त्याद्यभेदसंशयाद्यभावानुरोधेन तु तद्भेदविषयकत्वमनुमन्यते प्रतिबन्धकस्य कारणान्तराभावेनाविनिगमकत्वात्, लक्षणे च स्वविषयेतरविश्वव्यावृत्तिविषयकत्वमपहाय स्वविषयेतरयत्किञ्चित्प्रतियोगिकव्यावृत्तिविषयकत्वमेव निवेश्यते इति नाव्याप्तिः, तदानुमित्यादावप्यनयैव रीत्या प्रतिपत्त्रादिभेदावगाहितया वक्तव्यत्वेन तत्रातिव्याप्तिरित्याह यदीति ।

अनुभवत्वमिति । जन्यसाक्षात्कारित्वमिति शेषः । ईश्वरज्ञाने प्रत्यक्षत्वमप्रामाणिकमिति निवेदितमते तु जन्यत्वं नोपादेयम् । अनुभवत्वं स्मृत्यन्यज्ञानत्वम्, एतच्च जन्यात्मविशेषगुणत्वावच्छिन्नं प्रति मनसः करणत्वे चिकीर्षादौ स्मृतौ चातिप्रसङ्गवारणाय । परन्त्वेवमप्यनुमित्यादावतिप्रसक्तिरिति विवक्षणीयमिन्द्रियत्वेन कारणत्वम्, अनुमित्यादौ तु मनसो मनस्त्वेनैव कारणता नत्विन्द्रियत्वेन, अतिप्रसञ्जकत्वात्, एतच्च करणतापर्यन्तमपि नानुधावनीयमितीन्द्रियत्वावच्छिन्नजनकताकजन्यज्ञानत्वमेव तादृशजन्यतैव वा लक्षणमिति । सामान्यतो ध्वंसं प्रति प्रतियोगित्वेनैव कारणता, विशिष्यापि नेन्द्रियत्वेन, तस्य परमते श्रोत्रमनआत्मकनित्यसाधारणत्वादित्यनतिप्रसङ्गः, इन्द्रियगतरूपादिसमवायिकारणतापि नेन्द्रियत्वेन तद्रूपादिसाधारणेनावच्छिद्यते । साक्षात्कारिधीति । आत्मनि साक्षात्काराश्रयेऽपि साक्षात्कारिपदप्रयोगसम्भवाद्बुद्धिगतसाक्षात्कारित्वलाभाय धीपदम् । करणस्येति । कारणत्वस्य

यत्वापत्तिरिति केचित्; नच, अज्ञातप्रमाकरणत्वस्य भावत्वविशेषितस्येन्द्रियनिरुक्तेः सम्भवात्। विना कार्यगतविशेषसिद्धिं किं प्रति करणत्वमेव ज्ञेयमिति तु बाधः साधीयान्।

एतेन ज्ञानता काचिद्विलक्षणा, तज्जनकत्वं ज्ञानस्य साक्षात्त्वमित्यपि निरस्तम्; ऐकरूप्याव्यवस्थितौ कारणत्वानवधारणात्। नच ज्ञाततावैलक्षण्यान्यथानुपपत्तेरेव तत्सिद्धिः; कारणान्तरवैलक्षण्यादेव तदुपपत्तेः।

---

कालादिसाधारण्यात्करणत्वनिवेशः। सन्निकर्षस्तु निर्व्यापारत्वादकरणम्। निर्विकल्पकस्यापि सङ्ग्राह्यत्वात्तस्य तद्व्यापारत्वानुपपत्तेः। अन्योन्याश्रयेति। करणतायाः किञ्चिद्धर्मावच्छिन्नत्वनियमादुक्तकरणतायाः स्वावच्छिन्नत्वस्यैवेन्द्रियलक्षणान्तरानभ्युपगमे वक्तव्यत्वादात्माश्रयोऽपि द्रष्टव्यः। प्रत्यक्षकारणशरीरसंयोगवत्त्वे सत्यतीन्द्रियत्वमितीन्द्रियलक्षणे त्वन्योन्याश्रय एव। कालेऽतिव्याप्तिवारणाय प्रत्यक्षकारणत्वस्य संयोगे निवेशः। अज्ञातेति। अज्ञातसतो ज्ञानकरणत्वमित्यर्थः, विषयतासम्बन्धावच्छिन्नज्ञाननिष्ठावच्छेदकतायाः अनिरूपिका ज्ञाननिरूपितकरणतेति यावत्। ज्ञायमानलिङ्गादेरनुमादिकरणत्वमते लिङ्गादिनिष्ठा ज्ञानकरणता ज्ञानावच्छिन्नैवेति तद्व्युदासः। अनुपलब्धेर्ज्ञाताया: करणत्वोपगमे तस्या अभावरूपतया ज्ञातेनानुपलब्ध्यन्तरेण ग्राह्यतायामनवस्थापत्त्याऽज्ञाताया एव करणत्वस्योपगन्तव्यत्वात्तत्रातिव्याप्तिरित्याशङ्क्य भावत्वे सतीत्यपि वक्तव्यमित्याह भावत्वेति। सम्भवात् = उक्तान्योन्याश्रयराहित्यात्, तेनोक्तरीत्याऽऽत्माश्रयसत्त्वेऽपि न क्षतिः। वस्तुतस्तु लिङ्गज्ञानादेरेवानुमित्यादिकरणत्वेन तत्रातिव्याप्तमिदं लक्षणम्, तस्मात् स्मृतिस्वरूपायोग्यस्य ज्ञानहेतुमनःसंयोगस्याश्रयत्वं वा शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानहेतुमनःसंयोगाश्रयत्वं वेन्द्रियत्वं नव्यसम्मतमेव द्रष्टव्यम्। अस्यापि न व्यवहारौपयिकत्वम्, एतदज्ञानतोऽपीन्द्रियत्वव्यवहारात्, नापि व्यावृत्त्यौपयिकत्वम्, निरस्तत्वात्, लक्षणसामान्यखण्डनतो स्मृत्यन्यस्वखण्डनावतारभाजनत्वञ्चेत्यन्यत्। कार्यगतविशेषसिद्धिं = कार्यतावच्छेदकसिद्धिं, किं प्रति = किंधर्मावच्छिन्ननिरूपितं. जन्यतायाः किञ्चिद्धर्मावच्छिन्नत्वनियमादवच्छेदकग्रहाधीनग्रहविषयत्वाच्चेन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यताया अवच्छेदकीभूतो धर्मो निरूपणीयः, नचैषा जन्यतैव सः, आत्माश्रयात्, नच धर्मान्तरं शक्यं निवक्तुम्, साक्षात्कारित्वस्य जातेर्निरसिष्यमाणत्वादिति भावः। एतेन साक्षात्कारित्वं स्वरूपेण लक्ष्यतावच्छेदकमुक्तजन्यतावच्छेदकत्वेन च लक्षणमिति न देशनीयम्। साधीयानिति। इन्द्रियलक्षणान्तरास्फूर्तिदशायामन्योन्याश्रयदूषणमपि बाढमिति भावः।

विलक्षणेति। साक्षात्कृतो घट इति प्रत्ययसाक्षिका क्रियाजन्यफलाश्रयत्वघटितकर्मत्वान्यथानुपपत्त्या स्वीक्रियमाणाऽखण्डैव साक्षात्कृतता नतु साक्षात्कारविषयत्वरूपेति नात्माश्रयः, नहि विषयता ज्ञानेन जन्यते तत्पूर्वं ज्ञानस्य निर्विषयत्वप्रसङ्गादिति भावः। तज्जनकत्वमिति। साक्षात्कृततात्वावच्छिन्नजन्यताकजनकत्वमित्यर्थः। ऐकरूप्याव्यवस्थितौ = कारणतावच्छेदकानवधारणे। प्रामाण्यवादे गदाधरभट्टाचार्योक्तिदिशोपनीतभानस्य भट्टैरप्यभ्युपगतत्वेन तत्राव्याप्तिरित्यपि द्रष्टव्यम्, तद्विषये साक्षात्कृततायाः अननुभवात्। वैलक्षण्येति। उक्तजन्यतानिरूपितजनकतायाः किञ्चिद्धर्मावच्छिन्नत्वावश्यम्भावात्, अन्यथा कार्यतावच्छेदकस्याप्यननुगतस्याकस्मिकत्वप्रसङ्गादिति भावः। तत्सिद्धिः = कारणतावच्छेदकसिद्धिः। कारणान्तरेति। एवोऽप्यर्थे। तादृशजनकतया प्रत्यक्षगतधर्मेणैवावच्छिन्नया भवितव्यमित्यत्र नियामकाभावात्, सामग्रीतः सर्वसम्भवेन साक्षात्कृततायां कारणान्तरजन्यताया अपि वक्तव्यत्वादित्याभासः। वस्तुतस्तु साक्षात्कारित्वस्यैव जनकतावच्छेदकताया वक्तव्यत्वेन तन्निरासो

नापि मेयजनितत्वम्; अतिप्रसङ्गात्, स्वमेयजत्वे च स्वार्थव्यावृत्त्याननुगमात्, पूर्वदोषानिवृत्तेश्च ।

अथ येन प्रमिते सति न प्रमित्सा पुनर्भवति तज्ज्ञानं साक्षात्कारीति; तन्न, प्रत्यक्षावगतेऽपीष्टे तनयादौ प्रमित्सादर्शनात् । अथ यदनन्तरं न विजातीयप्रमित्सा तद्भावस्तत्वम्; तन्न, तत्साजात्यानवगतौ तद्विजातीयत्वानवगतेः, अरिसम्पद्यनुमानादिविषयायां

वक्ष्यमाण एवानुसन्धेयः । साक्षात्कृततायाः अतिरिक्ताया अप्रामाणिकत्वञ्च, साक्षात्कृतो घट इति प्रतीतेर्विषयतारूपाहितयैवोपपत्तेः, अतीतादौ विषये फलाश्रयत्वासम्भवेन ज्ञानविषयत्वस्यैव ज्ञानकर्मतात्वाच, आवरणभङ्गादेरेव फलत्वसम्भवाच्चेति । एवञ्चानुमित्यादेर्व्युदासे प्रत्यक्षस्यैव साक्षात्कृततां प्रत्यसाधारणकारणत्वेन तद्गतेनैवानुगतानतिप्रसक्तधर्मेणोक्तजनकतया अवच्छिन्नत्वमुचितमिति नाशङ्कनीयम्।

मेयजनितत्वमिति । विषयजन्यज्ञानत्वं जन्यप्रत्यक्षत्वमित्यर्थः । सर्वांशेऽलौकिकप्रत्यक्षस्याप्रामाणिकत्वेन यत्किञ्चिद्विषयजन्यत्वस्यालौकिकप्रत्यक्षेऽप्यक्षतेरिति भावः । अतिप्रसङ्गादिति । विषयत्वस्य केवलान्वयितयाऽनुमित्यादेरपि विषयेणैव जन्यत्वादिति भावः । अननुगमादिति । आत्मविषयकानुमित्यादावतिव्याप्तेरप्युपलक्षणमिदम् । ननु विषयत्वावच्छिन्नजनकताकजन्यताविवक्षायां नायं दोषः, स्वत्वाप्रवेशात्, विषयत्वस्य विषयभेदभिन्नत्वेऽपि विषयतात्वेनाखण्डोपाधिनाऽनुगमात्, अनुमित्यादौ च न कस्यचिद्विषयत्वेन कारणता, आत्मविषयकानुमित्यादावप्यात्मनो हेतुताऽऽत्मत्वेनैवेत्यत्तर-माह पूर्वेति । जन्यताग्रहस्यावश्यनिरूपणीयताकं जन्यतावच्छेदकं निरसिष्यमाणं साक्षात्कारित्वमेवेति भावः ।

अथेति । स्वविशिष्टेच्छाप्रतिबन्धकज्ञानत्वं जन्यप्रत्यक्षत्वम् । वैशिष्ट्यं स्वसमवायिसमवेतत्व-स्वविशिष्टज्ञानविषयकत्वाभ्याम्, वैशिष्ट्यमत्र स्वसमवायिसमवेतत्वस्वानतिरिक्तविषयकत्वाभ्याम् । तेनातिरिक्तविषयकज्ञानविषयिकाया अनादृश्या अपि व्यधिकरणज्ञानविषयिकायाः समानाधिकरणज्ञानविषयिकाया अपि व्यधिकरणाया वेच्छाया अप्रतिबन्धेऽपि न क्षतिः । प्रत्यक्षेति । प्रमित्सा = पश्येयमित्यादीच्छा । नेति । अत एवोक्तं तात्पर्यटीकायाम्—"नहि कारिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातार" इति । तथा च द्वितीयवैशिष्ट्ये स्ववैजात्यमिति तृतीयोऽपि सम्बन्धो निवेशनीय इति भावः । तद्भावत्वं = जन्यप्रत्यक्षत्वम् । तदवगतेरिति । स्वानतिरिक्तविषयकज्ञानस्य स्ववैजात्यं हि न तत्तद्विषयकत्वेन सम्भवति, नापि तत्तद्व्यक्तित्वेन, तथासति स्वभिन्नत्वस्यैव तृतीयसम्बन्धस्य पर्यवसानेन तन्निवेशवैफल्यात्, अपितु संशयत्वनिश्चयत्वस्मृतित्वानां जातित्वमनभ्युपेत्य तद्भेदं वा जातौ निवेश्य स्ववृत्त्यनुभवत्वाव्यापकजात्यनवच्छिन्नत्वेनैव, एवञ्च 'अयं घट' इत्यादियत्किञ्चिद्व्यक्तिवृत्तितादृशजात्यवच्छिन्नत्वमेव लक्षणमुचितम्, जातिश्च तादृशी निराकरिष्यमाणा साक्षात्कारित्वमेवेति भावः। ननु स्ववृत्त्यनुभवत्वाव्यापकजात्यवच्छिन्नत्वमेव स्ववैजात्यमिति न साक्षात्कारित्वखण्डनस्यात्रावसरः, अनुमितित्वादेरेव तादृशजातित्वादि-त्यस्वरसादाह अरीति । अनुमानादेर्विषयोऽवकाशो विषयतया, विषयता वा यस्यां तत्रेत्यर्थः, तेन विषयशब्दस्य नियतपुंस्त्वेऽपि न क्षतिः । तथाचानुमित्यादेरपि कचित्स्ववृत्त्यनुभवत्वाव्यापकप्रत्यक्षत्व-जात्यवच्छिन्नतन्नेच्छाप्रतिबन्धकत्वेन तत्रातिव्याप्तिरिति । यदि चात्रानुमित्यादेस्तादृशेच्छाप्रतिबन्धकत्वे नानुमितित्वादिकं तन्त्रमपितु निष्टविषयकत्वम्, प्रत्यक्षस्य तु तादृशानुमितित्वाद्यवच्छिन्नविषयताकेच्छाप्रतिबन्धकत्वे प्रत्यक्षत्वमेव तन्त्रम्, तथाच स्वविशिष्टेच्छाप्रतिबन्धकतावच्छेदकीभूतस्ववृत्त्यनुभवत्वाव्यापकजातिमत्त्वं विवक्षणीयम्, एवं सति प्रोक्तसम्बन्धाभ्यां यत्प्रत्यक्षान्यकिंविशिष्टेच्छैवाप्रसिद्धा तत्र

प्रत्यक्षयितुमनिष्टेश्च, प्रत्यक्षावगतेऽपि दहने रक्ताशोकस्तबकसन्देहे धूमदर्शनेन वह्नेरनुमीयमानत्वादित्यप्येके।

अज्ञायमानासाधारणकारणकानुभवत्वं कारणविशेषणीकृतभावत्वं वा साक्षात्कारित्वमिति चेन्न; दीर्घादिप्रत्यक्षाव्यापनात्, तत्रावधिप्रभृतेः प्रतीयमानस्यापेक्षणात्। नावधिस्तत्र ज्ञायमानस्तथा, अवधिज्ञानं तु स्यात्, अतीतादावप्यवधौ तथाप्रत्ययादिति चेत्तुल्यं लिङ्गे धूमादावपि, धूमदर्शनात् तत्राग्निरासीदिति पश्चादप्यनुमानात्। ज्ञानविशेषणतया तु

---

नाव्याप्तिरपि। तदापि दत्तमेवोत्तरम्। साक्षात्कारित्वस्यैवानुमितित्वादेरपि न जातित्वमित्यपि च वक्ष्यते। सन्देहे इति। सन्देहस्य दुःखजनकत्वेन तन्निवृत्तिरूपेष्टसाधनत्वज्ञानेऽनुमित्सासम्भव इति भावः। अनुमीयमानत्वात – अनुमित्स्यमानत्वात्। एवञ्चात्र स्वविजातीयानुमितीच्छाप्रतिबन्धकताविरहिणि प्रत्यक्षेऽव्याप्तिरिति भावः। एके इति। अत्रायमस्वरसः, "प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः" इति सरणेरनुसरणे सन्देहसम्पादनं विफलम्, तदभावेऽप्यव्याप्त्युपपत्तेः। शाब्दादिनिश्चयानन्तरमनुमित्सयानुमितेर्निर्विवादत्वेऽपि प्रत्यक्षनिश्चयानन्तरमनुमित्सायाः सन्देहं विनाऽभ्युपगमस्याऽनुभवकलहेनावहेलनमिति चेत्, तथाप्युक्तलक्षणे प्रतिबन्धकीभूतज्ञानस्य निश्चयात्मकताया अवश्यं विवक्षणीयत्वेनात्र वह्नित्वप्रकारकप्रत्यक्षस्य निश्चयात्मकस्यैवोपादेयत्वेन तदनन्तरं कथं संशयः, दूरत्वादिदोषसत्त्वे प्रथममपि निश्चयानुत्पत्तिप्रसङ्गात्। सादृश्यादिप्रतिसन्धानादन्यथा वा कथमपि संशयोपपत्तावपि तदनन्तरमिष्टसाधनताज्ञानस्यानुमित्सौपयिकस्योपगमेऽनुमित्साऽव्यवहितप्राक्क्षणे प्रतिबन्धकस्य विनाशेन नाव्याप्त्युपदर्शनसङ्गतिः, यदि च सन्देहोक्तिः साध्यसन्देहात्मकपक्षतासम्पत्तये, वह्नित्वप्रकारकप्रत्यक्षस्य रक्ताशोकोपस्थित्यात्मकत्वे तदुत्तरभाविनः सन्देहस्य चेष्टसाधनताज्ञानात्मकत्वेऽनुमित्साऽव्यवहितप्राक्क्षणे प्रतिबन्धकसद्भावसम्भव इत्युच्यते, तदापि श्रौतादिनिश्चयानन्तरमनुमित्सयाऽऽरमाद्यनुमित्यभ्युपगमो विरुध्यते, तत्र साध्यसन्देहात्मकपक्षतानुपपत्तेः। अनुमित्साया अन्यथोपपादने साध्यसन्देहस्यान्यथासिद्धत्वाच्च। स्वविषयविषयकसन्देहानुत्तरत्वस्यापीच्छायां विवक्षासम्भवाच्च। जातिघटितलक्षणस्यावश्यादरणीयत्वाच्चेति।

अज्ञायमानेति। अनुमित्यादेर्ज्ञायमानलिङ्गादिकरणकत्वमते लक्षणमिदम्, परामर्शाद्यात्मकासाधारणकारणस्य तत्राप्यज्ञायमानत्वात्तु विषयतासम्बन्धावच्छिन्नज्ञाननिष्ठावच्छेदकतानिरूपककारणतानिरूपकतासामान्याभाववदनुभवत्वं विवक्षणीयम्। एवञ्चासाधारण्यमपि नोपादेयम्। स्मृतेस्तु तादृशनिरूपकताभाववत्त्वेऽपि नानुभवत्वमितिभावः। अनुपलब्धेः पृथक् प्रमाणत्वमते तन्निष्ठकरणताया ज्ञानानवच्छिन्नत्वादतिव्याप्तिरिति भावत्ववच्छिष्टत्वमपि निवेशनीयं कारणतायामित्याशयेनाह कारणेति। कारणत्वेन्यर्थः। विशेषणता सामानाधिकरण्येन। दीर्घादिप्रत्यक्षेति। दीर्घत्वसादृश्यादिप्रकारकप्रत्यक्षेत्यर्थः। विशिष्टप्रत्यक्षमात्रस्योपलक्षणमिदम्, तत्र विशेषणनिष्ठज्ञानावच्छिन्नकारणतानिरूपकताया एव सत्त्वात्। विशेषणज्ञानस्य विशिष्टधीहेतुतानभ्युपगन्तृमते तु दीर्घत्वादिप्रकारकप्रत्यक्षेऽपि नाव्याप्तिः, तद्व्यवहारे एव ह्रस्वत्वादिना ह्रस्वाद्यात्मकावधिज्ञानस्य कारणत्वं नतु तत्प्रकारकबोधे इति तत्सिद्धान्तात्। अवधिः = अवधिप्रभृतिः तत्र = दीर्घत्वादिप्रकारकप्रत्यक्षे। तथा=कारणम्। तथाप्रत्ययात् = दीर्घत्वादिप्रकारकप्रत्ययात्। तथाचावधेस्तादृशप्रत्ययहेतुत्वेऽतीतं भाविनं वाऽवधिमपेक्ष्य दीर्घत्वादिप्रत्ययो नोपपद्येत, कार्याऽव्यवहितप्राक्क्षणवर्तिन एव कारणत्वादिति न ज्ञाननिष्ठकारणतानिरूपकस्य ज्ञानावच्छिन्नत्वविरूपकत्वमिति नाव्याप्तिरिति। तुल्यमिति। ज्ञानावच्छिन्नकारणतानाश्रयत्वमिति दोषः।

क्षयहेतुता तुल्यैवेति। असाधारणकारणगिरा करणमभिमतमिति चेन्न; अनुमितभाविलिङ्गकभाविलिङ्गयनुमितावसतो लिङ्गस्य करणत्वासम्भवेन ज्ञायमानकरणकत्वाभावात्। लिङ्गज्ञानं तावत्करणं तच्च स्वप्रकाशवादिनो मम ज्ञायमानमेव तत्रेति चेन्न; तस्यापि ज्ञायमानतया करणकोटिप्रवेशे प्रमाणाभावात्, उक्तप्रत्ययानां तथात्वाभावात्, अन्यथासि-

---

धूमदर्शनात्पश्चादपि = धूमप्रत्यक्षानन्तरमपि, अतीतादिधूमस्मृत्यादितोऽपीति यावत्। आसीदिति भविष्यतीत्यस्याप्युपलक्षणम्। एवञ्च लिङ्गज्ञानस्यैवानुमितिकारणतया वक्तव्यत्वेन ज्ञानावच्छिन्नकारणत्वानिरूपिकायामनुमितावतिव्याप्तिरिति। यदि तु विशिष्टे कारणताग्राहकमानेन विशेषणेऽप्यसति बाधके कारणताग्रहाल्लिङ्गज्ञानस्य कारणत्वे लिङ्गस्यापि तत्, अतीतानागतधूमस्थले च वर्तमानयोरेव धूमध्वंसप्रागभावयोर्लिङ्गत्वम्, धर्मिभेदाच्च न वैयर्थ्यम्. सत्कार्यवादाश्रयणे पुनर्धूमस्यातीतादेरपि केनचिदात्मना सद्भावेन कारणतासम्भवः, स्वस्वावस्थाऽन्यतरस्यैव नियतपूर्ववर्तितायाः कारणताघटकत्वादिति ज्ञानावच्छिन्नकारणतानिरूपकत्वाभावो नानुमितावित्युच्यते, तदाऽनयैव रीत्याऽवध्यादिज्ञानस्य हेतुत्वेऽवध्यादेरपि हेतुत्वं दीर्घत्वादिप्रकारकज्ञाने वाच्यमेव, अतीतादिस्थले समाधानसाम्यात्, तथाचाव्याप्तिरस्त्येवेत्याह ज्ञानेति। नच धूमध्वंसादेरपि वह्निव्याप्यत्वेन दैशिकविशेषणतया पर्यन्तवृत्तित्वेन च वह्न्यनुमापकत्वसम्भवेऽपि ह्रस्वाद्यपेक्षयैव दीर्घत्वादिव्यवहारेण तद्ध्वंसस्यानवधित्वेन कथं दीर्घत्वादिप्रत्ययहेतुत्वमिति वाच्यम्, यस्मादत्रासीद्धूमस्तस्माद्वह्निरपीति प्रतीतेस्तथाऽपि धूम एवातीतेऽतीतवह्निव्याप्यतां प्रतीतवतो वक्तव्यत्वादिति भावः। ननु ज्ञानावच्छिन्नकारणत्वानिरूपकत्वविवक्षायां दैर्घ्यादिप्रत्यक्षे ज्ञायमानह्रस्वादिजन्यतया तादृशकारणतानिरूपकेऽपि ह्रस्वादेस्तत्र करणत्वे मानाभावेन तस्य स्वज्ञानव्यापारकत्वसम्भवेऽपि प्रमाणविभागायेन्द्रियादेः करणताया अवश्यकल्पनीयत्वेन कल्प्यकरणतेत्यस्य प्रामाणिकव्यवहारमात्रानुरोधित्वेन च तादृशकरणत्वनिरूपकत्वाभावान्नाव्याप्तिः, अनुमित्यादेस्तु परामृश्यमानलिङ्गादिकरणकतया तादृशकरणत्वनिरूपकत्वेन न तत्रातिव्याप्तिरित्यभिमानेनाह असाधारणकारणेति। असाधारणपदं यथाश्रुताभिप्रायेण। भावीत्यतीतस्याप्युपलक्षणं वर्तमानस्याप्यतीन्द्रियस्य च, तत्रानुमितिशाब्दद्यात्मकपरामर्शस्य विषयजन्यत्वे प्रमाणमलभमानस्य लिङ्गव्यापारत्वानुपपत्तौ लिङ्गस्य निर्व्यापारतया करणत्वानुपपत्तेः। अधिकं तु करणत्वखण्डनशारदायां निवेदितम्। एवञ्च व्याप्तिज्ञानस्याज्ञायमानस्यैवानुमितौ करणताया वाच्यत्वादुक्तकरणताघटितलक्षणस्यापि तत्रातिव्याप्तिरिति। लिङ्गज्ञानं = लिङ्गत्वज्ञानं, लिङ्गत्वं व्याप्तिः। स्वप्रकाशवादिन इति। यद्यपि ज्ञानमात्रस्य मातृभिरंशे प्रत्यक्षत्वं वदतोऽस्य मते ज्ञानावच्छिन्नकरणत्वानिरूपकानुभवत्वस्य प्रत्यक्षलक्षणत्वमव्यापकत्वादसम्भवि, तथापि सर्वांशे प्रत्यक्षस्य लक्षणमिदं तन्मतेऽपि सम्भवतीति भावः। तत्र = अनुमितिप्राक्क्षणे। ज्ञायमानमेवेति। तथाच ज्ञानावच्छिन्नकरणतानिरूपकत्वमेवानुमितावित्यभिमानः। लिङ्गत्वज्ञानस्य ज्ञायमानत्वेऽपि न ज्ञानावच्छिन्नं तस्य करणत्वम्, अन्यथा तार्किकाणामपि तत्र ज्ञानान्तरकल्पनापत्तेः, अनुभववैरूप्यायोगादित्याशयेनोक्ताभिमानं निराकरोति तस्यापीति। स्वविषयकस्यापि लिङ्गत्वज्ञानस्येत्यर्थः। ज्ञायमानतया करणकोटिप्रवेशे = ज्ञानावच्छिन्नकरणताश्रयत्वे। उक्तप्रत्ययानां = भाव्यादिलिङ्गकानुमितीनां स्वान्यथानुपपत्त्या ज्ञानस्य करणतायां प्रमाणत्वेऽपि तस्या ज्ञानावच्छिन्नत्वे तथात्वाभावात् = प्रमाणत्वाभावात्। व्याप्तिज्ञानस्य तत्त्वेनानन्यथासिद्धस्यापि व्याप्तिज्ञानविषयकज्ञानत्वेनान्यथासिद्धत्वमेव, कपालत्वेनानन्यथासिद्धस्यापि कपालस्य जन्यद्रव्यत्वेन द्रव्यत्वेन वाऽन्यथासिद्धत्ववदिति भावः। प्रमाणाभावमभिधाय बाधकमप्याह अन्यथासिद्धस्येति। अनुमित्यप्रयोजकस्येत्यर्थः। अवर्जने = करणतावच्छेदकत्वोपगमे। दैवोप-

द्धस्यापि ज्ञायमानत्वस्यावर्जने चक्षुराद्यनुमित्यनन्तरं दैवोपजातघटादिप्रत्यक्षाव्यापनात्। नियमेनेति चेन्न; विधौ वैयर्थ्यात्। नियमेन निषेधस्य विशेषणे दैवावगतेन्द्रियानन्तरजप्रत्यक्षासम्भवादसिद्धिः। विधौ करणत्वप्रविष्ट एवायं नियमो निरुच्यते इति चेन्न; तथापि वैयर्थ्यादेव। अन्यथाऽतिप्रसक्तेरवैयर्थ्यमिति चेन्न; तथाप्यतिप्रसक्तेरेव, नहि रसादिसाक्षात्कारे रूपादिर्हेतुः। अन्यथासिद्धेर्नेति चेन्न; तुल्यत्वादनुमानेऽपि। किञ्च

---

जातेति प्रत्यक्षान्वयि। स्वसामग्रीवशनिष्पन्नेत्यर्थः। एतदभिधानञ्चानुमितेस्तत्रानपेक्षासूचनाय। प्रत्यक्षाव्यापनादिति। तत्करणताया अपि ज्ञानावच्छिन्नाया वक्तुं शक्यत्वादिति भावः। नियमेनेति। यद्धर्मव्यापकं ज्ञानावच्छिन्नकरणताकत्वं तत्तद्धर्मानवच्छिन्नानुभवत्वमिति वा, ज्ञानगतयद्धर्मव्यापको ज्ञानावच्छिन्नकरणताकत्वाभावस्तद्धर्मावच्छिन्नत्वमिति वा विवक्षितम्, आद्येऽपि किं विवक्षेयमनुमित्यादावतिप्रसक्तिव्युदासाय, आहोस्विच्चक्षुराद्यनुमित्यनन्तरजातप्रत्यक्षेऽप्रसक्तिव्युदासाय, प्रथमे आह विधाविति। ज्ञानावच्छिन्नकरणकत्वाभावप्रतियोगिनीत्यर्थः। व्यापकत्वनिवेशस्येति शेषः। वैयर्थ्यादिति। ज्ञानकरणकस्याप्यनुमित्यादेर्ज्ञानावच्छिन्नकरणकत्वोपगमे तादृशकरणकत्वाभाववदनुभवत्वमिति यथाश्रुतेऽप्यनुमित्यादावतिव्याप्तिविरहेण तदर्थं न व्यापकत्वनिवेशौचित्यम्। ज्ञानगतयद्धर्मेत्यादिकमाशङ्क्याह नियमेनेति। व्यापकत्वेनेत्यर्थः। निषेधस्य = तादृशकरणकत्वाभावस्य। दैवावगतेति। उक्तफलकमिदमिन्द्रियविशेषणम्। असिद्धिरिति। असम्भव इत्यर्थः। तदप्रयोजकस्यापि तदीयकरणतावच्छेदकतामभ्युपगतवतो भवतो नोक्तप्रत्यक्षे ज्ञानावच्छिन्नकरणकत्वाभाव इति न तस्य प्रत्यक्षत्वव्यापकत्वमिति भावः। आद्यमेव पक्षमाश्रित्याशङ्कते विधाविति। यद्यपि तत्र धर्मव्यापकता ज्ञानावच्छिन्नकरणतानिरूपकत्वे प्रविष्टा, तथापि सापि न करणस्य ज्ञानावच्छिन्नस्य धर्मिव्यापकतां विना निर्वहति, करणत्वं हि व्यापकताघटितकारणताघटितम्, एवञ्चानुमितिप्रभृतिसामान्ये ज्ञानावच्छिन्नस्य व्यापकतयैव निर्वाहमासादयन्ती ज्ञानावच्छिन्नकरणताकत्वाभावस्यानतिप्रसक्तिरेवानुमितिव्याप्यवच्छेदेन तादृशकरणताकत्वमभिधाय स्फुटीक्रियते इत्याभासः। निरुच्यते इति। नियमान्तरं निवेश्य फलवत्तया स्फोर्यते इत्यर्थः। वैयर्थ्यादेवेति। अतिप्रसक्तिवारकतया साफल्याभावादेवेत्यर्थः। आद्यस्य द्वितीयमाशङ्कते अन्यथेति। अतिप्रसक्तेः = आपत्तेः, सा चाव्याप्तेः। मन्मते उक्तरीत्या यत्किञ्चित्प्रत्यक्षस्यापि ज्ञानावच्छिन्नकरणताकत्वेनाव्याप्तिवारणाय नियमान्तरप्रवेशः, नहि प्रत्यक्षत्वव्यापकत्वं तादृशकरणताकत्वे। धर्मपदेन च जातिर्विवक्षितेति न तत्तद्व्यक्तित्वव्यापकत्वमादायाव्याप्तितादवस्थ्यमिति भावः। अतिप्रसक्तेः = आपत्तेः, सा च कारणतायास्तदवच्छेदकताया वा। अयम्भावः—अनपेक्षणीयस्यापि ज्ञानस्य यत्किञ्चित्प्रत्यक्षनिरूपितकरणतायामवच्छेदकत्वोपगमनिबन्धनाव्याप्तिवारणाय हि नियमान्तरोपादानप्रयासः, तादृशोपगम एव तु न युज्यते, अन्यत्राप्यनपेक्षणीयस्य कारणतायास्तदवच्छेदकताया वाऽऽपादकत्वादिति। इष्टापत्तावाह नहीति। रूपादिरिति। नियतात्यव्यवहितप्राग्वृत्तिरपीति शेषः। हेतुः = हेतुतया तदवच्छेदकतया वा लोकसिद्धः। अन्यथासिद्धेः = हेतुहेतुतावच्छेदकसाधारणस्वरूपसम्बन्धविशेषरूपप्रयोजकताविरहाद्धेतुता तदवच्छेदकता वा नेत्यर्थः। अनुमाने इति। व्याप्तिज्ञानस्यानुमितिकरणत्वे स्वप्रकाशतया तत्र तद्विषयकत्वस्य विषयतया तस्यवाऽनुमितेः प्राक्सत्त्वेऽपि तस्य निरुक्तप्रयोजकताविरहाद्धेतुत्वं तदवच्छेदकत्वमपि नेत्यर्थः। एवञ्चानुमित्यादौ प्रकृतलक्षणातिव्याप्तिः स्थिरेति भावः। अनुभवत्वसमानाधिकरणयज्जातिव्यापको ज्ञानावच्छिन्नकरणताकत्वाभावस्तदवच्छिन्नत्वमिति विवक्षायां निरुक्तप्रयोजकताविरहेऽपि कारणतावच्छेदकत्वानभ्युपगमे नोक्तस्यासम्भवस्यावकाश इत्यनुमित्यादेर्ज्ञानावच्छिन्नकरणताकत्वमभ्युपेय

यत्र नियेधस्तद्गतमैकरूप्यं निरूप्यम्, अन्यथा किमादाय नियमो निरूप्येतेति कार्यगतैकरूप्यमनभिधाय न निस्तारः। विनापि च नियमपदप्रवेशं कार्यगतैकरूप्यमनिरूप्यानिस्तार एव। ज्ञायमानं नात्र करणमिति हि यदि कार्यव्यक्तिमभिसन्धाय, तदा तत्पूर्वं प्रतीतानां तत्राकारणत्वं दुरवधारणम्, ततस्तज्जातीये तज्जातीयव्यभिचारप्रतिसन्धानेऽवश्यं यतनीयमिति।

अथाव्यवहितार्थप्रमात्वं तथा। तर्हि किमपेक्ष्य व्यवधानम्? किञ्च तदिति वाच्यम्। इन्द्रियमपेक्ष्य तत्, असन्निकर्षश्च तदिति चेत्तर्हीन्द्रियसन्निकृष्टप्रकाशत्वमिति कुटिलिकार्थः, स चानुपपन्नः, स्वधिलोचनगोलकानुमानव्याप्तेः।

---

दूषणान्तरमाह किञ्चेति। यत्र = प्रत्यक्षे। ऐकरूप्यं = अनुगताननतिप्रसक्तरूपम्। किमादाय नियमो निरूप्येत = किंधर्मनिरूपिता व्यापकता ज्ञायेत। तादात्म्येन धर्मिव्यापकत्वनिवेशेऽपि व्याप्यतावच्छेदकमनुगताननतिप्रसक्तं वक्तव्यमेव, व्यक्तीनामानन्त्यात्, यदाहुस्तार्किकाः—"अनुगतधर्मावच्छिन्नसमयनियमग्रहाधीनप्रवृत्तिकयोरप्रवृत्तिरेव शब्दलिङ्गयोरन्तरेणानुगतधर्म"मिति। कार्येति। प्रत्यक्षेत्यर्थः। न निस्तारः = न प्रकृतलक्षणनिरूपणसम्भवः। आहत्य विप्रतिपत्तिजन्मनः संशयस्य स्वीकारे संशयत्वं न तादृशं रूपम्, मतान्तरे तादृशं सम्भवदपि न जातिरिति प्रत्यक्षमात्रसाधारणं साक्षात्कारित्वमेव तथा, तच्च परतोनिरसनीयमिति भावः। ज्ञानावच्छिन्नकरणतानिरूपकत्वाभाववदनुभवत्वमिति यथाश्रुतेऽपि ज्ञातकरणकत्वमनुमित्यादावभ्युपेत्य दूषणमाह विनापीति। तादृशनिरूपकत्वाभावो नानुभवत्वं धर्मितावच्छेदकीकृत्य शक्यग्रहः, तस्यातिप्रसक्तेः, नापि तत्तज्ज्ञानत्वं, आनन्त्यात्, अपितु साक्षात्कारित्वमेवेति भावः तत्तज्ज्ञानत्वस्य धर्मितावच्छेदकत्वाभावे हेत्वन्तरमप्याह ज्ञायमानमिति। कार्यव्यक्तिमभिसन्धाय = प्रत्यक्षविशेषं धर्मीकृत्येति यावत्। प्रत्येतव्यमिति शेषः। तत्पूर्वं = प्रत्यक्षविशेषात्पूर्वं। तत्र = प्रत्यक्षविशेषे। ज्ञातनयनादिजन्यप्रत्यक्षविशेषे ज्ञानावच्छिन्नकरणताकत्वाभावस्य तज्जातीयज्ञानान्तराणामज्ञातेन्द्रियजन्यत्वप्रतीतावेव प्रतीतिसम्भवः केषाञ्चिद्घटानां रासभानपेक्षोत्पत्तिकत्वदर्शनमन्तरेण रासभनियतोत्पत्तिकघटविशेषे रासभस्यान्यथासिद्धत्वाप्रत्ययात्, तज्जातीयत्वञ्च प्रत्यक्षत्वेनैव प्रकृते स्यादिति तस्यैव धर्मितावच्छेदकत्वमापतितम्, अन्यथोक्तप्रत्यक्षविशेषेऽव्याप्तेर्दुर्वारत्वादिति भावः। तज्जातीये = उक्तप्रत्यक्षविशेषजातीयेऽज्ञातनयनादिजन्यज्ञाने तज्जातीयव्यभिचारप्रतिसन्धाने यतनीयम् = ज्ञातनयनादेः व्यभिचारः प्रत्येतव्यः, तत्प्रतीतये च साजात्यं प्रत्येतव्यमिति भावः।
तथा = जन्यसाक्षात्कारिप्रमात्वम्। तदा सर्वत्र व्यवधानपरामर्शः। इन्द्रियेति। इन्द्रियसन्निकृष्टविषयकप्रमात्वमित्यर्थः। सन्निकर्षस्त्वन्यतमत्वेनोपादेय इति भावः। कुटिलिका = अस्फुटोक्तिः। स्वधिलोचनेति। स्वपदं पुरुषान्तराक्षसन्निकृष्टस्याद्यनुमित्यादावपरपुरुषसमवेतेऽतिव्याप्तिवारणाय अनुमित्साधीनायां स्वनयनसन्निकृष्टहुतभुगातत्पुरुषीयत्वस्येन्द्रिये निवेशेऽप्यतिव्याप्तिं स्थिरयितुम्। अनुमित्साधीनायां स्वनयनसन्निकृष्टहुतभुगानुमितावतिव्याप्तिसम्भवेऽपि गोलकपर्यन्तानुधावनं प्रत्यक्षनिश्चितेऽप्यर्थेऽनुमित्साधीनानुमितावनुभवकलहमभिप्रेत्य, एवञ्चैतेनाप्यनुरोधेन स्वत्वोपादानमिन्द्रियविशेषोपादानञ्च युक्तमेव कृतम्, अन्यथा परकीयगोलकस्यान्यदीयप्रत्यक्षविषयस्य स्वकीयस्यापि त्वगादिगोलकस्य स्वप्रत्यक्षविषयस्यानुमितिविषयत्वोपपादनं क्लिष्टं स्यादिति। अनुमानव्याप्तेः = अनुमित्याद्यतिव्याप्तेः। अत्र यद्यपीन्द्रियसन्निकर्षत्वावच्छिन्नकारणताककार्यताश्रयप्रमात्वविवक्षायामिन्द्रियत्वावच्छिन्नकारणताककार्यताश्रयप्रमात्वविवक्षायां वा नेयमतिव्याप्तिः, अनुमित्यादौ मनस इन्द्रियत्वेन तत्सन्निकर्षस्य चेन्द्रियत्वावच्छिन्नप्रतियोगिकसन्नि-

ज्ञानाजन्यज्ञानत्वं तदिति चेन्न; सविकल्पकविशेषाव्यापनात्। एतेन विषयान्तर-

---

कर्षत्वेनाकारणत्वात्, तथापि तदपि तादृशकार्यतावच्छेदकनिरूपणसापेक्षमेव, कार्यतावच्छेदकञ्च साक्षात्कारित्वं निरसनीयमेवेति भावः।

ज्ञानेति। स्वसमानाधिकरणेत्यादिः। तत् = साक्षात्कारित्वम्। अनुमित्यादिकं तु स्वसमानाधिकरणव्याप्तिज्ञानादिजन्यमित्यनतिव्याप्तिः। सविकल्पकविशेषः = सविकल्पकात्मकः प्रत्यक्षविशेषः। विशिष्टज्ञानमात्रस्य विशेषणज्ञानजन्यत्वात्। ज्ञानाजन्यज्ञानवृत्त्यनुभवत्वाव्यापकजातिमत्त्वविवक्षायां तादृशज्ञानाजन्यज्ञानं निर्विकल्पकमादाय सर्वत्र समन्वयसम्भवेऽपि साक्षात्कारित्वस्य तादृशजातेश्च निरासो वक्तव्यः। नच—ज्ञानत्वपर्याप्तावच्छेदकताकजनकतानिरूपकत्वाभावज्ञानत्वं विवक्षणीयम्; स्मृतिं प्रति ज्ञानत्वेनैव हेतुतेति तत्र नातिव्याप्तिः। संस्कारं प्रति पुनरुपेक्षान्यज्ञानत्वेनैव सोचिता नवेत्यन्यत्। ईश्वरज्ञानं तूपादानप्रत्यक्षविधया कारणम्, विशेषणज्ञानत्वादिना कारणतावच्छेदकता तु न ज्ञानत्वपर्याप्ता, ज्ञानत्वगततद्व्यक्तित्वावच्छिन्नानुयोगिताकपर्याप्तेर्विवक्षितत्वात्, अनुमित्यादिकं तु प्रति ज्ञानत्वेनैव कारणता, लाघवात्, विशेषसामग्र्या चातिप्रसङ्गभङ्ग इति—वाच्यम्; सुखादिसाधारणजन्यात्मविशेषगुणत्वावच्छिन्नं प्रति मनस्त्वेन कारणतायाः क्लृप्ततया ज्ञानत्वेनानुमित्यादावपि कारणताया अकल्पनीयत्वात्त्रातिप्रसक्तेः। ज्ञानत्ववृत्तित्वविशिष्टावच्छेदकता ज्ञानत्वे पर्याप्तेति प्रतीत्या विशेषणज्ञानत्वाद्यवच्छिन्नजनकताया अपि ग्रहणसम्भवेनाव्याप्तेश्च। ज्ञानत्वेतरानवच्छिन्नत्वाभावविवक्षणे चोभयाभावादिकमादायातिप्रसङ्गवारणाय विशेषणानवस्थानप्रसङ्ग इत्यादिकमुक्तं पूर्वमिति भावः। अथवा—ज्ञानाजन्यज्ञानत्वं = ज्ञानाकरणकज्ञानत्वं, ज्ञानकरणकत्वमनुमित्यादेः, विशेषणज्ञानं तु निर्व्यापारतया विशिष्टबोधे न करणमपि तु कारणमिति नाव्याप्तिः। नच—ज्ञानजन्यत्वे सति ज्ञानजन्यजन्यो यस्तद्भिन्नत्वमेव ज्ञानाकरणकत्वम्, तस्य चेश्वरज्ञाने सम्भवेऽपि जन्यप्रत्यक्षेऽव्यापकत्वमेव, ईश्वरज्ञानजन्यस्य तस्य तज्जन्यसन्निकर्षादिनापि जन्यत्वादिति—वाच्यम्; ज्ञाननिरूपिताया जन्यतातिरिक्तधर्मावच्छिन्नाया जन्यताया आश्रयो यस्तज्जन्यभिन्नत्वस्य विवक्षितत्वात्, ईश्वरज्ञाननिरूपिता जन्यता तु जन्यतावच्छिन्नेत्युक्तजन्यताश्रयो न सन्निकर्षादिरपि तु व्याप्तिज्ञानजन्यपरामर्शादिकमेवेति नाप्रसङ्गातिप्रसङ्गौ। नचैवमपि धारावाहिकतृतीयादिप्रत्यक्षेऽव्याप्तिः, तस्योक्तजन्यताश्रयद्वितीयादिज्ञानजन्यत्वात्, स्वनिरूपिततादृशजन्यताश्रयत्वस्वनिरूपिततादृशजन्यताश्रयजन्यत्वाभ्यां ज्ञानविशिष्टान्यत्वविवक्षणेऽपि सम्भेदे नान्यतरवैयर्थ्यमिति न्यायेन द्वितीयक्षणे द्वितीयस्येव प्रथमस्यापि ज्ञानस्य वर्तमानत्वेन विशेषणज्ञानविधया प्रथमस्यापि तृतीयज्ञानजनकत्वादव्याप्तितादवस्थ्यादिति वाच्यम्; स्वघटकधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयज्ञानजन्यमात्रवृत्तिधर्मावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकं यद्यत्तदवच्छिन्नप्रतियोगिताकभेदवत्त्वस्य विवक्षितत्वात्। धूमलिङ्गकवह्न्यनुमितित्वाद्यवच्छिन्नकार्यतानिरूपितकारणताश्रयव्याप्तिज्ञानादिजन्यपरामर्शादिमात्रवृत्तिधर्मावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकं धूमलिङ्गकपर्वतपक्षकवह्न्यनुमितित्वादिकं तद्घटकमेव धूमलिङ्गकवह्न्यनुमितित्वादिकमिति नातिव्याप्तिः। नच—परामर्शत्वमीश्वरज्ञानेऽपि वर्तते इति न व्याप्तिज्ञानादिजन्यमात्रवृत्तीति तद्वस्थातिव्याप्तिरिति वाच्यम्, परामर्शत्वस्य मानसत्वव्याप्यजातिविशेषस्येश्वरज्ञानेऽनभ्युपगमात्, तादृशकारणताश्रयज्ञानजन्यमात्रवृत्तित्वस्य वा तादृशकारणताश्रयजन्यज्ञानाजन्यजन्यज्ञानावृत्तित्वे सति तादृशकारणताश्रयजन्यवृत्तित्वरूपस्य विवक्षितत्वात्। परामर्शत्वस्य नित्यज्ञानवृत्तित्वेऽपि तादृशकारणताश्रयीभूतजन्यज्ञानाजन्ये जन्यज्ञानेऽवर्तमानत्वात्। नच—भ्रमसंशयोत्तरप्रत्यक्षे स्थाणुत्वव्याप्यकोटरादिमानयमित्यादिविशेषदर्शनस्य हेतुत्वेऽ-

ज्ञानाजन्यज्ञानत्वं तदिति प्रत्युक्तम्। सविकल्पकस्याधिकव्यवच्छेदरूपविषयत्वात्तद्व-

---

्याप्तिस्तथेति वाच्यम्; विशेषदर्शनस्य तत्र हेतुत्वानभ्युपगमेऽपि क्षत्यभावात्, संशयोत्तरं विशेषदर्शनासत्त्वदशायां कोट्युपस्थित्यादिरूपसंशयसामग्रीसत्त्वा संशयस्यैवोत्पत्तुं युक्तत्वेन विशिष्टनिश्चयोत्पत्त्यापत्तेरयोगात्, विपरीतनिश्चयोत्तरमपि तथैव, तस्य दोषविशेषाजन्यलौकिकसन्निकर्षाजन्यविशिष्टज्ञानसामान्यं प्रति प्रतिबन्धकत्वात्। नच—आत्मसाक्षात्कारेऽव्याप्तिः, तत्साक्षात्कारत्वस्य स्वावच्छिन्नकार्यतानिरूपितकारणताश्रयश्रवणजन्यमननमात्रवृत्तिधर्मावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकत्वादिति—वाच्यम्; स्वावच्छिन्नकार्यतानिरूपितकारणताया ज्ञानत्वन्यूनवृत्तिजात्यनियतत्वेन विशेषणीयत्वात्, श्रवणनिष्ठकारणतायाश्च श्रुतिजन्यज्ञानत्वावच्छिन्नाया ज्ञानत्वन्यूनवृत्तिशाब्दत्वजातिनियतत्वादिति पूर्वः पक्षः। अत्राह सविकल्पकविशेषेति। प्रत्यभिज्ञेत्यर्थः। उद्बुद्धसंस्कारवशादेव प्रत्यभिज्ञायास्तत्ताविषयकत्वोपपत्तेर्मध्ये स्मृतिकल्पनायां प्रमाणाभावात्, अतएव तथैवानुभवं विनिर्णीय संस्कारस्यैवोपनायकत्वं प्राञ्चो वदन्ति, एवञ्च तत्ताज्ञानजन्यतत्तासंस्कारजन्यतावच्छेदकमेव प्रत्यभिज्ञानिष्ठं संयोगाद्यजन्यतत्तद्विषयकप्रत्यक्षत्वमित्यव्याप्तिरित्यर्थः। नचैवं तस्य संस्कारजन्यत्वेन स्मृतित्वापत्तिः, अनुभवामीत्यनुव्यवसायसत्त्वे संस्कारजन्यत्वस्याप्रयोजकत्वात्, अन्यथा त्वांशिकस्मृतित्वे इष्टापत्तेः। यद्वा सविकल्पकविशेषः = विशिष्टवैशिष्ट्यबोधः, तत्राव्याप्तिः, तस्य विशेषणतावच्छेदकज्ञानजन्यविशेषणतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकधर्मावच्छिन्नत्वात्, सामान्यरूपेण कार्यकारणभावस्यानङ्गीकारेऽपि विशिष्यैव तमादायाव्याप्तिदानसम्भवात्, पूर्वं हि दण्डत्वनिर्विकल्पकं ततः परं 'दण्ड' इति दण्डत्वप्रकारकं ज्ञानं ततो दण्डी पुरुष इति। एवञ्च करणलक्षणसङ्गमान्निर्विकल्पकज्ञानकरणकत्वं तत्र निर्बाधम्। अन्यथैतत्स्थलव्यावृत्तस्य करणत्वस्य निर्वक्तव्यत्वापातात्। अतएवानुमितिप्रकरणशेषे गदाधरभट्टाचार्यैरपि विशेषणतावच्छेदकज्ञानकरणकविशिष्टवैशिष्ट्यबोधादावव्याप्तिमभिधाय ज्ञानाकरणकज्ञानत्वस्य प्रत्यक्षलक्षणत्वं नाङ्गीकृतम्। किञ्च तादृशकार्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदः कं धर्मं धर्मितावच्छेदकीकृत्य ज्ञेय इति तादृशधर्मस्यावश्यनिरूपणीयत्वम्, तं विना साक्षात्करोमीति प्रतीतेरप्यनुपपत्तेश्च। किञ्च तादृशभेदकूटघटितत्वेनासर्वज्ञदुर्ग्रहत्वमपि। नचास्तु यत्किञ्चित्प्रत्यक्षव्यक्तिमुपादाय तद्वृत्त्यनुभवत्वव्याप्यजातिमत्त्वं ज्ञानाकरणकज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वं वा लक्षणम्, व्याप्यत्वञ्च तत्समानाधिकरणत्वे सति तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वमत्रेति नानुभवत्वमादायातिप्रसङ्गः, प्रत्यक्षत्वमेवानुभवत्वमिति प्रत्यभिज्ञानखण्डनोक्तनिष्कृष्टमते तु तादृशज्ञानसमवेतानुमित्यसमवेतजातिमत्त्वादिकमेव वक्तव्यमिति वाच्यम्; तादृशजातेर्निरसिष्यमाणत्वादिति भावः। प्राभाकरास्तु मानमित्यंशे ज्ञानमात्रस्य प्रत्यक्षत्वं प्रसाध्योक्तलक्षणस्याव्याप्तिव्याप्तत्वमाहुः। भाट्टास्तु—पार्थक्यमनुपलब्धेर्निरूप्य तज्जन्यज्ञानेऽतिव्याप्तिमुक्तलक्षणस्याचक्षते।

एतेनेति। वक्ष्यमाणेनेत्यर्थः। विषयान्तरेति। स्वविषयातिरिक्तविषयकजन्यज्ञानाजन्यानुभवत्वं जन्यलौकिकसाक्षात्कारित्वमित्यर्थः। 'लिङ्गोपहितलैङ्गिकभानस्याप्रामाणिकत्वेनानुमित्यादौ नातिप्रसङ्गः, विशेषणज्ञानजन्यं विशिष्टप्रत्यक्षं तु स्वविषयविषयकज्ञानेनैव जन्यमिति भावः। अत्र स्वविषयीभूतयत्किञ्चित्प्रतियोगिकातिरिक्तत्वं विवक्षितम्, स्वविषयीभूतयावत्प्रतियोगिकातिरिक्तत्वं वेति विकल्प्य प्रथमं निराकुरुते सविकल्पकस्येति। सविकल्पकविशेषस्येत्यर्थः। यथाश्रुतमिदं वैशिष्ट्यमतद्व्यावृत्तिरितिमतेन। निर्विकल्पकं सविकल्पकव्यान्तरा प्रतियोगितावच्छेदकप्रकारकज्ञानं कल्पनीयमिति भावः। तत्त्वं तूदितं प्राक्। अधिकः = स्वकारणभूतविशेषणतावच्छेदकप्रकारकज्ञानाविषयो व्यवच्छेद-

विज्ञानजन्यत्वात्। स्वविषयानन्तर्गतार्थज्ञानाजन्यधीत्वं तत्, नच सप्रतियोगिकार्थप्रत्यक्षाव्याप्तिः; प्रतियोगिनोऽपि स्वविशिष्टार्थप्रविष्टस्य तत्ताया इव प्रत्यभिज्ञायां प्रत्यक्षे विषयत्वोपगमात्, अप्रतियोगित्वेन विशेषणाच्चेति चेन्न; स्वपदेनैव क्षारीकृतत्वात्। कार्यव्यक्तावजन्यताया दुरवधारणत्वात्तज्जातीये तज्जातीयव्यभिचारशङ्काग्रहणे च कार्यैकजात्ये पूर्ववत्पतनमिति।

स्वकालावच्छिन्नार्थबोधत्वं साक्षात्त्वमित्यपि न, स्वार्थाविवेचनात्। कथञ्चानुमा-

---

रूपो विषयो यस्य, तथात्वात्। तदवधीति। व्यवच्छेदविशेषणतावच्छेदकेत्यर्थः। तथाचेदं तद्व्यावृत्तमित्यादिप्रत्यक्षेऽव्याप्तिः, स्वविषयीभूतयत्किञ्चिद्व्यवच्छेदातिरिक्तविशेषणतावच्छेदकप्रकारकजन्यज्ञानजन्यत्वादिति भावः। विशिष्टप्रत्यक्षमात्रेऽव्याप्तेरुपलक्षणमिदम्। द्वितीयमाशङ्कते स्वविषयेति। नवेत्यादेः 'उक्ता सप्रतियोगिकार्थप्रत्यक्षाव्याप्तिस्तु ने'त्यर्थः। विशिष्टप्रत्यक्षान्तरेऽप्यव्याप्त्यभावस्योपलक्षणमिदम्। स्वविशिष्टार्थप्रविष्टस्य = प्रतियोगिविशिष्टार्थो भेदस्तन्निरूपकस्य। अतीतानागतयोरपि प्रतियोगित्वेन प्रत्यक्षविषयत्वासम्भवमाशङ्क्योपनीतभानाभिप्रायेणाह तत्ताया इति। प्रत्यक्षविशेष्यस्य विद्यमानत्वनियमो नतु विशेषणस्यापि। अप्रतियोगित्वेनेति। प्रतियोगिभिन्नत्वेनेत्यर्थः। स्वविषयानन्तर्गतार्थस्येति शेषः। इदमभ्युपगममात्रम्, अभावत्वेनाभावबोधस्य प्रतियोगिविषयकत्वनियतेः, सामान्याभावबोधस्य सकलप्रतियोगिविषयकत्वानभ्युपगन्तृनव्यमते नु तत्कारणभूते विशेषणतावच्छेदकप्रकारकज्ञानेऽपि न सकलप्रतियोगिविषयकत्वमुपगम्यत इति। स्वपदेनैव = स्वत्वघटिततयैव। क्षारीकृतत्वात् = दूषितत्वात्। स्वत्वस्याननुगमे स्वविषयानन्तर्गतार्थाप्रसिद्धेरननुगमस्यैव वक्तव्यत्वादिति न लक्ष्यमात्रसाधारण्यनिर्वाह इति भावः। कार्यव्यक्ताविति। स्वविषयातिरिक्तविषयकज्ञानाव्यवहितोत्तरजातप्रत्यक्षविशेषे इत्यर्थः। अजन्यतायाः = स्वविषयातिरिक्तविषयकज्ञानाजन्यतायाः। दुरवधारणत्वात्। स्वविषयातिरिक्तविषयकज्ञानस्य प्रत्यक्षविशेषनियताव्यवहितप्राग्वर्तितया तत्कारणत्वसम्भवेन तादृशप्रत्यक्षेऽव्याप्तिः स्यादिति भावः। नन्वनन्यथासिद्धत्वमपि कारणताघटकमिति कथमेवम्, नचात्र तदेव नास्तीति कथं ज्ञेयम्; उक्तप्रत्यक्षविशेषजातीयव्यक्त्यन्तरस्य स्वविषयातिरिक्तविषयकज्ञानं विनैवोत्पत्तिदर्शनेन तस्य प्रत्यक्षत्वावच्छेदेनावश्यक्लृप्तैरन्यथासिद्धेरावश्यकत्वादित्याशङ्क्याह, तज्जातीये इति। उक्तप्रत्यक्षविशेषसजातीये इत्यर्थः। साजात्यञ्चेन्द्रियजन्यज्ञानत्वसाक्षात्कारित्वादिना। तज्जातीयव्यभिचारशङ्काग्रहणे = स्वविषयातिरिक्तविषयकज्ञानत्वावच्छिन्नव्यभिचार एव कारणताग्रहविघटकतया शङ्क्यं तद्ग्रहणे, तत्प्रतीत्योक्तप्रत्यक्षविशेषस्य निरुक्तज्ञानाजन्यत्वोपपादने इति यावत्। कार्यैकजात्ये पतनं = प्रत्यक्षत्वसमनियतधर्मान्तरस्य निरूपणप्रसङ्गः, अन्यथा साजात्यग्रहे तज्जातीये व्यभिचारग्रहानुपपत्तेरिति भावः। इदमुपलक्षणम्–विशिष्टस्यातिरिक्तत्वेन निर्विकल्पकस्य च तदविषयकत्वेन तज्जन्यज्ञानासङ्ग्रहः, अत्यन्तातिरेकनिवेशस्त्वसम्भवप्रसञ्जकः, अन्ततः प्रमेयत्वादिनैव सर्वानतिरेकात्। नित्यसर्वविषयकालौकिकप्रत्यक्षासङ्ग्रहश्चेति जातिघटितं लक्षणमवश्यमादरणीयमिति।

स्वकालेति। वस्तुगत्या स्वध्वंसप्रागभावानधिकरणीभूतो यः कालस्तद्वृत्तित्वावच्छिन्नविशेष्यताकज्ञानत्वं जन्यसप्रकारकप्रत्यक्षत्वमित्यर्थः। ज्ञाने स्वविषयत्वस्याप्रामाणिकत्वेन वस्तुगत्येति। स्थूलकालोपाधेः प्रत्यक्षाविषयत्वानैयत्येन भूतान्तम्। तादृशकालवृत्तिविशेष्यकत्वस्यानुमित्यादावपि सम्भवेन विशेष्यतावच्छेदकतया तादृशकालवृत्तित्वनिवेशः। उपनीतस्यातीतादेरपि भानसम्भवेन विशेष्यतापर्यन्तानुधावनम्, उपनीतं तु विशेषणतयैव भासते, सर्वांशे चोपनीतभाने न मानम्। भना-

नादिव्यवच्छेदः ?। तत्र व्याप्त्यादिप्रविष्टकालनियतार्थत्वम्, यत्रापि चन्द्रोदयसमुद्रवृद्ध्यादौ स्वकालार्थत्वं तत्रापि व्याप्तिप्रविष्टत्वैव तादृशत्वस्य प्रयोजिकेति चेन्न, कथमप्यस्तु, तथापि स्वकालावच्छिन्नार्थत्वस्य सम्भवात्। नच यज्जातीयमेवमेवेति विशेषः; साजात्यस्य वैलक्षण्यस्याग्रतः सिद्धौ किमनेन। नच तदपीति वक्ष्यते। व्याप्त्यादिकमन्तरेणेति चेन्न, तस्यैव समर्थत्वेन स्वकालकथावैयर्थ्यात्। यथाच न तदपि तथा वक्ष्यते।

---

गतविषयकानुमित्याद्यधीनानागतविषयकस्मृतौ न स्वाधिकरणकालावच्छिन्नतया विशेष्यभानम्, अन्यादृशस्मृतौ तु पूर्वकालावच्छिन्नस्यैव विशेष्यस्य भानमिति नातिप्रसङ्गः। नित्यप्रत्यक्षस्य ध्वंसाद्यप्रसिद्धेर्लक्ष्ये जन्यत्वस्य निवेशः, अलौकिकं तु प्रत्यक्षमतीतादिविशेष्यकमपि यत्किञ्चिद्विशेष्यांशे सम्भवल्लौकिकत्वाकमिति तस्यापि सङ्ग्रहः। स्वार्थेति। स्वत्वस्याननुगतस्य निर्वक्तुमशक्यत्वादित्यर्थः। निवेदितत्वमेतत्। तथाच प्रत्यक्षविशेषनिवेशे प्रत्यक्षान्तराव्याप्तिरिति। स्वत्वानुगमाभ्युपगमवादेनाह कथमिति। "न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते" इत्यौत्सर्गिकवादेनानुमित्यादेरपि कदाचित्स्वाधिकरणक्षणावच्छिन्नार्थविषयकत्वसम्भवेन तत्रातिव्याप्तिरिति भावः। अतिव्याप्तिं परिहरन्नाह तत्रेति। अनुमित्यादावित्यर्थः। यत्र यदा धूमस्तत्र तदा वह्निरिति वाक्यप्रदर्श्या व्याप्तिः कालघटिता, आदिना कालगर्भव्याप्यग्रहेऽपि तत्तद्धूमकालस्य पक्षतावच्छेदकत्वे 'उद्देश्यतावच्छेदककालावच्छिन्नत्वं विधेयगतत्वेन भासते' इत्युत्सर्गेण तत्तद्धूमकालिकवह्निविषयकत्वस्यानुमितावभ्युपगमेन पक्षतावच्छेदकं वर्तमानत्वादिभानप्रयोजकतयादिशब्देन गृह्यते। कालनियतार्थत्वम् = कालावच्छिन्नविशेष्यताकत्वम्। विधेयतायाः प्रकारत्वानियतत्वेन साध्यविशेष्यकत्वस्याप्यनुमितौ सम्भव इत्यभिप्रायः। एवञ्चातीतादिकालघटितव्याप्त्यादिज्ञानजन्यानुमित्यादेः स्वाधिकरणक्षणावच्छिन्नार्थविषयकत्वासम्भवेन तत्र तावन्नातिव्याप्तिः, यत्र चानुमादौ स्वाधिकरणक्षणावच्छिन्नार्थविषयकत्वं तत्रापि सा नेत्याह यत्रापि चन्द्रेत्यादि। यस्मिन् कालविशेषादिपक्षकचन्द्रोदयादिलिङ्गकसमुद्रवृद्ध्यादिसाध्यकानुमित्यादावित्यर्थः। स्वकालार्थत्वं = स्वाधिकरणक्षणावच्छिन्नार्थविषयकत्वम्। व्याप्तीति। व्याप्त्यादीत्यर्थः। तादृशत्वस्य = उक्तार्थविषयकत्वस्य प्रयोजिकेति। नन्वनुमितित्वादिकं प्रयोजकम्, इन्द्रियार्थसन्निकर्षजज्ञानस्य तथात्वे तु प्रत्यक्षत्वमेव, तथाच यज्जात्यवच्छेदेन स्वध्वंसप्रागभावानधिकरणकालवृत्तित्वावच्छिन्नयत्किञ्चिद्विशेष्यताकत्वं तज्जातिमत्त्वमेव लक्षणं विवक्षणीयमित्यभिप्रायः। अभिप्रायस्यास्याग्रे एवोद्घाटनीयत्वात्तु यथाश्रुते एवातिव्याप्तिं स्थापयति कथमपीति। अनुमादेस्तादृशविशेष्यताकत्वमिति शेषः। सम्भवादिति। अनुमादावित्यादिः। निरुक्ताभिप्रायमुद्घाट्यापि निराचष्टे नचेति। एवमेव = उक्तविशेष्यताकमेव। ननु साक्षात्कारित्वस्यैवोक्तरूपेण लक्षणत्वं स्वरूपेण च लक्ष्यतावच्छेदकत्वमित्यत आह नचेति। तत् = साक्षात्कारित्वरूपं साजात्यम्। अनुमित्यादावतिव्याप्तिवारणाय व्याप्त्यादिज्ञानाजन्यत्वे सति निरुक्तविशेष्यताकज्ञानत्वमेव विवक्षणीयमिति न साजात्यखण्डनावसर इत्याशङ्कते व्याप्त्यादीति। ज्ञानाकरणकत्वं तु सत्यन्तार्थ इति व्याप्तिज्ञानानुव्यवसाये नाव्याप्तिः, व्याप्त्यादिनिवेशस्तु निष्फल इत्यवधेयम्, एवञ्चोत्तरग्रन्थसाङ्गत्यमपि। वस्तुतस्तु लक्ष्यतावच्छेदकतया साक्षात्कारित्वजातावेव वक्तव्यतया तत्खण्डनमत्रापि सप्रसरमेवेति। वैलक्षण्यस्य = अनुमित्यादिनिरूपितवृत्तित्वाभाववतः। समर्थत्वेन = इतरव्यावृत्तिप्रमित्याद्यौपयिकत्वसम्भवेन। स्वतस्यैवेति। ज्ञानाकरणकज्ञानत्वस्येत्यर्थः। स्मृतेर्ज्ञानकरणकत्वेनैव व्यावृत्तिसम्भवेन तदर्थं तत्कालकथेति। निरुक्तविशेष्यताकत्वनिवेशेत्यर्थः। प्रत्युत प्रत्यक्षमात्रासङ्ग्रहापत्तेरिति भावः। वक्ष्यते इति यथाश्रुतमभिप्रेत्य। ज्ञानावेशसाफल्यानुपपत्तेः

यत्तु कश्चिदाह—"स्वप्रकाशनिषेधात्स्वकालावच्छिन्नार्थप्रकाशत्वासम्भवः" इति; तदयुक्तम्, वस्तुतो यः स्वकालस्तस्य विवक्षितत्वात्, वर्तमानप्रकाशस्तथेति निरुक्तिपर्यवसानात्, वर्तमानार्थस्य च सर्वनिर्वचनीयत्वात्, तथा चोक्तम्—"सम्बद्धं वर्तमानञ्च गृह्यते चक्षुरादिना"। तस्मादस्मदुक्तमेव युक्तम्।

षोढासन्निकर्षेतराप्रयुक्तविषयनियमं ज्ञानं तथेति चेन्न; दोषवशजातसाक्षाद्बोधे तदसम्भवात्। प्रमासाक्षात्कारस्तथेति चेन्न; साक्षात्त्वेन प्रमेतरयोरविशिष्टतया तस्य साधारणस्यैव निर्वक्तव्यत्वात्, अनिष्टभ्रमबुद्धिमते षोढासन्निकर्षस्य प्रत्येकमिलितविकल्पानुपपत्तेः।

---

करणकज्ञानत्वं तु निरस्तमेव पूर्वम्। व्याप्तिप्रभृतिज्ञानाजन्यत्वघटितस्यापि वक्ष्यमाणलक्षणस्य तादृशज्ञानत्वे एव पर्यवसानस्य वक्ष्यमाणत्वाच्चेति। स्वप्रकाशनिषेधात् = ज्ञाने स्वविषयकत्वस्याभावात्, अन्यथा ज्ञाने स्वसन्निकर्षजत्वस्य, 'अयं घट' इत्यनुभवापलापस्य चापत्तेरिति भावः। उक्तलक्षणे स्वीयत्वेन कालभानं विवक्षास्पदमित्यभिमानः। तं निराकरोति वस्तुत इति। सर्वेति निर्वचनीयवादिसर्वपरम्, एवञ्च दूषणस्योक्तस्योद्भावकोऽपि निर्वचनीयवादीति न तेन वर्तमानत्वनिर्वचनभङ्गेनैव प्रत्यवस्थेयमिति भावः। वर्तमानत्वं स्वध्वंसप्रागभावानधिकरणकालावच्छिन्नत्वं वा कालिकसम्बन्धावच्छिन्नवृत्तिनावच्छेदककालावच्छिन्नत्वं वा वर्तते इति प्रतीतिसाक्षिककालविशेषानुयोगिकसम्बन्धप्रतियोगित्वं वेति भावः। अलौकिकसन्निकर्षेण पारम्परिकसम्बन्धान्तरेण च सम्बद्धत्वव्यावृत्तये वर्तमानमिति। चक्षुरादिना गृह्यते = चक्षुराद्यधीनलौकिकप्रत्यक्षविशेष्यताश्रयः। विशिष्टबुद्धेर्विशेषणज्ञानजन्यत्वमते सुखाद्युत्पत्तिक्षणे सुखादिज्ञानाभावे द्वितीयक्षणे सुखादिप्रकारकप्रत्यक्षमसम्भवि, तृतीयक्षणे तु सुखादेरवर्तमानत्वेनैव न तस्यादित्यतो विशेष्यतानिवेशः। प्राक्क्षणवर्तमानतापरं वर्तमानपदमित्यपि केचित्। अलौकिकप्रत्यक्षानभ्युपगन्तृमते तु गृह्यत इत्यपि यथाश्रुतमेव सम्यक्।

षोढेति। इन्द्रियसन्निकर्षेत्यनभिधाय षोढासन्निकर्षेत्यभिधानं तु सन्निकर्षत्वस्य षोढासाधारणस्याभावेन विशिष्य सन्निकर्षनिवेशं सूचयितुम्। तथाच संयोगादीतराप्रयोज्यविषयताकत्वमर्थः, अनुमितिशाब्दादिविषयता परामर्शपदार्थोपस्थित्यादिप्रयुक्ता, स्मृतिसंस्कारेच्छादिविषयता तु संस्कारानुभवेष्टसाधनताज्ञानादिप्रयुक्ता। अभावद्वयोपादानं तु नित्यप्रत्यक्षसङ्ग्रहाय। सुरभि चन्दनमित्यादेरपि नासङ्ग्रहः, सामान्यज्ञानप्रत्यासत्त्योर्विशेषणतान्तर्भावाभ्युपगमात्। नियममित्यन्तं बहुव्रीहिः। तथा = साक्षात्कारि। तदसम्भवादिति। रजतं साक्षात्करोमीत्यादिप्रतीतिसिद्धाया विपरीतज्ञानीयविषयताया नालौकिकसन्निकर्षप्रयोज्यत्वसम्भवः, अन्यथा सौरभं पश्यामीति प्रतीतेरप्यापत्तेः, अपि तु दोषप्रयोज्यत्वमेवेत्यव्याप्तिरित्यर्थः। यथार्थसाक्षात्कारत्वमेवोक्तलक्षणलक्ष्यतावच्छेदकमिति न भ्रमानुपग्रहो दोष इत्याशङ्कते प्रमेति। प्रमेतरयोः = प्रत्यक्षात्मकप्रमाविपरीतज्ञानयोः। निर्वक्तव्यत्वादिति। ननु भ्रमानभ्युपगमे नेदं दूषणम्, किञ्च संयोगादीतराप्रयोज्यत्किञ्चिद्विषयताकत्वं विवक्षितम्; नतु तादृशयावद्विषयताकत्वमिति न विपरीतप्रत्यक्षासङ्ग्रहः, एवञ्च ज्ञानसामान्यप्रत्यासत्तिद्वयस्य विशेषणतानन्तर्भावपक्षेऽपि सुरभिचन्दनमित्यादेर्नासङ्ग्रहः, योगजधर्माधीनप्रत्यक्षस्याप्यात्मादिनिष्ठविषयतायाः संयोगादीतराप्रयोज्यत्वसम्भवेन न तत्राव्याप्तिः, प्रत्यक्षपक्षकानुमित्यादिविषयताया उद्देश्यताख्यायाः संयोगादिप्रयोज्यत्वे तु स्वीकार्यं तत्र प्रत्यक्षत्वमपि, पर्वतःसाक्षात्कृतोऽग्निरनुमित इत्यनुभवानुरोधात्साङ्कर्यांशिकत्वयोर्जात्योरभ्युपगमे क्षतिविरहात्। यदि तु साङ्कर्यांशिकत्वयोरगतिकगतित्वेन पर्वतः साक्षात्कृत

साक्षाद्धीः स्वरूपधीः = स्वेन रूपेण वस्तुनो भानमिति चेन्न, अनुमानादिव्यापनात्। अनुमानादौ लिङ्गाद्यपेक्षत्वात्तदवच्छिन्नकालसम्बद्धबोधत्वं नत्वध्यक्ष इति चेन्न,

---

इत्यनुभवस्य च परामर्शमादायैवोपपादनसम्भवेन पर्वतसाक्षात्काराग्न्यनुमित्योर्यौगपद्यानुभवस्य च स्थूलकालविषयकत्वेनैवोपपन्नत्वेन पर्वतमनुमिनोमीत्यनुव्यवसायापत्तेश्च विधेयताख्यविषयताया एव तादृशप्रतीतिविषयतां परिकल्प्य पर्वते तदभावेनैव वारणसम्भवेन न पर्वतांशेऽनुमितेः प्रत्यक्षत्वमित्युक्ते तदाऽनुमानिरूपितपर्वतविषयतायां संयोगादिप्रयोज्यताया अप्यनङ्गीकार्यत्वेन नातिव्याप्तिशङ्कापीत्यस्वरसादाह अनिष्टेति। अनिष्टा भ्रमात्मिका बुद्धिर्यस्याख्यातिवादिनः, तन्मते इत्यर्थः। भ्रमपदं व्यधिकरणप्रकारकत्वमात्रपरं तेन न बुद्धिपदस्य वैयर्थ्यम्, तृणोल्पन्यायेन वा। इदं यत्किञ्चिद्विषयतानिवेशपक्षस्याप्युपलक्षणम्। प्रभाकरमतेऽभावस्यातिरिक्तस्यानभ्युपगमेन विशेषणतायाः, गुणे जात्यनङ्गीकारेण च संयुक्तसमवेतसमवायस्य समवेतसमवायस्य च सन्निकर्षस्यानभ्युपेयत्वेन संयोगः संयुक्तसमवायः समवायश्चेति त्रिविधसन्निकर्षस्य प्रकरणपञ्चिकोक्तरीत्या स्वीकारेऽपि षोढासन्निकर्षस्यैवाभिधानं नव्यलक्षणमनुसृत्यैवेति द्रष्टव्यम्। प्रत्येकेति। षोढासन्निकर्षेतरेत्यत्र संयोगत्वसमवायत्वादियत्किञ्चिद्धर्मावच्छिन्नप्रतियोगिताकभेदो वा, संयोगत्वादितत्तद्धर्मावच्छिन्नप्रतियोगिताकभेदसमुदायो वा, संयोगादिगतसमुदायत्वावच्छिन्नप्रतियोगिताकभेदो वा विवक्षितः, आद्ये संयोगादीतरसमवायादिप्रयुक्तविषयताकशब्दादिप्रत्यक्षेऽव्याप्तिः, द्वितीये तु तादृशभेदसमुदायाधिकरणं यत्किञ्चिद्वा, यावद्वा, परामर्शपदार्थोपस्थित्यादिकं परिगणितं वा, आद्ये परामर्शाद्यप्रयोज्यविषयताकशाब्दादावतिव्याप्तिः, द्वितीये स्वसर्वज्ञदुर्ज्ञेयत्वम्, विपरीतज्ञानोत्तरप्रत्यक्षं प्रति ग्राह्यव्याप्यवत्तानिश्चयस्यान्वयव्यतिरेकाभ्यां कारणत्वमते तत्राव्याप्तिश्च। अत एव न तृतीयोऽपि, षोढासन्निकर्षेतरत्वनिवेशवैयर्थ्याच्च। किञ्चात्रापि परामर्शोपस्थित्यादिप्रत्येकाप्रयोज्यत्वं वा समुदायाप्रयोज्यत्वं वा परामर्शादिनिरूपिततत्तत्प्रयोज्यत्वाभावकूटो वा, आद्ये कथितातिव्याप्तिः, द्वितीयेऽपि न कस्या अपि विषयतायाः समुदायप्रयोज्यत्वमित्यतिव्याप्तिः, तृतीयेऽसर्वज्ञदुर्ज्ञेयत्वम्, परामर्शादेः साध्यादिभेदभिन्नमूर्तिकव्याप्त्यादिघटितत्वेनोक्ताभावानामानन्त्यात्। एतेन षोढासन्निकर्षेतरप्रयोज्यत्वसामान्याभावविवक्षा पराकृता, षोढासन्निकर्षेतरस्य यावत्त्वेनाविवक्षणे तादृशसामान्याभावस्यातिप्रसक्तत्वात्, तथा विवक्षणे तूक्तदोषावकाशात्। तृतीये तु घटो घटपटोभयं नेतिप्रतीतिव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्यैकदेशे स्वीकार्यत्वेन संयोगादिसमुदायत्वावच्छिन्नप्रतियोगिताकभेदस्य प्रत्येकं संयोगादौ सद्भावेनासम्भवापत्तेः, नहि समुदायप्रयोज्या काचिद्विषयता येन तत्र समन्वयः स्यादिति भावः।

साक्षाद्धीत्वं लक्ष्यतावच्छेदकम्। स्वरूपधीरित्यस्य विवरणं स्वेनेति। स्वविशेष्यतासमानाधिकरणप्रकारकानुभवत्वमित्यर्थः। व्यापनादिति। साक्षात्कारिभ्रमे विशेष्यवृत्तेरपि पुरोवर्तित्वादेः प्रकारतया तत्राव्याप्तिर्नोद्भावि स्वरूपधीत्वमन्यथा निर्वक्तुमाशङ्कते अनुमानादाविति। अत्र लिङ्गादिकालानवच्छिन्नविषयकानुभवत्वं न लक्षणम्, प्रत्यक्षविषयस्यापि क्वचिल्लिङ्गादित्वेन लिङ्गादिकालावच्छिन्नविषयकत्वस्यैव प्रत्यक्षे सत्त्वात्, स्वकारणीभूतत्वं तु लिङ्गादौ न विवक्षाक्षमम्, लिङ्गत्वादिना कारणताविवक्षणे प्रत्यक्षनिरूपिततादृशकारणत्वाप्रसिद्ध्याऽसम्भवप्रसङ्गात्, तदविवक्षणे तु प्रत्यक्षकारणस्य तदीयविषयस्यापि क्वचिल्लिङ्गादित्वेनोक्तदोषात्, अपि तु स्वकारणाधिकरणकालानवच्छिन्नविषयकानुभवत्वमेव, वस्तुतः स्वकारणीभूतं यत्तद्वृत्तित्वावच्छिन्नकालनिष्ठाधारतानिरूपिताधेयतानवच्छिन्नविषयताकानुभवत्वमिति यावत्। चक्षुरादेरज्ञायमानस्यैव करणत्वेन तदीयत्वेन न कालावगाहित्वं प्रत्यक्षे। ईश्वर-

व्यभिचारात्, यत्र लिङ्गादि भाव्यादिबोधकं तत्र तत्कालताव्यभिचारात्। एतेन—यदि न लिङ्गकालावच्छिन्नव्यापकप्रतिभासोऽनुमानं तदा कूटव्याप्यानुमितस्य व्यापकस्य दैववशात्सत्यव्याप्यव्यक्त्यन्तरवतः प्राप्तौ व्याप्तिकालावच्छिन्नव्यापकप्राप्त्या तावत्यंशे

---

ज्ञानस्य प्रत्यक्षत्वे तु न मानमित्युक्तं प्राक् स्वकरणीभूतं यत्तदीयत्वावच्छिन्नकालनिष्ठाधारतानिरूपिताधेयतावच्छिन्नयत्किञ्चिद्विषयताको योऽस्तत्त्वभेदकूटवदनुभवत्वमिति वा वक्तव्यम्। अनुमितिशाब्दादौ तु लिङ्गपदादिज्ञानस्य कारणत्वे तद्विशेषणीभूतस्य तद्व्यापारकस्य च लिङ्गपदादेः करणत्वेन तत्कालावच्छिन्नत्वेनैव साध्यादिविषयकत्वमित्यभिमानः। व्यभिचारादिति। लक्षणस्य लक्ष्यतावच्छेदकाभाववद्वृत्तित्वरूपातिव्याप्तेरित्यर्थः। उक्ताभिमानं निराकुर्वन्नतिव्याप्तौ हेतुमाचष्टे यत्रेति। तत्कालताव्यभिचारात् = लिङ्गादिकालीनत्वस्य लिङ्ग्यादौ भाननियमस्य व्यभिचारात्। अनुमितौ धूमकालीनत्वस्य हुतभुजि भानानुरोधेन, धूमालोकादिनानालिङ्गकैकाकारानुमितौ तत्तल्लिङ्गकपरामर्शस्य प्रत्येकं, व्यभिचारवारणायान्यत्वदितोत्तरत्वनिवेशेनानेककार्यकारणभावकल्पनाया विरहप्रयुक्तलाघवानुरोधेन चानुमितौ लिङ्गस्योद्देश्यतावच्छेदकतया भानोपगमे लिङ्गलिङ्गिनोः समानकालिकत्वस्थले लिङ्गकालावच्छिन्नत्वस्य लिङ्गिनि भानसम्भवेऽपि विद्यमानतत्त्वज्ञानादिना भाविविदेहकैवल्याद्यनुमितौ तदसम्भवेनातिव्याप्तिरुक्तलक्षणस्य, एवं भाव्यादिविषयकशाब्दादावपीति भावः। एतेन = उक्तद्वितीयव्यभिचारेण। व्यापकप्रतिभासोऽनुमानं = व्यापकविषयकत्वमनुमितित्वव्यापकम्। कूटव्याप्यानुमितस्य = वस्तुतोऽव्याप्यमपक्षधर्मं वा व्याप्यत्वपक्षधर्मताभ्यामवगाहमानपरामर्शविषयस्य व्यापकस्य प्राप्तौ = अनुमितौ तादृशपरामर्शाधीनानुमिताविति यावत्, प्रमात्वं प्रमाविशेषान्तर्भावानिर्वाह्यमापद्येतेत्यन्वयः। यद्युक्तानुमितेः साध्ये लिङ्गकालिकत्वविषयकत्वं स्वीक्रियेत तदोद्देश्यतावच्छेदककालावच्छिन्नत्वं विधेये भासत इति नियमेन कालघटितव्याप्त्यग्रहदशायां तस्या वह्निव्याप्यधूमवान् पर्वतो वह्निमानित्याकाराया एव वक्तव्यत्वेन धूमवत्त्वांशे भ्रमत्वं शक्यते वक्तुमिति न तस्याः प्रमान्तर्भावनिर्वाहप्रयासापेक्षा, तथाऽस्वीकारे तु पर्वतो वह्निमानित्याकृतिं बिभ्रती सा वस्तुतो वह्निमद्विशेष्यकत्वेन कृप्तप्रमात्वेवान्तर्भावार्हा स्यात्, किन्तु व्याप्तिविशिष्टप्रतियोगिकपक्षानुयोगिकसम्बन्धावगाहिनिश्चयजन्यतायाः प्रमानुमितौ नियतत्वेनान्यथा प्रमात्वे गुणप्रयोज्यताया दोषाभावप्रयोज्यताया वाऽसम्भवेन भ्रमजन्यतया तादृशनिश्चयाजन्यायाः प्रकृतानुमाया अनुमितौ प्रमायां नान्तर्भावः शक्यः, प्रत्यक्षादौ तु स न शक्योऽपीति तस्या अतिरिक्तप्रमात्वोपगमोऽपसिद्धान्तापादक आपतेदिति लिङ्गकालिकलिङ्गिभानस्य, कालघटितव्याप्त्यग्रहदशायां तदुपपादकस्य लिङ्गोपहितलैङ्गिकभानस्य चोपगम आवश्यक इति भावः। अधिकं तु तत्त्वानुभवत्वखण्डनशेषे प्रागभ्यधायि। ननु सामान्यतो व्याप्यवच्छिन्नाश्रयकालवृत्तिव्यापकविषयकत्वस्यानुमितिसामान्य उपगमेऽपि तादृशभ्रमात्मकपरामर्शजन्यानुमितेरग्निव्याप्यवान् पर्वतोऽग्निमानित्याकाराया वस्तुतोऽग्निव्याप्याभाववद्विशेष्यिकाया भ्रमत्वोपपादनसम्भवादनुमितौ विशिष्य लिङ्गभानोपगमे किं बीजमित्यत आह दैववशादिति। सामग्रीवशादित्यर्थः। सत्यव्याप्येति। अग्निनिरूपितव्याप्तिमत्त्वेन प्रमितालोकादीत्यर्थः। व्यक्त्यन्तरवतः = व्यक्त्यन्तरसमानाधिकरणस्य। तथाचाग्निव्याप्यवद्विशेष्यकत्वेनोक्तानुमितेर्भ्रमत्वोपपादनासम्भव इति भावः। नन्वनुमितौ परामर्शविषयीभूतव्याप्तेर्भानोपगमे परामर्शविषयीभूतधूमनिष्ठव्याप्तेरालोकाद्यवृत्तितया तदवगाह्युक्तानुमितेर्भ्रमत्वसम्भवः, तद्विषयीभूतव्याप्तिमतस्तत्राभावादित्याशङ्कातस्तादृशानुमितेः परामर्शविषयीभूतव्याप्तिविशिष्टविषयकत्वेऽपि यथार्थत्वमेव, हेतुतावच्छेदकविशेषघटितायाः स्वव्यापकसामानाधिकरण्यरूपव्याप्तेर्धूमनिष्ठाया आलोकाद्यवृत्तित्वेऽपि साध्याभाववदवृत्तित्वरूपव्याप्तेर्

प्रमात्वं प्रमाविशेषान्तर्भावानिर्वाह्यमापद्येतेति—निरस्तम्, भूतादिव्यापकानुमाने व्याप्यकालत्वासम्भवात्, तथापि चान्यादिमदंशमात्रे प्रमात्वापातस्य दुष्परिहरत्वस्योक्तत्वात्।

अनुपहितप्रतीतिः साक्षाद्धीरिति चेन्न; विशिष्टप्रविष्टविशेष्यप्रत्यक्षाव्यापनात्। करणानुपहितत्वं विवक्षितमिति चेन्न; परकरणोपहिताव्यापनात्, स्वकरणोपहितत्वस्य

तावच्छेदकविशेषाघटिततया समानसम्बन्धावच्छिन्नहेतुताकधूमालोकादावभिन्नत्वादित्याह व्याप्तिकालेति। साध्याभाववदवृत्तित्वावच्छिन्नाश्रयकालेत्यर्थः। अन्यथा पर्वतनिष्ठोद्देश्यतया व्याप्त्यवच्छिन्नस्या सम्भवेन संसर्गतया तत्कालावच्छिन्नस्य भानस्य च तथा उद्देश्यतावच्छेदकतायामेव सम्भवेनासङ्गतिः। पर्वते व्याप्तिकालिकाग्निमानित्याकारकतामनुमितेरुपगम्य व्याख्याने तु सन्दर्भासङ्गतिः स्यात्, तेन रूपेण व्यापकताया अप्रहात्, लिङ्गविशिष्टे लिङ्गिभानमते लिङ्गकालावच्छिन्नत्वस्य संसर्गतयैव भानाच्च, तादृशाकारकतोपगमस्यानुमितेर्भ्रमत्वोपपादकताशङ्काया अतिनिर्दलत्वाच्च, अग्नेर्व्याप्तिकालिकत्वस्य नियतत्वादिति। इदमुपलक्षणम्, उक्तरीत्या सप्तमकार्यकारणभावाकल्पनप्रयुक्तलाघवेन कालघटितव्याप्तिग्रहदशायां धूमकालीनाग्निभानानुरोधेन च धूमत्वादिनैव लिङ्गभानस्यानुमितौ वक्तव्यत्वादिति। व्याप्यकालत्वेति। व्याप्यकालावच्छिन्नविषयकत्वेत्यर्थः। हेतोर्ध्रियमाणत्वादेः साध्यस्य च भूतत्वादेर्ग्रहदशायामित्यादिः। तथा चोक्तानुमितेः प्रमात्वनिर्वाहोपपादिकेयं रीतिर्निर्बाधितेति भावः ननु तादृशदोषजानुमितावेव तदीयभ्रमत्वान्यथानुपपत्त्या मीमांसकैः पक्षावृत्तिव्यापकत्वग्राहित्वमिवास्माभिर्लिङ्गकालावच्छिन्नव्यापकत्वग्राहित्वं कल्पनीयमित्याशङ्क्याह तथापीति। तादृशव्यापकत्वग्राहित्वकल्पनेऽपीत्यर्थः। उक्तत्वादिति। तत्रानुभवत्वखण्डनशेषे इति शेषः। वस्तुतस्तु सर्वांशे यथार्थत्वे दोषजन्यज्ञानस्य तत्प्रमान्तर्भावासम्भवः प्रमात्वस्य दोषाभावप्रयोज्यत्वमते, प्रमात्वभ्रमत्वयोरांशिकत्वे तु दोषतदभावप्रयोज्यत्वयोरप्यांशिकयोः सम्भव एवेत्युक्तमस्माभिरपि तत्रैवेति।

अनुपहितेति। विशिष्टाविषयकप्रतीतित्वमिति यथाश्रुतार्थेऽनुमित्यादेर्विशिष्टविषयकत्वनियमेन स्मृतेर्निर्विकल्पकताया अभ्युपगमे स्वानुभवत्वस्यैव प्रतीतिपदेन विवक्षितत्वेनातिव्याप्त्यभावेऽपि विशिष्टस्यातिरिक्तत्वे तद्विषयकप्रत्यक्षमात्राव्यापनम्, एवमनतिरिक्तत्वेऽपि, यदि त्वत्र पक्षे गौरित्यादिविशिष्टप्रत्यक्षमात्रस्य गोत्वाद्यंशे निर्विकल्पकत्वेन तदंशे विशिष्टविषयकत्वाभावेन लक्षणं सङ्गम्यते तदापि विशिष्टविषयकत्वावच्छेदेन तदभावस्यासम्भवेन विशिष्टांशेऽव्याप्तिरेवेत्यभिप्रेत्याह विशिष्टप्रविष्टविशेष्येति। अत्र विशिष्टेत्यर्थः। विशिष्टेत्यस्य भावप्रधानतया वैशिष्ट्यं प्रविष्टं यत्रेति व्युत्पत्त्या तादृशार्थलाभात्। अनुमित्यादौ लिङ्गादिविशिष्टलिङ्ग्यादिभानस्यातिरिक्तत्वानतिरिक्तत्वोभयपक्षेऽपि प्रत्यक्षत्वस्यासङ्गतिः। अनुपहितपदेनेत्यादिः। प्रत्यक्षे दण्डादौ विशेषणतया भासमानस्यापि ज्ञायमानत्वेनाशङ्कते करणेति। अनुपहितपदेनेत्यादिः। प्रत्यक्षे दण्डादौ विशेषणतया भासमानस्यापि ज्ञायमान परेति। अनुलिङ्गादिकरणत्वादनुमित्यादौ करणत्वेन तत्तद्विशिष्टविषयकप्रत्यक्षेऽव्याप्तिस्तदवस्थेत्याह परेति। अनुमित्यादिकरणदण्डत्वादिविशिष्टस्य करणानुपहितत्वेनासङ्ग्रहादित्यर्थः। ननु स्वकरणविशिष्टविषयकत्वाभाववदनुभवत्वं विवक्षितम्, ईश्वरज्ञानस्य सङ्ग्रहार्थे तु स्वकरणविशिष्टविषयकं यद्यत्तदन्यानुभवत्वं विवक्षणीयम्, एतच्च विषयविषयिभावोपगमपक्षे पूर्वानुभवात्मकस्वकरणघटितपूर्वानुभवविषयतात्मकतत्ता स्मृतावतिव्याप्तिवारणायानुभवत्वविवक्षा। अनुमित्यादेस्तु विषयकत्वस्य स्मृतौ सत्त्वेऽपि तदनुपगमपक्षे स्मृतावतिव्याप्तिवारणायानुभवत्वविवक्षा। अनुमित्यादेस्तु स्वकरणलिङ्गादिविशिष्टविषयकत्वमेव। उपनीतेन्द्रियविषयकप्रत्यक्षविशेषेऽव्याप्तिवारणाय तु यद्यज्जात्यवच्छेदेन स्वाश्रयनिरूपितकरणताश्रयविशिष्टविषयकत्वं तत्तज्जात्यवच्छिन्नान्यानुभवत्वं वक्तव्यम्, अत्राह स्वकरणेति। निश्चितान्तो बहुव्रीहिः, तथा च स्वत्वघटितत्वादित्यर्थः। करणतायत्तादिघटितत्वादित्यपि

च स्वपदकुत्तिनिविष्टत्वात्। व्याप्त्याद्युपहितत्वानां व्यतिरेकस्य यत्र समुच्चयः सा धीः साक्षाद्धीरिति चेन्न; व्याप्त्यादिप्रत्यक्षताव्यापनात्, असिद्धत्वाच्च; पर्वतोऽग्निमानित्येव प्रतिज्ञानात् शब्देन च स्वाप्रतिपादनात् साध्यादिमितेश्च प्रत्यक्षत्वापादनात्।

अथाव्यवहितधीत्वं साक्षाद्धीत्वमिति चेन्न; व्यवधानविकल्पानुपपत्तेः। यदि द्रव्यविशेषान्तरावस्थितिर्व्यवधिस्तदानीमप्रत्यक्षविभुधियां साक्षात्त्वापत्तिः। अथ ज्ञाप-

---

द्रष्टव्यम्। एवञ्च स्वत्वादेरननुगतत्वेन यत्किञ्चिद्धर्मोपादाने तदनवच्छिन्नत्वमनुमित्यादावादायातिप्रसङ्गः, शब्दानुमानोपमानजेत्यादिलक्षणखण्डने वक्ष्यमाणदूषणगणग्रासश्च, ज्ञायमानलिङ्गादेः करणतायाः प्राङ् निरस्तत्वेन प्रतियोग्यप्रसिद्ध्याऽसम्भवश्चेति भावः। स्वत्वं करणत्वञ्च बहिष्कृत्य शङ्कते व्याप्त्याद्युप-हितत्वानां व्यतिरेकस्येति। व्याप्तिविषयकत्वसादृश्यविषयकत्वपदविषयकत्वप्रतियोगिकाभावाना-मित्यर्थः। सर्वस्यापि क्वचिल्लिङ्गत्वेन लिङ्गविषयकत्वाभावनिवेशोऽसम्भवापादक इत्यत व्याप्तीति। लिङ्गोपधानमते चानुमितौ लिङ्गस्य व्याप्यत्वेनैव भानमिति नातिव्याप्तिः। समुच्चय इति। व्यासज्य-वृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावस्यातिप्रसक्तत्वेन व्याप्तिविषयकत्वादित्रितयानुगतातिप्रसक्तधर्मा-भावेन समुच्चयनिवेश आवश्यक इति भावः। सा धीः = अनुभूतिः। व्याप्त्यादेः साध्यादिभेदभिन्नमूर्ति-कत्वेन भेदकूटस्यैव निवेश्यतयाऽसर्वज्ञाज्ञेयत्वसत्त्वे एवाह व्याप्त्यादीति। नच प्रत्यक्षव्यावृत्तविषयता-विशेषस्यैव प्रतियोगितया निवेश्यतया नेयमव्याप्तिरिति वाच्यम्; साध्यादौ सादृश्यविषयताविशेषस्य वह्निमनुमिनोमीत्यादिप्रतीतिसाक्षिकस्याभ्युपगमेऽपि व्याप्तिसादृश्यादौ तस्याप्रामाणिकत्वात्, प्रत्यक्षत्व-निरूपणं विना तदाश्रयव्यावृत्तत्वस्य निरूपयितुमशक्यत्वाच्चेति भावः। अनुमित्यादौ व्याप्त्यादिविषय-कत्वे प्रमाणाभावेन तत्राव्याप्तिमाह असिद्धत्वाच्चेति। अनुमित्यादौ व्याप्त्यादिविषयकत्वस्ये-त्यादिः। प्रतिज्ञानादिति। यादृशशाब्दबोधजनयित्री प्रतिज्ञा तादृश्येवानुमितिः, प्रतिज्ञा पुनर्विप्रतिपत्त्य-नुसारेणेति विप्रतिपत्तिविषयतावच्छेदकधर्मप्रकारेणैव परार्थानुमितिरित्यपि प्रवादः, अतएव प्रकृतन्याया-वयवत्वे सति प्रकृतानुमित्यन्यूनानतिरिक्तविषयकशाब्दबोधजनकवाक्यत्वं प्रतिज्ञालक्षणमामनन्ति तार्कि-का इति भावः। शब्देनेति। घटादिशब्देनेत्यर्थः। तेन शब्दशब्देन स्वप्रतिपादनेऽपि न क्षतिः। स्वप-रत्वातिरिक्तस्थले इति शेषः। नहि घटादिपदस्य घटत्वादाविव स्वस्मिन्नपि शक्तिरिति भावः। पक्षान्य-त्तद्वयमसिद्धत्वे हेतुतामापद्य प्रत्यक्षत्वापादने हेतुः। शक्तिग्रहस्योपमानफलत्वमते सादृश्यज्ञानस्य सादृश्यविषयकबुद्ध्यजनकत्वादित्यपि वक्तव्यम्। साध्यादिमितेश्चेति। अनुमितिशाब्दादेरित्यर्थः। चकार उक्ताव्याप्तिसमुच्चायकः, प्रत्यक्षत्वापादनाच्चेत्यन्वयः। वस्तुतस्तु ज्ञायमानलिङ्गस्याकरणत्वेऽपि लिङ्गोपहितलिङ्गिभानोपगमे न काचित्क्षतिः, पूर्वं व्याप्यत्वेनोपस्थितस्य तेनैव रूपेणाप्यनुमितिविषयतोपपत्तेः, लाघवज्ञानपक्षे प्रागुक्तमेव, उद्देश्यतावच्छेदककालावच्छिन्नत्वस्य विधेये भानं स्वसति बाधके। एवं शब्द-सादृश्ययोरपि प्रागुपस्थितत्वेन शाब्दादौ भानसम्भव एव, तदभावश्च शपथैकनिर्णेय एव, 'पदान्तरप्रति-पादितः स एवार्थोऽर्थान्तरतयेव प्रतिभासमान एकरूपतां प्रतीति' स्थापयती'ति काव्यमीमांसिनः स्वं रूपमितिसूत्रनिष्फलत्वप्रतिपादिकायां व्याकरणमीमांसिनश्च सम्मतायाः सरणेरनुसरणे पुनरावश्यक एव शाब्दे शब्दभानम्, घटशब्दं शाब्दयामीत्यनुव्यवसायाभावस्य वृत्त्या संसर्गमुद्रया वा भासमानोऽपि एवं शाब्दत्वाभ्युपगमेन समर्थनसम्भवादिति, एवञ्चोक्ताव्याप्तिरेव दूषणं सारमिति।

अव्यवहितधीत्वं यदीन्द्रियसन्निकृष्टविषयकधीत्वादिकं तदा प्राङ्निरस्तम्, अन्यादृशमपि तु निराकर्तुं पुनरुत्थापयति अथाव्यवहितेति। द्रव्येत्यादि। कुड्यादेर्मध्यावस्थितिरित्यर्थः। एवञ्चेन्द्रि-

कज्ञानस्य पूर्वसत्ता व्यवधानं तदा परत्वाद्यप्रत्यक्षतापत्तिरिति। विशिष्टवैशिष्ट्यं व्यवधानमिति चेन्न; धूमविशिष्टे वह्निवैशिष्ट्यमिति स्वरूपस्थितौ तथात्वे कार्यकारणभावविरोधः, प्रतीतौ धूमवैशिष्ट्यस्य धर्मिविशेषणत्वे हेतोरंशतः स्ववृत्तिः, साध्यविशेषणत्वे व्याप्तिग्रहप्रत्यक्षेऽव्यवधानाभावाच्च साक्षात्त्वं स्यात्।

यसन्निकृष्टविषयकधीत्वमेव यथाश्रुतार्थः, तेन विषयव्यवधानाभावनिवेशे गगनादेर्व्यवधानाप्रसिद्ध्यैव तदभावाप्रसिद्धावपि नोत्तरग्रन्थासङ्गतिः, इन्द्रियसंयुक्तत्वस्य तत्र सत्त्वात्, सन्निकर्षस्यान्यतमत्वेनैव निवेश्यत्वात्। इन्द्रियव्यवधानाभावनिवेशेऽपि व्यवधायकानामानन्त्ये विशिष्य निवेशस्यासम्भवेनाप्रसिद्ध्यापत्तिः। अप्रत्यक्षेति। नित्यानुमेयेत्यर्थः। इन्द्रियसन्निकर्षजत्वादिविवक्षा प्रागपहस्तिता। ज्ञापकेति। ज्ञानाजन्यानुभवत्वमित्यर्थः। यथाश्रुतं विशिष्टप्रत्यक्षेऽव्यापकमित्याह तदेति। अधिकं प्रागुक्तम्। विशिष्टेत्यादि। अत्र विशिष्टवैशिष्ट्यविषयत्वानिरूपकबोधत्वं यथाश्रुतलभ्यम्, तत्र च दण्डी पुरुष इत्यादिप्रत्यक्षेऽव्याप्तिरिति विशिष्टवैशिष्ट्यविषयिताव्याप्यतावच्छेदकजात्यवच्छिन्नबोधत्वं विवक्षणीयम्, जातिश्चानुमितित्वादिका तादृशी, प्रत्यक्षविशेषगततत्तद्व्यक्तित्वादिकं तु तादृशव्याप्यतावच्छेदकमपि न जातिरिति। अत्रानुमितित्वस्य तादृशव्याप्यतावच्छेदकत्वं यदि लिङ्गविशिष्टे लिङ्गिवैशिष्ट्यमादाय, तदाऽऽह धूमविशिष्टे इति। स्वरूपस्थितौ = वस्तुगतौ, वस्तुतो न तु प्रतीताविति इति यावत्, धूमविशिष्टतया प्रतीतस्य वह्निमत्त्वेन प्रतीतौ कार्यकारणभावविरोधाभावात्। तथात्वे = विशिष्टवैशिष्ट्ये। यतो धूमविशिष्टस्ततो वह्निविशिष्ट इति यदि, तदा धूमस्य वह्निकारणत्वापत्तिरित्यर्थः। ननु धूमविशिष्टस्य वह्निवैशिष्ट्यमिति भ्रमः, न तु धूमविशिष्टस्यैवेति, धनी सुखीत्यादावपि सुखपदस्य सुखविशेषपरत्वे एव धनप्रयोज्यत्वप्रतीतिः, अन्यथा निर्धनस्यापि सुखित्वदर्शनेनासङ्गतिरिति चेन्न; यादृशस्थले वस्तुतो लिङ्गाभावेऽपि लिङ्गवत्तामित्याऽनुमितिरुत्पन्ना, तत्र व्यभिचारेण वस्तुतो लिङ्गविशिष्टवैशिष्ट्यमादायानुमितित्वे तादृशव्याप्यतावच्छेदकताघटनानुपपत्तेः। नच लिङ्गिनोऽपि व्याप्यत्वरूपलिङ्गत्वाश्रयत्वेन वस्तुतो लिङ्गविशिष्टे लिङ्गिवैशिष्ट्यं तत्र निर्बाधमिति वाच्यम्, एवमपि लिङ्गिवैशिष्ट्यस्याभावस्थलीयभ्रमानुमितिमादाय व्यभिचारस्य दुर्वारत्वात्। ननु विशिष्टस्य यद्वैशिष्ट्यं तद्विषयिता न विवक्षिता, अपि तु वैशिष्ट्यविषयितानिरूपितधर्मिविषयितानिरूपितवैशिष्ट्यविषयितेति नोक्तदोष इत्यत आह प्रतीताविति। विषयितामन्तर्भाव्येत्यर्थः। अत्र धर्मी यदि हेतुमान्, तदा प्रमीययोर्हेतुवैशिष्ट्यविषयिताहेतुमद्विशिष्टविषयितयोर्निरूप्यनिरूपकभावस्थले हेतोर्हेतुविशिष्टे वृत्तेरभ्युपगमनीयत्वेन प्रसक्तिरात्माश्रयस्येत्यर्थः। अंशतःस्ववृत्तिः = स्वविशिष्टवृत्तिप्रयुक्ता स्ववृत्तिः। यथाच विधेयान्वयिन एव विशेषणत्वं तथोपदर्शितं प्राक् 'अन्तर्भावितसत्त्व'मिति कारिकाव्याख्यावसरे। यदि तु धर्मिपदेनाधिकरणमात्रं विवक्षितम्, सामानाधिकरण्यसम्बन्धेन साध्यस्यैव हेतुविशिष्टतया वैशिष्ट्यविषयितानिरूपितवैशिष्ट्यविषयितैव वा विवक्षिता तदाऽऽह साध्यविशेषणत्वे इति। अधिकरणमात्रविशेषणत्वे चेत्यपि द्रष्टव्यम्। व्याप्तिग्राहिप्रत्यक्षे = यो यो धूमवान् सोऽग्निमानिति प्रत्यक्षे। अत्राव्याप्तिर्विशिष्टवैशिष्ट्यविषयित्वानिरूपकबोधत्वमिति यथाश्रुते स्पष्टैव, तादृशजात्यनवच्छिन्नबोधत्वविवक्षायामपि प्रत्यक्षस्य स्वाश्रयकालविशिष्टवस्तुविषयकत्वनियमेन निर्विकल्पकस्य च तार्किकैरन्यैरनुपगमे साक्षात्कारित्वस्यापि तादृशजातित्वेनासम्भव एव। एवञ्च—प्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारताकत्वमेव विशिष्टवैशिष्ट्यविषयित्वम्, तच्च विशेष्ये विशेषणमितिरीत्या जायमानज्ञानसाधारणमपि, लिङ्गवैशिष्ट्यमादायैवानुमितौ तत्सङ्गम इति तु न नियमः, अपि तु शाब्दादिवदेव, एवञ्च लिङ्गोपधानवादस्यानभ्युपगमेऽपि न क्षतिरित्यपि—

अथ ज्ञानस्य जातिभेदः कश्चित्साक्षात्त्वम्, तत्रानुभवत्वेन परापरभावानुपपत्तिः, स्मृतेरपि साक्षात्कारित्वादिति केचित्, तन्न, स्मृतेस्तथात्वानभ्युपगमात्, स्वप्नस्य ताव-

---

नाशङ्कनीयम्। शाब्दस्मृत्योर्निर्विकल्पकताया अपि प्रागुपदर्शितत्वेन शाब्दत्वस्मृतित्वयोस्तादृशविषयिताव्याप्यतावच्छेदकत्वाभावेनातिव्याप्तेश्च। सामान्याभाववद्वृत्तित्वेनोपवर्णिततन्निरासविषयत्वाच्च।

भेदः = विशेषः। कश्चित् = साक्षात्करोमीतिधीसिद्धः। **अनुभवत्वेनेति**। अनुभवत्वं स्मृतिव्यावृत्ताऽनुमित्यादिसाधारणी जातिरित्यभिमानः। वस्तुतस्तु साक्षात्त्वमेव तदित्युक्तमनुभवखण्डने प्राक्। **परेति**। *तज्जातिसमानाधिकरणतदभावसमानाधिकरणजातेस्तज्जातिव्यापकत्वमिति नियमः,* पृथिवीत्वद्रव्यत्वादौ तथादर्शनादित्यभिमानः। वस्तुतस्तु परिभाषामात्रमिदम्, क्वचिद्दर्शनस्य प्रयोजकत्वे जगद्वैचित्र्यभङ्गप्रसङ्गात्। ननु साक्षात्त्वतदभावसमानाधिकरणस्यानुभवत्वस्य साक्षात्त्वव्यापकत्वमेव व्यभिचारविरहादिति क्व सङ्करस्तत्राह **स्मृतेरिति**। स्वाप्नादिबोधस्य साक्षात्करोमीतिप्रतीतिबलात्साक्षात्कारित्ववतोऽपि नानुभवत्वम्, तत्प्रयोजकाक्षसन्निकर्षव्याप्तिग्रहाद्यभावात्, अपि तु स्मृतित्वमेव पारिशेष्यात्संस्कारजस्य तस्येत्यभिमानः। **केचिदिति**। मीमांसकैकदेशिन इत्यर्थः। भट्टैरन्यथाख्यात्यभ्युपगमात्तेषां मते साक्षात्करोमीतिबुद्धेः साक्षात्त्वारोपेणैवोपपादनसम्भवात्, स्वाप्नादिबोधस्यापि स्मर्यमाणादौ स्मर्यमाणाद्यन्तरस्यारोपात्मकतोपगमाच्च, आरोपस्य मानसादित्वं पुनरलौकिकसन्निकर्षेण सन्निकृष्टस्यापि दोषबलाद्भानं वोपेत्योपपादनीयमित्यन्यत्। एवमेव तार्किकमतेऽपि। प्रभाकरमते तु स्मृतीनामेवागृहीतासंसर्गाणां स्वप्नादिबोधत्वोपगमेऽपि न मेयांशे साक्षात्कारित्वोपगमः, साक्षात्करोमीतिप्रतीतेः साक्षात्त्वासंसर्गाग्रहेणैवोपपादनसम्भवात्, मातृमानांशे तु तेन ज्ञानमात्रस्य साक्षात्कारित्वोपगमेन तदंशे स्मृतीनामपि तथात्वेऽपि न तदत्र विवक्षितम्, तथासत्यविप्रतिपन्नस्मरणभावेऽप्यपि प्रत्ययेष्वनुभवत्वव्यभिचारस्य साक्षात्त्वे शक्योपदर्शनत्वेनोत्तरग्रन्थे स्वाप्नादिबोधानां स्मृतित्वनिराकरणासङ्गतेर्दुर्वारतापत्तेः, नवा प्रभाकरमतेऽनुभवत्वं जातिरपि तु स्मृत्यन्यज्ञानत्वम्, जातेः संस्थानव्यङ्ग्यत्वनियमाभ्युपगमेन गुणे तदसम्भवात्, इत्थमेव च न तन्मते साक्षात्त्वमपि जातिः, आंशिकत्वाच्च। अत एव न साक्षात्त्वाभावसमानाधिकरणमप्यनुभवत्वम्, अनुमित्यादेरपि मितिमात्रंशे साक्षात्त्वात्, परमतानुसारेण साङ्कर्यप्रदर्शने तु न मातृमानांशे साक्षात्कारित्वविवक्षासम्भावनापि, न वा मेयांशेऽपि स्मृतेः कस्याश्चित्परैरुपेतं साक्षात्कारित्वमिति मतमिदमेकदेशिन एव प्राभाकरस्य कस्यचिद्विवक्षितमितीक्षितव्यम्। यदि तु केचिदित्यस्य सामान्यतः प्राभाकरपरतामनुसृत्य 'स्मृतेः साक्षात्कारित्वं किं मितिमात्रंशे विवक्षितमुत मेयांशे, नाद्यः, स्वप्रकाशवादे नित्यज्ञानस्यात्मभूतस्य सार्वत्रिकेन मितिमात्रांशस्तद्विषयतयैव संशयाद्यविषयत्वोपपत्तेर्न मितिमात्रस्य मातृविषयकत्वं स्वविषयकत्वं वा, अन्यथाऽयं घट इत्यादिमितेरप्यलक्षणीयतापत्तेः। न द्वितीयः, तथाहि—मेयांशे साक्षात्त्वं किं तत्तोल्लेखिनीनां मतीनामथ भ्रान्तिपदाभिषिक्तानाम्, नाद्यः, मानाभावात्, तत्र स्मरामीत्येवानुभवात्। द्वितीये तु निराचष्टे स्मृतेस्तथात्वानभ्युपगमादिति। व्यधिकरणप्रकारकेष्वाभासेभ्यः स्मृतेर्मेयांशे साक्षात्त्वस्याभ्युपगमासम्भवादित्यर्थं इत्येवं ग्रन्थार्थं उपवर्ण्यते तदा न विवदामहे। **स्वप्नस्येति**। सर्वविषयस्मृतेः परोक्षताया आनुभविकत्वेन स्वाप्नबोधस्य साक्षात्कारित्वेन प्रतीतस्य तद्विलक्षणस्मृतित्वाभ्युपगमो नोचित इति तस्यानुभवत्वमेवेति साक्षात्कारित्वव्यापकत्वस्यानुभवत्वे सम्भव इति न साङ्कर्यमिति भावः। मनसोऽलौकिकसन्निकर्षस्याप्रामाणिकत्वादनुभवकारणान्तरस्य चात्रानुपलम्भात्संस्कारजन्यत्वेन स्मृतित्वं तावदावश्यकम्, साक्षात्कारित्वं पुनरनुभवत्वात्। मध्ये अननुभवात्मन्यनुभवत्वादनुभवत्वमप्यस्तीति तस्य स्मारकत्वं

त्स्मृतित्वासिद्धेः, सिद्धौ वा तत्र साक्षात्त्वारोपोपगमात्। भावनाबलजस्य च क्वचिदालोकादिधर्मिकप्रियाद्याश्रयधर्मारोपत्वं शुक्तिरजतभ्रमवत्, निमीलितनयनादेश्च स्वप्नवदेव गतिरवगन्तव्येति। इदं तु स्यात्, परमाण्वादिबुद्धावनुव्यवस्यमानायां परमाणुप्रतीत्यंशेऽपि साक्षात्त्वमनुभूयत इत्यत्र न नः सम्प्रतिपत्तिः, अन्यथा लिङ्गबुद्धिलक्षणया प्रत्या-

---

त्रिमूं दमेवेति वाच्यम्; अत्रानुभवकारणानिरूपणेनानुभवत्वासंसर्गाग्रहेणैव तादृशानुभवस्योपपाद्यत्वात्। नचैवं साक्षात्करोमीत्यनुभवस्यापीत्थमेवोपपादनमस्त्विति न प्रकृतसङ्कर इति वाच्यम्; मितिमात्रांशेऽक्षसन्निकर्षमन्तरापि साक्षात्कारित्वस्य क्लृप्तत्वेन मेयांशेऽपि क्वचित्तत्कल्पने बाधकाभावादित्याशङ्कयाह सिद्धौ वेति। साक्षात्त्वारोपेणेति। साक्षात्त्वासंसर्गाग्रहेति तु नोक्तम्, जाग्रत्यपि 'स्वप्ने पदार्थममुं साक्षादकार्ष'मिति मितेरूपतयाऽसंसर्गाग्रहेण तदुपपत्त्यनुपपत्तेः। एवञ्चान्वभूवमित्यपि बाधग्रहकालिकोऽनुभवोऽनुभवत्वं स्वाप्नमतावानयत्येवेत्यपि सूचितम्। अख्यातेः प्राङ्निरस्तत्वेन साक्षात्त्वारोपेणैवोपपत्तौ वस्तुतः साक्षात्कारित्वस्य स्मृतौ मेयांशे कल्पना न प्रामाणिकी, अन्यत्र स्मृतौ तथाऽदर्शनात्, पात्रच्छक्यं च दृष्टस्यानुरोधव्यत्वादिति भावः। अभ्युपेत्यवादेन चेदम्, लौकिकविषयतायां दोषाणां नियामकत्वेन तद्बलादेव स्वाप्नानुभवस्य साक्षात्कारात्मन एवोत्पत्तेर्वक्तुं शक्यत्वादिति। सर्वैर्नैयायिकमतेनैव, सल्लक्षणस्य तन्मतेनैवोपपादनौचित्यात्, नत्वनिर्वचनीयोत्पत्तिवादिमतेनेति ध्येयम्। बलजस्येति। प्रियादिज्ञानस्येति शेषः। आलोकादिविशेष्यकः प्रियादिवृत्तिधर्मप्रकारकः साक्षात्कारानुभवात्मक आरोपस्तत्त्वं नतु स्मृतौ साक्षात्त्वारोपः, विशेष्यसन्निकर्षत्वेनैव प्रत्यक्षं प्रति कारणत्वादालोकादिना नयनादिसन्निकर्षस्यानुभवत्वसाक्षात्त्वयोः प्रयोजकस्य सत्त्वादिति भावः। निमीलितेत्यादि बहुव्रीहिणा पुरुषपरम्। भावनाबलजस्येत्यनुषज्यते। स्वप्नेति। अक्षसन्निकर्षस्याभावेन स्मृतौ साक्षात्त्वारोपो वा दोषबलात्साक्षात्कारस्यैवोत्पत्तिर्वेति भावः। गतिः = स्मृतित्वसाक्षात्त्वान्यतरवत्ता। परोक्तदोषं निराकृत्य स्वयं दूषयति इदन्त्विति। परमाण्वादीत्यादिना ग्राह्यमिन्द्रियसन्निकृष्टम्, परमाणुपदञ्चासन्निकृष्टपरम्, तच्चैन्द्रियकं वाऽनैन्द्रियकं वा, सन्निकर्षो लौकिकः। अनुव्यवस्यमानायामिति। अध्यवसितव्यमितिवद्बहुलप्रयोगविषयस्य धातोरिदं रूपम्, न तु षोऽन्तकर्मणीति प्रसिद्धस्य, तथा सति 'अनुव्यवसीयमानाया'मिति 'अध्यवसातव्य'मिति च स्यात्। परमाणुप्रतीत्यंशे = परमाणुविषयकत्वावच्छेदेन। 'अयं घटः परमाणुभिरारब्ध' इत्यादिबुद्धेरनुव्यवसायेन घटविषयकत्वावच्छेदेन तादृशबुद्धेः साक्षात्त्वावगाहनेऽपि परमाणुविषयकत्वावच्छेदेन परोक्षत्वमेवावगाह्यते इत्यनुभवानुरोधेनानैकत्वात्परोक्षत्वस्य जातित्वे तेन साङ्कर्याच्च न साक्षात्त्वं जातिरिति भावः। ननु तादृशबुद्धावुपनीतस्यैव परमाणोर्भानेनालौकिकसन्निकर्षसत्त्वेन तद्विषयकत्वावच्छेदेनापि प्रत्यक्षत्वमेव, उभयविधसन्निकर्षस्यैव तत्प्रयोजकत्वात्, नचैवं परमाणुं साक्षात्करोमीत्यप्यनुभूयेतेति वाच्यम्; तादृशानुभवे भासमानाया लौकिकविषयितायाः परमाणावनङ्गीकारात्, नचैवं साक्षात्करोमीत्यनुभवस्य प्रत्यक्षत्वजातावमानत्वेन विशेषणज्ञानजन्यतावच्छेदकतायास्तादृशविषयिताविशेषे एव वक्तुं शक्यत्वेन प्रत्यक्षत्वजातेरसिद्धिः, सर्वांशे उपनीतभाने तु न मानमिति विशेषणज्ञानजन्यतावच्छेदकस्य तत्साधारणस्यैव कल्पनीयतया प्रत्यक्षत्वजातिः सेत्स्यतीति नाशङ्कनीयम्, यथा च तादृशजन्यतावच्छेदकस्यानुमित्यादिसाधारण्याभावेऽपि न काचित्क्षतिस्तथोक्तमनुभवत्वस्य जातित्वखण्डने पुरेति वाच्यम्; लाघवात्तादृशजन्यतावच्छेदकतया प्रत्यक्षत्वजातिसिद्धेरित्याशङ्कयाह अन्यथेति। उपनयसन्निकर्षस्य प्रत्यक्षत्वप्रयोजकत्वे इत्यर्थः। वस्तुतस्तु क्लृप्ततया तादृशविषयिताविशेषे एव प्रत्यक्षमात्रानुगतत्वं कल्पयितुमुचितम्, नह्या-

स्त्या वह्निरपि मानसप्रत्यक्ष एव, न लैङ्गिक इति परेण सुवचत्वात्। एवं प्रत्यभिज्ञायां

शिकत्वमपि जन्यतावच्छेदकता विरुणद्धि। किञ्च कल्प्यमानाया अपि जातेरनुगतत्वं न शक्यसमर्थनम्, व्यक्त्यन्तरसङ्गतायास्तस्या अभिनवव्यक्त्यन्तरे सङ्गत्ययोगात्, विभुत्वस्य द्रव्यधर्मत्वात्, न च तदुत्पत्तेः प्रागपि कालिकेन तद्देशे तस्या वर्तमानतयोत्पन्नमात्रस्य तद्योगः यदाहुः 'जातः सम्बद्धश्चेत्येकः कालः' इतीति वाच्यम्, इदानीमत्र घट इत्यादिप्रतीतिर्हि कालिकसम्बन्धावच्छिन्नाधेयतामवगाहते घटादौ घटसंयुक्तादिदेशावच्छेदेनैव, न तु घटासंयुक्तादिदेशावच्छेदेन, नहि कस्यचित्सुस्थात्मनो मतिरुदेति घटानधिकरणेऽपि भूतले तादृशी, एवञ्च कालस्य विभुत्वेऽपि, उपाधिरूपस्यापि च तस्य सर्वत्र सुलभत्वेऽपि घटानधिकरणदेशावच्छेदेन तस्य घटाधिकरणत्वाभावव्यवस्थितौ न घटत्वाधिकरणतापि तदवच्छेदेनेति पूर्वं घटानधिकरणे देशे उत्पन्ने घटे कथं घटत्वस्याभिसम्बन्धः। एतेन दैशिकविशेषणतया सर्वदेशसम्बद्धत्वरूपं जातेर्व्यापकत्वमित्यप्यपाकृतम्, तत्राप्यवच्छेदकविशेषस्यापेक्षणीयत्वात्। तस्मात्सुगीतं सौगतैः—"न याति न च तत्रासीन्नचोत्पन्नं नचांशवत्। जहाति पूर्वं नाधारमहो व्यसनसन्ततिः"रिति एतच्च न केवलं जातावपि त्वनुगतधर्ममात्रे द्रष्टव्यम्। नचानुगतमतिबलादेव तत्सिद्धिः, विषयस्य दुर्निरूपत्वे तस्या प्रमात्वस्याविश्वसनीयत्वात्। प्रकृते च साक्षात्करोमीति प्रतीतिर्विषयिताविशेषे एव मानतयाऽभ्युपगतत्वेन जातौ नानुगतमतेर्मानताशङ्कापीत्यधिकं द्रष्टव्यम्। वेदान्तिना तु जातिमात्रस्य ब्रह्मरूपत्वं वा, अविद्यारूपत्वं वा, अविद्याकार्यान्तर्गतत्वं वेति मतत्रयमित्याद्ये प्राङ्निवेदितब्रह्मसिद्धिरेव तत्सिद्धिः, द्वितीययोश्चानिर्वाच्यत्वमिष्टमेवेति न काचित्क्षतिः। लिङ्गबुद्धीति। व्याप्यत्वरूपलिङ्गत्वविशिष्टविषयकबुद्धीत्यर्थः। एवञ्चैतादृशबुद्ध्या साध्यस्यापि विषयीकरणादुपनीतस्य तस्य धर्मिप्रत्यक्षे भानसम्भवः, 'यो यत्र विशिष्य पूर्वमवगतः स तत्र संस्कारवशात्प्रत्यक्षे भासते' इति नियमस्याप्रामाणिक इति भावः। वह्निरिति। पक्षधर्मतावल्लभ्यसाध्यप्रसिद्धेरनुमानानङ्गत्वेन सामान्यप्रत्यासत्तेरप्रामाणिकत्वेन च प्रागज्ञातपर्वतीयादिवह्निव्यक्तेस्तादृशप्रत्यासत्तिविधुरतया कथं मानसप्रत्यक्षविषयताऽऽशङ्क्येतापीति तु मा शङ्किष्ठाः, केवलान्वयिप्रकरणे "व्यतिरेकव्याप्तिग्रहाधीना च धीर्नानुमितित्वेनानुभवात्, कॢप्तकारणाभावात्, सामग्रीभेदकल्पनायाश्चानुभवैकाधीनत्वात्, किन्तु विजातीया, तत्करणमपि च प्रमाणान्तरमर्थापत्तिरेवे"त्याद्यभिदधानैस्तार्किकशिरोमण्यादिभिरप्यप्रसिद्धसाध्यकस्थलेऽर्थापत्तेरेवाङ्गीकारात्, किं पुनरङ्ग धर्मब्रह्ममीमांसकैः। अप्रसिद्धत्वञ्च भावस्य वाऽभावस्य वेत्यन्यत्। प्रसिद्धसाध्यकानुमितिमात्रोच्छेदेऽपि तार्किकैरिष्टापत्तेः कर्तुमशक्यत्वाच्चेति भावः। मानसेति। धर्मिणा वहिरिन्द्रियसन्निकृष्टतास्थले यद्यपि साध्यस्य चाक्षुषत्वादिकं वक्तुं शक्यते, तथापि परमाण्वादिपक्षकस्थलाभिप्रायेणेत्थमभिधानमनुमितिमात्रोच्छेदस्य मानसत्वस्यैवोपनायकज्ञानजन्यतावच्छेदकतयाऽभ्युपगमाय। यद्यपि वहिरिन्द्रियजन्यज्ञानेऽप्युपनीतभानम्, तथापि विशेषणांशे एव वहिरिन्द्रियाणां स्वायोग्यमुख्यविशेष्यकज्ञानाजनकत्वनियमात्, तत्र च तत्रोपनायकज्ञानस्य विशेषणज्ञानविधया कारणतासम्भव इति मानसत्वस्य तद्व्यापकत्वेऽपि न क्षतिः। मानसे तु स्वातन्त्र्येणैव तत्रोपनीतस्य विधेयतयापि भानेन विशेषणज्ञानविधया कारणतया विशिष्टबुद्धित्वावच्छिन्नकार्यतानिरूपितयाऽनिर्वाहादिति भावः। इदमवधेयम्—उपनयज्ञानजन्यतावच्छेदको यदि ज्ञानविशेष प्रत्यक्षत्वातिरिक्तस्तदा चाक्षुषत्वादिना सत्त्वांशिकत्वसाङ्कर्यं यद्जातिविरुद्धस्य हेतुर्मा भूदिति तत्परित्यज्य प्रत्यक्षत्वं एवोपनायकज्ञानजन्यतावच्छेदकता स्वीकार्या, परन्तु परोक्षत्वादिना साङ्कर्यनिरासे तस्याप्युपपादने इति व्यसनम् तदुपपादो व्यसनम्। नहि सर्वांशे प्रत्यक्षत्वं सर्वांशे 'साक्षात्करोमी'त्यनुभवमन्तरेण तस्य व्यवस्थापयितुं

पूर्वदेशकालस्थितिमस्य पश्यामीति कस्यानुभवो यद्बलात्तथाभ्युपेयम्। तस्मात्प्रतीतिकलहोऽयम्।

लौकिकालौकिकविषयताविभागस्यालौकिकप्रत्यक्षसिद्धिं विना गतेर्वलिंगोधामांसविभजनानुकारित्वात्। सुरभि चन्दनमित्यादिर्हि सौरभादिप्रकारकत्वेन प्रमा वा, सुरभिगन्ध इत्यादिवत्सौरभत्वादिप्रकारकत्वेन प्रमा वोभयथापि तत्रालौकिकप्रत्यक्षत्वे न मानम्, तस्यांशिकस्मृतित्वस्य वा प्रत्यक्षधर्मिकानुमितौ प्रत्यक्षत्वानुमितित्वयोः साङ्कर्यमभ्युपेतवतो मते आंशिकानुमितित्वस्य वा मतान्तरेऽनुमितित्वस्यैव वाऽनुभवमनुरुन्धतोऽभ्युपगमौचित्यात्। आस्तां वा सौरभाद्यंशे तस्य ज्ञानत्वमात्रं नतु स्मृतित्वादिकम्, अनुभवानुरोधस्यात्याधिक्यात्। प्रत्यक्षत्वादेर्विशेषस्य विरहे ज्ञानत्वस्य सामान्यस्यावस्थानं कथमिति तु भ्रमवज्ज्ञाने प्रत्यक्षत्वानुभवत्वयोरप्रामाणिकत्वं परामर्शप्रकरणे ब्रुवाणो भट्टाचार्य एव प्रष्टव्यः। अंशान्तरमादाय तादृशज्ञाने प्रत्यक्षत्वस्य सद्भावाच्च। एतेन ज्ञानप्रत्यासत्त्यनभ्युपगमे वह्निमनुमिनोमि स्मरामि साक्षात्करोमीत्यादिप्रत्ययानां विषयांशे का गतिरिति प्रत्यादिष्टम्; एकत्र विषयविषयिभावाभ्युपगमे तादृशप्रत्ययानां स्वांशे प्रत्यक्षत्वं विषयांशे तु यथायोगमनुमितित्वस्मृतित्वसाक्षात्कारित्वादिकमेव। मानसप्रत्यक्षाभ्युपगमे तु विषयांशे ज्ञानत्वमेवोक्तरीत्या, व्याप्तिज्ञानादिजन्यत्वाभावेन मानसप्रत्यक्षस्य तदंशेऽनुमितित्वादेर्वक्तुमशक्यत्वात्। एवमेव साक्ष्यभ्युपगमेऽपि विषयांशे ज्ञानत्वमेव समर्थनीयम्। किञ्च वृत्त्यात्मकज्ञानविषयकत्वावच्छेदेनापि न साक्षिणि प्रत्यक्षत्वादिकम्, तस्य वृत्तिगतत्वाभ्युपगमात्, अपरोक्षत्वं तु तदीयमज्ञानविषयतासामान्याभावप्रयोजकवैशिष्ट्यात्मकं प्रत्यक्षत्वव्यावृत्तमेव, तच्चेन्द्रियजन्यज्ञानविषयघटादिविषयकत्वावच्छेदेन साक्षिणि निराबाधमेव, अनुमित्यादिविषयघटादिविषयकत्वावच्छेदेन स्वज्ञानविषयताविशेषाभावप्रयोजकवैशिष्ट्यमेव तत्रेत्यवधेयम्। एतेन–विशिष्टप्रत्यक्षत्वविशेषणज्ञानत्वाभ्यां विशिष्टवैशिष्ट्यप्रत्यक्षत्वविशेषणतावच्छेदकप्रकारकज्ञानत्वाभ्यामेव च कार्यकारणभावो न तु नयज्ञानमादायापि कश्चित्पृथक्, अन्ततोऽहमर्थस्यैव विशेष्यतासम्भवेन मानमेऽपि विशेषणतयैवोपनीतभानस्य वक्तव्यत्वात्। अतएव सर्वांशेऽप्युपनीतमाने न मानम्। कार्यतावच्छेदके चानुमित्यादिसाधारणधर्मस्याप्रवेशेऽपि न काचित्क्षतिर्यथा तथोदितमनुभवत्वस्य जातित्वखण्डने पुरेत्यपि–नाशङ्कनीयम्; एतावता ज्ञानजन्यत्वस्य प्रत्यक्षे सिद्धावपि यद्विषयकज्ञानजन्यत्वं तदंशे लौकिकसन्निकर्षविरहदशायां प्रत्यक्षत्वस्यासिद्धेः, उक्तरीत्यैवोपपत्तेः। आंशिकानुमितित्वाद्यभ्युपगमेऽपि विषयतानां निरूप्यनिरूपकभावविरहस्य ज्ञानद्वयवदभावेन विशिष्टवैशिष्ट्यबुद्धित्वविशेषणतावच्छेदकप्रकारकत्वाद्युपपत्तेः। प्रत्यक्षत्वव्यवहारस्य विशेष्यांशे लौकिकसन्निकर्षजत्वनिबन्धनस्यैवोपपत्तेः। आंशिकस्मृतित्वपक्षे तु संस्कारबलादेव तदुपपत्त्या विशेषणादिज्ञानस्य प्रागनपेक्षणीयतैवेति। प्रत्यक्ष एवेति। अनुमिनोमीति धीविषयता त्विदानीं व्याप्तिधीजननीके प्रत्यक्ष एवेदृशी वक्तव्या, वह्निं साक्षात्करोमीतिप्रत्ययप्रमत्वत्र पक्षे 'परमाणुं साक्षात्करोमी'त्यनेन समानः समानसमाधानश्चेत्युक्तप्रायम्। पक्षताजन्यत्वेन तु नानुमितित्वम्, ज्ञानस्येच्छाजन्यत्वाभावेन सिद्धेरप्रतिबन्धकत्वेन च पक्षताया अनुमित्यहेतुत्वात्, न परं प्राभाकरवेदान्तिनोरेव, "अनुमितावेव पक्षताया हेतुत्वस्य निरस्तत्वा"दिति केवलान्वयिग्रन्थे भणतः शिरोमणेरपि तथैव स्वरसः। विशिष्टवैशिष्ट्यावगाहिनः परामर्शस्यानुमितिहेतुभावे तु विवाद एव। नच परामर्शत्वस्य मानसत्वव्याप्यजातिविशेषता प्रमाणसिद्धा येन, तदवच्छिन्नजनकताकजन्यतयाऽनुमितित्वसिद्धिराशङ्क्येत। न वा व्याप्तिप्रकारकपक्षधर्मतानिश्चयत्वेनापि जनकताऽनुमितिं प्रत्येव, स्मृतिविशेषं प्रत्यपि तथात्वात्। न वा व्याप्यपक्षोभयवैशिष्ट्यावगाहिनिश्चयत्वमप्यनुमितित्वावच्छिन्नजन्यताकजनक-

त्वादिवत्साक्षात्त्वेऽपि तर्हीति ज्ञानादित्वे न विवादः साक्षात्त्वे त्विति विशेषो वाच्यः, दर्शनकृतां हि विवादो न मात्सर्येण वाङ्मात्रेण वा, किन्तु तत्त्वाभिमानादेव। प्रत्यक्षार्थधर्मिकायां चानुमायां साक्षात्त्वपरोक्षत्वसङ्करो दुर्वारः। परोक्षत्वं न जातिः, किन्तु साक्षात्त्वमेव तथा, केवलं तु साक्षात्त्वाभावः परोक्षत्वमिति चेन्न; अस्यार्थस्य विनिगन्तव्यत्वा-

निवेशे च साक्षात्कारित्वस्य क्वचिदपि स्फुटावभासासम्भवात्सार्वत्रिकत्वं विवादे तदीय आपन्नमिति भावः। तत्समानाधिकरणभूयोधर्मनिष्ठनिश्चयीयविषयतानिरूपितविषयतानिरूपितविषयत्वं तत्स्फुटावभास इति न प्रतियोग्यप्रसिद्धिः, धर्मेऽवयवत्वानुपादानात्, सामानाधिकरण्यं तु तत्तत्स्थले तत्तत्सम्बन्धेनैवोपादेयमित्याशङ्क्याह यदीति। ज्ञानादित्वे इति। वाय्वादिप्रतीतेरित्यादिः। साक्षात्त्वे त्विति। विवाद इत्यनुषङ्गः। इतीतिलुप्तसप्तमीकम्। विशेषो विनिगमना। ज्ञानत्वसमानाधिकरणनिश्चयत्वानुभवत्वादीनां निश्चये यथा ज्ञानत्वे न संशयः, तथा साक्षात्त्वस्यापि समानाधिकरणानां तेषां निश्चये साक्षात्त्वे कुतः संशयः। अथ तद्व्याप्यधर्मदर्शनमेव तत्स्फुटावभासः, निश्चयत्वादिकं च ज्ञानत्वस्य व्याप्यं नतु साक्षात्त्वस्येति तद्दर्शनस्य कथं साक्षात्त्वसंशयापहन्तृत्वं स्यात्, इन्द्रियजज्ञानत्वार्थजज्ञानत्वादिरूपस्य साक्षात्त्वव्याप्यस्य निश्चये तु न भूयते एव साक्षात्त्वसंशयेनेति चेन्न, तादृशव्याप्यधर्मघटकजन्यतायाः स्वावच्छेदकीभूतसाक्षात्त्वग्रहं विना ग्रहीतुमशक्यतयाऽन्योन्याश्रयप्रसङ्गात्। नच प्रत्यक्षलक्षणानां सर्वेषां सति निरासे धर्मान्तरं किञ्चित्साक्षात्त्वव्याप्यं सुनिरूपं स्यात्। अथ साक्षात्करोमीतिप्रतीतिसाक्षिकविषयिताविशेषस्यैव प्रत्यक्षत्वव्यञ्जकत्वम्, सर्वांशे उपनीतभानानभ्युपगमेन तस्य प्रत्यक्षमात्रवृत्तित्वात्, तादृशप्रतीतिविरहदशायामेव च क्वचित्प्रत्यक्षत्वाप्रत्यक्षत्वविवादः, तादृशप्रतीतिविरह एव कुत इत्यत्र तु दोष एव शरणीकरणीय इति चेन्न; दोषत्वदुर्विवेकतायाः प्रागुदीरितत्वात्। प्रतीतिविषययोः परस्परायत्तविशेषकत्वेऽन्योन्याश्रयाच्च। उक्तरीत्या प्रत्यक्षत्वस्याननुगततया वक्तुमशक्यत्वेन तस्योक्तप्रतीतिसाक्षिकविषयिताविशेषानतिरिक्तत्वाच्च। प्रत्यक्षत्वस्यैकत्वे पटादिविषयकप्रत्यक्षेऽपीदं ज्ञानं पटीयप्रत्यक्षत्ववदित्यापत्तेश्च। तत्र पटीयत्वविशिष्टप्रत्यक्षत्वाधारताविरहाच्च तथा प्रत्यय इति चेत्तथापि विशेष्यवृत्तिधर्मस्य विशिष्टानुयोगिकाभावानभ्युपगमेनात्रज्ञाने पटीयप्रत्यक्षत्वमितिप्रतीतेरापत्तेः। तादृशाधारताया अतिरिक्तत्वोपगमे पटीयप्रत्यक्षत्वातिरिक्ततायां अनपराधित्वाच्च। अनुपपद्यमानस्य स्वोपपादकमात्रकल्पकत्वेन तदतिरिक्ततां विना तदाधारतातिरेकस्यासम्भवेन तस्या आवश्यकत्वाच्च। नहि यद्भेदसन्निष्ठनिरूपकतानिरूपिताधारताभेदोऽन्यत्र दृष्टचरः। प्रत्यक्षत्वस्य नानात्वे तु न सखण्डत्वम्, लक्षणनिरासात्, अखण्डत्वे तु तादृशविषयिताविशेषात्मकतैवेति तन्निरासभागिता दुर्वारेति। तदेतत्सूचयन्नाह दर्शनकृतामिति। परीक्षकाणामित्यर्थः। तत्त्वाभिमानात् = अस्माभिरुच्यमानं प्रामाणिकमेवेत्यभिमानात्। तथा च स्वपक्षस्य प्रामाणिकत्वसिद्ध्यै प्रोक्तार्थे विनिगमना वक्तव्यैवेति भावः। प्रत्यक्षेत्यादि। प्रत्यक्षार्थः = प्रत्यक्षविषयः, गिरिरभिमानित्याद्यक्षसन्निकृष्टोद्देश्यकायामित्यर्थः। अक्षासन्निकृष्टोद्देश्यकानुमितौ साक्षात्त्वाभावसमानाधिकरणं परोक्षत्वम्। एवमनुमितित्वेनापि साङ्कर्यं द्रष्टव्यम्। सङ्कर इति। आंशिकत्वस्याप्युपलक्षणमिदम्। अनुमितेर्धर्मिविषयकत्वनियमेन ज्ञासद्वयस्य धर्म्यंशेऽप्यनुमितित्वोपगमे च पर्वतमनुमिनोमीत्यनुव्यवसायापत्तेः, पर्वतं साक्षात्करोमीत्यनुभवानापत्तेश्च। अतएव प्रत्यक्षत्वानुमितित्वयोरखण्डविषयिताविशेषत्वमेवेति केचित्तार्किकाः। वक्तुमशक्यत्वात्, न जातिरिति। अनुगतमत्यादेर्मानत्वाभावादिति शेषः। जात्यैव हि अखण्डविषयत्वाभ्युपगमस्त्रूक्तः। तथा = जातिः, साक्षात्करोमीत्यनुगतमत्या विशेषणज्ञानजन्यतामाङ्कर्यांशिकत्वे दुर्वचत इति भावः।

पत्तेः । सर्वज्ञमनुमन्यमानस्य च मते दृष्टलिङ्गादेरीशस्य लिङ्गयादिकधुद्धावपरोक्षत्वेनापि विरोधः । लिङ्गादिधीजन्यत्वमनुमित्यादौ प्रयोजकमिति चेन्न; साक्षात्त्वेऽपि तर्हीन्द्रिय-

वच्छेदकतया च नत्सिद्धिरिति भावः । साक्षात्त्वाभावः = साक्षात्त्वाभाववज्ज्ञानत्वम् । विनिगन्तव्य-त्वेति । साक्षात्करोमीति प्रतीतेरलौकिकप्रत्यक्षाभ्युपगमे लौकिकविषयितविषयकत्वस्यावश्यकत्वात्, उक्तजन्यतावच्छेदकतया च तत्सिद्ध्यसम्भवस्य निवेदितत्वादिति भावः । इदमुपलक्षणम्, परोक्षत्वस्य जातित्वाभावेऽप्यनुमितित्वेन जात्या साङ्कर्यात्, तस्य जातित्वानभ्युपगन्त्रा प्रत्यक्षत्वस्यापि तथात्वानभ्यु-पगमादिति । ननु धर्म्यंशे विधेयताख्यविषयताया विरहेण अग्निमनुमिनोमीत्यत्र च तस्या एव भानेन पर्वतमनुमिनोमीति प्रतीत्यापत्तेरसम्भवाद्धर्म्यंशेऽनुमितित्वाभ्युपगमेऽपि न काचित्क्षतिरिति न साङ्कर्या-दिकम्, पर्वतः साक्षात्कृत इत्यनुभवस्तु परामर्शमूलः । यदाऽग्निरनुमितस्तदैव पर्वतः साक्षात्कृत इत्यनु-भवस्य तु स्थूलकालमादायैवोपपत्तिः । अथेदृशकल्पना या क्रियन्तामनुमितित्वस्यांशिकत्वं वा मन्यता-मित्यत्र किं विनिगमकमिति चेल्लाघवमेव, अनुमितित्वस्यांशिकत्वे हि विषयिताविशेषरूपताया वक्तव्य-त्वात् तस्य चाननुगतत्वात्, सङ्कीर्णजात्यभ्युपगमस्य चातिकगतित्वात्, विषयिताविशेषस्याखण्डानु-गतोपाध्यात्मकनाभ्युपगमे चापसिद्धान्तात्, जातौ साङ्कर्यं दोषो ननूपाधावित्यत्र विनिगमकाभावाच्चे-त्यस्वरसादाह सर्वज्ञमिति । वस्तुतस्तु जातेरप्यनुगतत्वासम्भव इत्युक्तमिति विषयिताविशेषातिरेके तस्या न मानसौलभ्यमित्यवधेयम् । अपरोक्षत्वेनापि = अपरोक्षत्वस्यापि सद्भावेन च । विरोधः = साङ्कर्यम् । ईश्वरज्ञानस्य प्रत्यक्षत्वाभ्युपगमात्, अन्यथोपादानलौकिकप्रत्यक्षविधया तस्य कारणत्वानु-पपत्तेः, स्वसमानकालिकलिङ्गशब्दादिज्ञानसमवायिसमवेतत्वेन तु तस्यानुमितित्वादिकमप्यापन्नमिति भावः । अनुमित्यादौ = अनुमितित्वादौ । प्रयोजकमिति । अन्यथा प्रत्यक्षत्वादिना सम्प्रतिपन्नानाम-स्मदादिज्ञानानामपि केषाञ्चिदनुमितित्वाद्यापत्तेः । तथाच नित्ये भगवज्ज्ञाने नानुमितित्वादिसम्भव इति भावः । सन्निकर्षादीत्यादिनेन्द्रियार्थौ गृह्येते । सा = ईश्वरगता धीः । ज्ञानाकरणकज्ञानत्वेन प्रत्यक्षत्वा-भ्युपगमे त्विन्द्रियाद्यकरणकज्ञानत्वेनानुमितित्वादेरप्यभ्युपगमं किन्न रोचयेः । किञ्च व्याप्त्यादिनिश्चयत्वा-वच्छिन्नजनकताकजन्यताकानुभवत्वेनानुमितित्वाद्यभ्युपगमे व्याप्त्यादेः साध्यादिभेदभिन्नमूर्तिकतयैक-साध्यकव्याप्त्यादिनिवेशेऽपरसाध्यकादिमहस्यानुमितित्वाद्यानापत्तिरित्यनुमिनोमीत्याद्यनुभवबलादेवानु-मितित्वादिकं व्यवस्थापनीयम्, नचेश्वरस्य तादृशानुभवाभावोऽस्मादृशा निर्णेतुं शक्यः । यदि च नित्यैकज्ञानस्य भगवतस्तादृशानुभवे मानाभावादेव तदभावनिर्णयः, तदा साक्षात्करोमीत्यनुभवाभाव-स्यापि तथैव निर्णय इति अस्थितं साक्षात्त्वेनापि ततः । तादृशानुभवाभावे ईश्वरज्ञानस्य सर्वविषयकत्वा-भावप्रसङ्गस्तु समानः समानसमाधानश्च । नन्वीश्वरज्ञाने साक्षात्त्वानभ्युपगमेऽपि न क्षतिः, नचैवं तस्योपादानलौकिकप्रत्यक्षत्वेन कारणतानुपपत्तिः, लौकिकविषयतासम्बन्धेनोपादानज्ञानत्वेनैव कारण-त्वोपगमसम्भवात्, नचेश्वरज्ञानस्य लौकिकविषयतापि प्रत्यक्षत्वाभावे कथम् ? तस्याःप्रत्यक्षत्वमात्र-निरूपितत्वे मानाभावात्, ईश्वरज्ञाने प्रत्यक्षत्वव्यवहारस्तु लौकिकविषयितावत्त्वनिबन्धन औपचारिक एवेति चेन्न; यत्र यत्र साक्षात्करोमीतिप्रतीतिसिद्धलौकिकविषयिता तत्र प्रत्यक्षत्वमिति व्याप्तेर्निरुपद्र-वत्वेन भगवज्ज्ञाने तादृशविषयितोपगमे प्रत्यक्षत्वस्यानिवार्यत्वात् । लौकिकालौकिकप्रत्यक्षीयविषयिता-विभागस्याप्रामाणिकतया लौकिकविषयितायाः एव प्रत्यक्षत्वात्मकतायाश्चोपपादितत्वाच्चेति । अथैवं धर्मिग्राहकमानेनैव तज्ज्ञानेऽपरोक्षत्वमप्यानीयते इत्यस्तु, नह्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिशून्यस्य कर्तृता नाम, अनुमितित्वादौ तु तज्ज्ञाने न मानमित्युक्तमेवेति चेदित एवास्वरसादाह व्यञ्जकोपाधि-

सन्निकर्षादिजत्वमिति साक्षादपि सा न स्यात्। व्यञ्जकोपाधिनियमा च जातिरिष्यते, न च तदत्र, उक्तप्रकारबाधात्। न च व्यञ्जकनियमानभ्युपगत्या न तदत्रोपगम्यमिति वाच्यम्; किं मया दृष्टं तथा किं वा केनचित्कथितमिति संशयानुपपत्तेः, प्राग्भूतायां स्मर्यमाणायां तद्बुद्धौ त्वन्मते मनसा ज्ञानरूपया प्रत्यासत्त्या प्रत्यक्षीक्रियमाणायां साक्षा-

त्क्रियतेति। स्वलौकिकप्रत्यक्षजनकज्ञानविषयीभूतोपाधिव्याप्येत्यर्थः। तत् = निरुक्तव्यञ्जकवत्त्वम्। अत्र = प्रत्यक्षज्ञानेषु। तथाच व्यापकं व्यावर्तमानं स्वव्याप्यमपि व्यावर्तयतीति न तेषु प्रत्यक्षत्वं जाति-रिति। इन्द्रियजन्यज्ञानत्वादेर्व्यञ्जकत्वमाशङ्क्याह उक्तेति। प्रकारो लक्षणीभूतो धर्मः। बाधात् = निरासात्। इदमुपलक्षणम्, उक्तधर्माग्रहेऽपि प्रत्यक्षत्वस्यानुव्यवसीयमानत्वादित्यपि द्रष्टव्यम्। साक्षा-त्करोमीतिधीसिद्धलौकिकविषयिताविशेषस्य प्रत्यक्षत्वव्यञ्जकत्वशङ्का त्वनुपदं दत्तोत्तरैव। ननु चाक्षुष-त्वादिजातेरेव प्रत्यक्षत्वव्यञ्जकत्वम्, व्यञ्जकाननुगमस्तु गुण एव नतु दोषः, अन्यथा तेनैव जातिकल्प-नाप्रतिक्षेपापत्तेः, चक्षुःकरणकानुभवत्वादेस्तु न व्यञ्जकत्वम्, चक्षुरग्रहेऽपि प्रत्यक्षत्वप्रत्यक्षोदयात्, निर्विकल्पकेश्वरयोगिप्रत्यक्षेषु तु धर्मिग्राहकमानसिद्धं प्रत्यक्षत्वमिति चेन्न; चाक्षुषत्वादिजातावपि व्यञ्जकप्रश्नस्य सावसरत्वात्। घटं पश्यामीत्यादिप्रतीतिसाक्षिकविषयिताविशेषस्य तद्व्यञ्जकत्वं तु न युक्तं वक्तुम्, चाक्षुषत्वस्यापि तादृशप्रतीतिविषयत्वेन ततः पूर्वमेव व्यञ्जकप्रतीतेर्वक्तव्यत्वात्। प्रत्यक्षत्वस्य लौकिकविषयिताविशेषात्मकताव्यवस्थापनन्यायेनोक्तेन तादृशविषयिताविशेष एव चाक्षुषत्वादिरिति वक्तव्यत्वाच्च। अस्त्वेवमिति चेद्विषयिताविशेषमात्रस्य बहुशो निरस्तत्वात्। पश्यामि स्पृशामीत्यादि-प्रतीतिं विनैव साक्षात्करोमीतिप्रतीतिस्थले व्यञ्जकदौर्लभ्याच्च। उक्तन्यायस्य जातिमात्रापघातकत्वाच्च। नियमानभ्युपगत्येति। यथा द्रव्यगतजातेः संस्थानव्यङ्ग्यत्वदर्शनेऽपि गुणादावप्यनुगतमतेरबाधि-तायाः सद्भावेन जातिविषयकत्वं संस्थानव्यङ्ग्यत्वनियमं परिभूयैवानुमन्यते, द्रव्ये एव वा ब्राह्मणत्वादे-रुपदेशादिना सन्ततिविशेषजत्वव्यङ्ग्यत्वेऽपि जातित्वं स्वीक्रियते, क्वचिदन्यथादर्शनस्याप्रयोजकत्वात्, तथा व्यञ्जकसामान्यनियममपश्यवधीर्य प्रत्यक्षत्वं जातिरस्तु, अनुगतमतेर्बाधकं विना जातिविषयकत्वा-दिति भावः। पूर्वं मयि जातं तद्विषयकज्ञानम्, किन्तु तत्प्रत्यक्षं वा शाब्दं वाऽसीदिति न निश्चिनोमीत्य-नुभूयमानसंशयः प्रत्यक्षत्वादेर्व्यञ्जकग्रहाभावनिबन्धन एव वक्तव्यः, प्रत्यक्षत्वादेर्व्यञ्जकग्रहानपेक्षप्रत्यक्ष-विषयत्वे तादृशसंशये कारणीभूतस्य धर्मिज्ञानस्य प्रत्यक्षत्वेनैव शाब्दत्वेनैव वा धर्मिविषयकत्वं स्यात्, सामग्रीसद्भावात्, धर्मिज्ञानस्य संशयकारणतानुपगमेऽपि धर्मिण एकतररूपेणैव भानं स्यात्, न तु कोटिद्वयस्पर्शितया। नच दोषबलात्तथा भानमिति वाच्यम्; व्यञ्जकाग्रहातिरिक्तस्य दोषस्य प्रकृतेऽशक्य-वचनत्वात्, कालविशेषादेर्व्यञ्जकग्रहविघटने एव चारितार्थ्यात्। एवञ्च व्यञ्जकसामान्यनियमो नावहेल-नीय इत्याह किमित्यादिना। इदानीमेवोत्पन्नं ज्ञानं धर्मीकृत्य तादृशसंशयोत्पत्तेर्विप्रतिपत्तिगोचरत्व-सम्भवात्स्मर्यमाणत्वस्यापि चतुर्थक्षणात्प्राक्कथमप्यसम्भवाच्चोक्तं प्राग्भूतायामिति। स्मर्यमाणायामिति धर्मिणः प्रत्यक्ष-तादृशसंशये धर्मिमानप्रयोजकलाभाय। त्वन्मते = ज्ञानस्य प्रत्यासत्तित्वोपगन्तृमते। स्मृतिस्तु जातेः प्रागनुभवं विना न निर्वहति प्रकृतानुपयुक्ता स्याभावे न तज्जातेः प्रत्यक्षत्वशङ्काऽपि, प्रत्यक्षीक्रियमाणायामिति। साक्षात्त्वाग्रहः = साक्षात्त्वानिश्चयः। व्यञ्जकाभावं = व्यञ्ज-चेत्याशयेन प्रत्यक्षीक्रियमाणायामिति। यद्यपि तस्या अप्यत्र ग्रहः, तथापि न स लौकि-कग्रहाभावं। ननु तत्तज्ज्ञानव्यक्तेरेवात्र व्यञ्जकत्वमस्तु, यद्यपि तस्या अप्यत्र ग्रहः, तथापि न स लौकि-कप्रत्यक्षात्मकः, व्यञ्जकलौकिकप्रत्यक्षस्यैव च जातिलौकिकप्रत्यक्षहेतुत्वम्, किञ्च जातिलौकिकप्रत्यक्ष-जनकज्ञानविषयस्यैव व्यञ्जकत्वाभ्युपगमेऽपि तज्ज्ञानव्यक्तिविषयकज्ञानस्य चात्र सद्भावेऽपि धर्मिणो

त्वाग्रहो विना व्यञ्जकाभावं कथं स्यात्। अर्थधर्मश्च साक्षात्त्वमिति स्वप्रकाशवादे निरास्यम्।

लौकिकप्रत्यक्षं विना जातिलौकिकप्रत्यक्षं कथं स्यादिति चेन्न; तत्तज्ज्ञानव्यक्तेर्ज्ञानत्वव्यञ्जकत्वमभ्युपगमेऽपि न साक्षात्त्वव्यञ्जकत्वसम्भवः, अन्यथा कर्मादिज्ञाने प्राभाकरैः सह तार्किकाणां साक्षात्त्वानुमितित्वादिविवादो न स्यात्, तज्ज्ञानव्यक्तेर्गृहीतत्वात्। एवञ्च कर्मादिज्ञानं साक्षात्कारात्मकं नवेत्यपि सन्देहो व्यञ्जकनैयत्यसमर्थकतया दृष्टान्तोदाहरणः, तदभ्युपगमे व्यञ्जकाग्रहेणैव सन्देहोपपादनसम्भवात्। नच—व्यञ्जकसद्भावेऽपि तदग्रहो दोषविशेषादेव समर्थनीयः, एवञ्च तस्यैव व्यञ्जकासत्त्वेऽपि तादृशसन्देहार्जकत्वमस्तु लाघवादिति-वाच्यम्; विसंवादिप्रवृत्तिस्थले भेदाग्रहायत्तस्यापि विशिष्टज्ञानस्य यथा न निरासः, तथा व्यञ्जकसिद्ध्यनन्तरं तदग्रहस्य दोषविशेषेणोपपादनेऽपि तन्निरासासम्भवादिति भावः। वस्तुतस्तु बाधकान्तरमुक्तमेवानुसन्धेयम्। जातेः संस्थानव्यङ्ग्यत्वनियममनाद्रियमाणाः प्राभाकरास्तु—साक्षाद्धीत्वं प्रत्यक्षत्वम्, यज्ज्ञानं यद्विषयकत्वावच्छेदेन ज्ञानाजन्यं तस्य तत्र साक्षात्त्वम्, मितिमातृविषयकत्वावच्छेदेन त्वनुमित्यादेरपि तथात्वात्साक्षात्त्वम्, स्वप्रकाशतासाधनात्, ज्ञानमात्रे मातुर्भानोपगमस्य चानुभवानुरोधित्वात्, आत्मानुमितेस्त्वात्मविषयकत्वावच्छेदेन प्रत्यक्षत्वमिव परोक्षत्वमपि। ज्ञानत्वघटितधर्मावच्छिन्नजनकतानिरूपितजन्यतानवच्छेदिकाया यस्या विषयताया निरूपकं यज्ज्ञानं तदाश्रयविषयकत्वावच्छेदेन तस्य प्रत्यक्षत्वमिति हि विवक्षितम्। आत्मानुमितौ चानुमितिनिष्ठसमवायसम्बन्धावच्छिन्नप्रकारतानिरूपितात्मनिष्ठविशेष्यता तादृश्येव, आत्मानमहमनुमिनोमीति प्रतीतेः। निर्विकल्पकं त्वनभ्युपगमपराहतमिति तज्जन्यत्वमादाय कश्चिद्व्याप्तिर्नोद्भावनीया, विशिष्टवैशिष्ट्यप्रत्यक्षेऽपि न विशेषणतावच्छेदकप्रकारकग्रहस्य कारणता, युगपदिन्द्रियसन्निकर्षेणैव तत्सम्भवादिति नाव्याप्तिः। दीर्घादिप्रत्यक्षमपि न ह्रस्वादिज्ञानजन्यमपि तु तद्व्यवहार एव। प्रत्यभिज्ञायास्तु तत्तांशे ज्ञानजन्यतया तदंशे परोक्षत्वमेवेति—वदन्ति। तदसदित्याह *अर्थधर्मश्चेति*। *मितिमात्रात्मकार्थविशेषनियन्त्रितं साक्षात्त्वमिति मतं वेदान्त्यभिमतस्वप्रकाशवादे स्थित्वा खण्डनिकेन निरास्यमित्यर्थः*। एकत्र विषयविषयिभावाप्रामाणिकत्वादिना संविदन्तरानपेक्षव्यवहारकत्वादेरेव स्वप्रकाशपदार्थतया उक्तत्वात्स्वविषयत्वस्य तथात्वाभावात्, अयं घट इत्यहम्पदार्थाविषयकस्यापि ज्ञानस्यानुभवाच्च मितिमात्रंशे ज्ञानमात्रस्य प्रत्यक्षत्वोपपादनाय न यतनीयम्, तथाच यद्विषयकत्वावच्छेदेनेत्यस्य वैयर्थ्यम्। नच—प्रत्यभिज्ञायामिदन्तांशे प्रत्यक्षत्वापपत्तेय तदावश्यकम्, तस्यास्तत्तानुभवजन्यत्वादिति—वाच्यम्, तत्तांशेऽनधिगतगोचरतायाः प्रागुपपादितत्वेन तदनुभवजत्वानुपपत्तेः। नच तथापि संस्कारद्वारा धर्मिविषयकानुभवजन्यत्वमावश्यकमेव, अन्यथा तत्तोल्लेखानुपपत्तेरिति वाच्यम्; तथा सति शुद्धधर्म्यंशे एव परोक्षत्वापरोक्षत्वयोरनुभवविरुद्धयोरापत्तेः। अतएव स्वविषयत्वस्य स्वप्रकाशपदार्थतापक्षेऽपि नोक्तलक्षणसङ्गतिः आत्मानुमित्यादेरेकस्मिन्नेव विषये परोक्षत्वापरोक्षत्वयोरापत्तेः। अथात्मांशे तदनुमित्यादेरप्यपरोक्षत्वमेव, नतु परोक्षत्वम् वस्तुस्वभाव्यात्, तदेतदप्युक्तम्-*अर्थधर्मश्चेत्यादिना*। *कस्यचिदर्थस्य स्वभाव एवेदृशो यत्तदंशे साक्षात्त्वमेव ज्ञानमात्रस्येति तदर्थ इतीति* चेत्; आत्मा ज्ञानभिन्नो वा तदभिन्नो वा, आद्ये तस्योक्तस्वाभाव्ये मानाभावः, अन्यथा घटादेरपि तथात्वापत्तेः, जडत्वाविशेषात्, प्रमातृत्वस्य चाप्रयोजकत्वात्। द्वितीये तु संविद आत्मरूपतया नित्याया एव तस्याः स्वप्रकाशताया उपगन्तव्यत्वेन तत्प्रकाश्यानां अन्यज्ञानानां तद्विषयकप्रत्यक्षत्वोपपादनप्रयासवैफल्यमेव, तदेतदपि सूचितं **स्वप्रकाशवादे इत्यनेन**। नित्येत्यादिः। वेदान्तिमतानुसारेण तत्तदुपाध्यवच्छिन्नायास्तस्या अन्यज्ञान-

तथाप्यबाधितसाक्षात्त्वबुद्धिव्यवहारबलादन्ततः पदार्थान्तरमपि साक्षात्त्वमनभ्युपेत्य न निस्तारोऽस्ति, भ्रान्तेरप्यभ्रान्तिपूर्वकत्वादिति चेन्न; तस्यापि साक्षाद्ग्रहे क्वचिदपि तद्विवादो न स्यादित्यादिदोषसाम्यात्। अनुमानादिवेद्यत्वे च लिङ्गाद्यनुपपत्तिः, क्वच व्याप्त्यादिग्रह इत्यादिदुरुत्तरपरम्परैव स्यात्। सप्तपदार्थीनियमसाधनानि च कथं परिपन्थीनि न स्युरिति।

मात्रविषयकत्वोपगमेऽपि तादृशतद्विषयकत्वावच्छेदेन ज्ञानमात्रस्य प्रत्यक्षत्वं न प्रामाणिकमिति ध्येयम्। अत्र ज्ञानजन्यत्वाभावो ज्ञाने कं धर्मं धर्मितावच्छेदकीकृत्य प्रत्येतव्य इति तस्यावश्यनिरूपणीयत्वम्, नचासौ शक्यनिरूपणः, नचास्य साक्षात्करोमीति प्रतीतौ परिस्फुरणमित्यपि द्रष्टव्यम्। अर्थस्य घटादेरेव धर्मः साक्षात्त्वम् घटः प्रत्यक्ष इति व्यवहारात्, नचैवं क्वचित्प्रत्यक्षस्यापरत्र परोक्षता न स्यादिति वक्तव्यम्; यादृशस्य प्रत्यक्षविषयताऽभ्युपेयते तादृशस्यैव प्रत्यक्षताया मया वाच्यत्वात्, एवञ्च प्रत्यक्षत्वं न जातिः, नहि कदाचिद्गौर्न गौरिति पूर्वपक्षस्त्वतितुच्छत्वादुपेक्षितः, तथा सति जात्यतिरिक्तस्य साक्षात्त्वस्य लक्षणीयतापत्तेरेवाभिधेयत्वेन 'स्वप्रकाशवादे' इत्यस्याल्पकता, एकत्र विषयविषयिभावनिरासपरतया वेदान्तिमतेन योजने पूर्वान्वयित्वोपगमे वा तदल्पकतापरिहारेऽपि साक्षात्त्वस्य लक्षणान्तरानभिधानेन न्यूनता, 'अर्थधर्मत्वे' इत्यस्यास्वरसश्च, तन्मते विषयधर्मस्य विषयिधर्मत्वेनैवार्थधर्मत्वोक्तेरविशेषकत्वात्। ज्ञानतद्भिन्नार्थाभ्युपगन्तृमते तु ज्ञानविषयताया घटादावनश्योपेयत्वेन घटो ज्ञातः साक्षात्कृत इति व्यवहारानुपपत्तेर्घटः प्रत्यक्षमितिव्यवहारापत्तेश्चातिस्पष्टत्वेन तादृशपूर्वपक्षस्य न सम्भावनालेशोऽपि। अतएव न मतान्तरेऽपि। पूर्वपक्षस्य ज्ञाननिराकरणपरत्वे ज्ञानमात्रसिद्धेरेवापेक्षितत्वेन 'स्वप्रकाशवादे' इत्यस्यासङ्गत्वात्, यथासम्भवमुक्तन्यूनतादेरतिस्पष्टत्वाच्चेति कृतमतिपल्लवितैः।

बलं = अन्यथानुपपत्तिः। पदार्थान्तरं = सप्तपदार्थव्यतिरिक्तं निर्वक्तुमशक्यमपि। साक्षात्त्वबुद्धेर्भ्रमत्वं व्यवहारस्य च भ्रममूलकत्वमाशङ्क्याह भ्रान्तेरिति। अन्यथाख्यातेः प्रसाधितत्वादित्यभिमानः। अन्यथाख्यातेः प्राङ्निरस्तत्वेन बुद्धिव्यवहारयोर्बाध्यताया एव च कथनेनानिर्वचनीयस्य क्लृप्तान्तर्गतस्य तदतिरेकिणो वा कस्यचिदभ्युपगमेऽपि न नो हानिरित्यभिप्रायेणाह तस्यापीति। साक्षाद्ग्रहे = प्रत्यक्षप्रमाणकत्वे। लिङ्गेति। लक्षणानां यथोपन्यासं दूषणात्, तद्व्यक्तित्वादेश्चाप्रयोजकत्वादिदुष्टत्वात्, निर्णीतप्रामाण्यकस्य च शब्दस्य तत्प्रतिपादकस्याभावाच्छक्यतावच्छेदकस्य च दुर्निरूपत्वादिति भावः। तदाह क्वचेति। आदिना शक्तिग्रहः, इत्यादीत्यादिना लिङ्गादेर्निर्वचनं विना कथं तत्प्रतीतेःप्रमात्वनिर्णय इत्यादि ग्राह्यम्। दुरुत्तरेति। अनुत्तरणीयपर्यनुयोगेत्यर्थः क्लृप्तपदार्थातिरिक्तोपगमेऽपसिद्धान्तोऽपीत्याह सप्तेति। सप्तपदार्थीति समाहारे। सप्तैव पदार्था इति नियमस्य साधिका युक्तय इत्यर्थः। प्राञ्चस्तार्किका हि—भावाभावावेव तत्त्वम्, परस्परविरोधे हि न प्रकारान्तरस्थितिरिति न्यायात्, अतएव भावत्वेऽपि गुणवन्निर्गुणं वेति द्वयमेव, आद्यं द्रव्यमेव. द्वितीयं त्वाश्रितानाश्रितभेदेन द्विविधमेव, तृतीयस्योक्तयुक्त्यैवासम्भवात्। तत्रापि चानाश्रितः समवाय एव. अन्यथा तदवस्थितये सम्बन्धान्तरापेक्षायामनवस्थानात्, आश्रितं तु ससामान्यं निस्सामान्यञ्चेति द्वयमेव, उक्तन्यायात्, अतएव तत्र प्रथमं स्पन्दोऽस्पन्द इति द्वयमेव, आद्यं कर्म द्वितीयं तु गुणः। निस्सामान्यं तु निर्गुणमेव, आश्रितन्त्वेकाश्रितमनेकाश्रितं वेति द्वयमेव, तत्राद्यस्य विशेष इति द्वितीयस्य तु सामान्यमिति व्यवहार इति रीत्या सप्तैव पदार्था इत्याहुः। अतएव "सादृश्यमेतावत्स्वेकां विधामासादयन्नातिरिच्यते, अनासादयच्च पदार्थीभूय स्थातुमुत्सहते" इत्युक्तमुदयनाचार्यैः। अत्र यद्यपि विरुद्धयोर्नैक्यं नापि प्रकारान्तरं

लिङ्गादिजत्वाभावसमुदायवती धीः साक्षादिति चेन्न; परोक्षविषयसंशयादावतिव्याप्तेः। ईदृशी प्रमा तथेति चेत्, प्रत्यक्षप्रमाव्याप्तेः। अनुमानादिव्यवच्छेद्यतत्तदसाधारणकारणाजनितधीः साक्षादिति चेन्न; एवं हि प्रत्यक्षतत्तदपरव्यतिरिक्ता धीरनुमा-

विरुद्धत्वादेवेत्येकैव युक्तिः, तथापि भावाभावादिविषयभेदेन विरोधभेदमभिप्रेत्य साधनानीति बहुवचनम्। यदि तु निःश्रेयसफलकतत्त्वज्ञानोपयोगिनामेव केषाञ्चित्पदार्थानां शास्त्र उपवर्णनं स्वतन्त्रेच्छामूलश्च विभागः, अन्यथा सामान्यविशेषसमवायानामपि गुणवत्त्वे द्रव्यत्वं निर्गुणत्वे तु गुणत्वं कर्मत्वं चेति पार्थक्येन परिगणनं न स्यात्. तस्मादतिरिक्तपदार्थस्य प्रमाणबलायातस्याभ्युपगमेऽपि न काचित्क्षतिः, अतएवाखण्डोपाधीनामपरिमित एव कोपो नव्यतार्किकाणामित्युच्यते तदाप्यखण्डोपाधिमात्रं विषयाधीनविशेषकप्रतीत्यधीनविशेषकं बहुशो निरस्तमेवेति भावः।

ज्ञायमानलिङ्गादेः कारणतामतेनाशङ्कते लिङ्गादीति। अत्र लिङ्गादिविधया कारणता प्रविष्टा तेन लिङ्गादिविषयकप्रत्यक्षे नाव्याप्तिरिति भावः। धीरनुभवः। परोक्षेति। यद्यपि परोक्षविषयकसंशयस्य मानसत्वे लक्ष्यत्वमेव, तथापि विप्रतिपत्त्या संशयस्याहत्यैव जननोपगमेन तादृशसंशयस्यालक्ष्यत्वसम्भवः। आदिना परोक्षविपर्यासो गृह्यते। अनुमानादीति। अनुमित्यादिरूपं यद्व्यवच्छेद्यं तस्य यत्तत्तदसाधारणकारणं तदजनितेत्यर्थः। एवञ्च व्यवच्छेद्यान्तःपातिनः परोक्षसंशयादेर्न सङ्ग्रहप्रसङ्गः। ज्ञायमानलिङ्गादेरनुमित्यादिकारणत्वस्य निरस्तत्वेन व्याप्तिपदज्ञानाद्यजन्यत्वं वक्तव्यम्, व्याप्तिप्रभृतिज्ञानविषयकप्रत्यक्षेऽव्याप्तिवारणाय तु ज्ञानाकरणकज्ञानत्वमेव विवक्षणीयम्. व्याप्त्यादिनिवेशवैफल्यात् विस्तरस्तु पुरेरित। विशिष्टबुद्धादौ विशेषणज्ञानत्वादिना कारणताऽनभ्युपगमपक्षे तु ज्ञानत्वघटितधर्मावच्छिन्नजनकताकजन्यतानवच्छेदकविषयिताशालिज्ञानत्वं विवक्षितुं शक्यम्. नच तत्ताज्ञानजन्यायां प्रत्यभिज्ञायामव्याप्तिः, तादृशजन्यतानवच्छेदकानुभवत्वव्याप्यजातिमत्त्वे तात्पर्यात्. तादृशकारणताभ्युपगमे तु तद्व्यक्तिवृत्त्यनुभवत्वव्याप्यजातिमत्त्वं विवक्षणीयम्, व्याप्यत्वं तु तत्समानाधिकरणत्वे सति तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्, तेनानुभवत्वमादायानुमित्यादौ नातिप्रसङ्गः। अनुभवत्वस्य प्रत्यक्षादिचतुष्टयसाधारणजातितानभ्युपगमे तु तादृशजन्यतानवच्छेदकज्ञानत्वव्याप्यस्मृत्यवृत्तिजातिमत्त्वं वा व्यक्तिविशेषवृत्तिज्ञानत्वव्याप्यस्मृत्यवृत्तिजातिमत्त्वं वा वक्तव्यमिति भावः। प्रत्यक्षेत्यादि। प्रत्यक्षं च तत्तदपरं शाब्दादिकं च तद्व्यतिरिक्तेत्यर्थः। अयम्भावः, यथाश्रुते तत्तदसाधारणकारणाजनितेत्यनेन तादृशकारणजनितान्यत्वविवक्षणे तादृशजन्यत्वस्य प्रतिव्यक्तिविश्रान्तत्वेनामवंशदुर्ज्ञेयत्वपरिहृतयेऽनुगतधर्मावच्छिन्नप्रतियोगिताकस्यैव भेदस्य निवेश आदर्तव्यः, तादृशधर्मश्चानुमितित्वादिरिति प्रत्यक्षस्यानुमित्याद्यन्यत्वघटितरूपेण लक्षणेऽनुमित्यादेरपि प्रत्यक्षाद्यन्यत्वघटितरूपेण लक्षणीयत्वं विनिगमनाविरहात्स्यादिति व्यक्तः परस्परसंश्रयः। एवं तादृशजनितत्वात्यन्ताभावविवक्षायां अप्यनुमितित्वाद्यत्यन्ताभावे पर्यवसानस्य वक्तव्यतया अन्यथात्यन्ताभावेनानुमित्यादेर्लक्षणीयतायामुक्तदोषः। उक्तरीत्या ज्ञानाकरणकज्ञानत्वेऽपि विवक्षिते तत्पर्यवसानस्य स्वघटकधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयज्ञानजन्यमात्रवृत्तिधर्मावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकं यद्यत्तदवच्छिन्नप्रतियोगिताकभेदवत्तायां प्रागुपदर्शिततया धूमलिङ्गकपर्वतपक्षकवह्न्यनुमितित्वादेरेव च तादृशकार्यतावच्छेदकधर्मतया तदवच्छिन्नभेदघटितत्वेनोक्तदोष एव। भेदकूटघटितत्वेनामवंशदुर्ज्ञेयत्वादिकं तु प्रागुक्तमेव। तादृशजन्यतानवच्छेदकज्ञानत्वव्याप्यस्मृत्यवृत्तिजातिमत्त्वस्य लक्षणत्वेऽपि जन्यतावच्छेदकभेदस्य जन्यतावच्छेदकत्वात्यन्ताभावस्य वा तद्घटकतया वक्तव्यतयाऽऽद्येऽनुमितित्वादिभेदप्रवेशेनोक्तरीत्या दोष एव।

नादिरिति वैपरीत्यमेव कुतो न स्यादित्यविनिगम्यत्वं स्यात्। तेषु व्यवच्छेद्येष्वेकद्वयादि परिहाय व्यवच्छेद्यहेत्वजनितत्वेनापि साक्षात्त्वप्रसङ्गात् तत्रानुगतबुद्ध्यन्तरापत्तेः। व्यवहारे सति निमित्तानुसरणं न तु निमित्तानुसरणेन व्यवहार इति चेन्न, निमित्तस्यानुगत्यापत्तिद्वारस्यैव कल्प्यत्वात्। तत्तज्जनितत्वाभावो हि तेनैव रूपेणानुगतव्यवहारप्रत्ययावादृष्यात्वन्येनापि। तथात्वे यावत्परिदृष्टव्यक्तिविशेषान्यत्वेन व्यवहारोपपत्तौ गोत्वाद्युच्छेदप्रसङ्गः। तस्मात्—

> विधिजः प्रत्ययोऽन्योऽयं व्यतिरेकासमर्थनः।
> नैवं चेदपराद्धं ते किमन्यापोहवादिना॥ ४१॥

द्वितीयेऽपि तादृशजन्यताया अनुमितित्वादिप्रतीत्यधीनप्रतीतिकतया विनिगमनाविरहेण चानुमित्यादेरिन्द्रियत्वावच्छिन्नजनकताकजन्यतावच्छेदकत्वात्यन्ताभावघटितरूपेण लक्षणीयतायां तादृशजन्यतायाः प्रत्यक्षत्वादिप्रतीत्यधीनप्रतीतिकतयाऽन्योन्याश्रयो द्रष्टव्यः। व्यक्तिविशेषघटितलक्षणेऽपि का व्यक्तिर्निवेशनीयेत्यविनिगम्यमेव। लक्षणानन्त्यस्य कथञ्चिदिष्टत्वेऽपि जातिस्तादृशी निरस्तैवेति। ननु ज्ञानविशेषाणामेकस्यापरभेदेन लक्षणेऽपि नापरस्य विशेषान्तरभेदेन लक्षणमित्यत्र विनिगमकत्वमन्योन्याश्रयविरहस्यैवेत्याशङ्क्यानिप्रसक्त्यन्तरमाह तेष्विति। एकविशेषस्यापरभेदेनालक्षणेऽपि "एकोऽनेकविशेषेऽर्थे" इति प्रबद्धके प्रागुपदर्शितरीत्या विशेषान्तरव्यावृत्तिफलकविशेषणानामेकविशेषलक्षणेऽनुप्रवेशावश्यम्भावेन व्यावृत्तिप्रतीतेश्च व्यावर्त्यप्रतीतिं विनाऽसम्भवेनान्योन्याश्रयस्य दुर्वारतैव, एवं विशेषान्तरभेदाघटितलक्षणनिरासदशायां विशेषान्तरभेदेनैव लक्षणीयतयापीति तु द्रष्टव्यम्। साक्षात्त्ववदिति। निरुक्तसाक्षात्त्वेनेवेत्यर्थः। यदि ह्यनुमित्युपमितिशाब्दस्मृत्यसाधारणकारणाजनितज्ञानत्वेन प्रत्यक्षमात्रे साक्षात्करोमीत्यनुगतबुद्धेरुपपादनम्, तदाऽनुमित्युपमितिशाब्दासाधारणकारणाजनितज्ञानत्वेन प्रत्यक्षस्मृत्योः, अनुमित्युपमित्यसाधारणकारणाजनितज्ञानत्वेन प्रत्यक्षस्मृतिशाब्देषु अनुमित्यसाधारणकारणाजनितज्ञानत्वेन प्रत्यक्षस्मृतिशाब्दोपमितिष्वनुगतबुद्धिव्यवहारयोरापत्तिः, एवमनुमित्यादिकमपि क्रमेण बहिष्कृत्य निष्पन्नरूपान्तरैरापत्तयो द्रष्टव्याः, तथोक्तकार्यतावच्छेदकभेदघटितलक्षणेऽपि कार्यतावच्छेदकानामेवापोद्धापाभ्याम्　निमित्तानुसरणेन = यत्किञ्चिन्निमित्तसद्भावमात्रेण। व्यवहारः = व्यवहारप्रसङ्गः। सामग्री तु फलेनैवानुमेया तदभावे न सद्भावमर्हतीति भावः। कल्प्यत्वादिति। अन्यथाऽदृष्टादेरपि त्यागप्रसङ्गात्, तदभावे सम्भाव्यमानापत्तेस्तद्दुष्टन्यायेनैव वारणसम्भवात्, तस्मात्सामग्रीसद्भावोऽप्यसाधारणनिमित्तस्यासद्भावेनैवोपवर्णनार्हः, अन्यथा फलमापादयतः सामग्र्यापादनमपि न दुष्करमित्यभिप्रायः। ननूक्तप्रत्यक्षस्मृतिद्वयादावनुगतव्यवहारस्यादर्शने तदसाधारणनिमित्तविरहस्य कल्पनीयत्वे आस्तामुक्तरूपाणां तत्रानिमित्तत्वमित्याशङ्क्यैवं तर्हि साक्षात्करोमीत्यनुगतबुद्धेरपि नानुमित्याद्यसाधारणकारणाजनितत्वादिघटितरूपेणोपपादनसम्भवः, एतद्विषयकत्वात्तादृशबुद्धेरित्याह तज्जनितत्वाभावो हीति। उक्तकार्यतावच्छेदकभेदस्याप्युपलक्षणमिदम्। तथात्वे = निषेधस्यापि विधिरूपप्रत्ययव्यवहाराधायकत्वे, गोत्वाद्युच्छेदप्रसङ्ग इत्यन्वयः। ननु गोभिन्नव्यावृत्त्या गोत्वबुद्धेरुपपादनेऽपि न गोत्वोच्छेदः तथासति गोभेदस्यैवासिद्ध्यापत्तेः, यदाहुः—"सिद्धश्चागौरपोह्येत गोनिषेधात्मकश्च सः। तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यते" इतीत्यत आह यावत्परिदृष्टेति। यावन्तः परिदृष्टाः = तेन तेन व्यवहर्त्रा व्यवहारप्राक्क्षणे स्मृता गोभिन्ना व्यक्तिविशेषास्तत्तद्भेदकूटवत्त्वेन, न तु गोत्वावच्छिन्नप्रतियोगिताकभेदावच्छिन्नप्रतियोगिताकभेदवत्त्वेन। नापि वस्तुगत्या गोभिन्नयावद्व्य-

शब्दानुमानोपमानजप्रमितिव्यतिरिक्तत्वे सति प्रमितित्वं प्रत्यक्षलक्षणमभिधाय यः कोऽपि न त्रपते, स प्रष्टव्यः, किं प्रत्येकमिदं लक्षणं मिलितं वा ?। नाद्यः, प्रत्येकं व्यभिचारात्। द्वितीये किं मिलितानां निषेधः ? उत निषेधानां मिलितत्वम् ?। नाद्यः, प्रत्येकमेव व्यभिचारात्, नहि प्रत्येकमनुमित्यादौ मिलिततद्रूपसम्भवः। नापि द्वितीयः, मिलितास्वनुमित्यादिषु निषेधमेलकसम्भवेऽपि प्रत्यक्षत्वानभ्युपगमात्। न बह्वाश्रयाणामुक्तनिषेधानां लक्षणत्वमपित्वेकाश्रयाणामिति चेन्न, समुदायिभेदेऽपि समुदायस्यानु-

क्तिविशेषान्यत्वेन, वस्तुतो गोत्वस्यैतादृशत्वेऽपि तद्व्यवहारात्प्राक् यावद्व्यक्तिभानस्याप्रामाणिकत्वात्तदा स्मृतयावद्व्यक्त्यन्यत्वेनैव तद्व्यवहारस्योपपादनीयत्वादिति भावः। व्यतिरेकविषयकप्रत्ययादन्योऽयं प्रत्ययो विधिजः = विषयविधया विधिजन्यः, विधिविषयक इति यावत्, व्यतिरेकेण तद्घटितेन विध्यन्तरेण वा न शक्यः समर्थयितुम्, अनुभवविरोधात्, विशेषणस्य विशेष्ये गृहीतसम्बन्धस्यैव व्यावृत्तिप्रतीत्याधायकत्वेन तु गोत्वविशिष्टप्रतीत्यनन्तरमश्वादिव्यावृत्तिप्रतीतौ न 'गां बधाने'ति देशितस्याश्वादिबन्धने प्रवृत्तिरिति भावः। अन्यापोहवादिना = गवाद्यन्ययावदुपस्थितव्यक्तिविशेषव्यावृत्तेरेव गवादिप्रत्ययविषयत्ववादिना ते = तार्किकस्य किमपराद्धं, येन तेन सह विवदस इति शेषः।

नन्वनुमित्यादिभेदस्योपलक्षणतया निवेशे तमनवगाह्यापि साक्षात्करोमीति प्रतीतेरुपपत्तौ नोक्तदोषः, तद्विपरीभूतबुद्धित्वस्य भावरूपत्वादित्यभिप्रायेणोक्तलक्षणमेवाशङ्कते शब्देति। शाब्दानुमित्युपमितिस्मृतिभिन्नत्वोपलक्षितबुद्धित्वं साक्षात्त्वमित्यर्थः। प्रमितित्वनिवेशस्याव्याप्त्यापादकत्वात्। न त्रपते इति। साक्षात्करोमीतिमतेर्बुद्धित्वमात्रावगाहित्वेऽनुमित्यादावपि तदापत्तेरतिस्फुटाया ईक्षणे त्रपैतैवेति भावः। भेदानुयोगितावच्छेदकस्यापरिचये नोक्तलक्षणं शक्यं परिचेतुम्, बुद्धित्वस्यातिप्रसक्तत्वात्, प्रत्यक्षलक्षणान्तराणां च निरस्तत्वात्, प्रकृतस्य च निरूप्यमाणत्वात्, अतएव लक्ष्यतावच्छेदकस्यापि प्रतिपादयितुमिहाशक्यत्वेन लक्षणकार्ये आश्रयासिद्धिरपि। एवं भेदप्रतियोगितावच्छेदकानामपीह दुर्निरूपत्वमेव, जातिमात्रस्य निरस्तत्वेन शाब्दत्वादेर्जातित्वस्य वक्तुमशक्यत्वात्, तत्तद्व्यक्तिभेदकूटनिवेशे चासर्वज्ञदुर्ग्रहत्वमित्यपि द्रष्टव्यम्। प्रत्येकमिति। शाब्दादिभेदेष्वेकैकभेदघटितं लक्षणचतुष्टयमित्यर्थः। मिलितं = भेदचतुष्टयघटितमेकम्। व्यभिचारादिति। शाब्दाद्येकैकभेदस्यानुमित्यादावेकैकस्मिन्सत्त्वादतिव्याप्तेरित्यर्थः। मिलितानां निषेधः = अनुमित्युपमितिशाब्दस्मृतिगतचतुष्ट्वावच्छिन्नप्रतियोगिताको भेदः। निषेधानां मिलितत्वं = अनुमित्याद्येकैकधर्मावच्छिन्नप्रतियोगिताकभेदचतुष्कवत्त्वम्। व्यभिचारादिति। घटो घटपटोभयं नेति प्रतीतेरेकदेशे व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्याङ्गीकार्यत्वेनानुमित्यादौ प्रत्येकं तादृशचतुष्ट्वावच्छिन्नप्रतियोगिताकभेदसत्त्वेनातिव्याप्तेरित्यर्थः। मिलिततद्रूपसम्भवः = तादृशचतुष्ट्वपर्याप्तिः। अवयवापर्याप्तस्य समुदायपर्याप्त्यनभ्युपगमेन साध्येकवृत्तिधर्मावच्छेदेनैवानुमित्यादौ नास्तीत्याशयेनोक्तं प्रत्येकमिति। मिलितास्वनुमित्यादिषु = अनुमित्यादिगतसमुदायत्वावच्छेदेन निषेधमेलकसम्भवेऽपि = उक्तभेदचतुष्टयकूटसत्त्वेऽपि प्रत्यक्षत्वाभावेनातिव्याप्तिः। व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशप्रतियोगिताकभेदानभ्युपगमेनासङ्गतमिदमिति चेन्न, घटपटोभयं न घट इति प्रतीतेः, अन्यथा घटो न घटपटोभयमित्यपि न स्यात्, भेदस्य पारस्परिकत्वात्। घटपटोभयत्वावच्छेदेन घटभेदो यदि घटेऽपि घटभेदप्रसङ्गेन नानुमन्येत तर्हि पटेऽपि घटाभेदप्रसङ्गेन घटपटोभयत्वावच्छेदेन घटाभेदोऽपि नानुमन्तव्य इति तृतीयैव कोटिरिति जितमनिर्वचनीयवादिना। अनुपदं दोषान्तरमुद्भावितमेव। बह्वाश्रयाणां=बह्वनुयोगिकानां लक्षणत्वं = लक्षणघटकत्वं। अपि त्वेकेति।

मित्यादिवदेकतोपचारबीजविशेषाभ्युपगम इति हि वक्ष्यते। असमुदायत्वे सतीत्यपि विवक्षितमिति चेन्न, समुदायत्वविशिष्टे एवांशतः स्वात्मनि वृत्तिविरोधभयेनासमुदाय-त्वस्यैवव्यर्थत्वेन तादृशि प्रसङ्गो दुर्वारः। ज्ञानस्यैवं विवक्षितमिति चेन्न, विशिष्टस्यापि ज्ञानस्य ज्ञानत्वादेव।

'एके'ति च किमाश्रयव्यक्त्यभेदो विवक्षितः? उताभिन्नजातीयता? उतैकोपाधि-कता? उतैकसंख्यायोगिता? उत द्वयादिसङ्ख्यायोगाभावः? आद्ये तद्विशिष्टस्याव्यापक-तादोषः व्यक्त्यात्मनोऽभेदस्य व्यावृत्तत्वात्। धर्मिणा च लक्षणस्य विशेषणेऽलक्ष्य-

तथाचोक्तभेदकूटाधिकरणताया एकानुयोगिकविशेषणताविशेषावच्छिन्नाया लक्षणे निवेशेऽनुमित्यादिगत-समुदायत्वावच्छेदेन तस्या असम्भवेन नातिव्याप्तिरिति भावः। भेदेऽपि = बहुत्वेऽपि। अनुमित्यादि-समुदाये द्व्यादिघटिते हि यथातिव्याप्तिरुद्भाविता, तत्र चैकत्वविरहो गुणसमुदायत्वप्रयुक्तो वा प्रतीत्य-भावप्रयुक्तो वा, नान्त्यः, समुदाये एकत्वप्रतीतेर्निराकृतत्वात्। आद्ये तु वैशेषिकमतेऽनुमित्यादेर्गुणत्वेऽपि तत्रैकत्वव्यवहारस्य येन बुद्धिविशेषविषयत्वेन द्वित्वाद्यभावेन वैकतोपचारबीजेनोपपादनं तस्यानुमित्यादि-समुदायेऽप्यविशेषेणाभ्युपगमात्तदुपपादनं समानम्, अन्यथा प्रत्यक्षबोधेऽप्येकत्वविरहेणोक्तलक्षणस्या-सम्भविरसम्प्रसङ्गादित्यर्थः। असमुदायत्वे सतीति। समुदायत्वं बुद्धिविशेषविषयत्वं, तदनवच्छिन्नानु-योगिकविशेषणताविशेषावच्छिन्नभेदकूटाधिकरणता लक्षणे प्रवेश्येति न समुदायत्वावच्छिन्नानुयोगिक-विशेषणताविशेषावच्छिन्नाधिकरणतामादाय समुदायेऽतिप्रसक्तिरित्यर्थः। अंशतः स्वात्मनि वृत्तीति। स्वविशिष्टवृत्तित्वप्रयुक्तस्ववृत्तीत्यर्थः। विशेषणस्य विधेयान्वयितायाः प्रागुपवर्णितत्वादिति भावः। तादृशि = समुदायत्वविशिष्टे। समुदायत्वेनोपहिते उपलक्षिते वाऽतिप्रसङ्गाभावेऽपि तद्विशिष्टे तस्या-वृत्तौ तदवच्छिन्नानुयोगिकत्वस्य विशिष्टानुयोगिकविशेषणताविशेषे विरहेण तत्रातिव्याप्तिरस्त्येवेत्यर्थः। एतेन व्यासज्यवृत्तिधर्मानवच्छिन्नानुयोगिकत्वनिवेशोऽप्यपहस्तितः, व्यासज्यवृत्तिधर्मेण विशिष्टे तदभावेन विशिष्टविशेषणताविशेषे तदनवच्छिन्नानुयोगिकत्वस्याक्षतत्वात्। बुद्धित्वं ह्युक्तलक्षणे विशेष्यतयोपा-त्तम्, न च समुदाये तदिति कुतोऽतिव्याप्तिरित्याशङ्कते ज्ञानस्येति। एवं = उक्तभेदकूटवत्वं, विशि-ष्टस्य = समुदायत्वविशिष्टस्यानुमादेः. नहि दण्डी पुरुषो न पुरुषः, नवा वृक्षा एव वनमिति नानुभव इति नैकदेशातिरेकः समुदायस्य, सम्मतश्चैतत्तार्किकाणामपि, अनुमितिगादाधर्यादौ तथाभिहितत्वा-दिति भावः।

ननु विशेषणताविशेषे तद्व्यक्तित्वाद्यवच्छिन्नानुयोगिकत्वविवक्षायां न समुदायेऽतिव्याप्तिः, तदी-यविशेषणताविशेषस्य तथात्वाभावादित्याशङ्कां पराकर्तुं विकल्पयति एकेतीति। अभेदस्तादात्म्यं तच्च तद्व्यक्तित्वमिति तद्व्यक्तित्वावच्छिन्नानुयोगिकत्वमाद्यार्थः। जातिविशेषावच्छिन्नानुयोगिकत्वमिति द्विती-यार्थः। एकधर्मावच्छिन्नानुयोगिकत्वमिति तृतीयार्थः। एकत्वावच्छिन्नानुयोगिकत्वमिति चतुर्थार्थः। द्वित्वाद्यनवच्छिन्नानुयोगिकत्वं पञ्चमार्थः। तद्विशिष्टस्य = तादृशानुयोगिकत्वघटितलक्षणस्य। तद्व्यक्तित्वं हि तद्व्यक्तेरेव, अखण्डोपाधित्वेऽपि प्रतिव्यक्तिविश्रान्तमेवेति व्यक्तिविशेषणस्यैव तस्य निवेशार्ह-तया चालक्ष्यान्तर्येनाव्याप्तिरित्यर्थः। तदाह व्यक्त्यात्मन इति। व्यावृत्तत्वात् = प्रतिव्यक्तिविश्रा-न्तत्वात्। स्वनिरूपितप्रतियोगिताश्रयनिरूपितनिरूपकत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणताश्रय-निरूपितनिरूपकत्वाभ्यामनुयोगिताविशेषविशिष्टान्यत्वेन तद्व्यक्तित्वानामनुगमाभ्युपगमेऽप्याह धर्मि-णेति। तद्व्यक्तित्वावच्छिन्नानुयोगिकत्वेन धर्मिघटितेनेत्यर्थः। लक्षणस्य = लक्षणघटितविशेषणताविशे-

धर्मत्वं धर्मस्य स्यात्, स्वस्यैव स्वधर्मत्वानुपपत्तेः। आश्रयाभेदस्योपलक्षणत्वे प्रागुक्तदोषः। द्वितीये तदेवाभिन्नजातीयत्वं लक्षणमस्तु, अवश्यन्तया प्राथम्येन प्रतीयमानत्वात्। न तृतीयः, परोक्षप्रमितित्वस्यानुमित्यादिषु मिलितास्वपि भावात्। नापि चतुर्थः, वैशेषिकपक्षे गुणतया तदभावात्। भावे वाऽनुमित्यादित्रयवृत्तीनां त्रयाणामप्यभावानामेकत्वसङ्ख्यासामानाधिकरण्यसम्भवात्, मिलितानामेकसमुदायापेक्षया तथात्वात्। नापि पञ्चमः, वैशेषिकमतानुसारेणानुमित्यादित्रयेऽपि तदभावस्य तुल्यत्वात्। अतदनुसारेण प्रत्यक्षव्यक्तिष्वपि द्व्यादिसङ्ख्यायोगात्।

---

पस्य। धर्मस्य = प्रकृतलक्षणस्य। अयमभावः—तद्व्यक्तित्वावच्छिन्नानुयोगिकत्वविशिष्टविशेषणताविशेषेण तादृशभेदाधिकरणता प्रत्यक्षव्यक्तौ तदा स्यात्, यदि तादृशभेदप्रतियोगिकतद्व्यक्तिवृत्तिविशेषणताविशेषे तद्व्यक्तित्वावच्छिन्नानुयोगिकत्ववैशिष्ट्यं स्यात्, नचैतत्तद्व्यक्तौ तद्व्यक्तित्वस्यावृत्तित्वे सम्भवति, नच तद्व्यक्तिरूपं तद्व्यक्तित्वं तद्व्यक्तौ वर्तितुमुत्सहते, पृथगात्माश्रयो वाऽसम्भवो वा। यदि च तद्व्यक्तित्वमखण्डोपाधिः, तदापि तद्व्यक्तित्वविशिष्टे तद्व्यक्तित्वस्योक्तरीत्या वर्तनानुपपत्त्या तद्व्यक्तित्वविशिष्टे लक्षणसङ्गमनासम्भव एव। अन्यथा समुदायीयविशेषणताविशेषानुयोगिता समुदायत्वेनैवावच्छिद्यते न तु समुदायगततद्व्यक्तित्वेनेत्यत्र विनिगमकदौर्लभ्यादनुमित्यादिसमुदायेऽतिप्रसङ्गात्। किञ्च तादृशानुयोगित्वविशिष्टविशेषणताविशेषो यदि तद्व्यक्तिवृत्तिः स्यात्, तदैव तेन सम्बन्धेन तादृशभेदा अपि तद्व्यक्तौ वर्तेरन्, नचैवं सम्भवति, तथा सति तद्व्यक्तिवृत्तित्वविशिष्टस्य तद्व्यक्तिवृत्तित्वे पर्यवसानेन तादृशवृत्तित्वस्य स्वावच्छिन्नत्वापात इति। ननु तद्व्यक्तित्वावच्छिन्नानुयोगिकत्वोपलक्षितविशेषणताविशेषस्य तद्व्यक्तिवृत्तित्वसम्भवेन नायं दोषः, समवायस्यैकत्वपक्षे घटत्वावच्छिन्नानुयोगिकत्वोपलक्षितसमवायस्य घटत्वाभाववद्गतत्वमपि स्वीक्रियत एवेत्यत आह आश्रयाभेदस्येति। तद्व्यक्तित्वावच्छिन्नानुयोगिकत्वस्येत्यर्थः। प्रागिति। अनुमित्यादिसमुदायेऽपि तादृशानुयोगिकत्वोपलक्षितविशेषणताविशेषस्य वृत्तेस्तेन सम्बन्धेन भेदानामपि तद्वृत्तित्वसम्भवेनातिव्याप्तिः, समुदायीयविशेषणताविशेषानुयोगितायाः अपि तद्व्यक्तित्वावच्छिन्नत्वे तु सुतरामिति भावः। अभिन्नजातीयत्वं = जातिविशेषावच्छिन्नत्वं प्रतीयमानत्वादिति। वस्तुतस्तु जातिः सा निरस्तैवेति। प्रत्यक्षत्वविशिष्टे चाव्याप्तिरुक्तरीत्यैव द्रष्टव्या। परोक्षप्रमितित्वस्येति। समुदायत्वादेरप्युपलक्षणमिदम्। नचैकमात्रवृत्तिधर्मावच्छिन्नानुयोगिकत्वं विवक्षितमिति वाच्यम्, तादृशधर्मविशिष्टे प्रत्यक्षे तस्यावृत्तौ प्रत्यक्षनिष्ठविशेषणताविशेषेऽपि तदवच्छिन्नानुयोगिकत्वासम्भवात्तत्राव्याप्तेः। सामान्यत एकान्यस्याप्रसिद्ध्या मात्रार्थासङ्गतेश्च। तद्व्यक्तित्वस्यैव विवक्षितत्वे तूक्तम्। गुणतया प्रत्यक्षस्य तदभावात् = एकत्वासमवायित्वात्, गुणे गुणाभ्युपगमेऽनवस्थानात्। तथाच प्रत्यक्षगतविशेषणतायामपि नैकत्वावच्छिन्नानुयोगिकत्वसम्भव इत्यसम्भवः। प्रतीतिबलात्कचिद्गुणेऽपि गुणान्तराभ्युपगमे न काचित्क्षतिः, बुद्धिविशेषविषयत्वसाधारणस्य चैकत्वस्य निवेश आद्रियतामित्याशङ्क्याह भावे इति। प्रत्यक्षे एकत्वस्य सद्भावोपगमे इत्यर्थः। यथाश्रुते स्मृतिभेदस्यानिवेशितत्वादुक्तं त्रयेति। समुदायेत्यर्थः। एवमग्रेऽपि। एकत्वसङ्ख्यासामानाधिकरण्येति। एकत्वावच्छिन्नानुयोगिकविशेषणताविशेषावच्छिन्नवृत्तित्वेत्यर्थः। स्यादेवं यद्यनुमित्यादित्रये स्यादेकत्वम्, नचैवमित्याशङ्क्याह मिलितानामिति। अनुमित्यादीनामिति शेषः। एकसमुदायापेक्षया = एकः समुदाय इति धीविषयतया, तथात्वात् = एकत्वाश्रयत्वात् संविदेव हि भगवती वस्तूपगमे शरणमिति भावः। तदभावस्य = द्वित्वाद्यभावस्य। तुल्यत्वादिति। गुणसमुदायस्यापि गुणत्वादिति भावः। तथाच

तथापि नैकस्यां प्रत्यक्षव्यक्तौ द्व्यादिसङ्ख्यापरिसमाप्तिः, द्व्यादिसङ्ख्यापरिसमाप्त्यभावश्च तदभावशब्देन विवक्षित इति चेन्न, का हि परिसमाप्तिर्यैकस्यां प्रत्यक्षव्यक्तौ

द्वित्वाद्यनवच्छिन्नानुयोगिकविशेषणताविशेषेण प्रत्यक्षे इवानुमित्यादिसमुदायेऽपि तादृशभेदानां सत्त्वयाऽतिव्याप्तिरिति । अतदनुसारेण = वैशेषिकमताननुसारेण । उक्तरीत्या गुणेऽपि गुणाङ्गीकारे इति यावत् । द्व्यादीति । द्वित्वादीत्यर्थः । एवमग्रेऽपि । योगात् = समवायात्, व्यक्त्यन्तरमादायैकस्यामपि व्यक्तौ द्वित्वसमवायाभ्युपगमः, अन्यथा प्रत्यक्षं द्वित्ववदिति प्रतीत्यनापत्तेरिति द्वित्वाद्यनवच्छिन्नानुयोगिकत्वं प्रत्यक्षवृत्तौ विशेषणताविशेषे कथं प्रत्येतव्यम्, नच प्रत्यक्षमनुमित्यादिभेदकूटवदिति प्रतीत्या निर्वाहः, द्वित्ववत्प्रत्यक्षमनुमित्यादिभेदकूटवदिति प्रतीतेरपि सत्त्वे द्वित्वानवच्छिन्नानुयोगिकत्वस्य सङ्गमासम्भवादिति भावः ।

तथापि = एकस्यां प्रत्यक्षव्यक्तौ द्वित्वादिसमवायेऽपि । परिसमाप्तिः = पर्याप्तिः द्व्यादीत्यादि । पर्याप्तिसम्बन्धावच्छिन्नद्वित्वादिनिष्ठावच्छेदकतानिरूपकानुयोगिताकत्वं द्व्यादिसङ्ख्यायोगाभावशब्देन विवक्षितमित्यर्थः । तथा च द्वित्ववत्प्रत्यक्षमनुमित्यादिभेदकूटवदिति प्रतीत्या समवायसम्बन्धावच्छिन्नद्वित्वनिष्ठावच्छेदकताकानुयोगिताकत्वस्य सत्त्वेऽपि न क्षतिः । द्वे प्रत्यक्षे अनुमित्यादिभेदकूटवती इति प्रतीतिमादाय तु न दोषः, एकैकव्यक्तिमादाय लक्षणसमन्वयात् । का हीति । अयम्भावः—अयमेकः, इमौ द्वाविति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः पर्याप्तिः, अन्यथा घटो द्वित्ववानिति प्रतीतेरिव घटौ द्वाविति प्रतीतेरपि प्रमात्वापातः, आकाशाविति शाब्दमतेश्चेति तार्किकमतं तावदयुक्तम्, एवं न स्वीयमित्यनुभवबाधेन सम्बन्धिस्वरूपतायाः सम्बन्धेऽप्रामाणिकत्वात् । द्वित्वादिस्वरूपस्य च परिवर्तनासम्भवेन तदात्मकसम्बन्धस्य घटौ द्वावित्यादिधियः प्रमात्ववारणेऽसामर्थ्याच्च । उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टद्वित्वादेरतिरिक्ततोपगमे च सम्बन्धानतिरेकितावाचोयुक्तेरसम्भवात् । अतिरिक्तेऽपि तत्र द्वित्वादिप्रतियोगिकताया अनुभवपराहतत्वेन सम्बन्धतोपगमस्य श्रद्धामात्रविलासत्वाच्च, तत्र सम्बन्धत्वसिद्धिं विना सम्बन्धत्वेन रूपेण तस्य द्वित्वादिप्रतियोगिकत्वमित्यस्य बालालापायमानत्वाच्च । अतिरिक्तत्वेऽपि लक्षणनिरूपणमन्तरेणानिस्ताराच्च, प्रतीत्या निरूपणस्यान्योन्याश्रयग्रस्तत्वाच्च । अवयवापर्याप्तस्य समुदायेऽपर्याप्तत्वेन घटौ द्वाविति प्रतीतेः प्रमात्वस्य दुर्वारत्वाच्च, अवयवे समुदायवृत्तिधर्मावच्छेदेनैव पर्याप्तेरभ्युपगमेऽपि घटवृत्तित्वविशिष्टं द्वित्वं घटे पर्याप्तमिति प्रतीतेरनपलपनीयत्वेन प्रत्यक्षवृत्तित्वविशिष्टद्वित्वस्य पर्याप्तिमादाय प्रकृताव्याप्तेरनिवार्यत्वाच्च । इतरवारकपर्याप्तिनिवेशेऽनवस्थानाच्च । द्वित्वाद्यवच्छेदेन द्वित्वादिपर्याप्त्यभ्युपगमे आत्माश्रयस्य दुरुद्धरत्वाच्च । एतेन—एकगोदानेन सहस्रगोदानजन्यफलाजननेन तत्कारणतावच्छेदकतयातिरिक्तपर्याप्तिसिद्धिः, अन्यथा प्रत्येकगोदानवृत्तिधर्मसहस्रस्य कारणतावच्छेदकत्वकल्पनायां गौरवादिति—परास्तम्, अलक्षिते वस्तुनि प्रमाणस्याकिञ्चित्करत्वात् । एतेन—आकाशावित्यादिशाब्दबोधस्य प्रमात्वमुद्देश्यतावच्छेदकव्याप्यत्वविशिष्टसमवायस्य सङ्ख्यासंसर्गतामुपगम्य वारणीयमिति स एव पर्याप्तिः, नच घटपटाविति प्रतीत्या घटादिनिष्ठद्वित्वादिसमवायस्य पटादावपि सत्त्वेन घटत्वव्याप्ते द्वित्वादिसमवायेऽसत्त्वाद् घटाविति वाक्यस्याप्रामाण्यप्रसङ्ग इति—वाच्यम्, समवायनानात्वोपगमादिति—निरस्तम्, तादृशसमवायस्यापि पर्याप्तिपदाभिषिक्तस्य यथोक्तदोषसंस्पर्शित्वात् । आकाशवृत्तित्वविशिष्टसमवायस्याकाशत्वव्याप्तत्वेनोक्तबोधे प्रमात्वातिप्रसङ्गतादवस्थ्याच्च । सङ्ख्यासंसर्गताया अपि पर्याप्तिनिवेशादियत्नान्तरानुसृतौ चानवस्थादिनैवानिर्वचनीयताचरणचुम्बितायाः सम्पादनीयत्वादिति । एवं स्थिते दूषणान्तराण्यभिधातुमेवोत्थापयति

नास्तीत्युच्यते । तत्रैव वृत्तिर्द्व्यादेः परिसमाप्तिः, सैकस्यां व्यक्तौ नास्तीति चेन्न, एवमेकत्वस्यापि न क्वचित्परिसमाप्तिः स्यात्, नहि तस्य तत्रैव वृत्तिरन्यस्यैकत्वाभावप्रसङ्गात्, अन एकत्वसङ्ख्यावत्यामेव व्यक्तौ द्व्यादिपरिसमाप्तिरित्यविशेष एव । एकव्यक्तिगतैकत्वसङ्ख्याव्यक्तिर्नान्यत्रेति चेन्न, सत्ताव्यक्तेरप्येवम्भावप्रसङ्गात्, अननुगतत्वापत्तेश्च । सत्तैकैव जातिरूपा, एकत्वं तु प्रतिव्यक्तिभिन्नं गुणपदार्थ इति चेन्नूनं वैशेषिकैर्विप्रलब्धोऽसि, कथमन्यथा सदेकप्रत्यययोरनुभवव्यवहारविशेषमपश्यन्नपि कानिचित्कानिचिदसम्बद्धान्यक्षराणि प्रलपसि । सत्तैकत्वयोः परापरत्वानुपपत्तेर्नैवं स्यादिति चेन्न, साम्यात्, जातिपरापरत्वध्रौव्यमेव च क्वाप्येकस्य न्यूनवृत्तित्वे प्रमाणं स्यात् । क्व तथेति

तत्रैवेति । अन्ययोगव्यवच्छेदबलात्समवायेन तद्धर्मव्याप्तिरेव तद्धर्मावच्छिन्नानुयोगिका सङ्ख्याप्रतियोगिकपर्याप्तिरित्यर्थलाभः । न क्वचिदित्यादि । द्वित्वादाविव घटत्वतद्व्यक्तित्वाद्यवच्छिन्नपर्याप्तत्वमेकत्वे न स्यात्, अनुगतप्रतीतिबलात्तस्यैकत्वव्यवस्थितौ पटादावपि घटादिगतैकत्वस्य सत्त्वेन घटत्वाव्याप्तत्वात्, एकत्वाभाववतोऽप्रसिद्धौ चैकत्वव्याप्तत्वस्याप्यभाव इति नैकत्वावच्छिन्नपर्याप्तत्वमपि तस्येत्यर्थः । अतः = निरुक्तरूपां पर्याप्तिमादाय प्रत्यवस्थानासम्भवात् । अविशेषः = अव्याहितादवस्थ्यं । नान्यत्रेति । तथाच तद्व्यक्तित्वादिव्याप्यत्वस्यैकत्वे सम्भवेन तदवच्छिन्नपर्याप्तत्वसम्भवेनोक्तलक्षणसामञ्जस्यमिति भावः । एवम्भावप्रसङ्गात् = नानात्वप्रसङ्गात्, इष्टापत्तावाह अननुगतेति । सत्त्वैकत्वाकारप्रतीत्योरनुगतत्वस्यापलापापत्तेरित्यर्थः । सदेकप्रत्यययोः = सत्त्वप्रकारकैकत्वप्रकारकप्रत्यययोः । विषयत्वं सप्तम्यर्थोऽनुभवव्यवहारोभयान्वयि । असम्बद्धानि = अनुपपन्नार्थानि । अक्षराणि = पदानि । प्रलपसीति । गुणादावपि प्रतीयमानत्वेनैकत्वस्य गुणत्वं तावद्वक्तुमशक्यम्, जात्यादावपि प्रतीयमानत्वेन तु पदार्थान्तरत्वमेव तस्यास्तु, द्रव्यादित्रिकवृत्तिरेव जातिरितिपरिभाषाऽनादरे च जातित्वमेव तस्य व्यवह्रियताम् । गुणान्तरस्वभाववैलक्षण्येऽपि गुणत्वव्यवहारस्तु परिभाषामात्रमिति भावः । अतएव "संख्या च पदार्थान्तरं नतु गुणः, गुणादिष्वपि तद्वत्त्वप्रत्ययात् । नचासौ भ्रमः, बाधकाभावात् । एकार्थसमवायप्रत्यासत्त्या तथाप्रत्यय इति चेन्न, विलक्षणाभ्यां समवायैकार्थसमवायाभ्यामविलक्षणायास्तद्वत्ताप्रतीतेरयोगात् । घटत्वादौ चैकार्थसमवायादेकत्वप्रत्ययवद् द्वित्वाद्येकार्थसमवायाद् द्वित्वादिप्रत्ययप्रसङ्गः रूपत्वादौ च न तत्सम्भव" इति शिरोमणिभिरभिहितं पदार्थतत्त्वनिरूपणे इति ध्येयम् । तत्सम्भवः = एकत्वविशिष्टार्थसमवायसम्भवः । रूपे भवतैकत्वस्यानङ्गीकारादिति भावः । नैवं स्यात् = एकत्वस्य जातित्वं न स्यात् । परापरत्वेति । सत्तावदेकत्वस्य न द्रव्यादित्रयमात्रवृत्तित्वम्, तुल्यव्यक्तिकत्वेन तज्जातित्वस्य शङ्काया एवासम्भवात्, जात्यादावपि तत्प्रतीतेश्च, एवञ्च तज्जातिसमानाधिकरणतदभावसमानाधिकरणजातेस्तज्जातिव्यापकत्वमिति नियमस्यान्यत्र क्लृप्तत्वात्, सत्ताजातिसमानाधिकरणस्य तदभावसमानाधिकरणस्य चैकत्वस्य तद्व्यापकत्वं वाच्यम्, नचैतत्सम्भवति, सत्ताया एकत्वाभाववत्यप्येकत्वे सद्भावादित्यर्थः । साम्यादिति । द्वयोरेवाजातित्वस्य जातित्वस्य वाऽभ्युपेयत्वादित्यर्थः । यथोक्तरीत्यैकत्वस्य न जातित्वं तथा द्रव्यादावेकत्वसमानाधिकरणाया एकत्वान्तर्भावेण च तदभावसमानाधिकरणायाः सत्ताया अपि जात्यादौ व्यभिचारेणैकत्वव्यापकत्वाभावाज्जातित्वं न स्यात्, सत्त्वप्रत्ययस्याप्येकत्वप्रत्ययवत्सप्तपदार्थीसाधारण्यात्तु नोभयोरपि पारिभाषिकं जातित्वम्, अविलक्षणाकारसदाकारप्रतीतेर्विलक्षणसम्बन्धेनानुपपादनीयत्वात् । भावत्वमेव सत्ता नतु द्रव्यादिकवृत्तिर्जातिरित्यपि न युक्तम्, अभावस्यापि सत्त्वप्रत्ययादिति । नन्वेवमजातित्वस्योभयोरभ्युपगमसम्भवेऽपि जातित्वपि न युक्तम्, अभावस्यापि सत्त्वप्रत्ययादिति ।

चेन्न, शैलेऽनलस्यानुमायां च हस्तचितन्त्यादौ तदंश इत्यनिश्चयवदद्दोपत्त्वात्। अथास्तु मा वाऽऽसीदेकत्वमनुगतम्, किमनेनात्र निरूपितेन; द्वित्वादिर्यत्र न समाप्यते. अभिहिताभावत्रयश्चास्ति तत्प्रत्यक्षमिति। मैवम्, अनुमित्यादित्रयेऽपि न त्रित्वं परिसमाप्तम्, एवं सत्यन्यानि त्रीणि न स्युः। अन्या सा त्रित्वव्यक्तिर्यान्यत्रेति चेन्न, त्रित्वव्यक्तेः कस्याश्चिदनुमित्यादित्रये परिसमाप्त्यभावात्। काचिदपि त्रित्वव्यक्तिर्यत्र न समाप्यत

साभ्युपेयत्वसाम्यं कथमुक्तम्, उक्तनियमस्य प्रामाणिकस्य जागरूकत्वादित्यत आह जातिपरापरव्यध्रौव्यमिति। उक्तनियम इत्यर्थः। अनुगतप्रतीतिबलादुभयोरेव जातितया रक्षणीयत्वे त्वित्यर्थकश्चकारः। एवं हि द्वयोः सप्तपदार्थसाधारण्यं नोपेयम्, तुल्यव्यक्तिकत्वापत्तेः। किन्तु जन्यसत्त्वावच्छिन्नं प्रति द्रव्यत्वेन कारणतया कार्यतावच्छेदकघटकतया सिद्धायाः सत्ताया भवन्मतानुसारेण द्रव्यादित्रिकवृत्तित्वमेव, तथा चैकत्वं पक्षीकृत्य सत्ताव्यापकत्वं सत्ताजातिसमानाधिकरणतदभावसमानाधिकरणजातित्वेनानुमेयम्। सत्ताभावसमानाधिकरणत्वस्य जातावप्रसिध्या हेत्वप्रसिद्धिस्तु नाशङ्कनीया, उक्तार्थकचकारेणैव दत्तोत्तरत्वात्। व्याप्येकस्य न्यूनवृत्तित्वे = किञ्चिदन्तर्भावेणैकस्यापराभाववद्वृत्तित्वे, एकस्यापरव्यापकत्वे इति यावत्। प्रमाणं = प्रमाणतावच्छेदकं, व्याप्तिज्ञानस्यानुमितिकरणत्वात्। एवञ्चैकत्वे सत्ताव्यापकत्वस्य व्यभिचारेण निरस्तत्वेन कथं व्यापकत्वनिर्वाह इत्यभिप्रायेण 'कथं तथे'त्येव शङ्काया औचित्येऽपि 'क्व तथे'त्याशङ्का भ्रान्तिमूला, यक्षानुरूपो बलिरिति न्यायेन चोत्तरग्रन्थः। यथाश्रुतं त्वसङ्गतमिति सूक्ष्ममीक्षणीयम्। तदंशे = शैलांशे, पर्वते हस्तप्रदेशे वा वह्निर्वितस्तिप्रदेशे वेति संशयो नानुमाने त्रुटिमाधत्ते। व्याप्तिपक्षधर्मतासामर्थ्यविषयस्य तेन निश्चायनाद्यावदनुमाने संशायकतेति भावः। अनवस्थापेक्षयाऽन्याश्रयस्य लाघवेन घटाभावे घटो नास्तीत्यादौ तार्किकैरभ्युपगतत्वेनैकत्वे स्वस्य वृत्त्यभ्युपगमे सत्ताव्यापकत्वस्य तत्र निर्वाहसम्भव इति तु द्रष्टव्यम्। वस्तुतस्तूक्तरीत्या नोभयोरपि जातित्वम्, किन्त्वेकत्वं पदार्थान्तरं. सत्ता तु ब्रह्मरूपा. 'सा जातिःसा महासत्ता तामाहुस्त्वतलादय' इत्युक्तेः। तादात्म्येन जन्यभावसम्बन्धित्वविशिष्टायाश्चास्या एव द्रव्यकार्यतावच्छेदकत्वम्, भावत्वञ्चाखण्डम्, एतस्याश्चावश्यकल्पनीयत्वे द्रव्यादित्रिकमात्रगतसत्ताकल्पने गौरवमेवेत्यवधेयम्। मेति। नायं ङित्, माङि लुङापत्तेः। आसीदिति च्छेदः, ङिद्वाङिदपि मा भूतत्वप्रतीतिं रुणद्धीति भावः। किमनेनेति। एकत्वस्यानुगतस्य वाऽननुगतस्य वा पर्याप्तिर्नोपेया. एकत्वमेकस्मिन्नेव पर्याप्तमिति प्रतीतेर्द्वित्वादिस्थले इव समवायावगाहितोपगमेऽतिप्रसञ्जकत्वस्यासम्भवादिति नोक्तपर्याप्तिलक्षणे दोष इति हृदयम्। द्वित्वादिरिति। व्यासज्यवृत्तित्वेनैवैकत्वानवच्छिन्नानुयोगिकपर्याप्तिप्रतियोगित्वरूपेण निवेश उचितः, द्वित्वादेरनन्तत्वात्। तथा च व्यासज्यवृत्तिधर्मानवच्छिन्नानुयोगिकविशेषणताविशेषेणानुमित्यादिभेदसमुदायस्याधिकरणता विवक्षिता, अवच्छेदकता च पर्याप्तिसम्बन्धावच्छिन्नेति भावः। एवं सति = अनुमित्यादिगतसमुदायत्वव्याप्यत्वस्य त्रित्वे सत्त्वोपगमे। स्युरिति। एतच्च व्यासज्यवृत्तिधर्मान्तरेऽपि द्रष्टव्यम्, तथाचानुमित्यादिसमुदायीयविशेषणताऽपि न पर्याप्तिसम्बन्धावच्छिन्नव्यासज्यवृत्तिधर्मनिष्ठावच्छेदकताकानुयोगितावेति तादृशसमुदायेऽतिव्याप्तिरिति भावः। अन्येति। तथा चानुमित्यादिगतो व्यासज्यवृत्तिधर्मस्तादृशसमुदायत्वव्याप्य एवेति नोक्तदोषः। कस्याश्चित् = घटादिगतायाः। अत्रैकत्वपत्त्वादेरनुगतत्वसमर्थनाय न चेष्टितम्, व्यासज्यवृत्तेर्जातितया असम्भवद्युक्तिकत्वात्, यावदाश्रयप्रत्यक्षं विनाऽप्रत्यक्षत्वात्, अपेक्षाबुद्ध्यायत्ततया चानुगताकारसिकधियोऽभावात्। व्यासज्यवृत्तिधर्मानवच्छिन्नत्वमित्यत्र सामान्याभावविवक्षायां न विशेषाभावमादायातिप्रसङ्ग इत्याह काचिदपीति। अत्र सामा-

इति चेन्न, अव्यापकत्वात्, प्रत्यक्षत्वस्य त्रित्वव्यक्तेश्चावश्यं सामानाधिकरण्यस्य वैशेषिकमतव्युत्थितेन भवताभ्युपगन्तव्यत्वात्, अन्यथा प्रत्यक्षव्यक्तयस्तिस्रो न स्युः, तदेव हि त्रिरित्यभिधीयते यत्र त्रित्वं परिसमाप्यते।

किञ्च, तथापि स एवाव्यापकतादोषः, त्रित्वेनावच्छिन्नास्वनुमित्यादिव्यक्तिषु त्वदभिमतमभावत्रयमस्तीति तत्र प्रत्यक्षलक्षणं गतमित्यतिव्याप्तिरुक्ता, तद्व्यावर्तनाय भवताऽभिधीयते काचिदपि त्रित्वव्यक्तिर्यत्र न परिसमाप्यत इति, नन्वेवमुक्तेऽसावतिव्याप्तिर्निवर्तते तत्राप्युक्तविशेषणस्य विद्यमानत्वात्, नहि त्रित्वावच्छिन्ने तस्मिंस्त्रित्वव्यक्तिः काचित्समाप्यते, त्रित्वलक्षणैकोपाध्यवच्छिन्ने तस्मिंस्त्रित्वव्यक्त्यन्तरं भवदप्याश्रयान्तरमादाय वर्तते, नतु तत्रैव परिसमाप्यते, यत्र चोक्तमुपाधिभूतं त्रित्वम्. तेषु यदि त्रित्वसमाप्तिर्धर्मिषु दृश्यते, तदा तद्दर्शनेन तत्र धर्मिमात्रे लक्षणाव्यावृत्तिःसिद्ध्येन्नतु त्रित्वविशिष्टे धर्मिणि, तस्मादतिव्यापकत्वं तदवस्थमेव। अभावत्रयं च त्रित्वोपाध्यवच्छेदेन समुदिततामुपगतवति विशिष्टे धर्मिणि वर्तते, नत्वविशिष्टे, प्रत्येकमभावत्रयावस्थानस्य तेषु वक्तुमशक्यत्वात्।

न्याभावविवक्षायामपि व्यधिकरणधर्मावच्छिन्नाभावमुभयाभावादिकञ्चादायातिप्रसङ्ग सुकरः, पर्याप्त्यादिनिवेशे चानवस्थानमिति स्मृत्यन्यत्वखण्डनोक्तरीत्याऽनुसन्धेयम्। दूषणान्तरं त्वाह अव्यापकत्वादित्यादिना। व्युत्थितेन = अनङ्गीकर्त्रा, गुणे गुणाङ्गीकर्त्रेति भावः। त्रिरिति स्वरूपपरतायामेकवचनम्. त्रिरितिसुबन्तबोध्यत्रिशब्देनाभिधीयते इत्यर्थः। परिसमाप्यते इति। अन्यथैकस्त्रय इति व्यवहारापत्तेरिति। तथा च त्रित्वादिविशिष्टप्रत्यक्षेऽव्याप्तिः स्थिरा, तन्निष्ठानुमित्यादिभेदविशेषणतायास्त्रित्वावच्छिन्नानुयोगिकत्वसम्भवात्, त्रित्वादिविशिष्टप्रत्यक्षस्यापि प्रत्यक्षत्वादेव च लक्ष्यताऽवश्यम्भाव इति भावः। ननु प्रत्येकं प्रत्यक्षमादायैव लक्षणसमन्वयसम्भवः, प्रत्यक्षत्वं तु न व्यासज्यवृत्तिः, उत्तरार्थैकत्ववत्तत्पर्याप्तेरनभ्युपगमनीयत्वादिति तदवच्छिन्नानुयोगिकस्य व्यासज्यवृत्तिधर्मानवच्छिन्नानुयोगिकत्वमक्षतमेव, किञ्च त्रित्वादिविशिष्टप्रत्यक्षेऽपि विशेषणतायास्त्रित्वावच्छिन्नानुयोगिकत्वानभ्युपगमेऽपि न काचित्क्षतिः, नह्यनुमित्यादाविव प्रत्येकं न तत्रानुमित्यादिभेदसमुदायसद्भाव इत्यस्वरसादाह किञ्चेति। अतिव्याप्तिमुपपादयितुं पूर्वोक्तमनुवदति त्रित्वेनेत्यादिना। नहीति। अंशत आत्माश्रयभयात्त्रित्वादिविशिष्टे त्रित्वादिकमिति त्रित्वादिविशिष्टनिष्ठविशेषणतायास्त्रित्वाद्यनवच्छिन्नानुयोगिकत्वमक्षतमेवेति विशिष्टेऽतिव्याप्तिः। ननु त्रित्वादिविशिष्टे त्रित्वाद्यन्तरोपगमे आत्माश्रयाभावेनोक्तविशेषणतायास्त्रित्वावच्छिन्नानुयोगिकत्वसम्भव इत्यत आह त्रित्वलक्षणेति। आश्रयान्तरमादायेति। अनुमित्यादित्रयसमुदायो घटपटौ चेतित्रयमिति प्रतीतेर्घटादिसहिते एव समुदाये त्रित्वान्तरम्, तच्च नानुमित्यादित्रयमात्रगतमसमुदायव्याप्यमिति न तदवच्छिन्नपर्याप्तमित्यर्थः। ननु प्रथमं त्रित्वं हि नानुमितित्वादिप्रत्येकधर्मावच्छेदेन वर्तते, अतिप्रसङ्गात्, किन्तु त्रित्वावच्छेदेनैव, अवच्छेदकता च त्रित्वस्योपलक्षणतया न तु विशेषणतयेति नात्माश्रयः, एवञ्च व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिकत्वं विशेषणतायामागतमेवेत्याशङ्क्य त्रित्वोपलक्षितेऽनुमित्यादावतिव्याप्तिरियं वारिता, नच तत्र तत्प्रसक्तिः, तत्रानुमित्यादिभेदानामभावात्, त्रित्वविशिष्टे त्वतिव्याप्तिः प्रसज्यते एवेत्याह यत्रेति। अनुमित्यादिष्वित्यर्थः। धर्मिषु = त्रित्वोपलक्षितेषु। नो दर्शे।

एवं विशेषणीभूतज्ञानान्तराभेदेन समुदायेऽतिव्याप्तिवारणमाशङ्क्य विशिष्टस्यापि ज्ञानस्य ज्ञानत्वादे-

अथ मन्यसे—तादृशस्य विशिष्टस्य प्रमितित्वेनैव व्यवच्छेदः, तद्ध्यभावत्रयवत्त्वं विशेषणमाश्रय कोटावन्तर्भाव्य तासु व्यक्तिषु प्रमितित्वं वर्तते, किन्तु तेषां धर्मिणां स्वरूपमात्रे, उक्ताभावत्रयं प्रमितित्वञ्चेत्येतद्यत्रास्ति तत्प्रत्यक्षमिति हि ब्रूम इति । न, भवतापि भिन्नभिन्नधर्मावच्छिन्नस्यैव धर्मिणः प्रमितित्वमभावत्रयवत्त्वञ्चावश्यमभ्युपगन्तव्यम्, तथाहि—यदि प्रमितित्वस्य क्वाचित्कत्वे नियामकं नोच्यते तदा सर्वा प्रमितिः स्यात्, न वा काचिदपि ।

> सर्वत्र सत्ताऽसत्ता वा नियमेऽन्यानपेक्षया ।
> नियामकाद्धि भावानां क्वाचित्कत्वस्य सम्भवः ॥ ४२ ॥

तन्नियामकमाश्रये विशेषणीभूतं वक्तव्यमुपलक्षणीभूतं वा ?. आद्ये यदेव प्रमितित्वस्याश्रये विशेषणं तदेव यद्यभावत्रयस्यापि, तदा त्रित्वावच्छिन्नेऽनुमित्यादावभावत्रयस्य दर्शितत्वात्तत्र प्रमितित्वेनापि त्रित्वावच्छिन्ने भवितव्यमिति प्रमितित्वान्न तद्व्यवच्छेदः । अथान्यावच्छिन्ने प्रमितित्वमन्यधर्मावच्छिन्ने चाभावत्रयसम्बन्धः, तदा नास्ति त्वत्पक्षेऽपि प्रमितित्वस्यैकधर्मविशिष्टाश्रयत्वलक्षणमेकाश्रयत्वम् । विशिष्टेऽपि धर्मिण्या-

त्यमिधाय पर्यहार्षीत् । अधुना तु प्रकारान्तरेण तद्बलेनैवातिव्याप्तिवारणमाशङ्कते अथेत्यादिना । प्रमितित्वेन = ज्ञानत्वेन । एवं परतोऽपि । त्रित्वं विशेषणमित्यादि त्रित्वमधिकरणतावच्छेदकीकृत्येत्यर्थकम् । स्वरूपमात्रे = अनुमितित्वाद्यवच्छेदेन । यत्र = यदवच्छेदेन । तत् = तदवच्छिन्नम् । स्वनिष्ठनिरूपकतानिरूपिताधिकरणतावच्छेदकावच्छिन्नाधिकरणतानिरूपितनिरूपकत्वसम्बन्धेनानुमित्यादिभेदकूटविशिष्टं ज्ञानत्वं प्रत्यक्षत्वमिति यावत् । यद्यपि त्रित्वावच्छिन्नेऽनुमित्यादौ ज्ञानत्वं न शक्यमपाकर्तुं तथापि तदधिकरणता न त्रित्वेनावच्छिद्यते, अवच्छेदकता ह्यत्र विलक्षणा प्रविष्टेत्यग्रे व्यक्तीभविष्यति । अवश्यमिति । तथात्वासम्भव इति भावः । क्वाचित्कत्वे = किञ्चिद्वस्त्ववृत्तित्वे सति किञ्चिद्वस्तुवृत्तित्वे । नियामकं = प्रयोजकं । स्यादिति । ज्ञानत्वं यदि नियामकरहितं स्यात् क्वाचित्कं न स्यादित्यापादनीयम्. क्वाचित्कत्वाभावस्तु विशेषणस्य विशेष्यस्य वाऽभावेन प्रयुक्तः सार्वत्रिकत्वेऽलीकत्वे वा पर्यवस्यति । तत्रान्यथाख्यातिमते आद्ये, असत्ख्यातिमते तु द्वितीये, मतान्तरे त्वन्यतरस्मिन् । असार्वत्रिकत्वस्य पक्षे विशेषणे तु सर्वमते एवालीकत्वे पर्यवसानम् । यद्यप्यवृत्तिपदार्थाभ्युपगन्तृमतेऽवृत्तित्वेऽपि पर्यवसानसम्भवस्तथापि तस्यापि प्रकृते आपादने इष्टप्रसञ्जनासम्भवेन विपर्ययपर्यवसानेन प्रयोज्यत्वसिद्धिसम्भवान्नार्थान्तरमिति । वेति । प्रसज्येतेति शेषः । नियमेऽन्यानपेक्षया = क्वाचित्कत्वनियमनार्थं कस्यचिदनपेक्षया । यदेवेत्यादि । यदेवाभावत्रयस्याश्रये विशेषणं तदेव यदि प्रमितित्वस्यापीति योजनीयम् । आश्रये विशेषणं = क्वचिद्वृत्तौ प्रयोजकीभूतं विशेषणं । त्रित्वावच्छिन्ने इति । प्रयोजकस्य व्याप्यात्मकतामभिप्रेत्येदम्, अन्यथाऽनुमित्यादिगतत्रित्वस्य प्रत्यक्षेऽभावेन तस्याभावत्रयानाश्रयत्वापत्तेः । अथान्येति । प्रयोजकं नात्र व्याप्यं विवक्षितम्, उक्तापत्त्या तत्साधनेऽलीकत्वपरिहारेऽपि सार्वत्रिकत्वपरिहारासम्भवात् । अतएव न कार्यमपि । नापि जनकम्, ज्ञानत्वस्य भेदकूटस्य च नित्यत्वात् । नापि व्यापकमात्रम्, प्रमेयत्वादेर्व्यापकस्य सत्त्वेऽपि सार्वत्रिकत्वापरिहारात् । अपि तु स्वरूपसम्बन्धविशेषरूपप्रयोजकताश्रयः, सा च ज्ञानत्वस्य तदवच्छिन्नजनकादौ, अनुमित्यादिभेदानां तु तत्तद्व्याप्यवृत्तिधर्मे प्रत्यक्षत्वादिके चानुमितित्वाद्यभावव्याप्ये, एवञ्च ज्ञानत्वं स्वावच्छिन्नकारणजन्यत्वादिविशिष्टे वर्तते. नित्ये तु ज्ञानत्वं धर्मिग्राहकमानाऽऽनीतमित्यर्थः । एकधर्मविशिष्टाश्रयत्वेति । एकधर्मावच्छिन्नाधिकर-

श्रितो धर्म्याश्रित एवेति कृत्वा त्र प्रमितित्वस्याभावत्रयसमानाश्रयत्वेऽनुमित्यादित्रयेऽपि प्रसङ्गस्तदवस्थः। नापि द्वितीयः, उपलक्षणीभूतेन केनचिद्धर्मेण योऽसावुपलक्षितो धर्मी स एव खलु त्रित्वविशिष्टः, विशेषणवतोऽपि यावद्विशेष्यवस्तुनो विशेष्यवस्त्वात्मकत्वात्, यथा दण्डयपि पुरुषः पुरुष एव, एवञ्च सत्युपलक्षितादनन्यभूते त्रित्वविशिष्टेऽप्यनुमित्यादौ प्रमितित्वमाश्रितम्, नियामकेनोपलक्षणेनोपलक्ष्याभेदव्यवस्थिततया तस्याप्यवच्छिन्नत्वात्, तथाचातिव्याप्तिर्वज्रलेपायिता। तथाप्युपलक्षकेण त्रित्वविशिष्टतया नोपलक्षितोऽसौ धर्मी, किन्तु स्वरूपेणेति चेन्न, उक्तमत्र यदेव तदुपलक्षितं तदेव विशिष्टमपि। तथापि विशिष्टेन रूपेण तावन्नोपलक्षितमिति चेत्, मोपलक्षि, अविशिष्टेनापि

णताकत्वेत्यर्थः। यद्यपि भिन्नप्रयोजकप्रयोज्यानामपि घटपटादीनामेकभूतलवर्तिनामेकधर्मावच्छिन्नाधिकरणताकत्वमुपलब्धमेवेति प्रत्यक्षत्वावच्छेदेन ज्ञानत्वभेदसमुदाययोर्वृत्तिसम्भवादसम्भवसम्भवो न, तथापि प्रयोजकमेवात्राधिकरणतावच्छेदकं विवक्षितं पूर्वपक्षयितुः, अन्यथाऽनुमित्यादित्रयं ज्ञानत्ववदिति प्रतीत्या भेदकूटाधिकरणतावच्छेदकत्रित्वस्य ज्ञानत्वाधिकरणतावच्छेदकत्वे बाधकाभावेनातिव्याप्तिवारणशङ्काया असङ्गतेरिति भावः। तादृशभेदकूटज्ञानत्वयोः सामानाधिकरण्यमात्रविवक्षायां तु यथा प्रत्यक्षे लक्षणसमन्वयस्तथाऽनुमित्यादिसमुदायेऽपीत्याह **विशिष्टे** इति। प्रयोजकविशिष्टे इत्यर्थः। **धर्मेणेति**। उक्तप्रयोजकेनेत्यर्थः। उपलक्षणत्वञ्चात्र परिचायकत्वमेव, नत्वविद्यमानत्वगर्भम्। यावदिति यत इत्यर्थकं वा साकल्यार्थकं पद्यीसमस्तं वा ज्ञेयम्। **आश्रितमिति**। विशिष्टशुद्धयोरभेद इव भेदाभेदेऽपि समानमिदम्। नन्वेतावता कारणविशेषजन्यत्वाद्युपलक्षणावच्छिन्नाधिकरणताकत्वं ज्ञानत्वे नायातमिति कथमतिव्याप्तिरित्यत आह **नियामकेनोपलक्षणेनेति**। तस्याप्यवच्छिन्नत्वादित्यन्वयः। तत्र हेतुः—**उपलक्ष्याभेदव्यवस्थिततयेति**। उपलक्ष्याभिन्नतयेत्यर्थः। तस्यापि = त्रित्वविशिष्टस्यापि। तथाच = अनुमित्यादिभेदकूटाधिकरणे त्रित्वविशिष्टे वर्तमानस्यापि ज्ञानत्वस्य तन्निष्ठोक्तोपलक्षणावच्छिन्नाधिकरणताकत्वे च। ईदृशविवक्षायामेवातिव्याप्तिर्दीयते, एवञ्चेश्वरज्ञानेऽव्याप्तिरपि द्रष्टव्या। अनुमित्यादिभेदकूटाधिकरणतावच्छेदकावच्छिन्नाधिकरणताकत्वस्य ज्ञानत्वे विवक्षायां नूक्तोपलक्षणस्यैव ज्ञानत्वाधिकरणतावच्छेदकत्वविवक्षणेऽसम्भवः स्फुट एव, अन्यथा तु समुदायेऽतिव्याप्तिरनुमित्यादित्रयं ज्ञानत्ववदिति प्रतीतिमादाय द्रष्टव्या। अन्यूनानतिरिक्तवृत्तित्वरूपावच्छेदकता तु न प्रत्यक्षत्वेऽपीत्यसम्भवापादिका तद्विवक्षा। अथानुमित्यादिभेदकूटाधिकरणतावच्छेदकमात्रावच्छिन्नाधिकरणताकत्वविशिष्टज्ञानसमवेतजातिमत्त्वं प्रत्यक्षत्वम्, ज्ञानत्वं तु न तादृशं नाप्यनुमितित्वादिकम्, अनुमित्यादिगतसमुदायत्वं तु तादृशमपि न जातिरिति चेन्न; तादृशजातिनिरासेन दत्तोत्तरत्वादिति। तथापि = विशेष्यवृत्तेर्विशिष्टवृत्तित्वेऽपि। स्वरूपेण = अनुमितित्वादिना समुदायत्ववत्तयोपलक्षितत्वे उपलक्षणावच्छिन्नाधिकरणवृत्तेरुपलक्ष्यतावच्छेदकावच्छिन्नाधिकरणवृत्तितायाः औचित्यावर्जितत्वात् स्वावच्छिन्नकारणजत्वावच्छिन्नाधिकरणवृत्तिज्ञानत्वस्य समुदायत्वात्मकोपलक्ष्यतावच्छेदकावच्छिन्नाधिकरणवृत्तित्वं स्यादिति स्यादतिव्याप्तिः, अनुमित्यादिभेदकूटस्यापि समुदायत्वावच्छिन्नाधिकरणवृत्तित्वात्, यदा तु समुदायत्वं नोपलक्ष्यतावच्छेदकम्, तदा ज्ञानत्वस्य न तदवच्छिन्नाधिकरणवृत्तित्वमपि तु स्वावच्छिन्नकारणजत्वावच्छिन्नाधिकरणवृत्तित्वमेवेति विवक्षितसामानाधिकरण्यविरहान्कुतोऽतिव्याप्तिरिति भावः। **उक्तमिति**। समुदायत्वस्योपलक्ष्यतानवच्छेदकत्वे ज्ञानत्वाधिकरणतावच्छेदकत्वमस्तु मा वा, समुदायत्वावच्छिन्नस्य कारणविशेषजत्वोपलक्षितस्य चैक्ये त्वनुमित्यादिभेदकूटाधिकरणतावच्छेदकसमुदायत्वविशिष्टनिरूपितवृत्तिता-

तन्नोपलक्षितमेव, अन्यथा प्रकृतेऽपि वैयधिकरण्यापत्तेः। तदास्यतामुल्लसत्पल्लववचन-विलसितेनेति। तदेवं लक्षणान्तरेऽपि प्रतिपादितोऽयं दूषणसमूहः स्वयमूहनीयः।

एतदेव परामृश्य भट्टैरिदमुदाहृतम्।
"लक्षणस्याभिधानं तु केनांशेनोपयुज्यते" ॥ ४३ ॥

अन्याभिप्रायोक्तमपि हि तत्सामान्यतोऽप्युपपद्यमानमेवेति साक्षात्कारित्वखण्डनम्। इति कवितार्किकचक्रचूडामणेः श्रीश्रीहर्षस्य कृतौ खण्डनखण्डखाद्ये प्रथमपरिच्छेदे प्रत्यक्षखण्डनप्रकरणम्।

---

वज्ज्ञानत्वमादायातिव्याप्तिर्दुरतिक्रमैवेति भावः। ननु स्यादेवं यद्यनुमित्यादिभेदकूटाधिकरणतावच्छेदकविशिष्टनिरूपितवृत्तितावज्ज्ञानत्वमेव प्रत्यक्षत्वं मे विवक्षास्पदतामास्कन्देत, अनुमित्यादिभेदकूटाधिकरणतावच्छेदकावच्छिन्नाधिकरणताकज्ञानत्वं प्रत्यक्षत्वात्मतया विवक्ष्यमाणं तु न कथमतिव्याप्तिमतिक्रामति, अनुमित्यादिसमुदायत्वस्योपलक्ष्यतावच्छेदकत्वाभावे तदवच्छिन्नाधिकरणताकत्वस्य ज्ञानत्वेऽसद्भावादित्यभिप्रायेणाशङ्कते तथापीति। विशिष्टोपलक्षितयोरैक्येऽपीत्यर्थः। विशिष्टेन = समुदायत्वविशिष्टतया। अविशिष्टेन = समुदायत्वाविशिष्टतया। अन्यथेति। अवैशिष्ट्यस्योपलक्ष्यतावच्छेदकत्वे कारणविशेषजत्वस्य चोपलक्षणतया ज्ञानत्वाधिकरणतावच्छेदकत्वे इत्यर्थः। प्रकृते = प्रत्यक्षमात्रे। उपलक्षणावच्छिन्नवृत्तिकज्ञानत्वस्योपलक्ष्यतावच्छेदकावैशिष्ट्यावच्छिन्नाधिकरणताकत्वमपि स्यात्, अनुमित्यादिभेदकूटस्य तु समुदायत्वावच्छिन्नाधिकरणताकत्वेनैवानुमित्यादिसमुदाये प्रत्यक्षत्वावच्छिन्नाधिकरणताकत्वेन प्रत्यक्षेऽपि भिन्नाधिकरणतावच्छेदकत्वमेवेत्यसम्भवः। यदि चावैशिष्ट्यस्यैव प्रत्यक्षत्वस्याप्युपलक्ष्यतावच्छेदकत्वम्, वस्तुतस्त्ववैशिष्ट्यस्योपलक्ष्यतावच्छेदकत्वं न मानैर्दूरतोऽप्यवलोकितम्, तदाऽप्युपलक्षणावच्छिन्नाधिकरणताकत्वमादायैवाधिकरणतावच्छेदकभेदः सम्पादनीय इत्यसम्भव एव। अथ प्रत्यक्षत्वस्योपलक्ष्यतावच्छेदकस्यापि ज्ञानत्वाधिकरणावच्छेदकतया न तद्भेदः, तथापीश्वरज्ञानेऽव्याप्तिरेव, तत्रोक्तोपलक्षणविरहात्। अथोपलक्षणोपलक्ष्यतावच्छेदकादिविवक्षाऽपासनीया, उपासनीया चानुमित्यादिभेदकूटाधिकरणतावच्छेदकावच्छिन्नाधिकरणताकत्वस्य ज्ञानत्वे विवक्षा, तदाप्यनुमित्यादित्रयं ज्ञानत्ववदिति प्रतीतिमादायातिव्याप्तिरुक्तैवेति भावः। उल्लसत्पल्लवेत्यादि। अतिविस्तृतवाग्विलासेनेत्यर्थः। आस्तामिति पाठे सहार्थे तृतीया। लक्षणान्तरेऽपीति। ऊहनीय इत्यन्वयः। एतदिति। लक्षणमात्रस्य व्यवहारव्यावृत्त्यात्मकफलतः स्वरूपतश्च दुर्वचत्वमित्यर्थः। एषोऽप्यर्थे। इदम् = लक्षणस्येत्यादिकम्। उदाहृतमिति। "सत्सम्प्रयोगे" इति प्रत्यक्षसूत्रवार्तिके इति द्रष्टव्यम्। केनांशेनेति। न कथमपीत्यर्थः। अन्याभिप्रायोक्तमिति। सत्सम्प्रयोगे इन्द्रियाणां बुद्धिजन्मेति प्रत्यक्षलक्षणविशेषस्यैवानुपयोगः, सोऽपि च 'चोदनैव धर्मे प्रमाणम्' 'चोदना धर्मे प्रमाणमेवे'ति प्रतिज्ञातार्थयोरेवेत्यभिप्रायेणोक्तमित्यर्थः। सामान्यतोऽपीति। न केवलं प्रत्यक्षलक्षणविशेषस्यैवानुपयोगोऽपितु लक्षणसामान्यस्य, सोऽपि च न केवलमुक्तप्रतिज्ञातार्थयोरेव, अपि तु व्यावृत्तिव्यवहारयोरपीत्यभिप्रायेणापीत्यर्थः। तथा चैतदभिप्रायकतयापि भट्टपादोक्तेरुपवर्णने "सत्सम्प्रयोगे" इति सूत्रस्य भवदास्माभिमतलक्षणपरत्वनिरासस्य सम्भवेनोक्तविशेषाभिप्रायकतयैवोपवर्णने विनिगमकाभावः, अतएव "न चाप्येतेन सूत्रेण प्रत्यक्षं लक्ष्यते स्फुटम्। तदाभासेऽपि तुल्यत्वात्स्वप्नज्ञानैकवर्जनात् ॥ सद्धीन्द्रियार्थसम्बन्धव्यापारेण विना भवेत्। केनचित्सम्प्रयोगे तु भ्रान्त्यादि स्यान्नियोगतः ॥" इत्यनेन लक्षणदोषमुत्कीर्त्य "प्रत्यक्षं व्यञ्जने सिद्धं तस्यैवं धर्मकत्वतः। विद्यमानोपलम्भत्वं तेन धर्मेऽनिमित्तते"ति स्वाभिमतसूत्रा-

शयोपवर्णने "यज्जने सिद्ध"मित्यनेन यौक्तिककटाक्षवीक्षणाक्षमत्वेऽपि कथञ्चिदनिर्वाच्यलौकिकव्यवहार साधकत्व सूचितम्, तच्च लक्षणसामान्ये निवेदितदिशा तुल्यमेव । एवमेव "सम्यगर्थे च सशब्दो दुष्प्रयोगनिवारण । प्रयोग इन्द्रियाणाञ्च व्यापारोऽर्थेषु कथ्यते ॥ दुष्टत्वाच्छुक्तिकायोगो वार्यते रजते क्षणा"दिति ग्रन्थेन भासमानाकारेन्द्रियसम्प्रयोगेत्यादिमूले प्रत्यक्षखण्डनोपक्रमे प्राङ्निरस्त लक्षण सूत्रार्थतयाऽभिधाय "एव सत्यनुवाद व लक्षणस्यापि सम्भवे" दि यनेन सूत्रस्य लक्षणानुवादता वदता सता सूत्रकृता तत्र तात्पर्यविषयतया विरह एव ध्वनित, प्रामाणिके ह्यर्थे सत्फलप्रसरसाविति साक्षात्कारित्वखण्डनम् ॥

शारदा शरणीकृत्य तीर्यत शारदार्णव ।
प्रसवित्री प्रपञ्चाना तेन तुष्यतु शारदा ॥

इति श्रीशङ्करचैतन्यभारतीविरचितायां खण्डनशारदायां प्रथमपरिच्छेदे प्रत्यक्ष खण्डनप्रकरणम् ॥

श्रीशारदार्पणमस्तु ।